आनन्दतीर्थभगवत्पादकृतभाष्यभूषिता

# उपनिषच्चन्द्रिका

(प्रथमो मयूखः)



याज्ञीयमन्त्रोपनिषत्

काठकोपनिषत्

तलवकारोपनिषत्

आथर्वणोपनिषत्

षट्प्रश्नोपनिषत्

माण्डूकोपनिषत्

वामनपण्डिताचार्यविरचितया टीकया

आचार्यगोविन्दविरचितया भावचन्द्रिकया च सहिता

# UPANIṢAT-CANDRIKĀ

[FIRST PART]

[Yājñīya-Mantropaniṣat, Kāṭhakopaniṣat, Talavakāropa niṣat, Ātharvaṇopaniṣat, Ṣat-praśnopaniṣat and Māṇḍūko paniṣat with the Bhāṣhya of Sri Ānandatīrtha Bhagavat-pāda and the Commentaries by Sri Vāmana Paṇḍitācārya and Ācārya Govinda (Bannanje Govindācārya)]

Editor:
**Bannanje Govindācārya**

**Īśāvāsya-Pratiṣṭhānam**
Udupi-Bangalore
2005

UPANIṢAT-CANDRIKĀ [First Part]:
[Yājṇīya-Mantropaniṣat, Kāṭhakopaniṣat, Talavakāropaniṣat, Ātharvaṇopaniṣat, Ṣat-praśnopaniṣat and Maṇḍūkopaniṣat with the Bhāṣhya of Sri Ānandatīrtha Bhagavat-pāda and the Commentaries by Sri Vāmana Paṇḍitācārya and Ācarya Govinda (Bannanje Govindācārya)]


Edited by: Bannanje Govindācārya

Published by : Īśāvāsya Pratiṣṭhānam, Udupi-Bangalore
Regd. office : Īśāvāsyam, Ambalapadi, Udupi- 576 103
Phone : (0820)2521047





First Edition : 2005, March

Pages : 64+668

Price : [In India] Rs. 500-00
[Outside India] $25

sketches : Ganjeefa Raghupati Bhat

Cover design: K.M. Sheshagiri

Typeset : Kaddi Badari Narayana Achar
Poornaprajna Vidya Peetha,
Bangalore-28

Printed at : Rajaprakash Printers
No. 142, I main road , Chamarajpet,
Bangalore -560 018
Phone: (080) 26521515

distributors : Bannanje Associates
Īśāvāsyam, Ambalapadi, Udupi- 576 103
Phone: (0820) 2525396

श्रीमदानन्दतीर्थ-भगवत्पाद-प्रणीत-भाष्य-भूषिता

# उपनिषच्चन्द्रिका

[प्रथमो मयूखः]

याज्ञीयमन्त्रः, काठकोपनिषत्, तलवकारोपनिषत्,
आथर्वणोपनिषत्, षट्प्रश्नोपनिषत्, माण्डूकोपनिषच्च

श्रीवामनपण्डिताचार्यविरचितया टीकया,
आचार्यगोविन्दकृतया पञ्चिकया च सहिता



शोधयिता–सम्पादयिता
**बन्नञ्जेपदोपाह्व आचार्यगोविन्दः**



ईशावास्य-प्रतिष्ठानम्
उडुपि-बेङ्गळूर्
२००५



वेदमन्त्रान्तरङ्गज्ञो वेदाङ्गपरिनिष्ठितः ।
तत्ववादरसज्ञोऽयं भाति वामनपण्डितः ॥

# प्रकाशकीयं किञ्चित् प्रास्ताविकम्

सेयमुपनिषच्चन्द्रिकायाः प्रथमो मयूखः । अस्यां षडुपनिषद उपस्थापिताः सतां पुरतः । अवशिष्टाश्चतस्रोऽपि यथाक्रमं प्रकाशनीया इत्यस्ति महानाशा-बन्धः । श्रीमाधवमध्वयोः कृपया सद्य एव सम्पद्येतेति निरीक्षामहे ।

सम्प्रति षण्णामुपनिषदां वामनीया टीकोपलब्धेति महान् सम्भ्रमः । षण्णामेवेति सङ्कोचश्च । उपलब्धः पाठो नातीव शुद्धः । एकस्तावत् ताळपत्रमय-स्तौळवलिपिबद्धः प्रतन आदर्शः श्रीसोदामठाधीशैः श्रीविश्वोत्तमतीर्थ-श्रीचरणैरनुगृहीतः, योऽत्र 'क'पाठ इति सङ्केतितः । श्रीचरणानां सभक्ति सप्रणामं कार्तज्ञ्यमर्पयामः । अपरौ च द्वावादर्शौ देवनागरीलिपिबद्धौ नातिप्रतनौ श्रीमता प्रभञ्जनाचार्येण प्रत्तौ, यौ चात्र 'ख'पाठ इति, 'ग' पाठ इति च सङ्केतितौ । तेनानर्घेणोपकारेण नूनमधमर्णा वयम् ।

सर्वेऽप्यादर्शा नान्ततः शुद्धाः । अथापि आदर्शानां साहाय्येन शुद्धपाठ-निर्धारणाय महदत्र प्रयतितमित्येतावदेव निविवेदयिषामः ।

अस्या उपनिषच्चन्द्रिकाया द्वितीये मयूखे तैत्तिरीयाणामुपनिषद्त्रयी भवति । दशसूपनिषत्स्वन्तर्गता तैत्तिरीयोपनिषच्च, तैत्तिरीयारण्यके तदनन्तरभाविनी महानारायणोपनिषच्च । अत्र सम्पुटे छन्दांसि पर्यैक्ष्यन्त– छन्दोमीमांसेति । तत्र स्वराः परीक्षिष्यन्ते– वैदिकस्वरमीमांसेति परिच्छेदे, यदि सर्वं सङ्कल्पितं निष्प्रत्यूहं निरुह्यते भगवत्कृपाकटाक्षलेशेनेति ।

## कृतज्ञा वयम्

अत्राऽकरग्रन्था बहव उपयुक्ताः । विद्वद्वरेण महावैयाकरणेन विनेयवृन्द-समुपासितचरणेन युधिष्ठिरमीमांसकेन प्रणीतः 'वैदिकच्छन्दोमीमांसा' नाम हिन्दीभाषामयो ग्रन्थः, विपश्चित्तल्लजेन पदवाक्यप्रमाणपारावारीणेन युधिष्ठिरमीमांसकस्याप्याचार्येण सन्दब्धाः, 'जिज्ञासु-रचना-मञ्जरी' इति नाम्ना भागद्वयात्मना प्रकटिताः प्रबन्धाश्च, मुख्यतया उपायुज्यन्त । श्रीयुधिष्ठिर-मीमांसकस्यान्तेवासी 'आत्मकूरु'वासी श्रीमानुद्धः पण्डित आनन्दतीर्थाचार्य एतेषां ग्रन्थानां प्रेषणेन बहूपचकार । न शक्यं 'वयं कृतज्ञा' इत्युपचारवचन-मात्रेण स प्रतिकर्तुम् । चिरमृणिनो वयं वारंवारं तदुपकारं बहु मानयन्तस्तस्य स्मरामः ।

उपनिषत्कथानां रेखाविन्यासेनाऽकारं ददौ कलाविदग्रणीः श्रीमान् रघुपति-भट्टः । श्रीमान् के.एम्. शेषगिरिनामा सत्कार्येषु धृतोत्साहः युवा कलावित् मुखपत्रविन्यासं सवर्णन्यासं नूनमासेचनकं चकार । अनयोरुभयोरपि मनोज्ञ-कलाभिज्ञयोः साभिनन्दनमाशीर्वादानाशास्महे ।

गणकयन्त्रेणाक्षरविन्यासं रुचिरं कृतवते श्रीमते कड्डी बदरीनारायणाचार्याय, विना पक्ष्मतिरोधानं सावधानं मुद्राक्षरपरिशोधनं कृतवद्भ्यः सङ्ख्यावद्भ्यः श्रीमद्भ्यः 'पर्कळ वेङ्कटेश बायरि' इति, 'श्रीरामविठ्ठलाचार्यः' इति, 'हेच्. पि. नागराजाचार्यः' इति च सुगृहीतनामधेयेभ्यो धन्यवादान् प्रशास्महे । विशेषतश्च श्रीमन्तं कड्डीपदोपाह्वं बदरीनारायणाचार्यं साशीर्वादमभिनन्दामः यः प्रतिपदम् 'इदमत्र पूरणीयम्, पुनरस्मिन् विषये विशिष्य लेखनीयम्, इदं प्रमेयमपरिचितं विशिष्योल्लेखनीयम्, विवृत्य च परिचायनीयम्, अत्र व्याकरणसमीक्षाऽपेक्षिता, अत्र स्वरसमीक्षा, अत्र छन्दःसमीक्षा, अत्र परेषामपव्याख्यानानां दोषा उद्घाटनीयाः' इति बोधम्बोधं, चोदञ्चोदं स्वरसतोऽलसमपि मामनुरुणुद्धि स्म । अनुरुद्धय चेदृशमर्थतः शब्दतश्च

महान्तं प्रबन्धं निबन्धयामास । सर्वेषामेतेषां निर्व्याजं कृतहार्दानां पर-गुणपरमाणूनपि पर्वतीकृत्य पश्यतां विपश्चितामृणभरेण भुग्ना वयं स्वयं धन्यतामनुभवामः ।

मुद्रणकर्मणि च यथापूर्वं 'राजप्रकाशप्रिण्टर्स्' इति मुद्रणालयाधिकृतः 'आफ्सेट्' मुद्रणविधाने कृतपरिश्रमः श्रीमान् 'प्रकाश'नामधेयः, तत्सहकारिणश्च सर्वे समेत्य सश्रद्धं शुद्धं च मनोहारि च मुद्रणकार्यं काले निरुह्य नूनं भगवदनुग्रहभाजनान्यभूवन् । वयं च प्रेमबहुलया तानाशिषा संयोजयामः, अभि च नन्दामः ।

## आशीर्वादपरम्परा

अन्ते च ग्रन्थस्यास्य प्रकटनकर्मणि निरन्तरं सहकृतवतां श्रीमताम्– 'कड्डी रघूत्तमाचार्यः' इति, 'वि. रमेशः' इति, 'सुधीन्द्रः' इति, 'नरसिंहमूर्तिः' इति, 'पवमानः' इति, 'विजयीन्द्रः' इति च सुगृहीतनामधेयानां चान्यत् किमप्यनुदातुमपश्यन्तः प्रेमनिर्भरामाशीर्वादपरम्परां केवलमुपहरामः । यद् वयं तेषामाशास्महे यच्च ते स्वयमाशासते तत् तेषामस्तु ।

एतद्ग्रन्थनिर्माणसमये 'बेङ्गळूरु' नगरे लेखनकर्मणि निरतानां नः स्वोपद्रव-मप्यगणयित्वा चिरं योगक्षेममूहतुर्दिवानिशमस्मत्तनया श्रीमती कविता च, तद्भर्ता श्रीमान् वेङ्कटराज उडुपश्च । अस्तु स्वस्ति तयोः । यदा पुनर्वयं रूप्यपीठे शान्ते स्वनिशान्ते न्यवसाम तत्रापि लौकिकव्यवहारगृहनिर्वहणादिषु नो निर्लक्षतामलक्षयित्वा, सोढ्वा च सर्वमनानुकूल्यम्, ऊढ्वा चास्मद्रक्षणभारम्, निर्व्याजेन प्रेम्णाऽस्मल्लेखनकर्मणि दत्तस्वातन्त्र्याः अस्मज्जाया श्रीमती अहल्या, वधूः श्रीमती रमा, तनयौ विनयभूषणो विजयभूषणश्च सदा शुभया धिया युञ्जन्त्विति साशीर्वादं प्रशास्महे ।

अन्ते च प्रतिष्ठानस्य सादस्यमुदुह्य प्रकाशनभारं निरुह्य बहूपकृतवतां श्रीमताम्-'चिप्पगिरि राघवेन्द्राचार्यः' इति, 'भं गुरुराजाचार्यः' इति, 'सि.एम्.

नागेन्द्रराव्' इति, 'के. राघवेन्द्राचार्यः' इति, 'सर्वज्ञ बि' इति, 'विनय बन्नञ्जे' इति सुगृहीतनामधेयानां सर्वेषामुपनिषद्वेद्यो भगवान् सर्वाभीष्टमनुगृह्णात्विति प्रार्थयामहे ।

शं नो विष्णुरुरुक्रमः । नमस्ते वायो ।

भवदीयः

शा.श.१९२७ तारणसंवत्सरः

फाल्गुन-शुद्ध-पञ्चमी — **आचार्यगोविन्दः बन्नञ्जेपदोपाह्वः**

[१५-३-२००५]

* * *

# भाष्योदाहृतानि प्रमाणानि

१. अभिधानम्
२. आत्मसंहिता
३. ऋक्संहिता
४. कौर्मपुराणम्
५. गतिसारः
६. गरुडपुराणम्
७. छन्दोगोपनिषत्
८. तत्वविवेकः
९. तत्वसारः
१०. तत्वसंहिता
११. नामनिरुक्तम्
१२. नारदीयपुराणम्
१३. नारायणसंहिता
१४. नैर्गुण्यम्
१५. परमसंहिता
१६. पाद्मपुराणम्
१७. पिप्पलादशाखा
१८. प्रकटश्रुतिः
१९. प्रकाशिका
२०. प्रजापतिसंहिता
२१. प्रत्ययः
२२. प्रत्याहारः
२३. प्रभञ्जनम्
२४. प्रवृत्तम्
२५. बृहत्संहिता
२६. बृहदारण्यकोपनिषत्
२७. ब्रह्मतर्कः
२८. ब्रह्मपारम्
२९. ब्रह्मसारः
३०. ब्रह्मसूत्रम्
३१. ब्रह्मवैवर्तपुराणम्
३२. ब्रह्माण्डपुराणम्
३३. ब्राह्मपुराणम्
३४. भगवद्गीता
३५. भविष्यत्पर्व
३६. भागवतपुराणम्

३७. महाकौर्मपुराणम्[१]
३८. महाभारतम्
३९. महायोगः
४०. महावराहपुराणम्
४१. महोपनिषत्
४२. मार्कण्डेयपुराणम्
४३. माहात्म्यम्
४४. मुक्तिविवेकः
४५. मूलश्रुतिः
४६. रामसंहिता
४७. वामनपुराणम्
४८. वाराहपुराणम्[२]
४९. विद्यानिर्णयः
५०. व्याससमृतिः
५१. शब्दनिर्णयः
५२. सङ्कल्पः
५३. सत्तत्वम्
५४. सौकरायणश्रुतिः
५५. स्कान्दपुराणम्
५६. हरिवंशम्

* * *

१. भाष्ये द्वेधा प्रयोगो दृश्यते– क्वचित् 'कौर्मे' इति; क्वचित् 'महाकौर्मे' इति। एकस्यैव द्विधोल्लेखः स्यादिति भाति।

२. अस्यापि द्वेधा प्रयोगो दृश्यते– 'वाराहे' इति; 'महावराहे' इति। पूर्ववदयमपि स्यादिति भाति।

# अत्रोपयुक्तानि सङ्केताक्षराणि

| | |
|---|---|
| अथ.सं. | अथर्वसंहिता |
| अनु. | अनुव्याख्यानम् |
| अष्टा.सू. | अष्टाध्यायीसूत्राणि |
| अहिर्बुध्न्यसं. | अहिर्बुध्न्यसंहिता |
| आथ. | आथर्वणोपनिषत् |
| आश्व.श्रौ.सू. | आश्वलायनश्रौतसूत्राणि |
| उ.कां. | उत्तरकाण्डम् [रामायणम्] |
| उद्यो.प. | उद्योगपर्व[महाभारतम्] |
| ऋ.सं. | ऋक्संहिता |
| ऐ.आ. | ऐतरेयारण्यकम् |
| ऐ.ब्रा. | ऐतरेयब्राह्मणम् |
| क.सं. | कठसंहिता |
| का.सं | काण्वसंहिता |
| का.उ | काठकोपनिषत् |
| गो.ब्रा. | गोपथब्राह्मणम् |
| छं. | छन्दोगोपनिषत् |
| तत्वप्र. | तत्वप्रदीपः |
| तन्त्रवा. | तन्त्रवार्तिकम् |
| तै.आ. | तैत्तिरीयारण्यकम् |
| तै.उ. | तैत्तिरीयोपनिषत् |
| तै.ब्रा. | तैत्तिरीयब्राह्मणम् |
| तै.सं. | तैत्तिरीयसंहिता |
| दशपा. | [उणादि]दशपादिका |
| निरु. | निरुक्तम् |
| निरु.भा. | निरुक्तभाष्यम् |
| पू.भा. | पूर्वभागः |
| पू.मी. | पूर्वमीमांसासूत्रम्[जैमिनीयम्] |
| बृ.उ. | बृहदारण्यकोपनिषत् |
| ब्र.सू. | ब्रह्मसूत्राणि |
| भ.गी. | भगवद्गीता |
| भाग. | भागवतम् |
| भाट्टदी. | भाट्टदीपिका |
| म.ता.नि. | महाभारततात्पर्यनिर्णयः |
| म.वि. | मध्वविजयः |
| महैत.उ. | महैतरेयोपनिषत् |
| मां.उ. | माण्डूकोपनिषत् |
| माध्यं.सं. | माध्यन्दिनसंहिता |
| याज्ञी.मं.भा. | याज्ञीयमन्त्रोपनिषद्भाष्यम् |

| | | | |
|---|---|---|---|
| युद्ध. | युद्धकाण्डम् [रामायणम्] | वैष्णवखं.भाग.मा. | स्कान्दे वैष्णवखण्डे भागवतमाहात्म्यम् |
| वाज. प्राति. | वाजसनेयप्रातिशाख्यम् | शां.प. | शान्तिपर्व [महाभारतम्] |
| शत.ब्रा. | शतपथब्राह्मणम् | शा.भा. | शाबरभाष्यम् |
| वा.सं. | वाजसनेयसंहिता | हरि. | हरिवंशम् |
| वै.सू. | वैशेषिकसूत्राणि | | |

*

[यत्र महाभाष्यवार्तिककाशिकादिकमुदाहृतं तत्र तन्मूलपाणिनिसूत्रसङ्ख्या निर्दिष्टा। तत्वपदीपे ब्रह्मसूत्रसङ्ख्या निर्दिष्टा। यत्र ग्रन्थनाम स्फुटमुदितं तत्राऽवरणचिह्नयोरन्तः केवलं प्रकरणश्लोकादिसङ्ख्या निर्दिष्टा। यत्रैक एवाऽकरग्रन्थोऽसकृत् परामृष्टः तत्र प्रथमतः सकृदेव नाम निरदिश्यत यावद् ग्रन्थान्तरोल्लेख इत्यवगन्तव्यम्।]

[अत्रान्ते भाष्योदाहृतप्रमाणानामनुक्रमण्यां यानि च ग्रन्थसङ्केताक्षराणि दत्तानि तानि नात्र सङ्गृहीतानि। भाष्यग्रन्थ एव तेषां ग्रन्थानां समग्रनामोल्लेखात् तत एव तदधिगमः सुकर इति।]

# उपनिषद्-भूमिका

निगमकल्पतरोश्चतस्रः शाखा ऋग्यजुःसामाथर्वभेदेन ।

अथाप्यन्ततस्त्रयो वेदाः । अत एव तेषां 'त्रयी' इति नाम ।

केयं त्रयी? कानि तानि त्रीणि?

पद्यमयी श्रुतिः, गानमयी, गद्यमयी चेति ।

एतानि ऋक्-साम-यजूंषि त्रीण्येव त्रयी ।

पद्यमयी ऋग् भवति । ऋच्छति गच्छति स्तोतुं भगवन्तमिति । ऋचति वा । ऋच स्तुतौ। छन्दोबद्धा हि स्तुतयो भवन्ति । नाच्छन्दसा ऋषयः स्तुवन्ति । शस्त्रेण हि शंसन्तः स्तुवन्ति । अप्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं हि शस्त्रम् ।

गानमयं साम । साम्ना हि स्तोत्राणि गायन्ति । प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं हि स्तोत्रम् । आह च निरुक्तकारः– **'यदेतमृग्भिः शंसन्ति, यजुर्भिर्यजन्ति, सामभिः स्तुवन्ति'** इति । **'तेषामृग् यत्रार्थवशेन पादव्यवस्था । गीतिषु सामाख्या । शेषो यजुःशब्दः'** [२.१.३५–७] इति च मीमांसासूत्रम् । स्यति सीयते वा साम । गायति गीयते वेति । **'षो अन्तकर्मणि । अनेकार्थत्वाद् गाने वर्तते'** इति श्वेतवनवासी । **'बह्वर्था अपि धातवो भवन्ति'** [अष्टा. सू.९१.३.१] इति पतञ्जलिः ।

एवमृग्भिः शंसति । सामभिः स्तौति । यजुर्भिर्यजति । यज्ञप्रक्रियामुपदिशन् निगदो यजुर्वेद इति निगद्यते ।

## द्वयमेव त्रयम्

मूलतः स्वयं द्वयमेव वेदवाङ्मयं भवति। ऋक् च निगदश्चेति; गद्यं च पद्यं चेति। तदेतत् गानेन सङ्गतं साम भवति। तदिदं त्रयं विहाय नान्या विधा सम्बोभवीति वाङ्मयप्रपञ्चे।

एतां त्रयीमेव वाङ्मयीं पद्यां तारस्य त्रीण्यक्षराण्यभिदधति 'अ उ म' इति।

आदावस्य कल्पतरोर्बीजरूपः वर्णत्रयमयः प्रणवो बभूव। सा वर्णत्रयी पुनरङ्कुरिता व्याहृतित्रयी बभूव 'भूः, भुवः, स्वः' इति।

सैवेषत् प्रभिन्नप्ररोहा गायत्र्याः पादत्रयी बभूव। सा पुनरुद्भिन्नशाखा षोळश-मन्त्रात्मनः पुरुषसूक्तस्य वर्गत्रयी बभूव। पञ्चभिः पञ्चभिः षड्भिश्चर्ग्भिः।

सैव वर्गत्रयी विस्तृतशाखा किसलयकुसुमफलभरिता मुनिमनस्सु स्फुरिता श्रुतित्रयी बभूव। सोऽयं वेदपादपस्याऽरोहः, यः प्राचीनैरनुसंहितः।

प्रवृद्धस्यास्य महतो वृक्षस्य सर्वोऽपि सत्त्वसारः बीज एव निगूढः। तदेवमृग्वेदस्य सारोऽकारः। यजुर्वेदस्योकारः। सामवेदस्य मकार इति।

मिलितानि तानि त्रीण्यक्षराणि, यदयमोङ्कारः। विस्तृतानि त्रीण्यक्षराणि त्रयो वेदाः।

अथ संशय्यते– किमकार एवर्ग्वेदस्य वर्ण उच्यते? किमित्युकार एव यजुर्वेदस्य? मकारः सामवेदस्य?

सर्वे वर्णाः सर्वत्र पठ्यन्ते। किमेषु त्रिष्वनितरसाधारणो विशेषः?

मन्त्रवर्णेष्वेवास्य गुह्यं निहितम्।

अकार ऋग्वेदवर्णः। अतः अकारेणैवाधिक्रियते ऋक्संहिता–

**'अग्निमीळे पुरोहितम्–'** [१.१.१] इति।

अयमकार ऋचामथकारः। इकारश्चेतिकारः–

**'यथा वः सुसहासति'** [१०.१९१.४] इति।

अकारेणाधिकृता इकारेण समाप्यते। सोऽयमृग्वेदस्य अथकार इतिकारश्च। यत्र ऋग्वेदः समाप्यते तेनैव इकारेण यजुःसंहिताऽधिक्रियते–

**'इषे त्वोर्जे त्वा–'** [१.१.१] इति।

तथा उकारेण परिसमाप्यते–

**'समुद्रो वा अश्वस्य योनिः समुद्रो बन्धुः'**[७.५.२५] इति।

एवमकारादुपक्रम्य इकारपर्यन्ता ऋक्संहिता।

इकारोपक्रमा चोकारपर्यन्ता यजुःसंहिता। श्रुतिद्वयीगतिमाह प्रणवः 'ओ' इति।

अथ तृतीयमक्षरं मकारः सामसंहितां प्रतिनिधत्ते। कथमथ प्रतिनिधानम्? न मकारेण सामान्यधिक्रियन्ते। नाप्यन्ते समाप्यन्ते।

अकारेणैव हि साम्नोऽप्यधिकारः–

**'अग्न आ याहि वीतये–'**[१०] इति।

उकारेणैव चोपसंहारः–

**'स्वस्ति नो बृहस्पतिर्दधातु'** [१८७५] इति।

सहजं चैतत्। ऋच्यध्यूढं हि साम प्रायः। कानिचन च पुरीषपदानि निगदात्मकानि। तेनर्गक्षरेण यजुरक्षरेण चैव सामान्यप्यधिक्रियन्ते, उपसंह्रियन्ते च। नहि सामसु मन्त्राः स्वतन्त्रा भवन्ति। किन्तु गानमेव सामोपज्ञम्। आर्चा मन्त्राः। प्रगीतं सामनमिति।

तर्हि मा भून्मकारः सामवेदवर्णः। भवत्येव। कथं भवति? शृणु भोः। 'मृऽ' इति प्रगीतस्य नादानुकारोऽयम्। यमाहुर्हिङ्कार इति सामभक्तिषु प्रथमम्। तेन मकारः सङ्केतयति सामसंहितामिति सूक्तम्।

## सर्ववाङ्मयसमाहारः

तथाचाद्यन्तौ समाह्रियेते प्रणवेन सर्वसङ्ग्रहाय–

तेन 'अ+इ= ए' इति सर्वामृक्संहितामाह । 'इ+उ= यु' इति सर्वां यजुःसंहितामाह । इकारस्याऽम्रेडनं परिहृत्य सकृदेव ग्रहणेन च वर्णमालाऽनुसृता भवति– 'अ+इ+उ' इति । वेदमातरं स्मरदेव शब्दानुशासनमाह माहेश्वरं सूत्रम्– अइउण् इति । विष्णुनाम्नो णकारेण पुनरित्करणेन सर्वं वैदिकं वाङ्मयं नारायणपारम्यपरमित्याह । अत एव 'हरिः ओम्' इति मन्त्रपारायणिका अधिकुर्वन्ति । ओमितिपदगदितः, तेन सर्ववेदपदोदितश्च हरिरेवेति ।

**'वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः ।**

**'तावन्ति हरिनामानि पठितानि द्विजातिभिः'** इति पौराणं वचः ।

अयमत्रानुसन्धानक्रमः । अथ सन्धानक्रमः । अ+इ= 'ए' इत्यासीत् । ए+उ= 'अउ' इत्येव भवति । तस्य पुनःसन्धाने 'ओ' इति भवति । सन्धिगर्भः सन्धिरयम् । 'शिरोपधानम्' इति यथा । तेन ओकारेण सर्वं वाङ्मयमाह । मकारेण सर्वं प्रगीतमाह । तदेवमोमिति सर्वसमाहारः ।

अपिचाकारेण समेषामचां समाहारः । उकारः पुनरकारेण सङ्गतो वकारो भवति । तेनान्तस्थेन मध्यगेन यणां शलां च, यादिक्षान्तानां व्यापकानां ग्रहणम् । अथ मकारेणान्तगेन सर्वेषां स्पर्शानां ग्रहणमिति मातृकामात्रमप्यनुगतं भवति । तदेवं सर्वसमाहारोऽयं योऽयमोङ्कारः ।

## त्रयमेव चतुष्टयम्

एवं त्रयी शाखाभिश्चतुष्टयी बभूव ।

तिस्रस्तु सहजाः शाखाः – पद्यमय्यृक्शाखा, निगदमयी यजुःशाखा, प्रगीता सामशाखा चेति । अथचाथर्वणा मुनिना वैवस्वतमन्वन्तरस्याऽदौ गृहीता सङ्गृहीता च तुरीया शाखा बभूव ।

ऋग्, यजुः, सामेति गौणानि नामानि। अर्चनसाधनम्, यजनसाधनम्, गानेन समीकृतं चेति। नात्र द्रष्टार ऋषयः स्मर्यन्ते। बहुत्वात्। तद्यथा नवमं मण्डलं बह्वार्षं देवतैक्यात् पावमानमुच्यते । यथा वाऽष्टमं प्रागाथम् । दशमं च क्षुद्रसूक्तमहासूक्तमयम् । अन्यानि त्वैकर्ष्यादृषिनाम्नैवाभिधीयन्ते– शतर्चिमण्डलम्, गार्त्समदम्, वैश्वामित्रमित्यादि ।

एवमिहाप्यृष्यैक्यात् अथर्वणा दृष्ट आथर्वणो वेद उच्यते । ऋग्भिर्यजुर्भिश्च मन्त्रानाहारमाहारमथर्वणा सङ्कलितः सम्पादितश्चायमथर्ववेद इति। अत एव, **'ऋग्भिः शंसन्ति, यजुभिर्यजन्ति, सामभिः स्तुवन्ति, अथर्वभिर्जपन्ति'** इति हि कठाः पठन्ति ।

## चत्वार आसन्; सुलोकपा [११३७] अभवन्

तामेतां शाखाचतुष्टयीं पुनरष्टाविंशे द्वापरान्ते भगवान् बादरायणः विस्मरणेन लुप्तप्रायां पुनः सङ्कलय्य चतुरांश्चतुरः शिष्यान् बोधयामास । ऋचां निचयं पैलम् । यजुषां वैशम्पायनम् । साम्नां जैमिनिम् । अथ सुमन्तुमथर्वणाम् । अङ्गिरसोऽपि मुनयस्तामेतां शाखां विस्तारयमासुः। तेनाऽथर्वणा अथर्वाङ्गिरस उच्यन्ते ।

एवमन्या अपि शाखाः शिष्यप्रशिष्यपरम्परया अध्ययनपाथःप्रसेकेन अभिवर्धिताः । तेन शाखास्वपि परःशतमुपशाखा बभूवुः ।

तथाहि चतुर्विंशतिर्ऋक्शाखाया उपशाखाः । याजुषी पुनः शाखा शुक्ला कृष्णेति द्विधा उद्भिद्य प्ररुरोह। पुनः कृष्णायां षडशीतिरुपशाखाः। शुक्लायां पञ्चदशेति संहता एकशतमुपशाखा याजुष्याः शाखायाः । सहस्रोपशाखा सामशाखा । अथर्वशाखायाः पुनरुपशाखा द्वादशेति ।

तदेवमुपशाखाः संहत्य [२४+१०१+१०००+१२=११३७] सुलोकपमिता भवन्ति ।

ननु महाभाष्ये पतञ्जलिरन्यथा गणयति– **'एकविंशतिधा बाह्वृच्यम्। एकशतधा अध्वर्युशाखाः। सहस्रवर्त्मा सामवेदः। नवधा अथर्ववेदः'** इति।

सत्यमन्यथा गणयति। किं तेन? ननु भोः, तेन ते वचो व्याहन्यते। नन्वेतेन पतञ्जलिवचनमेव किं न व्याघानिष्यसे। ननु विपरीतमेतत्। पुरातनेन हि पश्चात्तनं व्याहन्यते। नतु पश्चात्तनेन पुरातनम्।

ननु पश्चात्तनेनापि पुरातनं व्याहन्यते। यथा कश्चिदपटुकरणो रज्जुं दृष्ट्वा भुजगं मेने। भीतस्ततः पलायामास। अथ तेनोदितं भुजगोदन्तं श्रुत्वा कश्चिद्धीरस्त-मुद्देशमाजगाम। ददर्श रज्जुम्। निश्चिकाय च – अयं पूर्वागतो रज्जुं दृष्ट्वा भुजगं मेन इति। सोऽयं रज्जुं दृष्ट्वा भुजगं न मेने। रज्जुमेव मेने। तदनेन पाश्चात्येन विज्ञानेन पूर्वतनं भुजगज्ञानं बाध्यते। ननु भोः प्रामाणिकमप्रामाणिकेन व्याहन्यते। पूर्वतनं वा पश्चात्तनं वा। तर्हि आगच्छ पद्याम्। प्रामाणिकमित्येवास्माभिरुक्तम्।

तथाहि स्कान्दे स्मर्यते–

**'चतुर्धा व्यभजत् तांश्च चतुर्विंशतिधा पुनः।**
**'शतधा चैकधा चैव तथैव च सहस्रधा॥**

**'चक्रे द्वादशधा चैव पुनस्तस्यार्थवित्तये।**
**'चकार ब्रह्मसूत्राणि येषां सूत्रत्वमञ्जसा'** इति।

पुराणं पतञ्जलेरपि पुराणमिति तदेव बलवद् भवति। भगवद्वचन-प्रामाण्याच्च। नहि बादरायणवचनानि क्वापि केनापि शङ्क्येरन्। यदि तान्यप्य-शङ्क्ष्यिन्त न नूनं प्रमाणमभविष्यन् तेन सङ्कलितानि वेदवचनान्यपि।

एहि मन्ये पण्डितम्मन्य पतञ्जलिमतथ्यवचनं कत्थसे। न भोः। तात्पर्यमविज्ञाय भाषसे। स्वशिष्यैः कृतं वेदविभागं बादरायण आह। स्वकाले स्वदेशे चोपलभ्यमाना वेदशाखाः पतञ्जलिराह। यथा पण्डिताचार्यो द्विनवशाखि-तामाह– **'पण्डितैर्द्विनवशाखिभिः श्रुतीः'**[म.वि.९.१५] इति। काः

द्विनवशाखाः? यास्तदा उपलब्धा अधीयमाना आसन्नित्येव किल समाधेयम्। समं पतञ्जलिवचनेऽपि। यान्यवर्तन्त तानि नाऽह। यानि वर्तन्ते तान्याह।

## दशद्वादशा अवशिष्टाः

तिस्रः शाखाः तदात्व एव लुप्ता इति विज्ञायते ऋक्षु चाथर्वसु च। सम्प्रति तु ऋक्षु एकविंशतिर्नष्टा, तिस्र उर्वरिताः। शाकलसंहिता, बाष्कलसंहिता, साङ्ख्यायनसंहिता चेति। अथर्वसु च एकादश नष्टाः। एकैवोर्वरिता शौनकसंहिता।

यजुष्षु कृष्णेषु च तिस्रः शाखा उर्वरिताः– 'तैत्तरीयसंहिता, कठसंहिता, मैत्रायणीयसंहिता च। शुक्लेषु द्वे– काण्वसंहिता, माध्यन्दिनसंहिता च।

महती विनष्टिः सामस्वेव। तथाहि सहस्रवर्त्मा सामवेदः। सहस्रधा किलागीयत। गानप्रकाराः सहस्रमिति। मन्त्रास्तु समानाः। गानानि भिद्यन्ते। सम्प्रति तु त्रिवर्त्मा सामवेदः पठ्यते। राणायनीयशाखा, जैमिनीयशाखा, कौथुमशाखा चेति। अन्याः शाखा अनध्यायेषु अधीयमानाः पाकशासनशप्ताः क्रमेण विनेशुरिति चरणव्यूहकारः।

तदेवं बादरायणेन वितताः उपशाखाः ११३७। इयमपि सङ्ख्या त्रयीमयी। तथाहि एतासां प्रत्येकं समाहारेऽपि त्रयमेवावशिष्यते– १+१+३+७= १२=१+२=३।

इयमेव च श्रुतीनां मूलसङ्ख्या। न केवलमेतावदेव। केवलं त्रयेणैव विभज्यते चेयं सङ्ख्या; $\frac{११३७}{३}$=३७९। इत्यलं सङ्ख्याकुतूहलेन।

## अपौरुषेयः शेवधिः

एवं तत्वविद्याशेवधिरनवधिर्वेदा नाम। अनादिरनन्ता सम्पत्परम्परा। कथं वेदाः? नित्यं विद्यन्त इति वेदाः। परमपुरुषानुग्रहेणान्तर्दर्शनेन विन्दन्त्येतानिति

वेदाः। अवेदनीयं प्रमाणान्तरेण स्वयं वेदयन्तीति वेदाः। तमिमं वेदमपुरुष-कृतमाहुः परावरविदः पुरातनाः।

वेद इति धनमुच्यते। तदिदमपारमक्षयं धनम्। यदपरस्मिन्नपि जनुष्यनुवर्तते। यत् परेभ्यो वितीर्णवितीर्णं न ह्रसते; किन्तु परिवर्धते। यदुत नापजिहीर्षन्ति तस्कराः।

स्वयमुद्घुष्यत हि भगवत्या श्रुत्या–

**'तस्मै नूनमभिद्यवे वाचा विरूप नित्यया।**
**'वृष्णे चोदस्व सुष्टुतिम्'** [ऋ.सं.८.७५.६] इति।

–**'तामन्वविन्दन् ऋषिषु प्रविष्टाम्'** [१०.७१.३] इति च।

अपि खल्वाहुः स्मृतयः–

**'अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा'**[शां.प.२३२.२४] इति महाभारते।

**'चातुर्वर्ण्यं त्रयो लोकाश्चत्वारश्चाऽश्रमाः पृथक्।**
**'भूतं भव्यं भविष्यं च सर्वं वेदात् प्रसिद्ध्यति'** [१२.२९] इति मनुः।

**'नित्यस्तु तस्य दर्शनस्य परार्थत्वात्'** [पू.मी.१.१.१८] इति जैमिनीयं सूत्रम्।

**'साक्षात्कृतधर्माण ऋषयो बभूवुः। तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् सम्प्रादुः'** [निरु.१.२०] इति यास्कः।

**'न पौरुषेयत्वं तत्कर्तुरभावात्'** [५.४६] इति साङ्ख्यसूत्रम्।

पतञ्जलिरप्याह–

**'स्वरो नियत आम्नाये। वर्णानुपूर्वी खल्वप्याम्नाये नियता'** [५.२.५६] इति।

आह च भट्टः कुमारिलः–

**'सर्वे हि यथैव गुरुणाऽधीतं तथैवाधिजिगांसन्ते, न पुनः स्वातन्त्र्येण कश्चिदपि प्रथमोऽध्येता वेदानामस्ति, यः कर्ता स्यात्। तस्मात् कर्तृस्मरणाभावादपौरुषेया वेदा इति भावः'** [तन्त्रवा.१.१.२६] इति ।

## कणादगौतमावप्यपौरुषेयत्ववादिनौ

यद्यपि वैशेषिकाः वेदान् पौरुषेयान् मन्यन्ते । परमपुरुषेण सर्गादौ प्रणीतास्त इति। यथाऽऽह– **'तद्वचनादाम्नायस्य प्रामाण्यम्'** [वै.सू.१.१.३] इति कणाद-सूत्रम् । **'तेनेश्वरेण वचनात् प्रणयनादाम्नायस्य प्रामाण्यम्'** इत्युदयनः ।

न्यायशास्त्रेऽपि तथा– **'तत्प्रामाण्यमाप्तप्रामाण्यात्'** [२.१.६७] इति गौतम-सूत्रम् ।

अनुयायिनां भगवती भ्रान्तिरियम् । न वेदानां पौरुषेयतां मन्यते कणादः । नापि गौतमः ।

ननु पुरुषप्रणीतं हि पौरुषेयं भवति । पुरुषप्रणीतता च स्फुटमभ्युपागम्यत कणादादिभिरिति। सत्यम्, अथापि द्विविधं हि प्रणयनं भवति– अविद्यमानस्य प्रथमनयनं च प्रणयनम् । विद्यमानस्यैव प्रकाशनयनं च ।

प्रकाशनं सूत्रकार आह। अविदितसूत्रभावा भाष्यकाराः प्रथमनयनं प्रणयनमिति विभ्रम्य बभाषिरे ।

कथमथ विज्ञायेत– 'प्रकाशनयनं सूत्रकार आह' इति । 'अविदितसूत्रभावा भाष्यकारा विभ्रम्य बभाषिरे प्रथमनयनं प्रणयनमिति' इति? व्याहन्यमानात् तेषां व्याख्यानादेव ।

तथाहि– सत्यमीश्वरः प्रणिनाय वेदानिति वेदाः पौरुषेयाः । अथ कदा नु प्रणिनाय? ननु सर्गादौ प्रणिनाय । रूपाणि च ससर्ज । नामानि च ।

अथ ततः पुरा किमासीत् । विश्वप्रळयः । न तदा रूपाण्यासन् नापि नामान्यासन् । ननु मास्म विस्मरो विश्वप्रळय इत्यवद इति । तर्हि प्रळयात्

पूर्वमपि विश्वमासीत्। सत एव हि लयो भवति। नासतः। नहि शशविषाणमपि प्रळये विलीयत इति कोऽप्यनुन्मत्तो वक्ति। तर्हि प्रळयात् पूर्वमपि नामरूपे अभूताम्। एवं ततः पूर्वतने, पूर्वतरे च सर्गे। एवं सर्वोऽपि प्रळयः सर्गपूर्व इति कस्मिन् सर्गे प्रथममीश्वरो वेदान् ससर्जेति पृच्छतां किमुत्तरं ब्रूषे? वरमनुत्तरं शरणम्। तदेवमनिच्छताऽप्यूरीकृतं वेदानामपौरुषेयत्वम्।

तथाहि न्यायभाष्यम्– **'मन्वन्तरयुगान्तरेषु चातीतानागतेषु सम्प्रदायाभ्यासप्रयोगाविच्छेदो वेदानां नित्यत्वम्'** इति।

यथा मन्वन्तरयुगान्तरेषु तथा सर्गान्तरेषु चेति कथं व्यस्मार्षीः? अहो विस्मरणशीला अपि भाष्यकारा भवन्ति।

एतेन समानयोगक्षेमः किरणावलीकृदुदयनोऽपि तपस्वी क्षन्तव्यः। यदाह– **'अविच्छेदे तद्वचनादाम्नायस्य प्रामाण्यमिति व्याकुप्येत। लोकसन्तत्यविच्छेदे वेदसम्प्रदायस्याप्यविच्छेदात्'** इति।

अविच्छेदपूर्वः सर्वोऽपि विच्छेदो भवति। कथमिदमुदयनो विसस्मारेति विस्मयावहमेतत्। विच्छिन्ना व्यष्टिः। सन्ततिरविच्छिन्ना। अपव्याख्यानेन सत्यस्यापिहितं मुखम्। एतेन कणादगौतमादयोऽपि वेदानामपौरुषेयतामनुमन्यन्त इति स्थितम्। विवक्षाभेदेन हि सर्वे व्याहारा भवन्ति। तेन पौरुषेयत्वसमानाधिकरणमपौरुषेयत्वमिति सर्वेषां वैदिकानामैककण्ठ्यम्। वेदानामपौरुषेयतामभ्युपयतः सायणस्य पश्यतोद्वारमृग्भाष्यभूमिकायाम्– **'वेदस्यापि परमेश्वरनिर्मितत्वेन पौरुषेयत्वात्'** इति।

## पतञ्जलेर्मतभेदः

पतञ्जलिस्तु वेदानां अवान्तरभागा अनित्या इति मन्यते। तथाहि **'तेन प्रोक्तम्'**[४.३.१०१] इति पाणिनीयं सूत्रं व्याचक्षाणः स आह– **'यद्यप्यर्थो नित्यः। या त्वसौ वर्णानुपूर्वी साऽनित्या। तद्भेदाच्चैतद् भवति काठकं कालापकं मौदकं पैप्पलादकमिति'** इति।

न्यासकारस्तु सूत्रमेतत् किञ्चिदिवान्यथा व्याचख्यौ– **'तेन व्याख्यातं तदध्यापितं वा प्रोक्तमित्युच्यते'** इति।

काशिकाकृदप्याह– **'प्रकर्षेणोक्तं प्रोक्तमित्युच्यते, नतु कृतम्'** इति।

एतेन कठेन प्रोक्तं प्रणीतानुपूर्वीकं काठकमिति पतञ्जलिमते सूत्रार्थोऽवगम्यते। एकां नित्यामानुपूर्वीं दृष्टवन्तो मुनयः कठादयः तमेवार्थं अन्यानन्यान् शिष्यान् ग्राहयितुं अन्यामन्यामानुपूर्वीमुपयुज्य मन्त्रान् सम्प्रादुरिति।

न्यासकारस्तु नैवं मन्यत इव। प्रतनैरुक्तं प्रोक्तम्। तामेवानुपूर्वीं व्याख्यानेन अध्यापनेन विस्तार्य प्रकर्षेणोक्तं प्रोक्तमिति न्यासकारमतमिति प्रतीयते।

## चतुर्मुखो वेदः

सोऽयं चतुर्मुखः सन् ववृधे वेदः। तानीमानि चत्वारि मुखानि– संहिता, ब्राह्मणम्, आरण्यकम्, उपनिषच्चेति।

मूलमन्त्रभागः संहिता। तस्य परिशिष्टं ब्राह्मणम्। तद् यथा महाभारतं वैयासिकी पञ्चमी संहिता। तस्य हरिवंशं परिशिष्टम्।

मन्त्रार्थं स्फुटयद् विनियोगं प्रदश्र्य कर्मसु प्रवर्तयति यत् तद् ब्राह्मणम्। स एव च ब्राह्मणपदार्थः।

यद् बृहद् भवति तद् ब्रह्मेत्युच्यते। यत् सर्वस्मादपि बृहत् तत् किल ब्रह्मेत्याचक्षते। द्वे एव सर्वस्मादपि बृहती। वाचकेषु वेदः। वाच्येषु भगवान्।

तेन द्वे वाव ब्रह्मणी– शब्दब्रह्म, परं च ब्रह्म। वेदवेद्यो भगवान्, भगवद्वेदको वेदश्च।

सम्प्रति, ब्रह्मेति वेदः। यद् वेदार्थं कृपयाऽवगमयति तद् ब्राह्मणम्। यश्च वेदार्थमवगच्छति स ब्राह्मणः। अण गतौ। ब्रह्म आणयतीति ब्राह्मणं शास्त्रं वर्णव्यत्ययेन। ब्रह्म अणतीति ब्राह्मणः पुमान्।

नन्वणतीति को धातुः। उक्तं भोः गतिकर्मा धातुरिति। न पठ्यते धातुपारायणिकैः। अपठ्यत धातुपारायणिकैः। व्यस्मर्यत भवता। उपद्वादशसहस्रा हि धातव आसन्। द्वित्राणि सहस्राण्येवाधुना पठन्ति। कथं विज्ञायते, तेषु विस्मृतेषु परःसहस्रेष्वयमेक इति। प्रयोगाद् विज्ञायते। तथा ह्याथर्वणिकाः पठन्ति– **'यच्च प्राणति यच्च न'** [अथ.सं.१३.१४.१] इति।

अथापि प्रवृत्तिमुखेषु ब्राह्मणेषु, निवृत्तिमुखं दर्शयित्वा निवृत्तिपद्यां जिगमिषूणामुपकारकमारण्यकं भवति। तद्धि आरण्यकं भवति ये गृहादरण्याभिमुखं गतास्तेषामेतद् भवतीति, यदेतदरण्येऽध्ययनीयं साधनीयं चेति।

पुरा किल गृहेष्वनुभूतगार्हस्थ्या अरण्यं प्रति प्रतिष्ठमाना बभूवुः। सुखं गृहस्था अभूम; इतो वानप्रस्थसुखमनुभविष्याम इति। यावत् पुत्राणां कळत्रपुत्रलाभः तावद् गार्हस्थ्यं पितुः। तावत् प्रवृत्तिमयं साधनम्।

अथ दायभारं तनयेषु निक्षिप्य वृद्धः पिता विपिनं जिगमिषति। एकान्तसाधनाय वनप्रस्थानं हि वानप्रस्थम्। तत्र साधकस्योपकारको वेदभाग आरण्यकम्।

आरण्यकमन्ततः अरण्येष्वेवाधीयत इति नार्थः। पुरे वा पल्ल्यां वा वसन्नेव, गार्हस्थ्यमनुभवन्नेव आरण्यकमधीत्य पीठिकामारचयति। अरण्ये पुनरधीतस्यानुष्ठानम्। एवं प्रवृत्तितः पराङ्मुखतामापाद्य निवृत्तिरसमास्वादयितुं प्रचोदयति आरण्यकम्।

ब्राह्मणानां सार आरण्यकम्। आरण्यकसार उपनिषदः।

निवृत्तं सेवमानानां परिपूर्णा साधनसरणिः।

तदिमानि चत्वार्याननानि आम्नायपुरुषस्य। एतेषां च चतुर्णामाश्रमाणां च कश्चनान्तःसम्बन्धतन्तुरस्ति–

संहितामधीते ब्रह्मचारी। ब्राह्मणोक्तमग्निमुखेनानुतिष्ठति गृहस्थत्वे। वनं प्रस्थायारण्यकोक्तं सिषाधयिषति। उपनिषद्भिः समग्रं ब्रह्मचिन्तनं तुरीयाश्रम इति।

## किमुपनिषदोऽप्यपौरुषेयाः?

अथ शाखोपशाखानां अपौरुषेयतां मन्वाना अपि केचित् ब्राह्मणानामारण्यकानामुपनिषदां चापौरुषेयतां नानुमन्यन्ते। इतिहासगर्भत्वात्। नहि नित्येषु वेदेष्वितिहासप्रसारावसर इति। ननु मन्त्रेऽपि पठ्यन्ते ऐतिहासिकाः पुरुषाः– यदुरिति तुर्वश इति बृहद्रथ इत्यादि। तथाह्यृग्वेदे–

**अ॒ग्निना॑ तु॒र्वशं॒ यदुं॑ परा॒वतं॑ उ॒ग्रादे॑वं हवामहे।**
**अ॒ग्निर्न॑यन्नव॑वास्त्वं बृ॒हद्र॑थं तु॒र्वीतिं॒ दस्य॑वे॒ सहः॑** [१.३६.१८]

इत्याद्या बह्वो मन्त्राः पठ्यन्ते। व्याख्यातश्चायं मन्त्रो भगवत्पादैरैतिहासिकपुरुषपरतया भगवत्परतया च–

**'तुर्वशादींस्तथा राज्ञो वयं तेन हवामहे।**
**'तुरोऽपि यद्वशो विष्णुः स च तुर्वशनामवान्।**
**'यदस्ति तत उच्चत्वाद् यदुरुग्रोऽसुरान् प्रति'** इत्यादि।

तस्याध्यात्मादिपरतया निर्वचनेनान्य एवार्थो वर्णनीय इत्यर्वाचीनाः। तथाह्याह दयानन्दसरस्वती–

**'ईदृश्यः प्रमत्तगीतवत् प्रळपिताः कथाः पुराणाभासादिषु नवीनेषु ग्रन्थेषु मिथ्यैव सन्तीति भद्रैर्विद्वद्भिर्मन्तव्यम्'** इति।

**'एवं परमोत्तमायां विद्याविज्ञापनार्थायां रूपकालङ्कारेणान्वितायां सत्यशास्त्रेषूक्तायां कथायां सत्यां व्यर्थपुराणसञ्ज्ञकेषु नवीनेषु तन्त्रादिषु ग्रन्थेषु च या मिथ्यैव कथा वर्णिताः सन्ति विद्वद्भिर्नैव ताः कदाचिदपि सत्या मन्तव्याः'** इति च।

**'अतो नात्र मन्त्रभागे हीतिहासलेशोऽप्यस्तीत्यवगन्तव्यम्। अतो यच्च सायणाचार्यादिभिर्वेदप्रकाशनादिषु यत्रकुत्रेतिहासवर्णनं कृतं तद् भ्रममूलमस्तीति मन्तव्यम्'** इत्यादि च।

मन्त्रेषु यथा ब्राह्मणेष्वपि तथैवेति सर्वत्राऽध्यात्मिकमर्थान्तरमनुसन्धेयमिति मीमांसकाः। तथाहि कुमारिलभट्टः–

'यत्तु प्रजापतिरुषसमभ्यैत् स्वां दुहितरम्, अहल्याया इन्द्रो जार आसीदित्येवमादिदर्शनादितिहासदर्शनाच्च शिष्टाचारेषु धर्मातिक्रमं पश्यद्भिः शिष्टाचारप्रामाण्यं दुरध्यवसानमिति । तत्रोच्यते । प्रजापतिस्तावत् प्रजापालनाधिकारादादित्य एवोच्यते। स च अरुणोदयवेलायामुषसमुद्यन्नभ्यैत्, सा तदागमनादेवोपजायत इति तद्दुहितृत्वेन व्यपदिश्यते। तस्यां चारुणकिरणाख्यबीजनिक्षेपात् स्त्रीपुरुषयोगवदुपचारः। एवं समस्ततेजाः परमैश्वर्यनिमित्तेन्द्रशब्दवाच्यः सवितैवाहनि लीयमानतया रात्रेरहल्याशब्दवाच्यायाः क्षयात्मकजरणहेतुत्वात् जीर्यत्यस्मादनेन वोदितेनेत्यादित्य एवाहल्याजार इत्युच्यते, नतु परस्त्रीव्यभिचारात्' [तन्त्र.वा.१.३.७] इत्यादि।

शबरस्वामी चाऽह–

'असद्वृत्तान्तान्वाख्यानं स्तुत्यर्थेन । प्रशंसाया गम्यमानत्वात्' इति ।

'वृत्तान्तान्वाख्यानेऽपि विधीयमाने आदिमत्त्वदोषो वेदस्य प्रसज्येत' इत्यादि ।

तत्ववादिनस्तु आध्यात्मिकं ऐतिहासिकं चेत्यर्थद्वयमपि प्रामाणिकमाचक्षते। नैरुक्ताश्च । तथाहि यास्कः–

'ऋषेर्दृष्टार्थस्य प्रीतिर्भवत्याख्यानसंयुता' [निरु.१.४०] इति ।

व्याचख्यौ च दुर्गाचार्यः– 'अतश्च दर्शयति मन्त्राणामैतिहासिकोऽप्यर्थ उपेक्षितव्यः । असावपि तेषां विषयः' इति ।

उपेक्षितव्य इति उपपन्न इतीक्षितव्य इत्यर्थः ।

स्कन्दस्वामी तु मन्यते– 'औपचारिकोऽयं मन्त्रेष्वाख्यानसमयः । नित्यत्वविरोधात्। परमार्थेन तु नित्यपक्ष एवेति नैरुक्तानां सिद्धान्तः' इति ।

हरिस्वामी त्वपूर्वं शास्त्राशयमाविश्चकार–

'यद्यपि किञ्चिदनित्यार्थवचनमिव दृश्यमानम्, ततो वृत्तान्तादर्वाक् प्रवृत्तं वा ग्रन्थस्यांशं कथयति– 'वृत्रो हवा इदं सर्वं वृत्वा शिश्ये' इत्यादि तदपि नैरुक्तदिशा प्रवाहनित्यमेव । सर्ववृत्तान्तानां शीतोष्णवर्षाद्यावर्तवत् यथाकालवर्तमानानामनाद्यनन्तानां वेदेन कर्मकालेऽतीतरूपेण प्रतिपादनाददोषः' इति ।

अयमेवास्माकं च सम्मतः समाधिः । सर्वस्यापि वैदिकस्येतिहासस्य सर्वकल्पेष्वनुवर्तमानतया यदभूत् तद् भविष्यति । यद् भविष्यति तदभूच्च । यदिति ह भविष्यति तदेव इति हाऽस च । तेन न कोऽपि दोषः ।

वस्तुतस्तु पौरुषेयत्वे किलेदमापादनमर्थवत् स्यात् । नहि काळिदासकृतिषु रामानुजस्य वा मध्वस्य वोल्लेखः सम्भवति । पूर्वतनत्वात् काळिदासस्य । पश्चात्तनत्वाद् रामानुजस्य मध्वस्य च । अपौरुषेये पश्चात्तनमप्युच्येत, सार्वकालिकसत्याविष्काररूपत्वाद् वेदानाम्; ईशबुद्धिगतत्वाच्च भूतभाविभवतां सर्वपदार्थानाम् ।

अथच पौरुषेयेष्वपि भविष्यदर्थकथनं दृश्यते । किमुतापौरुषेयेषु । तथा हि वाल्मीकिरामायणे मध्वकथा श्रूयते– '**ससूत्रवृत्त्यर्थपदं महार्थं ससङ्ग्रहं साध्यति वै कपीन्द्रः**' [उ.कां.७.४३] इति ।

तस्मादैतिहासिकार्थप्रहाणं वा, वेदानामनैतिहासिकपरत्वाग्रहणं वा केवलं भ्रममूलम् ।

## वेदोपबृंहणानि पुराणानि

अथापि पुराणानि वृथाकथानीति न तानि प्रमाणपदवीमर्हन्तीत्येतदप्यनेनैवापहस्तितम् । इतिहासपुराणयोरपि वेदपरिगृहीतत्वात् –'**इतिहासपुराणः पञ्चमो वेदानां वेदः**' इति । '**इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्**' इति संवादाच्च । अथचेदं न विस्मर्तव्यम्– यदि व्यासप्रणीतानि पुराणानि न प्रमाणम्, कथमथ तेनानाप्तेन मिथ्यावादिना सङ्कलिता वेदाः प्रमाणं स्युः?

तस्माद् युक्तम्– 'चतुर्विधाश्चत्वारो वेदाः, पुराणानि, इतिहासौ च भारतरामायणे प्रमाणाभूताः सप्त मातर इति । अपि च इतिहासलेशोऽपि वेदेषु नेष्यत इति वदन्तः प्रष्टव्याः । किमितिहासत्वादेव नेष्यन्ते, उत तस्येतिहासत्वेनाभिमतस्य मिथ्यात्वात् । नाऽद्यः । नहि कस्यचिद्राज्ञ एवमाज्ञाऽस्ति यद्वेदेषु नेतिहासो वर्णनीय इति । नापि तत्रभवतां वेदवादरतानामाज्ञामात्रेण दण्डवारित इव बिभ्यद् वेदोऽपसरति । नापि द्वितीयः । असिद्धेः । न हि वेदेषु च पुराणेषु

चर्षिगदिता कथा वृथा भवितुमर्हति। केवलं भवान् न श्रद्धत्तेत्येतावता। अपि च कथानामसङ्गतत्वात् न ता वेदगदिता इति भवान् मन्यते। वयं तु ब्रूमः, वेदगदितत्वादेवैताः सङ्गताः प्रमाणभूताश्चेति।

ननु परस्परं व्याहन्यमाना विभिन्नप्रकारा वा कथाः कथमितिहासतां यन्ति? श्रद्धत्स्व तपस्विन्! प्रयतस्व च। भवतोऽपि प्रतिभास्यन्ति सङ्गता अर्थाः। यदि पश्यसि निरस्तपुराणदुराग्रहेण मनसा चक्षुषी उन्मील्य।

## अपौरुषेयत्ववादिनां सारसङ्ग्रहः

द्विविधं हि वचनं भवति– स्ववचनं प्रवचनं च।

स्वेन कृतं बुद्धिपूर्वं स्वरचितानुपूर्वीकं स्ववचनं भवति।

यत् स्वेन स्मृतं प्रतनं वचनं प्रवचनं भवति।

अर्थमनुवर्तमाना वाक् पौरुषेयी भवति।

यत्र वाचमर्थोऽनुधावति साऽपौरुषेयी भवति।

केचनार्थाः बुद्धिपूर्वं प्रयत्नमास्थायानुसन्धीयन्ते।

केचनाबुद्धिपूर्वमप्रयत्नं सहसा च्युता इव दिवः, अवपतिता इव वियतः स्फुरन्तो भासन्ते।

एवं वागपि काचित् हठादाकृष्य पदानि स्मारंस्मारं विरच्यते।

सा पौरुषेयी भवति। तां बुद्धिमत्तामाहुः।

अपरा पुनरबुद्धिपूर्वमप्रयत्नं सहसा स्फोरंस्फोरं वदनादुद्गच्छति स्तबकादिव कुसुमानि वक्तुरपि विस्मयमावहन्ती किं मयैवोदीरितमेतदिति। साऽपौरुषेयी भवति। तां स्फुरत्तामाहुः।

एका बुद्धिमत्तामातृका। अपरा स्फुरत्तामातृका।

एतेनापौरुषेयं वाक्यमेव नास्तीति वदन्तः स्फुरत्ताविधुराः शोचनीयाः। स्फुरणं च पुण्यभाजां भागधेयबलाद् भवति।

## इतिहासो नाम चक्रभ्रमणम्

केचन संहितानामेवापौरुषेयत्वं मन्यन्ते ।

केचन निषदामुपनिषदामपि ।

केचन संहितास्वपि मूलशाखासंहितानामेवापौरुषेयत्वं मन्यन्ते । नावान्तरशाखादीनामपि ।

कस्तावदस्मत्समयः? यया धारणया संहिताया अपौरुषेयत्वं परो मन्यते तयैव धारणया निषदामुपनिषदामप्यपौरुषेयत्वं वयमाचक्ष्महे । यद्युपनिषदामपौरुषेयत्वं नाङ्गीकरिष्यते । तेनैव नयेन संहितानामप्यपौरुषेयत्वं न स्याद् ।

ननु निषत्सूपनिषत्सु चेतिहासः श्रूयते । श्वेतकेतुर्नचिकेता उद्दालक इत्यादयः ऐतिहासिकाः पुरुषाः श्रूयन्ते । एते किल पश्चात्तने काले जीवन्ति स्म । ततः पुरातनेऽपौरुषेये कथमेतेषामुल्लेखः सम्भवति । यद्यभविष्यन्नपुरुषनिर्मिता वेदा नोत हन्तेम ऐतिहासिकास्तत्र उदलिखिष्यन्त ।

ननु भोः! बलवती भगवती भ्रान्तिः । अपुरुषनिर्मिता वेदाः इति स्वयमवोचः । तत्रैवोत्तरमस्ति त्वदीयस्याऽक्षेपस्य । अपौरुषेयत्वादेव पाश्चात्यमप्युल्लिख्येतेति । यदि केनचिन्निर्मितं ततः पाश्चात्यं प्रमेयं तत्र न शक्योल्लेखम् । अपुरुषकृतस्य तु न पूर्वेयत्ता, नाप्यपरेयत्ता । यादाचित्कमप्युल्लिख्येत । अनादित्वादेव वचनानाम् । अपि च घटना अपि प्रवाहतोऽनादयः । ये भविष्यन्ति ते अभूवन्नपि । येऽभूवन्, तेऽपि भविष्यन्ति । इतिहासो नाम न निरन्तरा सरळरेखा । किन्तु चक्रभ्रमणम् ।

नन्वैतिहासिकानां पुरुषाणामुल्लेखः संहितायामपि भवतीत्युक्तम्–

**'अग्निना तुर्वशं यदुम्'** इत्यादि ।

तत्र यत् समाधानं तदेवात्रापि भवति समाधानम् ।

ननु तत्रान्योऽर्थः कल्प्यते । सममेव समाधानम् । कल्प्यतामत्रापि । कस्ते हस्तं निपीड्य निवारयति?

तस्माद् युक्तम्– **'मन्त्रब्राह्मणयोर्वेदनामधेयम्'** इति ।

कथमथ उपशाखासु?

यथा शाखासु तथाऽवान्तरशाखास्वपि । **'चतुर्धा व्यभजत् तांश्च चतुर्विंशतिधा पुनः'** इति समानकक्ष्यतया व्यासवचनादेव ।

यास्केनाप्युक्तम्– **'नियतवाचोयुक्तयो नियतानुपूर्व्या भवन्ति'** [निरु.१.१५] इति ।

नन्विदं संहितायामेव सीमितं वक्तव्यम् । पतञ्जलिवचनमप्यत्र संवदते– **'योऽसावर्थः स नित्यः । या त्वसौ वर्णानुपूर्वी साऽनित्या । तद्भेदाच्चैतद् भवति काठकम्, कालापकम्, मौदकम्, पैप्पलादकमिति'** इति । **'अनुवदते कठः कलापस्य'** [२.४.३] इति च ।

यास्कोप्याह– **'साक्षात्कृतधर्माण ऋषयो बभूवुः । तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् सम्प्रादुः । उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुः वेदं च वेदाङ्गानि च'** [१.२०] इत्यादि । तथाहि प्राचीनम् [निरुक्तवार्तिकम्]–

> **'असाक्षात्कृतधर्मभ्यस्तेऽपरेभ्यो यथाविधि ।**
> **'उपदेशेन सम्प्रादुर्मन्त्रान् ब्राह्मणमेव च'** इति ।

उपदेशश्च वेदव्याख्या । यथोक्तम्–

> **'अर्थोऽयमस्य मन्त्रस्य ब्राह्मणस्यायमित्यपि ।**
> **'व्याख्यैवात्रोपदेशः स्याद् वेदार्थस्य विवक्षितः'** इति ।

उपदेशाय ग्लायन्त इति । उपदेशेन ग्राहयितुमशक्ता इत्यर्थः । अपरे द्वितीयेभ्यो न्यूनाः । बिल्मग्रहणाय उपायतो वशीकरणाय इमं ग्रन्थं वक्ष्यमाणं समाम्नासिषुः समाम्नातवन्तः । तमेवाह– वेदं च वेदाङ्गानि चेति । अङ्गशब्द उपाङ्गादेरप्युपलक्षणार्थः । वेदमुपदेशमात्राद् ग्रहीतुमशक्ताः, वेदं समाम्नासिषुः, वेदार्थं चोपदेशेन ग्रहीतुमशक्ताः अङ्गानि च समाम्नासिषुरिति । यथोक्तम्–

'अशक्तास्तूपदेशेन ग्रहीतुमपरे तथा।
'वेदमभ्यस्तवन्तस्ते वेदाङ्गानि च यत्नतः' इति।

अत्रापि स्फुटं मन्त्रब्राह्मणयोर्वेदत्वम्।

तत्सामान्याच्छाखान्तरास्वप्यपौरुषेयत्वमेव युक्तम्।

## खण्डनमप्यपौरुषेयम्

नन्ववान्तरशाखासु ब्राह्मणारण्यकेषु च परस्परखण्डनं दृश्यते। तस्मात् तानि पौरुषेयाणीति युक्तम्।

तथाहि श्रूयते– **'तदुहैक आहुः– 'होता यो विश्ववेदसः' इति। नेदरमित्यात्मानं ब्रवाणीति तदु तथा न ब्रूयान्मानुषं ह ते यज्ञे कुर्वन्ति। व्यृद्धं वै तद्यज्ञस्य यन्मानुषम्। नेद् व्यृद्धं यज्ञे करवाणीति तस्माद् यथैवर्चाऽनूक्तमेवानुब्रूयाद् 'होतारं विश्ववेदसम्'** इति [शत.ब्रा.१.४.१.३५] इति।

अन्यत्रापि तैत्तिरीयाणां खण्डनं काण्वे शतपथे श्रूयते। ऐतरेयब्राह्मणेऽपि।

क्वचिदानुपूर्वीभेदश्च पौरुषेयतां गमयति। तथाहि निरुक्ते यास्कः– **'यदरुदत् तद् रुद्रस्य रुद्रत्वमिति काठकम्। यदरोदीत् तद् रुद्रस्य रुद्रत्वमिति हारिद्रविकम्'** इति [१०.५]।

नह्यपौरुषेये द्विधा पाठे किञ्चित् प्रयोजनम्।

पाठभेदश्च हि शतपथब्राह्मणेऽपि व्यक्तमुक्तः–

**'अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्। होतारं रत्नधातमम्। इत्येवमादि कृत्वा ऋग्वेदमधीयते। इषेत्वोर्जे त्वा वायवः स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे इत्येवमादि कृत्वा यजुर्वेदमधीयते। अग्न आयाहि वीतये गृणानो हव्यदातये। नि होता सत्सि बर्हिषि इत्येवमादि कृत्वा सामवेदमधीयते'** [गो.ब्रा.१.१.२९] इति।

एतेनैतदवगम्यते– **'इषे त्वोर्जे त्वा वायवः स्थ देवो वः सविता–'** इत्यादिर्मूलश्रुतिपाठः। शिष्यबोधनाय मध्ये **'उपायवः स्थ'** इति पदमुपक्षिप्य तैत्तिरीयैः

परस्तात् पठितमिति । तेन **'या वर्णानुपूर्वी साऽनित्या'** इति पतञ्जलि-भणितमप्यनुगतं भवति ।

द्वाभ्यां युक्तिपक्षाभ्यां डयमानोऽयं पूर्वपक्षी बलीयानिव भाति । चण्ड-तुण्डोऽयमखण्डनीय इव भाति ।

अथ सशाखोपशाखं समग्रं वेदकदम्बमपौरुषेयं मन्यमानाः किमिह वदन्ति? कथमेतं प्रश्नजलधिमुत्तरन्ति–

अयमिह प्राचीनानां तत्ववादविदुषामाशयः । संहितासु यावन्तः पाठभेदाः परिदृश्यन्ते ते सर्वेऽप्यपौरुषेयाः । तद् यथा **'सहस्रशीर्षा पुरुषः–'** इत्यृग्वेदे यजुर्वेदे सामवेदे च । **'सहस्रबाहुः पुरुषः–'** [१९.६.१] इत्यथर्ववेदे । **'एतावानस्य महिमाऽतो ज्यायांश्च पूरुषः'** इत्यृग्वेदे । **'तावन्तो अस्य महिमानस्ततो ज्यायांश्च पूरुषः'** [१९.६.३] इत्यथर्ववेदे । **'तावानस्य महिमा'** इतिच्छन्दोगोपनिषदि । यथा वा **'सप्तास्याऽसन् परिधयः'** इत्यध्वर्यूणां सूक्ते सप्तमो मन्त्रः । बह्वृचानामुपान्त्यः । यथा वा समग्रं सूक्तमष्टादशर्चं याजुषाणाम् । षोळषर्चं बह्वृचानाम् । नात्र काचिन्मानुषी व्यवस्था । सर्वमेतदपौरुषेयमिति वेदज्ञा मन्यन्ते ।

ननु स्वपक्ष एव कथ्यते । किन्त्वविपरिहृतो विपक्षः ।

तदर्थमेवायं किल प्रयासः । शृणु सावधानम् । त्वरमाणः कार्यं विहन्ति ।

प्रथमस्तावदयमाक्षेपः– ब्राह्मणारण्यकेषु परस्परदूषणं दृश्यते । तदुक्तं नाऽदृत्यमित्येते । एतदुक्तं नाऽदृत्यमिति ते । तेन स्फुटमवगम्यते नैतान्य-पौरुषेयाणीति । धर्मादिसिद्ध्यर्थं किञ्चित् सर्वदोषविधुरं वचोऽपेक्षितमिति किल वेदानामपौरुषेयत्वमूरीकृतम् । यदि तत्रापि परस्परं दोषारोपस्तर्हि वृथा किमपौरुषेयवचनाभ्युपगमेन ।

न भोः । अपौरुषेयेष्वपि युज्यते परस्परनिराकरणम् । तद् यथा भिषगेकमातुर-माह– 'पयः पीयतां यथेच्छम्' इति । अपरमाहूयाऽह– 'यदि केचिदाहुः पयः

पीयतामिति। तन्नाऽद्दत्यम्। नेत् पयः पीयताम्। तक्रं ते पथ्यम्' इति। एवं वेदपुरुषोऽपि रोगार्तमाह– 'यत् केचित् तैत्तिरीयाः पठन्ति तत् तेषां पथ्यं न ते। त्वं पुनरैतरेयोक्तं चर। त्वं काठकोक्तम्। त्वं कालापकोक्तम्' इत्यादि। यतः पाठभेदा इव प्रतिशाखमनुष्ठानभेदा अपि भवन्ति। तानेतान-नुष्ठानभेदानपि भगवती श्रुतिरेव कृपया प्रकटयति– 'तवैष समाचारः, तव त्वेषः' इति।

ननु शतपथब्राह्मणं स्फुटं पौरुषेयत्वमाह– **'तदु तथा न ब्रूयान्मानुषं ह ते यज्ञे कुर्वन्ति। व्यृद्धं वै तद् यज्ञस्य यन्मानुपम्'** इति। मनुष्यकृतं हि मानुषम्। तत् कथमपौरुषेयं स्यात्।

तथ्यमाह भवान् मनुष्यकृतं मानुषमिति। नह्येषा श्रुतिर्वेदमन्त्राणां मानुषत्व-माह। श्रुत्वाऽपि श्रुतिवचनं न तस्य भवानर्थमबोधि। ननु स्मारयतीव भवांस्तत्रभवतीं श्रुतिम्– **'उत त्वः पश्यन् न ददर्श वाचमुत त्वः शृण्वन् न शृणोत्येनाम्'** इति। अयमिह शतपथब्राह्मणस्यार्थः– होतारं विश्ववेदसमिति मन्त्रे वक्तव्य उपस्थिते यद्येके, अर्थः किल नियतः, किं पदैस्तैरेवाऽम्रेडितैरिति मन्यमानाः पण्डितम्मन्याः ब्रूयुः 'होता यो विश्ववेदसः' इति, तर्हि सा पदानुपूर्वी मानुषी भवति। तेन यज्ञस्य वृद्धिर्विहन्यते। अतो न केवलमर्थः। किन्त्वक्षरानुपूर्वी च मन्त्रेषु नियतेति।

## पाठान्तरमप्यपौरुषयम्

अस्त्वेतत्। पाठभेदस्तु किन्निबन्धनः? नहि कठानां हारिद्रविकानां च विभिद्य पाठे किञ्चित् प्रयोजनं वा निमित्तं वा पश्यामः। एवमन्यास्वपि शाखासु।

दत्तोत्तरमेतत् पुरषसूक्तदृष्टान्तेन।

उपासनाभेदेन गुणानुसन्धानभेदेन च पाठभेदा भवन्ति। नचैतत् पुरुष-कृतम्। किन्तु वेदपुरुषमनोगतमेव।

तथाहि– **'एतावानस्य महिमा'** इति पूर्वमन्त्रद्वयोदितं महिमातिशयं परामृशति । **'तावन्तोऽस्य महिमानः'** इति, **'तावानस्य महिमा'** इति च पुनरत्र साक्षादुक्तमनुक्तं च गुणजातमनुसन्धत्ते । गुणानां परोक्षतां च । यद्यप्यत्र बहवोऽर्थविशेषाः परिस्फुरन्ति । किन्तु न बहु वक्तव्यमिति विरम्यते ।

**'सप्तास्याऽसन्'** इति सप्तममन्त्रतया पाठः प्रकरणसङ्गतः । उपान्त्यतया पाठः प्रकरणे न लगति । अथ साधकश्चिन्तयति– नेयमृगत्र सङ्गता । अथापि पठिता । तेन ज्ञायते अनेन क्रमव्यत्यासेनापि भगवती श्रुतिः कश्चनानुसन्धानक्रमं बुबोधयिषतीति । एवं चिन्तयन्नवगच्छति चार्थविशेषम् । पूर्वं लोकाः पठिताः । तेनात्र मन्त्रे सप्त लोकाः परिधय अवधेया इति सूचयामासेति । पूर्वं पुरुषः पठितः । तेनात्र मन्त्रे पादौ हस्तावुदरमुरः शिरश्चेति सप्त परिधय अवधेया इति सूचयामासेति । त्रिःसप्त समिध इत्याह । पूर्वं लोकाः पठिताः । तेनात्र लोकसम्बद्धतया द्वादशमासाः पञ्चर्तवस्त्रय इमे लोका असावादित्यश्च समिधोऽनुसन्धेया इति सूचयामास । पूर्वं पुरुषः पठितः । तेनात्र पुरुषसम्बद्धतया हस्तयोर्दश, पादयोश्च दशाङ्गुलयः, शिरश्चेति त्रिःसप्त समिधोऽनुसन्धेया इति सूचयामास ।

बाह्वृच्ये पौरुषे सूक्ते षोळश मन्त्राः । षोळशकलः पुरुष इति तेनाऽह । आध्वर्यवेऽष्टादश मन्त्राः । पञ्चदशभिः कलाभिरावृता षोळशी कला जीवस्वरूपं क्षरपुरुषः, सप्तदशी चित्प्रकृतिरक्षरपुरुषः, अष्टादशः परमपुरुष इति तेनाऽह । अथर्ववेदे च षोळश मन्त्राः। षोळशकलः पुरुष उपास्य इति तेनोऽहेत्यादि ।

एवं सर्वत्र मन्त्राणां पदानामक्षराणां चाऽवापोद्वापाभ्यामपूर्वार्थगर्भिणी रमणीया श्रुतिरमणी भवति ।

एतेन तात्पर्यगर्भ एव श्रुतिकुमार्याः पुंयोगे मानमिति वदन्तोऽपि दत्तोत्तराः । परमपुरुषयोगस्याभ्युपगमात् । अपौरुषेयत्वसमानाधिकरणो ह्ययं योगः ।

यथा पौरुषे सूक्ते तथा सर्वत्र । अनुसन्धानवैपुल्यं पाठभेदस्य फलमिति । एकमपि भगवद्गुणानुसन्धानलाभं परःसहस्रादपि पुत्रोत्सवादधिकं मन्यन्ते वेदज्ञाः ।

## अरुदन्नप्यरोदीत्

यास्कोक्तमप्युदाहरणं वेदेषु पाठभेदमेव गमयति; नापौरुषेयतामपगमयति । अर्थविशेषलाभस्य तत्रापि समानत्वात् । **'यदरोदीत् तद् रुद्रस्य रुद्रत्वम्'** इति हारिद्रविकपाठभेदेन रुद्रस्य रोदनकर्मावगम्यते । तत्र शङ्क्यते– कथमधिगत-परमार्थोऽपि रुद्रो रुरोद बाल इवेति । तामेतां शङ्कामपनेतुं कृपया कठानां श्रुतिराह– **'यदरुदत् तद् रुद्रस्य रुद्रत्वम्'** इति ।

अयमिह परमार्थः– यत् स्वयं न रोदिति तत् तत्वमरुददुच्यते । यत् स्वयमरुदत्, रोदयति चान्यान् संहारकर्मणा तदेव रुद्रमुच्यते । तदेव संहर्तॄ रुद्रस्यापि रुद्रत्वमिति । तेन 'अरोदीत्' इति हारिद्रविकः पाठोऽप्यन्तर्णीतण्यर्थ इति सूचितम् ।

ननु तर्हि महता कण्ठेन किं न श्रुतिः पठति– **'यदरोदयत् तद् रुद्रस्य रुद्रत्वम्'** इति । न भोः । तर्हि स्वकृतं रोदनमनुदितं स्यात् । ननु किमेतत् प्रळपित-मिव । स्वयं न रुददिति पूर्वमुक्तम् । इदानीम्, 'स्वकृतं रोदनमनुदितं स्यात्' इत्युच्यते । सत्यम्, वस्तुतः न रुरोद । अथापि लीलया रुरोद, अजानन्निव, मुग्ध इव बालः । सूत्रधारस्य भगवत इच्छानुगुणं हि सृष्टिनाट्यरङ्गे देवानां नाटकं भवति । तदिदं प्रमेयजातं पाठभेदेन बोधयति श्रुतिरिति ।

अत एव किल 'अनन्ता वै वेदाः' इति वदन्ति । कालतोऽनन्ताः इति स्फुटम् । अर्थतोऽप्यनन्ताः । स्वरूपतोऽप्यनन्ता इत्यवगम्यते ।

न सर्वेऽपि सर्वदाऽविष्कृताः । आदौ किलानन्तो वेदराशिरनादिकविना नारायणेनाऽदिकवये चतुर्मुखाय व्यतन्यत । ततश्चान्येऽन्ये ऋषयस्तदातदा

तत्रतत्र तांस्तान्मन्त्रविशेषानाविरकुर्वन्। सम्प्रत्यपि विदितवेद्या आविष्कुर्वन्ति। आयत्यामपि पुनरपूर्वानाविष्करिष्यन्ति। एवमनन्तेयं स्फुरत्ता। अनवधिका चाऽविष्कारपरम्परा। अनन्तः शब्दशरधिः। अनन्ताश्चार्थतरङ्गा इत्यद्भुतं वाङ्मयं विश्वम्।

## भासर्वज्ञस्य भ्रमलोकः

अथ भासर्वज्ञपुच्छावलम्बी कश्चिच्छङ्कते–

ननु भोः, प्रमादिन्, अपौरुषेयत्ववादिन्, इदमिदानीं पराजीयसे। यदर्थमपौरुषेयत्वमूरीकरोषि तदेव व्यर्थं जातम्।

कथमेवं कत्थसे? न कत्थे, किन्तु कथयामि शृणु। किमपौरुषेयत्वं शब्दमात्रस्य? उतार्थस्यापि? न तावद् द्वितीयः। त्वत्प्रज्ञाप्रभवमर्थं कथमपौरुषेयं ब्रवीथाः। यस्य यादृशी शेमुषी तस्य तादृशोऽर्थः।

अस्तु तर्ह्याद्यः पन्थाः, अपौरुषेयः शब्दः पौरुषेयोऽर्थ इति। अहो गतं ते सर्वस्वम्। यदर्थं वेदानामपौरुषेयत्वं सिषाधयिषितम्, तदिदमुप्तमूषरे। वेदाः प्रमाणम्, अपौरुषेयत्वात्। भवदुदितोऽर्थस्तु न प्रमाणम्, पौरुषेयत्वादित्यापतितम्। किमङ्ग ते बस्तगलस्तनायितेन वेदापौरुषेयत्वप्रहसनेन।

आसीद् वा ते तर्कताण्डवम्। किमनया वाचोयुक्त्या चिकीर्षितं ते? एहि मन्ये तार्किकम्मन्य तत्ववादं विजेष्यसे। भग्नाशो भवसि। ननु भोः, अर्था अप्यपौरुषेयाः। यतो नित्यः शब्दस्यार्थेन सम्बन्धः। तदुक्तम्– **'वाचाऽऽरम्भणं विकारः। नामधेयं मृत्तिकेत्येव सत्यम्'** इति।

'मण्णु, मिट्टी इत्यादिर्विकारः विकृतं नामधेयम्, मनुष्यवाचाऽऽरम्भणम्, अतोऽनित्यम्। अर्थतः सत्यं नित्यं नामधेयं मृत्तिकेत्येव' इति। पतञ्जलिरप्याह– **'योऽसावर्थः स नित्यः'** इति। नहि सृष्ट्यादौ भगवान् शब्दमात्रमाविश्चकार। किन्त्वेवमनुसन्दधदेवाऽह– 'अयमिह शब्दः। अस्य च शब्दस्यायमर्थः' इति।

## इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्

अथापि न निस्तारः। एकः शब्दः, बहवो ह्यर्थाः। तद्यथा 'आरात् तस्य गृहम्'। अन्तिके वा स्याद् दूरे वा। कस्तावदत्राभिमतोऽर्थ इति स्वप्रज्ञयैव निर्णीयते। तेन पौरुषेयत्वमर्थानामिति। नैतद् युक्तम्। न क्वापि स्वप्रज्ञयाऽर्थो निर्णीयते। किन्तूपक्रमोपसंहाराभ्यां निर्णीयते। तथाह्युक्तम्–

**'पूर्वोत्तराविरोधेन कोऽत्रार्थोऽभिमतो भवेत्।**
**'इत्याद्यमूहनं तर्कः शुष्कतर्कं तु वर्जयेत्'** इति।
**'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।**
**'अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये'** इति च।

न केवलं तर्कबलादर्थनिर्णयः। साक्षात्कृतधर्मणां साक्षात्कृतब्रह्मणां च महतामुपदेशेन च। तद् यथा वेदार्थनिर्णयाय स्वयं भगवान् बादरायण इतिहासं पुराणानि च निर्ममे। वेदाङ्गानि च निरुक्तादीनि। अपरे च महर्षयः। तेन सुकरो वेदार्थनिर्णयो भवति।

यथा– **'नमो॑ म॒हद्भ्यो॒ नमो॑ अर्भ॒केभ्यो॒ नमो॒ युव॑भ्यो॒ नम॑ आशि॒नेभ्यः॑'** इत्यस्मिन् मन्त्रे [ऋ.सं.१.२७.१३] 'आशिनेभ्यः' इत्यस्फुटार्थं पदं व्याचष्ट व्यास-भगवान् भागवते– **'नमो महद्भ्योऽस्तु नमः शिशुभ्यो नमो युवभ्यो नम आवटुभ्यः'** [५.१३.२३] इति।

एवं सर्वत्रेति न क्वापि स्वबुद्धिविभवेनार्थनिर्णयः। आह हि यास्कोऽपि– **'साक्षात्कृतधर्माणोऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् सम्प्रादुः'** इति।

उपदेशश्च व्याख्यानमित्युक्तम्।

क्वचिद् वेद एव स्वार्थं ब्राह्मणारण्यकयोराविरकरोत्। क्वचिद् बादरायणः इतिहासपुराणैर्ब्रह्मसूत्रैश्च। क्वचिज्जैमिन्यादयो महर्षयः।

सतीष्वेतासु सामग्रीषु, अपराऽपीष्यते विधा। यथा मन्त्राः स्फुरन्ति, एवं क्वचित् केषाञ्चित् भागधेयवशान्मन्त्रार्था अपि स्फुरन्ति। यावानर्थः स्फुरति

स सर्वोऽपि वेदार्थो भवति यदि न शास्त्रविरुद्धः। सर्वस्यापि तस्येश-बुद्धिगतत्वात्।

अत एवोक्तं दुर्गाचार्येण निरुक्तभाष्यकारेण– **'तस्मादेतेषु यावन्तोऽर्था उपपद्येरन्, अधिदैवाध्यात्माधियज्ञाश्रयाः, सर्व एव ते योज्याः, नात्रापराधोऽस्ति'** इति।

## सक्तुमिव तितउना पुनन्तः

तथाच निषदोऽप्युपनिषदोऽप्यपौरुषेय्य इति स्थितम्। अथाप्यर्वाचीनै रचिता अपि केचन ग्रन्था भ्रान्त्या उपनिषत्त्वेन परिगणिता दृश्यन्ते। एवं निषदोऽपि। उपनिषत्त्वेनाभिमताः सर्वा अपि नोपनिषदः। ब्राह्मणत्वेनाभि-मतानि सर्वाण्यपि न ब्राह्मणानि। आरण्यकत्वेनाभिमतानि सर्वाण्यपि नाऽरण्यकानि। ऋषयोऽप्यारण्यकानि ब्राह्मणानि च प्रणिजगदुः। तान्यप्य-पौरुषेयाणीति केचिद् व्यभ्रमन्। तत्साङ्कर्येण अपौरुषेयाण्यपि पौरुषेयाणीत्य-परे विभ्रान्ताः।

तदेतत् सूचयतीव पतञ्जलिरपि– **'या त्वसौ वर्णानुपूर्वी सानित्या'** इति। सा नित्या, अनित्या चेति च्छेदः। अन्यथा **'वर्णानुपूर्वी खल्वप्याम्नाये नियता'** इति वक्ष्यमाणस्वचनविरोधात्।

या चासावपौरुषेयवेदभागानां ब्राह्मणारण्यकानां वर्णानुपूर्वी सा नित्या। या चासौ पुरुषनिर्मितानां ब्राह्मणारण्यकानां वर्णानुपूर्वी सा त्वनित्येति पतञ्जलिमतमिति रमणीयम्।

कथं पुनर्विज्ञायते– इदमपौरुषेयं ब्राह्मणम्, इदं पौरुषेयमिति? ननु त्वमपि पृच्छ्यसे– कथं विजानासि अयं ब्राह्मणः, अयं ब्रह्मबन्धुरिति? ननु जानीमः स ब्राह्मणः, यं शिष्टा ब्राह्मणोऽयमिति परिगृह्णन्ति, यश्च शिष्टानामाचारम-नुगच्छति। अन्यो ब्रह्मबन्धुरिति।

ननु वयमपि जानीमः यत् पूर्वैः पूर्वतरैश्च वेदभागतया परिगृहीतम्, यच्च शब्दतोऽर्थतश्च वैदिकीं शैलीमनुगच्छति तदपौरुषेयं ब्राह्मणमारण्यकं वेति । अन्यत् पौरुषेयमिति ।

ननु पुरुषोऽपि वैदिकीं शैलीमनुकुर्यात् । तदा कथं निर्णेतव्यम्? ननु ब्रह्म-बन्धुरपि शिष्टानां पन्थानमनुपतेत् । तत्र या गतिः सैवात्रापि गतिः । नायं स्थूलदृश्वनां पन्थाः । सर्वं सूक्ष्मेक्षिकया जन्मान्तरचीर्णतपःपरिपाकलब्धया परिशोध्य विज्ञातव्यं भवति । अतिचिरकालं तितउना पुनःपुनः पुनन्तः सत्य-मवधारयन्ति ।

## अनित्यः पदपाठः

अपिच योऽयं संहितापाठः सोऽपौरुषेयः । यः पदपाठः स पौरुषेयः । **'तत् । त्वम् । असि'** इत्यपि पदपाठः स्यात् । **'अतत् । त्वम् । असि'** इत्यपि स्यात् । **'ज्ञाते । द्वैतम् । न । विद्यते'** इत्यपि पदपाठः स्यात् । **'अज्ञाते । द्वैतम् । न । विद्यते'** इत्यपि स्यात् । **'ज्ञाते । अद्वैतम् । न । विद्यते'** इत्यपि स्यात् । **'अज्ञाते । अद्वैतम् । न । विद्यते'** इत्यपि स्यात् । **'ईशावास्यम्'** इत्यपि स्यात् । **'ईशा । वास्यम्'** इत्यपि स्यात् । **'पुरुषः । एव । इदम् । सर्वम्'** इत्यपि स्यात् । **'पुरुषे । एव । इदम् । सर्वम्'** इत्यपि स्यात् ।

एतदपि मनसि निधायोक्तं पतञ्जलिना– **'या त्वसौ वर्णानुपूर्वी साऽनित्या'** इति । तथाचेदं पदपाठस्यानित्यतामाह । **'वर्णानुपूर्वी खल्वाम्नाये नियता'** इत्युत्तरभाष्यं संहितापाठस्य नित्यतामाहेति न कोऽपि विरोधः ।

कैयटोऽप्याह– **'संहिताया एव नित्यत्वम् । पदविच्छेदस्य तु पौरुषेयत्वम्'** [३.१.१०९] इति ।

अत एव **'मा । सकृद् । वृकः'** इति शाकल्यः पदपाठं पपाठ । **'मासकृद् । वृकः'** इति यास्कः ।

एतेन यद् वल्लभाचार्यप्रभृतय आहुः– 'अतत् त्वमसि इति विच्छिद्य व्याख्यानं पदपाठविरोधादेव निरस्तम्' इति, तद्गर्भस्रावेण गतम्। अयोगव्यवच्छेद एव हि पदपाठो नाम । नान्ययोगव्यवच्छेदः ।

एतेन पदपाठविरोधाख्यं दुर्बलतरमस्त्रमादाय वादाय रङ्गं प्रविष्टाः सर्वेऽपि व्याख्याताः ।

## अर्थत्रयवती त्रयी

न कस्यापि किमपि स्वम् । बाल्यादेवाध्येयः साङ्गश्चतुर्मुखो वेदः । मानसीं स्थितिमनुसृत्य उच्चावचान्यध्ययनानि भवन्ति । साधनानि च सिद्धयश्च । तदुक्तम्–

> **'त्रयोऽर्थाः सर्ववेदेषु दशार्थाः सर्वभारते ।**
> **'विष्णोः सहस्रनामापि निरन्तरशतार्थकम्'** इति

के त्रयोऽर्थाः? आह शाङ्खायनगृह्यसूत्रम्–

> **'अधिदैवमथाध्यात्ममधियज्ञमिति त्रयम् ।**
> **'मन्त्रेषु ब्राह्मणे चैव श्रुतमित्यभिधीयते'** [१.२.१९] इति ।

दुर्गाचार्योऽप्याह–

**'अध्यात्माधिदैवताधियज्ञाभिधायिनां मन्त्राणामर्थाः परिज्ञायन्ते'** [निरु. भा. १.१८] इति ।

**'अनुपक्षीयमाणशक्तयो हि वेदशब्दा यथाप्रज्ञं पुरुषाणामर्थाभिधानेषु विपरिणममानाः सर्वतोमुखा अनेकार्थान् प्रब्रुवन्ति'** [१.२०] इति च ।

**'त एते वक्तुरभिप्रायवशादन्यत्वमपि भजन्ते मन्त्राः । नह्येतेष्वर्थस्येयत्तावधारणमस्ति । महार्था ह्येते दुष्परिज्ञानाश्च । यथाऽश्वारोहवैशिष्ट्यादश्वः साधुः साधुतरश्च वहति, एवमेते वक्तृवैशिष्ट्यात् साधून् साधुतरांश्चार्थान् स्रवन्ति । ..... तस्मादेतेषु यावन्तोऽर्था उपपद्येरन्, आधिदैवाध्यात्माधियज्ञाश्रयाः, सर्व एव ते योज्याः, नात्रापराधोऽस्ति'** [१.८] इति च ।

पतञ्जलिरप्याह– **'नैकेन शब्देनानेकस्याभिधानं प्राप्नोति । ... इष्यते चैकेनाप्यनेकस्याभिधानं स्यादिति'** [१.२.६४]

मन्त्रार्थमञ्जर्यामपि– **'अग्न्यादिदेवतापरत्वेन, तदन्तर्गतविष्णुपरत्वेन, अध्यात्मपरत्वेन चेत्येवं त्र्यर्थपरतया व्याख्यातानि'** इति ।

## महानात्मा देवता

का तर्हि देवता? अग्निवाय्वादयो वा? तदन्तर्गतो विष्णुर्वा?

प्रथमं श्रूयतां प्रतनैर्यदुच्यते–

**'या तेनोच्यते सा तस्य देवता'** इति सर्वानुक्रमणी ।

**'तेन वाक्येन यत् प्रतिपाद्यं वस्तु सा देवता'** इति षड्गुरुशिष्यः ।

स्थूलमेतद् दर्शनम् । जडमपि तर्हि देवता स्यात् । श्रूयन्ते हि जडविषयाः श्रुतयः । मण्डूक्यपि तर्हि देवता स्यात् । **'उप प्र वद मण्डूकि–'** इत्यृग्वेदखिलेषु साऽपि मन्त्रवर्णेनोच्यते । अथर्ववेदे च ।

अत्राऽहुर्मीमांसकाः । नन्विष्टमेवाऽपाद्यते । ऊरीकुर्म एव जडस्यापि देवतात्वम् । ऊरीकुर्म एव माण्डुक्या अपि देवतात्वम् । साङ्केतिकं हि देवतापदम् । नहि कापि काचिच्चेतनावती देवता नाम । किन्तु यद् दीव्यते मन्त्रेण प्रकाश्यते, प्रतिपाद्यते सा देवता । जडं वा स्यात् । जन्तुविशेषो वा स्यादितीष्टापत्तिरेवेयम् ।

यदाह शबरस्वामी– **'देवतायाश्च यज्ञसाधनभावो न रूपेण भवति । केन तर्हि? सम्बन्धिना शब्देन । यथाऽध्वर्युर्हस्ताभ्यामुपकरोति, एवं देवता शब्देनोपकरोति ।... शब्द एव हविषा सम्बध्यते । तत्सम्बन्धादर्थोऽपि देवता भविष्यति । यस्य हि शब्दो हविषा तादर्थ्येन सम्बध्यते सा देवता । शब्दे कार्यस्यासम्भवादर्थे कार्यं विज्ञायते । इह तु शब्द एव कार्यं सम्भवति'** [शा.भा.१०.४.२३] इति ।

मीमांसकानामुन्मत्तप्रळपितमेतत्। पूर्वं देवता शब्देनोपकरोतीत्याह। पश्चाच्छब्द एव कार्यं करोतीत्याह। शब्देन शरीरवती देवतेत्युक्तं भवति। यत्र शब्दातिरिक्तं क्वचिच्छरीरं गम्यते मण्डूकादौ तत्रार्थोऽपि देवता स्यादिति।

सर्वमेतल्लोकविरुद्धम्, शास्त्रविरुद्धं च। एवं किल लोकेऽपि तर्हि स्यात्। 'यज्ञदत्त, गामानय' इत्युक्ते यज्ञदत्तशब्द एव गामानयेत्, न यज्ञदत्तनामा कश्चिच्चेतनविशेषः। स्वात्मानं पृच्छ भोः। किं ते स्वात्मा स्वीकरोति यत् त्वयोक्तम्। किमुत परे! चार्वाकसोदरोऽयं मीमांसकः स्वयं वैदिकेषु परिस्थातुमिच्छन् वेदध्रुगेव।

एतेन मण्डूकी देवतेति वदन्नपि तपस्वी परास्तः। नहि वर्षाभूर्दुर्दुरोऽवस्वरणाय मन्त्रवादाभ्यनुज्ञां प्रार्थनां वा प्रतीक्षते।

ननु माण्डुकेय, मण्डूकं मन्त्रद्रष्टारं मन्यमानः कथं मण्डूकीं देवतां नानुमन्यसे? ननु मण्डूकऋषिः स्वरसतो मण्डूकीमेव ध्यायेत्। नान्यां कामपि।

भ्रान्तोऽसि। न वयं मण्डूकमृषिं मन्यामहे। कं तर्हि? मण्डूकरूपं वरुणं नाम देवताविशेषम्। योगसिद्धा हि देवता भवन्ति यथेच्छरूपाः।

ननु जडान्यपि देवता भवन्ति। श्रुतिरेव तथा वक्ति– **'मृदब्रवीत्'**, **'आपोऽब्रुवन्'** इति। तेन श्रुत्यभिमता मीमांसकानां वाचोयुक्तिः।

न युक्तमेतत्। यदि **'मृदब्रवीत्'** इति जडवचनं स्यात्, स्यादश्रद्धेयवचना श्रुतिः। न हि क्वापि मृद् ब्रवीति। तेन **'मृद्देवताऽब्रवीत्, शब्ददेवता अब्रवीत्'** इत्येव वचनार्थः। निर्णिनाय च भगवान् बादरायणः– **'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्'** [ब्र.सू.२.१.६ ] इति। **'देवतावचनान्नाऽपो वदन्तीत्यादिना वचः। नायुक्तवादि'** इति च सर्वशास्त्रार्थसङ्ग्रहे। **'देवेषु चर्मादिनामानि संवादादेः'** इति च देवमीमांसासूत्रं छान्दोग्यभाष्ये। **'अचेतनासत्याग्योग्यान्यनुपास्यान्यफलत्वविपर्ययाभ्याम्'** इति च सङ्कर्षणसूत्रम्।

तदेवं मीमांसकानां मौर्ख्यमनुमन्वानेन यास्केन साधूक्तम्– **'यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन् स्तुतिं प्रयुङ्क्ते तद्दैवतः स मन्त्रो भवति'** [निरु.७.१] इति ।

ब्राह्मणं चात्र भवति– **'यस्यै वै देवतायै हविर्गृह्यते सा देवता । न सा यस्यै न गृह्यते'** [शत.ब्रा.९.४.२.१५] इति ।

अयमत्र मन्त्रार्थः– यद्येकैव परदेवता सर्वमन्त्राणां तर्हि किं सूक्तभेदेन । अग्निरिति, वरुण इतीन्द्र इति मित्र इत्येकः परमात्मा किलोच्यते। तेनाग्निसूक्तं वायुसूक्तमपि स्यात् । वरुणसूक्तमपि स्यात् । अपि वा मित्रसूक्तं स्यात् । न स्यादित्याह– यस्यै देवताया इति । यदधिष्ठाना देवता सा तन्नाम्नोच्यते । अग्न्यधिष्ठानाऽग्निनाम्ना । इन्द्राधिष्ठानेन्द्रनाम्ना । एवं सर्वत्रापि व्यवस्था । तेन यस्यै यदधिष्ठानायै परदेवतायै हविर्गृह्यते । आहुतिरपि हविः, अहूतिरपि । तेन आहुतिर्वा, आहूतिरूपो मन्त्रो वाऽऽदीयते सा तन्नाम्ना हूयमाना भवत्याहूयमाना वा । नान्येन नाम्ना तदपि तस्या एव चेदपि ।

तस्मात् प्रतीकभूता अग्निवाय्वादयोऽवान्तरदेवताः, परमपुरुषो नारायणः सर्वमन्त्राणां मन्त्रपदानां मन्त्रवर्णानां च परममुख्यार्थः प्रधानदेवतेति सारसङ्ग्रहः ।

तदेतत् सर्वं मनसि निधायैवोक्तं कात्यायनेन, प्रतिसूक्तं भिन्ना देवता वदताऽपि, अन्ततः सर्वेषामेकदेवतात्वम्– **'एक एव वा महानात्मा देवता'** इति ।

महानात्मा परमात्मा पुरुषोत्तम इत्यर्थः । उक्तं हि भागवते– **'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते'** [१.२.११] इति ।

अत एव विग्रहवर्तीं देवतामनभ्युपगच्छतां मीमांसकम्मन्यानां मतमनुगच्छन्नपि खण्डदेवः स्वयं पश्चादतप्यत–

**'अतः कथमपि न विग्रहादिस्वीकारः । किन्तु शब्दमात्रं देवता । अर्थस्तु प्रतिपादिकानुरोधात् चेतनोऽचेतनो वा कश्चित् स्वीक्रियते। नतु विग्रहादिमान्। उपासनादौ**

परं ध्यानमात्रमाहार्यं तस्येति जैमिनिमतनिष्कर्षः । मम त्वेवं वदतोऽपि वाणी दुष्यतीति हरिस्मरणमेव शरणम्' [भाट्टदी.९.१.४] इति ।

वस्तुतस्तु मन्त्रमयदेवतावादोऽयं न व्यासान्तेवासिनो जैमिनेरभिमत इति निपुणतरं प्रत्यपादि पण्डिताचार्यैस्तत्वदीपिकायाम्– 'मध्वाद्युपास्तिषु प्राप्तपदत्वेन तत्प्राप्त्यसम्भवात् तत्फलाय देवानामनधिकारं ब्रुवता जैमिनिनाऽन्यत्राधिकार-मभ्यनुजानता देवतासद्भावोऽभ्युपगतः । 'धर्मं जैमिनिरत एव' इत्यादिना चेश्वरवादित्वमावेदितं जैमिनेः' [१.३.२९] इत्यादिना ।

'अभ्युपैति च जैमिनिर्देवतास्वरूपादिकम् । तत्प्राधान्यं हि सप्रमाणकं नवमाध्याये सूत्रयामास–'देवता वा प्रयोजयेदतिथिवत् भोजनस्य तदर्थत्वात्', 'स्मृते-रुपचारादन्यार्थदर्शनाच्च', 'आर्थपत्याच्च' इति । ननु पूर्वपक्षसूत्राण्येतानि । तथाहि– देवताविग्रहादिवादिनां पक्षं सविस्तरमनुवदत्येतैर्निरस्यति चोत्तरत्र– 'अपिवा शब्दपूर्वत्वाद् यज्ञकर्म प्रधानं स्याद् गुणत्वे देवताश्रुतिः' इति । मैवम् । बहु-प्रमाणोपन्यासाद्देवताप्राधान्यपक्षे, अपिवेत्यन्यपक्षेऽरुचिसूचनाच्च देवताप्राधान्यपक्ष एव प्रेयानिति गम्यते । अन्योऽपि पक्षो दर्शितः कर्मैकभक्तप्राकृतजनच्छन्दा-नुवृत्त्या । तत्रापि प्राधान्यं ब्रुवता न देवताविग्रहाद्यभावोऽभिप्रेतः । विद्यमानस्य हि देवतादेः स्रुगाज्यवह्न्यादिवद् गुणत्वमपि यथाश्रुतं सम्भवेत् । 'गुणत्वे देवताश्रुतिः' इति हि तत्र चाऽह । नच विग्रहादिकं तत्प्रमाणानि चोपन्यस्तानि प्रत्याचख्यौ । सर्वं प्रत्याचख्यावुत्तरभाष्य इति चेत्, उत्सूत्रं प्रत्याख्यानप्रयत्नेऽपि हन्त न महर्षिः प्रमाणसिद्धं स्वसिद्धानां परित्यजति' [३.४.२] इत्यादिना च ।

याज्ञिकप्रक्रियामेव विवृण्वन् बाह्यार्थमात्रपरिनिष्ठितः सायणोऽप्याह– 'यद्यपीन्द्रादयस्तत्रतत्र हूयन्ते, तथाऽपि परमेश्वरस्यैवेन्द्रादिरूपेणावस्थानात् सर्वैरपि परमेश्वर एव हूयते' इति ऋग्वेदभाष्यभूमिकायाम् ।

'एते [अग्न्यादयः शब्दाः] परमेश्वरे मुख्यवृत्त्या यथावत् सङ्गच्छन्ते । अतोऽन्येषु तत्सत्तया गौण्या वृत्त्या वर्तन्ते' इत्यृग्वेदभाष्यभूमिकायां दयानन्दसरस्वती ।

उक्तं चाऽचार्यैश्छन्दोगोपनिषद्भाष्ये–

**'अचेतनमयोग्यं च तथैवातात्विकं क्वचित्।**

**'नोपासीत परोऽनर्थः स्यात् तथोपसनाकृतः'** इति।

तामेतां यथाप्रज्ञमुच्चावचामर्थसरणिं किञ्चिदिव विमृशामः–

**'अग्निमीळे–'** इति प्रथमं तावद् भूस्थाने भगवत्प्रतीकाग्रणीर्वैश्वानरः स्तूयते। द्वितीयमध्यात्मगतो सर्वजीवाग्रणीर्मुख्यप्राणः। तृतीयं सर्वात्ता सर्वाग्रणीर्नारायण इति।

अन्यच्च– **'सन्धीयते प्रजया पशुभिः'** इति तैत्तिरीयाः पठन्ति।

यः संहिताविद्यां वेद स सन्धीयते। कैः? प्रजया च पशुभिश्च। सदपत्यमस्य भवति। गोष्ठे च बहुदुग्धा धेनवोऽनिशं वर्द्धन्त इति। आपातप्रतीतोऽयमर्थः।

किमेतावन्मात्रस्य कृत आम्नाया अभ्यस्यन्ते। तस्याप्यपत्यानि भवन्ति भूरीणि योऽनाघ्राताम्नायगन्धः।

बहिर्मुखं दर्शनमिदम्। किञ्चिदिव चक्षुषी निमील्य निरीक्षयतु भवान्– अन्य एवार्थोऽवतरति अन्तर्मनसि। यत्र प्रजा इति विद्याभीप्सवो ब्रह्मचारिणः। विद्यार्थिनोऽन्नपानादिना पोषयित्वा पाठनीयाः। आलीढहैयङ्गवीना आस्वादितदधिपयसः सुखं निगमजलधौ निष्णायासुरिति। तदेतद् द्वितीयं दर्शनम्। स्फुटं चैतदुपरिष्टात्– **'आ मा यन्तु ब्रह्मचारिणः स्वाहा'** इति, **'ततो मे श्रियमावह लोमशां पशुभिः सह स्वाहा'** इति च।

अथ चातोऽप्यन्तः प्रविश्य निरीक्ष्यताम्। अहो अस्मिन्नान्तरदर्शने प्रजा नाम भगवत्प्रज्ञैव। यया प्रकृष्टो जायते सा किल प्रजा। प्रज्ञया हि प्रकृष्टो जायते पुमान्। न प्रजया। प्रज्ञावन्तं हि प्रणमन्ति। न प्रजावन्तम्।

प्रज्ञापोषहेतवः पशवो भवन्ति। ये **'यजमानस्य पशून् पाहि'** इति प्रथममेव यजुर्वेदपुरुषेणाऽशंसिताः। के तर्हि पशवः? वैदिकं वाङ्मयमेव। उक्तं हि

**'पान्ति शंसाधनाश्चेति वेदाः पशवः ईरिताः'** इति । गोपदवदेव । गौरिति धेनुरप्युच्यते । कामधेनुर्वेदवागपि । एवं पशुरिति च ।

एवमीदृशीं प्रज्ञाशिखिरिणीमुपनिषदमाहुः । तदेवं संहितायाः, ब्राह्मणस्य, आरण्यकस्य च शिखराणामुत्तुङ्गं शिखरं उपनिषत् । वैदिकवाङ्मयहिमालयस्य कैलासशिखरायमाणा चेयमुपनिषत् ।

## चतुष्टय्या दशतयी

प्रतिशाखं संहितानां ब्राह्मणानि भवन्ति, आरण्यकानि, उपनिषदश्च ।

परःशतमुपनिषदः सम्प्रति मुद्रिता दृश्यन्ते । न ताः सर्वा अप्युपनिषदः । अश्वा अपि सन्ति । अश्वमुखाः खरा अपि सन्ति ।

वज्रसूची नाम काचित् बौद्धानां कृतिः । साऽपि अत्र वज्रसूच्युपनिषद् बभूव । नैके तान्त्रिका ग्रन्थभागा अपि उपनिषन्नाम्ना पुनरवतीर्णा व्याकुलयन्ति शुद्धविद्याबद्धादरान् ।

किं वास्तवं किमवास्तवमिति निर्धारणमपि दुःशकं जातम् ।

अथ यद्येतेऽश्वमुखा मुखरा भवेयुस्तदा खरा एते नाश्वा इति निश्चप्रचं विश्वस्येत ।

सन्ति तादृशीषु दश प्रधानतया परिगणिताः पुरातनैः चतुर्वेदसङ्गताः । सेयं चतुष्टय्या दशतयी ।

एवं किल प्रतनः सम्प्रदायः । यः स्वं वैदिकं पन्थानं प्रतितिष्ठापयिषति तेनावश्यं व्याख्यातव्या भवतीयं ग्रन्थत्रयी– दशोपनिषदः, ब्रह्मसूत्राणि, भगवद्गीता च ।

वेदानां रसाः उपनिषदः । महाभारतस्य पञ्चमवेदस्य, सर्वपुराणानां च, अन्ततः सर्वोपनिषदां च रसः भगवद्गीता ।

चतुर्णां वेदानां यथोपनिषदां दशतयी तथा महाभारताख्यस्य पञ्चमवेदस्योपनिषद् भगवद्गीता– 'भगवद्गीतासूपनिषत्सु' ।

सर्वेषामपि शास्त्राणामर्थनिर्णयाय ब्रह्मसूत्राणि ।

आद्या बादरायणेन सम्पादिताः। अपरे तेन निर्मिते इति सर्वमेतद् व्यासवाङ्मयमेव तत्वविद्यास्थानम् ।

अधिगतं चतुष्टय्या दशतयीति । कस्याः काः?

ऋक्शाखाया एका महैतरेयोपनिषत् ।

समग्रा शाखा ऐतरेयोपज्ञं प्रज्ञाता। ऐतरेयशाखा, ऐतरेयसंहिता, ऐतरेयब्राह्मणम्, ऐतरेयोपनिषच्चेति ।

सम्प्रति दशोपनिषत्सु अणुतरामैतरेयोपनिषदं पठन्ति । नेदं युक्तम् । वस्तुतः महतीयमुपनिषद् द्वाभ्यामुपनिषद्भ्यां सङ्गता। अत एव महैतरेयोपनिषदित्यन्वर्थं नाम ।

ते इमे ऐतरेयशाखिनां द्वे उपनिषदौ– आत्मोपनिषच्च संहितोपनिषच्च । संहत्य नवभिरध्यायैः बृहतीयमुपनिषत् । महत ऐतरेयस्य महती चेयमुपनिषदिति ।

उपनिषत्सु पुनरियं महतीमुन्नतिमधिरोहति । षोडशसु संस्कारेषु अस्या अध्ययनमप्येको नियतः संस्कारः उपनिषद्व्रतमिति ।

यजुषि पुनर्द्वे काष्ण्यौं द्वे शौक्ल्याविति चतस्रः। कृष्णयजुषि तैत्तिरीयोपनिषत्, काठकोपनिषदिति द्वे । शुक्ले तावदेका अणुतरा– याज्ञीयमन्त्रोपनिषत् । शुक्लयजुःसंहितायाश्चत्वारिंशोऽध्यायः । तदियमेकैव संहितोपनिषत् । अपरा बृहत्तरा बृहदारण्यकोपनिषत् । उभे अपि काण्वसंहितातः समुद्धृते ।

साम्नि च द्वे । एकाऽण्वी तलवकारोपनिषत्, याऽधुनातनैः केनोपनिषदिति कथ्यते । बृहती छन्दोगोपनिषत् । अथर्ववेदसङ्गतास्तिस्रः– आथर्वणोपनिष-

देका, यां मुण्डकोपनिषदमाहुः, षट्प्रश्नोपनिषद् द्वितीया, माण्डूकोपनिषत् तृतीया ।

एवमृग्वेद एका, सामवेदे द्वे, अथर्ववेदे तिस्रः, चतस्रो यजुर्वेद इति [१+२+३+४=१०] संहत्य दशोपनिषदः । चतुर्णां वेदानां सारसर्वस्वम् ।

## याज्ञीयमन्त्रः

एषु पुनरिह दशसु षडिह प्रकटिताः– याज्ञीयमन्त्रोपनिषत्, काठकोपनिषत्, तलवकारोपनिषत्, आथर्वणोपनिषत्, षट्प्रश्नोपनिषत्, माण्डूकोपनिषच्च ।

प्रथमे द्वे याजुष्यौ । आद्या शुक्लयजुर्वेदीया । द्वितीया कृष्णयजुर्वेदीया ।

भगवतो बादरायणाद् यजुरधिजगौ वैशम्पायनः । ततः प्रवृत्ता परम्परा षडशीत्या शाखाभिः प्रवृद्धा । सेयं कृष्णयजुःशाखा । **'ब्राह्मणेन मिश्रितमन्त्रकाणि कृष्णानि'** इति वदन्ति । अन्यानि शुक्लानि, सूर्यमाराध्य याज्ञवल्क्येन प्राप्तानि । यं वाजसनेयं वेदमाहुः । **'वाजिरूपेण सूर्येण प्रोक्तं वाजसनेयकम् ।'** वाजिना सनितुं योग्यं वाजसनेयम् । षणु दाने । तमेतं वाजिसनेयं सन्तं वाजसनेयमाचक्षते परोक्षप्रियाः । अतिशायने पुनरिकारस्य अकारः । **'तृतीयोऽतिशये'** । पौरस्त्यः पाश्चात्यो वा तृतीयो वर्णोऽतिशयेऽर्थे विवक्षिते प्रयुज्यत इत्यर्थः । तृतीयात् तृतीयोऽपि तथा ।

याज्ञवल्क्याद् कण्वप्रमुखाः पञ्चदश शिष्याः जगृहुः । एवमेभिः पञ्चदश उपशाखा आसन् । तासु पञ्चदशसु वाजसनेयिशाखासु सम्प्रति द्वे एवोपलब्धे– काण्वसंहिता, माध्यन्दिनसंहिता च ।

अस्यां संहितायां चत्वारिंशदध्यायाः । चत्वारिंशोऽध्यायः याज्ञीयमन्त्रोपनिषत् । यदाऽन्या उपनिषदः ब्राह्मणारण्यकयोरन्तर्भूताः, केवलमियमेकैव मन्त्रसंहितागता । अत एनां विशिष्य मन्त्रोपनिषदमाहुः । यद्यप्युपनिषदियमुभयत्रापि पठ्यते– काण्वसंहितायामपि; माध्यन्दिनसंहितायामपि ।

पाठस्तु किञ्चिदिव भिद्यते। यश्च काण्वः पाठः स एवोपनिषत्पाठ इति भाष्यकाराणामैककण्ठ्यम्। तत इयं मन्त्रोपनिषत् कण्वोपनिषदित्यपि कथ्यते। यज्ञनाम्नो भगवतोऽयं मन्त्र इति याज्ञीयमन्त्रोपनिषत्। अथच याज्ञ इति नामैकदेशग्रहणम्। याज्ञो याज्ञवल्क्यः। तेन प्राप्तो याज्ञीयो मन्त्र इति याज्ञीयमन्त्रोपनिषत्। अत एव चेयं याज्ञवल्क्योपनिषदपि। एतामेव मन्त्रप्रथमाक्षरैरक्षराभ्यां वा ईशावास्योपनिषदिति ईशोपनिषदिति च व्याहरन्ति। याज्ञीयमन्त्र इति प्रतनम्। ईशोपनिषदिति पाश्चात्यम्।

## काठकोपनिषत्

यजुर्वेदिनां काठकसंहिता सम्प्रत्युपलभ्यते। तस्या उपनिषत् कठोपनिषदिति काठकोपनिषदिति च प्रथिता। कठानां काठकानां वेयमुपनिषदिति। कठेन प्रोक्तं येऽधीयते तेऽपि कठाः। कठेन प्रोक्तं काठकम्। तद् येऽधीयते ते काठकाः।

कथं कठः? यः स्वयमकठत् तत्वज्ञानलब्धये वेदशाखालब्धये च स कठः। कठ कृच्छ्रजीवने। ये कठन्ति तेऽपि कठाः। ये कठिष्यन्ति तेऽपि कठाः। कठा भविष्याम इत्यध्येयं काठकम्। मा स्म शठा भवामेत्यध्येयं काठकम्।

## आनह्य गायन्तः तलवाद्यकाराः

अथ सामवेदिनामियं तलवकारोपनिषद् भवति। यां 'केनोपनिषत्' इति प्रचुरमाचक्षते। केनपदेनाधिकृता उपनिषत् केनोपनिषत्। सुकरं ज्ञायते पदार्थः। कथमथ तलवकारोपनिषत्। किंनिमित्तं नामधेयम्? कश्चार्थः? का वा निरुक्तिः?

केनोपनिषदिति पाश्चात्यम्। तलवकारोपनिषदिति पौरस्त्यम्। प्रायः सामवेदस्य सहस्रवर्त्मसु एका तलवकारशाखा। या विस्मृतासु ९९७ सामशाखास्वन्तर्गताऽन्तर्हिता च। तस्याः शाखाया द्रष्टार ऋषयस्तलवकारा उच्यन्ते।

ननु भोः शृणुमस्तलवकारास्तलवकारा इति। शृण्वन्तोऽपि न बुद्ध्यामहे कथं तलवकारा इति?

रुचिरमिदमृषिनामधेयम् । रुचिरनामान ऋषयो भवन्ति। ऋषिरास मण्डूकः । ज्ञानमण्डितः पण्डित इति । ऋषिरास शौनकः । मातरिश्वानं जानन्निति। ऋषिकाऽस जबाला या जन्मतो बाला बभूव, जरत्यपि बाला बभूव। ऋषिकाऽस बलाका या ज्ञानबलेनाऽननन्द। एवमृषय आसन् तलवकारा इति । एवं निरूचुः– **'तलवाद्यकारान् सतस्तलवकारानाचक्षते'** इति ।

ते किल तलवकाराः ये पाणितलेन तालं तोलयित्वा सतालं गायन्ति। तालवाद्यं च मुरजमृदङ्गपणवगोमुखादिकमानह्य गायन्ति ।

तथाचेदं लयप्रधानं तलवकारगानम्। अद्यत्वे तु सामगाने श्रुतिरस्ति । न लयः। गायेयुर्वीणायां साम। गायेयुर्वेणुना साम। न मुरजेन। सततं गायन्ति, ससुषिरं गायन्ति । न सानद्धमित्येतत् ।

आसीदपि तादृशः कालः। यत्र सतालं सामगा साम गायन्ति स्म । अस्याः तालगानपद्धतेः प्रवर्तकाः तलवकारा नाम । सम्प्रति प्रनष्टेयं परम्परा। अहो महती विनष्टिः ।

आसन् तलवाद्यकारास्तलवकाराः । आसीत् तलवकारसंहिता । तलवकारैः साकं साऽप्यदर्शनं गता। अस्ति कालकवलनादुर्वरितं तलवकारब्राह्मणम्। अस्ति दिष्ट्या तलवकारोपनिषत् ।

तदिदं तलवकारब्राह्मणं जैमिनीयब्राह्मणमित्यप्याचक्षते। तलवकारोपनिषदं च जैमिनीयोपनिषदम् । जैमिनिर्हि मुनिस्तलवकाराणां मूलपुरुषः । अन्ततः सर्वेषां सामवेदिनाम् ।

चतुरध्यायात्मकं तलवकारब्राह्मणम्। तत्र चरमेऽध्याये द्वादशानुवाकाः। तत्र दशमोऽनुवाकस्तलवकारोपनिषत् ।

ब्राह्मणस्य नवमोऽध्याय इति शाङ्करं भाष्यम्। प्रथमं पञ्चाध्यायं आर्षेयब्राह्मणं च परिगणय्य नवमाध्यायगतेति तेनोक्तं स्यात्।

## तिस्र आथर्वण्य उपनिषदः

तिस्रः पुनरुपनिषदोऽथर्वशाखासम्बद्धाः– आथर्वणोपनिषत्, षट्प्रश्नोपनिषत्, माण्डूकोपनिषच्च। ब्रह्मणा स्वपुत्रायाथर्वणे साक्षादुपदिष्टाऽऽथर्वण्युपनिषत्। अथर्वा ऋषिरस्या इति। एवं सुकेशादिभिः षड्भिः शिष्यैः षट् प्रश्ना यत्र विव्रियन्ते सा षट्प्रश्नोपनिषत्। प्रश्नोपनिषदित्यन्ये। वस्तुतस्तु षट् प्रश्ना येषां ते षट्प्रश्नाः सुकेशादयः शिष्याः। तेषामियमुपनिषत्। षडपि तेऽस्या उपनिषद ऋषय इति। ननु प्रतिवक्ता गुरुः पिप्पलादो मुख्य ऋषिः। तेन पिप्पलादोपनिषदिति वक्तव्यम्। स्यान्नाम। न नो हानिः। अथापि शिष्याणामप्यृषित्वमव्याहतमिति दर्शयितुं षट्प्रश्नोपनिषदिति व्याह्रियते। यथाऽऽथर्वणा शिष्येण गृहीतोपनिषदित्याथर्वणोपनिषदुच्यते। अन्यथा ब्रह्मणोपदिष्टमिति ब्राह्मोपनिषदित्यवक्ष्यत्। यथा वा तित्तिरिभिर्गृहीता तैत्तिरीयोपनिषत्। अन्यथा वैशम्पायनोपदिष्टेति वैशम्पायनोपनिषदित्यवक्ष्यत्। अपि च पिप्पलादद्दृष्टा समग्रा शाखैव वर्तते। इयं तु षट्प्रश्नानां मुनीनामसाधारण्युपनिषत्। ब्रह्मणा दृष्टः सर्वोऽपि वेदराशिः। आथर्वणी पुनरथर्वणोऽसाधारण्युपनिषत्। वैशम्पायनेनोपदिष्टाः षडशीतिः शाखा भवन्ति। तैत्तिरीया तु तित्तिरीणामसाधारण्युपनिषत्। असाधारण्येन हि व्यपदेशा भवन्तीति सर्वं सुन्दरम्। एवं मण्डूकरूपिणा वरुणेन दृष्टा माण्डूक्युपनिषत्।

अथर्ववेदस्य द्वादशसु शाखासु किंशाखीया इमा इति न ज्ञायते। परम्पराविच्छेदात्। षट्प्रश्नोपनिषत् पिप्पलादशाखासम्बद्धा स्यादित्यूह्यते। एतासामाकरभूतमारण्यकं वा ब्राह्मणं वा सम्प्रति नोपलभामहे। परन्तु पिप्पलादशाखा पुरा प्रथमाना आसीदिति प्राचीनेभ्यो वैयाकरणग्रन्थेभ्योऽव-

गम्यते । **'तेन प्रोक्तम्'** [अष्टा.सू.४.३.१०१] इति च हि पाणिनिः । तत्र च पातञ्जलं भाष्यम्– **'या त्वसौ वर्णानुपूर्वी साऽनित्या । तद्भेदाच्चैतद् भवति– काठकं कालापकं मौदकं पैप्पलादकं चेति'** इति ।

पिप्पलादस्त्वाथर्वणानां प्रथित ऋषिः शाखाप्रवर्तकः, योऽथर्वणोऽङ्गिरसश्च समकालीन इति सम्भाव्यते । तथाहि श्रूयते–**'अथ हैनं पिप्पलादोऽङ्गिराः सनत्कुमारश्चाथर्वाणमुवाच'** [१.१] इत्यथर्वशिखोपनिषदि । केचित्तु– **'अथ हैनं पैप्पलादः.....'** इति पठन्ति । पिप्पलादतनय इत्यर्थः । कथं पिप्पलादः? यः पिप्पलं कर्मफलमाद, न पुनरत्तुमवशेषयामास । साक्षात्कृतधर्मा विज्ञानदग्धकर्मा जीवन्मुक्त इत्यर्थः । शिशुत्वे अपिप्पलादं सन्तं पिप्पलादमाह पिता । पुत्रस्तु नामधेयं साभिधेयं चकार ।

एवं माण्डूकोपनिषदि पठिताः श्लोका नौपनिषदाः, किन्तु गौडपादरचिताः कारिका इति बहवो विभ्रान्ताः । भगवत्पादः पुराणवचनोपन्यासेनैवैतन्निरास । विवृतं चैतद् भावचन्द्रिकायाम् । अपिच शङ्करविरचितमिति परैरभ्युपगते विष्णुसहस्रनामभाष्ये स्फुटमेषां श्लोकानामुपनिषत्त्वमुक्तम् । तथाहि विश्वशब्दव्याख्यान एव तद्भाष्यम्– **'ओमित्येतदक्षरमिदं सर्वमित्युपक्रम्य प्रणवो ह्यपरं ब्रह्म प्रणवश्च परं स्मृतः.....ओङ्कारो विदितो येन स मुनिर्नेतरो जन इत्यन्ता माण्डूक्योपनिषत्'** इति ।

## उपरि निषादयति

अधिगतं काःका उपनिषद इति । अधिगतं क्वकत्या इति । अथाधिगन्तव्यं कथं ता उपनिषद इति । बहवो बहुधाऽऽचक्षते । उप गुरोः समीपे निषद्याधिगन्तव्या विद्येत्येके । उप भगवतः समीपं निषादयतीत्यपरे । भगवतः समीपमुपनीय सादयति संसारमिति केचित् । ब्रह्मतत्वमुपनिषण्णमत्रेत्यपरे । उपनिषादयति सादयत्यज्ञानमित्यन्ये । सर्वमेतदुपपन्नमेव । अथाप्यसमग्रमिव ।

महाभारते स्मर्यते–

**'यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च।**
**'वदन्ति सत्यकर्माणं सत्यं सत्येषु सामसु'** इति।

के वाकाः? केऽनुवाकाः? का निषदः? का उपनिषदः? निगदा वाकाः। अमिताक्षराणि वाक्यानि। यजूंषीत्येतत्। छन्दोनुगुणा अनुवाकाः। मिताक्षराणि पद्यानि। ऋच इत्येतत्। सूक्तानि वा वाकाः। सूक्तसमुदायात्मकोऽनुवाकः प्रसिद्धः। सामानि मुखत एवोदितानि 'सामसु' इति। एवं संहितात्रयी गदिता। ततो ब्राह्मणानि चारण्यकानि च निषदः।

तेषामप्युपरितनो, वेदवाचामुत्कृष्टतमः सारभाग उपनिषद इति। तेन वेद-वाङ्मये सर्वस्मादुपरि निषीदन्तीत्युपनिषदः। ये चोपसीदन्ति तानुपरि निषादयन्तीत्युपनिषदः। उपरे नारायणे स्वयं निषीदन्ति, नश्च निषादयन्तीति वा। उपरि नीत्वा, उपह्वरे वा नीत्वा सादयन्ति भगवन्तमिति वा। उपनीताः सीदन्त्यास्विति वा। उपरे निषीदन्त्याभिरिति वा।

ब्राह्मणारण्यकेष्वध्यात्मं निषण्णमिति निषदस्ताः। ततोऽप्युपरि गता उप-निषदः। उप इत्यस्योपरि इत्येव सहजोऽर्थः। अनुग इत्यानन्तरिकः। सर्वत्राप्ययं न्यायोऽन्वेतव्यः। उत्कृष्टानन्द उपशम उच्यते। उपरि नयनमुपनयनमुच्यते। य उपर्युपरि अधीते स्म यस्य चोत्कृष्टमध्ययनं स उपाध्यायः। या उपरि उपरे वा निषीदति, यया चोपरि निषीदति सोपनिषत्। यश्चोपरि भगवत्येव मनसो वासः स उपवासः।

तथाचोपेत्युत्कर्षवचनम्। यया विद्यया मन उपर्युपर्यारोहति सोपनिषदिति सारसङ्ग्रहः।

अनुग इति क्वचिदेव। यथा मुख्यनदीमनुगता उपनदी भवति। प्रधानसम्पाद-कमनुगत उपसम्पादको भवति। क्वचिद् द्वयमपि पदार्थः, यथा उपेन्द्रः।

अनुजतया इन्द्रमुपगत उपेन्द्रः । अथापि योग्यतायामिन्द्रादुपरि गत उपेन्द्र इति । उक्तं हि भारते **'अजघन्यो जघन्यजः'** इति ।

भगवद्विद्याविषये उपरीति समीप इति चैकोऽर्थः । यस्य चित्तमुपरि गच्छति तद् भगवत्समीपमेव गच्छति । य उपरि गच्छति स भगवन्तमुपगच्छति ।

अथ चोपह्वरे निषण्णः, उपस्थाय च परतत्वम्, निगूढं तदात्मतत्वं सीदत्यनया । तदिदमुपस्य महदुपाख्यानम् । व्याख्यानं चोपनिषत्पदार्थस्य ।

## भगवत्पादभाष्यम्

अस्मिन् ग्रन्थे उपनिषद्भिः साकं श्रीमध्वभाष्याणि च प्रकटितानि । यानि नारायणपण्डिताचार्य एवं वर्णयाम्बभूव–

**'दशोपनिषदो देवीर्देवा इव समीप्सिताः ।**
**'युक्ताः प्रसादयन्त्यर्था एषु भाष्यालयेष्वलम्'** [म.वि.१५.७४] इति ।

सर्वेऽप्यन्ये व्याख्यातारो वेदपदानां कोशोक्तं लौकिकमर्थमेव वर्णयन्तो वेदसारभूतानामुपनिषदां परोक्षार्थतामन्ततो भगवत्परतामेव निराकार्षुरिव । अन्ये सर्वे स्वपन्ति स्म यत्र श्रीमध्वो जागर्ति । सत्यमुक्तं भगवता–

**'या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।**
**'यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः'**[भ.गी.२.६९ ] इति ।

यदि पुनरध्यात्मसन्दर्शिताध्वानि माध्वानि भाष्याणि नाभविष्यन् हन्त बहुज्ञैरपि नाज्ञास्यन्त ह्यन्तरङ्गान्युपनिषदाम्; न प्रकट्यकरिष्यन्त मन्तव्या निदिध्यासितव्या रहस्योपासनाः पूर्वेषामृषीणाम् । नादर्शिष्यन्त चिराल्लुप्ततन्तूनि आर्षदर्शनानि । श्रुतयो नाम केवलमभविष्यन् विपणिनां पणिनां कलितकोषाः पलितभाषाः व्याहारशेषाः ।

तथ्यं ननु कपालिशास्त्रिणा गदितं दुहाग्रहैरकलुषधिषणानां चक्षुरुन्मेषणं वचः स्ववेदभाष्यभूमिकायाम्– **'वेदानामध्यात्मपरता नास्तीति को नाम ब्रूते मध्वभाष्येषु जाग्रत्सु'** इति ।

मध्वभाष्याणि सदाऽपि जाग्रति। यदि अमन्दाग्रहा मन्दसन्दोहा मध्वभाष्येषु न जाग्रति, किं भोः फलं मध्वभाष्याणां जागरणेन। जागर्तव्यमस्माभिः ये भाष्येष्वधीतिनः, ये चाधिजिगांसवः।

आह च ब्रह्मदत्तो जिज्ञासुः पदवाक्यप्रमाणज्ञः–

**'मन्त्रों की अध्यात्मपरक व्याख्या करने को यत्न आत्मानन्द और आनन्दतीर्थ ने ही किया है। ..... यह निर्विवाद मानना पडेगा कि त्रिविधप्रक्रियान्तर्गत आध्यात्मिकप्रक्रिया से मन्त्रार्थ करने की शैली को बहुत कुछ अंशों में इन्होने सुरक्षित रक्खा। सायण से पूर्ववर्ती इन लोगों ने अपने काल में याज्ञिकवाद के प्रवाह के विरुद्ध झण्डा खडा किया, यह एक आश्चर्य की बात है।'**

[जिज्ञासुरचनामञ्जरी–प्रथमभागः, पृष्ठम्: ११९]

आत्मानन्द इत्यानन्दतीर्थसमकाल उत्तरभारतीयः कश्चन साधुः। यः स्वयमस्यवामीयभाष्य उज्जुघोष–

**'इन्द्रादिशब्दा गुणयोगतो वा व्युत्पत्तितो वाऽपि परेशमाहुः।**
**'विप्रास्तदेकं बहुधा वदन्ति प्राज्ञास्तु नानाऽपि सदेकमाहुः'** इति।

कियन्तो जानन्ति मध्वमुनिव्याख्यानसरणिम्? सुगममिव भासते। अथापि दुरधिगमं भवति। उक्तं हि– **'बालसङ्घमपि बोधयद् भृशं दुर्निरूपवचनं च पण्डितैः'** [म.वि.९.१०] इति। जानन्त एव जानन्ति। ये जानन्ति ते स्वप्नेऽपि नावजानन्ति महत्यानन्दजलधौ निमग्नाः कार्तार्थ्यमनुभवन्तो रमन्ते। तत्र वयमेव साक्षिणः।

उक्तं च प्रत्यक्षदर्शिना पण्डिताचार्येण तत्वप्रदीपे–**'यस्यास्खलितानवरत-वेद-शास्त्र-व्याख्यान-श्रवण-समुत्खात-दुःख-सङ्घातो निखिल-पण्डित-वर्गः परमामृत-समुद्राव-गाहीव बहळमाह्लादमाप्नोति'** इति। नहि ज्ञानलवदुर्विदग्धजनरञ्जनं भाष्यं महान्तः प्रणयन्ति। नाप्यशिवैः शिवारुतैर्भाष्यं दूष्यते। नापि पुरोभागिनां प्रळापमात्रेणादूष्यं दुष्यति। यतस्तेऽविद्यमानमपि दोषं निशामयन्ति। न

विद्यमानमपि गुणम् । शोच्यास्ते तमःप्रकृतयः । एतादृशान् उद्दिश्यैव भगवतोक्तम्– **'मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्'** [भ.गी.१६.२०] इति । यदीदृशा नाभविष्यन् तदा भगवद्वचनं निर्विषयमनुपादेयमभविष्यत् ।

तदेतदुपरि स्फुटम्– यत् कश्चित् दुर्भगोऽनधिगतादृष्टमध्वभाष्योऽपि चापलाय प्रचोदितः स्वाज्ञानं जगति प्रकाशयन् मध्वभाष्यमचिखण्डयिषत् । तस्यागाधमज्ञानवैभवं तत्रतत्र व्याख्यानावसरे स्फुटं प्रकटीकृतमस्माभिः । तत् तत्रैव द्रष्टव्यम् । नात्र पुनराम्रेड्यते, दुर्वचसां पुनःपुनरनुवादोऽपि पापायेति ।

द्वयी तावद् भगवत्पादभाष्याणां विशिष्टता । उपासनासम्बद्धानां गहनार्थानामिदमुपज्ञमाविष्करणम्, लुप्तपरम्पराणां प्राचीनवेदाङ्गानामुल्लेखेन स्वोक्तार्थानां प्रमाणसमाख्यया समर्थनम् । सति संवादे प्रमाणस्य प्रमाणान्तरेण न शुष्कतर्काणां नासान्यासावसर इति ।

अपि च वेदानामध्यात्मपरतां दिदर्शयिषन्तः केचनान्येऽपि बभूवुरात्मानन्दादयः । उपनिषदां पुनराध्यात्मिकमान्तरङ्गिकमर्थं को नाम ज्ञातुं प्राभविष्यत् यदि श्रीमध्वो न प्रादुरभविष्यत्, भाष्यं वा न प्राणेष्यत् । औपनिषद्यां पद्यायां विजिहीर्षतां भगवत्पादपांसव एव शरणम् ।

## वामनोऽपि त्रिविक्रमति

उपनिषदामपूर्वार्थप्रकटने भगवत्पादभाष्यमिव भाष्याणामपूर्वार्थप्रकटने त्रैविक्रमार्यदासकृता टीका बहळमुपकरोति ।

टीकाकृच्चायं स्वात्मानं त्रैविक्रमार्यदासमाह । एकत्रैव चाऽत्मानं वामननाम्ना निदिर्देश । त्रिविक्रपण्डिताचार्याणां तृतीयस्तनयः नारायणपण्डिताचार्यः त्रैविक्रमार्य इति स्फुटम् । लिकुचवंशतिलकस्य विरचितानेककाव्यशास्त्रप्रबन्धस्य श्रीमध्वानुग्रहभाजनस्य मध्वविजयप्रणेतुस्तस्य तनयोऽयं त्रैविक्रमार्यदास इत्यभ्यूह्यते । युक्तं च नारायणपण्डितस्य त्रिविक्रमः पिता, वामनः पुत्र इति । शैली च तद्वंशीयतां समर्थयते ।

अपि चैते लिकुचवंशीया व्याख्यातारः साक्षाद् भगवत्पादमुखादेव उपनिषदर्थश्रवणभाग्यभाजः। वामनपण्डितोऽपि प्रायः कौमारे श्रुतभगवत्पाद-प्रवचनः, श्रवणसमुत्खातसंशयसङ्घातश्च । अतस्तेन परिगृहीतः श्रुतिपाठः, विवृतश्च श्रुत्यर्थः, नितरामाचार्यसम्मतोऽधिकृतश्चेति निश्चीयेत । मितैर्वचोभिरनेकानपूर्वार्थान् वर्णयन्ती टीकेयं ग्रन्थकृदिव स्वयं वामनाऽपि त्रिविक्रमति। एतावत्पर्यन्तमनाविष्कृतोऽपूर्वतमः पाठक्रमश्च अर्थक्रमश्च एतदुपक्रमं प्राकाश्यमानीयतेति भागधेयविशेष एवायं तत्वबुभुत्सूनाम् ।

तदेतत् किञ्चिदिवोदाहरणेन निदर्शयामः । **'अविद्यायामन्तरे वर्तमानाः'** इति सर्वत्र प्रचुरः काठकपाठः। **'अविद्यायामन्तरे वेष्टयमानाः'** इति सर्वप्रतनभाष्य-व्याख्यानसम्मतः पाठः । तदेतदत्र टीकायां स्फुटम् । अन्यत्र तलवकाराणामुपनिषदि **'दह्नमेवापि नूनं त्वं वेत्थ'** इति सार्वत्रिकः पाठः। **'नूनं त्वं न वेत्थ'** इत्याचार्याभिमतः पाठोऽत्र समुद्धृतः ।

एवं पदपाठेऽपि– **'नाहमन्ये सुवेदेति'** इति श्रुतौ पठ्यते। केचित् **'नाहं मन्ये'** इति पठन्ति । **'नाहमन्ये'** इति पठन्तोऽपि **'न+अहं+अन्ये'** इति पदं छिन्दन्ति। वामनपण्डितः प्राचीनं पदपाठमनुससार–'न।अह।मन्ये' इति।

एवं माण्डूके **'अपूर्वोनन्तरोवाह्योनपरः'** इति पठ्यते। अत्र **'अपूर्वः। अनन्तरः। अबाह्यः। अनपरः'** इति पदपाठ इति सर्वेषामैककण्ठ्यम्। वामन-पण्डितस्तु अपूर्वं पदपाठान्तरमुपस्थापयति–**'अपूर्वः। अनन्तरः। अबाह्यः। न। परः'** इति। रमणीयमेतद् व्याख्यानम्। 'अनपरः' इति पदस्यार्थवर्णनं च भाष्ये न कृतमिति नितरां भाष्याभिमतश्चायं पदपाठः ।

एवमपूर्वार्थवर्णनेऽपि वामनपण्डितः सर्वानपि पूर्वप्रबन्धॄनतिशयानः स्वपूर्वाचार्यं त्रिविक्रमपण्डिताचार्यं बहुलमनुगच्छति । पर्याप्तं प्राय एकमप्युदाहरणम्– आथर्वणे प्रथमवाक्यम्– **'ब्रह्मा देवानां प्रथमः सम्बभूव'** इति। भाष्योदाहृतं प्रमाणवचनं तद् व्याचष्टे–**'ब्रह्मा विष्णोः सुतोऽग्रजः'** इति।

'प्रथमः सम्बभूव' इत्येतत् 'अग्रजः सुतः' इति व्याख्यातम् । तावता खलु व्याख्यानेन विवृत्य । किमिति 'विष्णोः' इति पदमुपक्षिप्यते? स्फुटत्वायेति सर्वे मन्यन्ते । वामनपण्डितस्त्वाह मूलस्थपदस्यैव व्याख्यानमेतदिति । तथा हि तद्वचनम्– **'सं बभूव विष्णोर्बभूवेत्यर्थः । अ-क-य-प्र-वि-सं-भू-म-स-ख-हा विष्णुवाचका इत्यभिधानात्'** इति । आचार्यमुखात् श्रुतोपनिषत्का एवैवं विवरीतुमीशते । विदुषां रसायनमिदं व्याख्यानम् ।

वेदमन्त्राणामर्थविशेषाविष्करणे च नूनं स्वपितामहं त्रिविक्रमपण्डिताचार्यं स्मारयत्ययम् । **'पञ्चपादं पितरं द्वादशाकृतिम्'** इत्यादिमन्त्राणां उपदशानर्थान् निर्वर्णयन्नयं नूनं वैदिकमूर्धन्यानां भगवत्पादानां परमानुग्रहपात्रम् । तदीयं श्रुतिव्याख्यानकौशलं निर्वर्णयन्तः स्वान्तर्मोदमनुभवन्तः के नाम सुधियो न स्म विस्मयेन मूकायन्ते । धन्यो लिकुचवंशः, धन्या तौळवधरा, यत एतादृशी विद्वत्परम्परा प्रादुरास । धन्या वयम्, य एतावन्तं दीर्घमनेहसं निलीय स्थितामेतां टीकामचर्चिकां दिष्ट्योपलभामहे ।

## भावचन्द्रिका

टीकायाः परस्तात् मदीया पञ्चिकैका संयोजिता भावचन्द्रिका नाम ।

अतीतेषु दशकपञ्चकेषु उपनिषदामध्ययनेन येऽर्थविशेषा मयाऽधिगताः, उपनिषत्सु मज्जनेन या गहनता मयाऽनुभूता, यश्च स्वान्तप्रमोदः, तत् सर्वमनाविष्कृत्य तूष्णीं स्थातुमप्रभवन् किञ्चिदिवेह तदाविरकरवम् । उपनिषज्जलधौ मङ्क्षु निमिमङ्क्षुरापाताळमवगाढतनुरितस्ततः सर्वतोदिशं तत्वमुक्ताश्चिन्वन्चिन्वन् विचरेत् । न पुनरेकां दिशं कान्दिशीकश्चरन्, नाप्यधिजलधि लहरीपरिवर्तपरिगणनपरिखिन्नः प्लवमानः पुमान् रत्नानि लभते । ये प्लवन्ते ते स्वदन्ते लावण्यम् । स्वदमानाः परिनृत्यन्ति– अहो लावण्यमहो लावण्यमिति । मा नामैवमनधिगतमुक्ताकलापाः, मुधा मुखरिताहोलावण्यालापा भूमेति कृतभूरिव्यासज्जनाः सज्जना भवन्ति । तामेतां पद्यां

प्रविविक्षूणाम्, दूरन्दूरं पिपतिषूणां चोपकाराय निशीथे पथि मन्दं प्रसरन्ती भावचन्द्रिका भवति ।

अत्र पुनर्येऽर्थविशेषास्त्रैविक्रमार्यदासटीकायां न प्रकटमवगम्यन्ते, विवक्षिता अपि न प्रकटमुक्ताः, तेऽत्र प्रायो विशदीकृताः । य उक्तास्ते विवृताः । येऽस्फुटमुक्तास्ते स्फुटतरमुक्ताः । येऽनुक्तास्तेऽपि यथामतिप्रसरं प्रकटीकृता इति ।

वेदेषु संहितायाम्, विशिष्य च मन्त्राणां छन्दश्चिन्ता भवति । उपनिषत्सु न क्वापि छन्दांसि पुरातनैर्विवृतानि । अक्षरगणनया छन्दःपरिज्ञानं सुकरमित्येतावता सर्वं पूर्यते । परन्तु न तथा सुकराणि वैदिकच्छन्दांसि । विरळा अद्यत्वे पुनश्छन्दःशास्त्रे, तत्रापि वैदिकच्छन्दःशास्त्रे कृतपरिश्रमाः सङ्ख्यावन्तः । अनुक्रमणीकारादयः प्रतना अपि छन्दोभिज्ञाने प्रास्खलन्निति वैयाकरणाः स्वरभरपरिनिष्ठिता वदन्ति । यत्र कात्यायनादयश्च वेङ्कटमाधवादयश्च बभ्रमुरथ चस्खलुः, तत्र का कथा अधुनातनानां गाधप्रज्ञानाम्, तावतैव धन्यम्मन्यानां तपस्विनाम् ।

तदर्थमत्र प्रतिमन्त्रं छन्दश्चिन्ता कृता । आर्षं दैवतं च सप्रमाणमवधारितम् । अथ विदितार्षच्छन्दोदैवताः सुकरमधिजिगांसवो भूयासुरिति ।

## परमान्ने पाषाणशकलम्

अन्यच्च– कश्चिन्मायावादसिद्धान्तानुयायी अर्वाचीनः, [वाराणसीयमहेशानुसन्धानसंस्थानस्य निर्देशकः, श्री. एस्. सुब्रह्मण्यशास्त्री तेनैव सम्पादिते शाङ्करोपनिषद्भाष्यसम्पुटे] अपठित्वैव श्रीमाध्वभाष्यम्, खण्डार्त्थादिकं तत्रतत्रांशतः पठित्वा, तत्रोक्तमपि सम्यगनवबुद्ध्य, केवलं स्वमतदुराग्रहेण, स्वबुद्धिचापलेन किमपिकिमप्यसह्यमसङ्गतं प्रळलाप । वस्तुतः नेदं खण्डनार्हमपि । नहि बालिशं भाषितं प्राज्ञखण्डनमर्हति । अथापि बहवस्तच्छिष्याः तन्मुखाद्गलितं सर्वमपि मुक्ताफलमिति विभ्रान्ताः सन्ति । अन्धेनैव नीयमाना

यथाऽन्धाः । मा च स्मेयं मन्दानामन्धानामन्धपरम्परा चिरमभिवर्धतेति तद्वचनबालिश्यमवश्यं दर्शनीयमापतितम् ।

तस्मादत्र चन्द्रिकायां तस्य बालिशतमस्तमःप्रचुर उद्गारः स्फुटतरं निर्देशं-निर्देशं निराक्रियत । अहो ईदृशानामपि खण्डने उपनिषत्प्रस्थानप्रसङ्गे प्रयतितव्यमासीदिति महदिदं दौर्भाग्यम् । परमान्ने पाषाणशकलम् । सामगाने वैस्वर्यम् । सङ्गीतसभायां खराणां मौखर्यम् । भगवन्मग्ने मनसि नास्तिकनासान्यासः । सत्येषु वेदेषु मिथ्यावादः ॥

अपिच परिष्वक्तमायावादकवचैरिदमवश्यमनुसन्धेयं भवति– **'सोऽहमस्मि'** इति श्रुतिभागस्य शाङ्करं व्याख्यानमर्वाक्तनम् । पुरातनस्त्वर्थः श्रीमध्वेनाऽविष्कृत इति । तथाहि भाष्यवचनम्– '**......अहं चासावहेयतः । अस्मि नित्यास्तितामानात् सर्वजीवेषु संस्थितः**' [याज्ञी.मं.भा.१६] इति ।

एतेन 'अहमस्मि' इत्येतत् सर्वजीवान्तर्यामिणो भगवतोऽन्तरङ्गोपासनार्थं रहस्यं नामद्वयमित्यपूर्वं प्रमेयं प्रकट्यकारि श्रीमध्वेन । सोऽयं सर्वत्र जगति विततः प्रतनोऽर्थः । तथाहि क्रैस्तानां धर्मग्रन्थे पठ्यते–

"Then Moses said to God....... 'But if they ask what his name is, what am I to tell them?' And God said to Moses, ' I Am who I Am....this is my name for all time; by this name I shall be invoked for all generations to come' " [Exodus 3: 13-15] इति ।

एवं पारसीकानां धर्मग्रन्थेऽपि पठ्यते–

"Thus spake Zarathustra- ' Tell then, o pure Ahuramazda, the name which is the greatest, best and which is most efficaious for prayer.' Thus answered Ahuramazda....` 'Ahmi yad Ahmi Mazdo: I am that I AM' " (Avesta. xvii,4-6] इति ॥

सकारो हि 'पारसीक'भाषायां हकारतामापद्यते । तद् यथा– सोमः 'होम' भवति; सप्त 'हप्त' भवति । सिन्धुः 'हिन्दु' भवति । तेन सिन्धुस्थानं हिन्दुस्थानमाचक्षते । एवमस्माकम् 'अस्मि' तेषाम् 'अह्मि' बभूव ।

तदेतेन ज्ञायते– प्रज्ञावादोऽयमाचार्यशङ्करोपज्ञम्, यदभेदपरताव्याख्यानम्; प्रतनात् कालाद् विश्वविततं विश्वजनीनं चेदम्, यद् रहस्यनाम-परतयाऽऽचार्यमध्वकृतं व्याख्यानमिति । स्फुटमेतच्चक्षुष्मतां सताम् ॥

## छन्दोमीमांसा

अन्ते च छन्दःशास्त्रमधिजिगमिषूणां कृते समग्रा वैदिकच्छन्दोमीमांसा निबद्धा ।

प्रायः प्रतनानां सर्वेषामपि वैदिकछन्दःप्रबन्धानां सारबन्धोऽयम् । यत् प्राचीनैश्छन्दःशास्त्रप्रवर्तकैः पिङ्गळनागादिभिः वेङ्कटमाधवादिभिश्च सूक्तं तत् सर्वमत्र विविच्य विमृष्टम् । यद् दुरुक्तं तदपि साधारं निराकृतम् । यदनुक्तं तैः, तदपि परामृष्टम् । तदेतदध्येतॄणां चिरमुपकाराय स्यादिति मन्यामहे । उक्तं च कात्यायनेन सर्वानुक्रमण्याम्- **'मन्त्राणामार्षेयच्छन्दोदैवतविद् याजनाध्यापनाभ्यां श्रेयोऽधिगच्छति'** [१.४] इति ।

## तारतम्यमीमांसा

परिशिष्टे द्वितीया तारतम्यमीमांसा । तारतम्यं सर्वाधिकस्य भगवत उपासनेऽङ्गमिति, अत्रापि काठके, तलवकारे च मुखतः तरतमभावान्तगत्वेन भगवान् निरूपित इति च देवतातारतम्यमत्र स्फुटतया निरूपितम् । नहि परिवारभूतानां देवतानां क्रमपरिज्ञानमन्तरा सर्वाधिकतया भगवत्परिज्ञानं स्यादिति । नहि परिवारविरहितो राजा भवति ।

तृतीयभागे उपनिषदां श्लोकपादानुक्रमणी अकारादिवर्णानुक्रमेण संयोजिता । प्रायः इयमीदृशी मन्त्रानुक्रमणी इदम्प्रथमा । ततः गद्यमयानामुप-

निषद्वाक्यानां निगदानुक्रमणी। मन्यामहे संशोधनकर्मणि निरतानां अन्यान्यस्थलगानां मन्त्रवर्णानां गवेषणे इयमनुक्रमणी भृशमनुकूला स्यादिति।

अन्ते च भाष्योदाहृतप्रमाणानामकाराद्यनुक्रमणी भवति। तत्रैवाऽकरसूची च भवति। इदमपि संशोधकानामतीवोपयुक्तं स्यादित्याशास्महे।

## निर्मूला कुशङ्का

केचिदत्र प्रत्यवतिष्ठन्ते– यस्याऽकर एव न लभ्यते किं तस्याऽकरसूच्येति। तथाहि– केचिद् ग्रन्था एव कपोलकल्पिताः। न तावत् तेषां वार्त्ताऽपि श्रूयते। नोत केनाप्युदाह्रियन्त। तस्मान्न ते प्रमाणपदवीमधिरोढुमर्हन्ति। तद् यथा– तुरश्रुतिः, सौकरायणश्रुतिः, बर्कुश्रुतिः, ब्रह्मतर्कः, तत्वसंहिता, ऋक्संहिता, यजुःसंहिता, सामसंहितेत्यादयः।

अपि केचित् श्रवणपथमागता ग्रन्थाः, उपलभ्यन्ते च सम्प्रति। अथापि न तत्र भवदाचार्योदीरितानि वचनान्युपलभ्यन्ते। तस्मादश्रद्धेयोद्धरणो भवदाचार्यः। अनुपलब्धानां पुनराकरसूच्या किं फलमिति।

अहो साहसमेषामदूरदर्शिनाम्। यदेते स्वयमचतुरास्त्रिचतुरानेव ग्रन्थानधिगत्य शास्त्रजलधिपारदृश्वनोऽप्याक्षिपन्ति। पाषाणभित्तमप्यभ्रंलिहं महीधरमधिक्षिपति। सत्यमुक्तमश्वत्थाम्ना– **'सर्वोऽपि मन्यते लोक आत्मानं बुद्धिमत्तरम्'** इति।

अथापि ते कुर्युरेव जिज्ञासूनां मनः शङ्कापङ्किलम्। तेन ते मन्दप्रज्ञा अपि नोपेक्षामर्हन्ति। ते पुनरेवं प्रत्यावृत्तेन तद्विशिखिनैव वेद्धव्याः। तेन त एवं प्रष्टव्याः। ननु भोः, अस्मदाचार्येणेदमप्युक्तम्–

> **'आलोड्य सर्वशास्त्राणि विचार्य च पुनःपुनः।**
> **'इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा'**

इत्येतद् वचनं महाभारतान्ते पठितमिति। सम्प्रति न दृश्यते महाभारते। किं पुराऽपि नाऽऽसीदिति भणसि, तर्हि निगृहीतोऽसि। कथम्? द्वाभ्यां कार-

णाभ्याम्। प्रथमं तावत्, नेदं वचनमस्मदाचार्योपज्ञम्, यतः सम्प्रत्यपि लिङ्ग-पुराणे [२.७.११] पठ्यते। अथ चेदं पद्यमेवोदाहृत्य शाङ्करत्वेन भवदभिमते विष्णुसहस्रनामभाष्य एवमुदगारि– **'इति श्रीमहाभारतान्ते भगवता श्रीवेद-व्यासेनोपसंहृतम्'** इति।

ब्रूहीदानीं यदुपज्ञं वचनं यश्चाश्रद्धेयवचन इति।

अपि चानुपलब्धिरद्यतना न किमपि साधयितुं प्रभवति। सार्वकालिकी पुनरसिद्धा। यानि पुराऽऽसन् तानि सर्वाणीदानीं न सन्ति। सहस्रं वेदशाखाः पुराऽभवन्। इदानीं न सन्ति। यानीदानीमुपलब्धानि तानि पुरा नाऽसन्। नापि भविष्यन्तीति नियमः।

उदाहरणं चैकं भवति निदर्शनम्। अनुपलब्धमासीन्मैत्रायणब्राह्मणम्। मैत्रायण्युपनिषच्च। उदाहृतं चाऽऽचार्यमध्वेन तद्वचनम्– **'मिथ्यातर्कैर्दृष्टान्तैः कुहकेन्द्रजालैर्वैदिकेषु परिस्थातुमिच्छन्ति। तैः सह न संवसेत्। प्राकाश्या ह्येते तस्कराः'** इति। अद्ययावत् सर्वैरपि परकीयैः सघोषमुद्घुष्यत– मध्वोपज्ञं वचनमिदं निर्मूलमिति। दिष्ट्या सम्प्रत्युपलब्धेयमुपनिषत्। सातवळेकर-महोदयेन प्रकाशिता च। यत्र मध्वोदाहृतं वचनमविकलं पठ्यते। पूर्वं यैरुद्धुष्टम्, त इदानीं मुद्रितमुखास्तूष्णीमासते। तत्सामान्यादितरेष्वपि तथात्वमित्यवधत्स्व।

अनवधिः शास्त्रजलधिः। अनन्ता वेदाः। अपारा चाऽर्षस्मृतिपरम्परा। बहुषु पुरातनपस्त्येषु जीर्णताळपत्रान्तर्निलीनो महानपूर्वतमो ग्रन्थराशिरद्यत्वेऽपि दृश्यते। अन्विष्यतां घृणया यावद् घुणा नाऽहारयन्ति। प्रयत्यतामपूर्वज्ञान-सङ्ग्रहाय।

तदियमाचार्यभणितिः पुनरत्र स्मरणमर्हति–

**'क्वचिद् ग्रन्थान् प्रक्षिपन्ति क्वचिदन्तरितानपि।**
**'कुर्युः क्वचिच्च व्यत्यासं प्रमादात् क्वचिदन्यथा।**

'अनुत्सन्ना अपि ग्रन्था व्याकुला इति सर्वशः ।
'उत्सन्नाः प्रायशः सर्वे कोट्यंशोऽपि न वर्तते ।
'ग्रन्थोऽप्येवं विलुळितः किम्वर्थो देवदुर्गमः'

[म.ता.नि.२.३-५ ] इति ॥

तदेवं समग्रं प्रतनानामृषीणामैककण्ठ्यं प्रदर्शितम् । अर्वाञ्चः पुनरर्द्धपठितैकैकाङ्गाः पङ्गव इव स्खलन्तो विवदन्ते । नहि विदितवेद्यानां विभ्रमावकाश इति । य एव वेदानामाशयः स एव समाम्नातः सर्वैरप्यृषिभिः प्रतनैः, य एव प्रतनानां समाम्नायः स एव सर्वसमन्वयाचार्येण भाष्यकारेण भाषित इति साधु समर्थितमिति सर्वं चतुरश्रम् ।

इमामाचार्यगोविन्दः प्रमृष्टां शब्दतोऽर्थतः ।
वितस्तारोपनिषदां भूमिकां तत्वभूमिकाम् ॥

वेदान्तविज्ञानविहारवाटिकां दुराग्रहग्राहशिरोविपाटिकाम् ।
तमोजुषामाग्रहिणां चपेटिकां चक्रे बुधस्तत्वसुरत्नपेटिकाम् ॥

* * *



श्रीमदानन्दतीर्थभगवत्पादप्रणीत-
भाष्यभूषिता

# याज्ञीयमन्त्रोपनिषत्

श्रीवामनपण्डिताचार्यविरचितया श्रीमद्भाष्य-
टीकया, आचार्यगोविन्दकृतया उपनिषद्-
भावचन्द्रिकाख्यया तत्पञ्जिकया च समेता



॥ हरिः ओ३म् ॥

पूर्ण्णमदः पूर्ण्णमिदं पूर्ण्णात् पूर्ण्णमुदच्यते ।
पूर्ण्णस्य पूर्ण्णमादाय पूर्ण्णमेवावशिष्यते ॥

ओ३म् शान्तिः शान्तिः शान्तिः ॥

## भाष्यम्

ओ३म् ॥ नित्यानित्यजगद्धात्रे नित्याय ज्ञानमूर्त्तये ।
पूर्ण्णानन्दाय हरये सर्वयज्ञभुजे नमः ॥ * ॥

यस्माद् ब्रह्मेन्द्ररुद्रादिदेवतानां श्रियोऽपि च ।
ज्ञानस्फूर्तिः सदा तस्मै हरये गुरवे नमः ॥ * ॥

## टीका

वन्दे विष्णुं रमानाथं सम्पूर्णानन्दचिद्घनम्[1] ।
निर्दोषं सर्ववेदेड्यं सर्वेश्वरमजं सदा ॥ * ॥

श्रीमदानन्दतीर्थाख्य[2]त्रैलोक्याचार्यमुत्तमम् ।
सर्ववेदार्थवेत्तारं वन्दे विष्णुपरायणम् ॥ * ॥

सत्तत्त्वदीपिकाचार्यान् वन्दे गुरुतमान् सदा ।
नारायणार्यांश्च गुरून् वन्दे सर्वांश्च सज्जनान् ॥ * ॥

याज्ञीयोपनिषद्भाष्यं श्रीमध्वार्यकृतं शुभम् ।
व्याख्यास्यामो यथाबोधं यज्ञदेवप्रसत्तये[3] ॥ * ॥

---

१. '–नन्दविग्रहम्' इति ख.ग.पाठः ।
२. '–तीर्थार्यं त्रैलोक्या–' इति क.पाठः ।
३. 'यज्ञदैवप्रसक्तये' इति ख.ग.पाठः ।

**'ईशावास्यम्–'** इत्यादिकां याज्ञीयमन्त्राख्यामुपनिषदं व्याचक्षाणः श्रीमदानन्दतीर्थो भगवान् सर्वमुख्येष्टदेवतां नारायणं नमस्करोति– **'नित्यानित्यजगद्धात्रे–'** इत्यादिश्लोकेन मङ्गलाचरणाद्यर्थम् । स एव हि भगवान् सर्वेषामपि सर्वस्मान्मुख्येष्टः[1] । 'भगवानिष्टदेवता । मुख्येष्टं वा सुमनसाम्'[१.१.४५] इति ह्यनुव्याख्यायाम्। 'हरिर्हि साक्षाद् भगवान् शरीरिणामात्मा झषाणामिव तोयमीप्सितः'[2][भाग. ५.१८.१३] इति वचनाच्च ॥ ❊ ॥

**'यस्मात्–'** इत्यादिना द्वितीयश्लोकेन तमेव हरिं स्वगुरुभूतमपि[3] नमस्करोति। नहि हरेरन्यो मध्वदेवस्य गुरुः। 'गुरुर्गुरूणाम्' [अनु.१.१.४] इति स्ववचनात्[4] । 'हरिरेव परो हरिरेव गुरुः' इति स्पष्टोक्तेश्च ॥ ❊ ॥

यत्पुनरिह नित्यानित्यजगद्धातृत्वादि विशेषणजातं नम्यस्य हरेरुक्तं तदस्यामुपनिषदि प्रतिपाद्यस्य[5] यज्ञस्य तत्रतत्र पठितं लक्ष्यते । तथाहि– 'ईशावास्यमिदं सर्वम्'[6] इत्यादौ ईशशब्दोदित एव हि प्रकृतिप्राकृतात्मकनित्यानित्यजगद्धारणक्षमो भवति । अनीशस्य तदसम्भवात् । तस्य सर्वस्मिन्नावासोऽपि तन्नियन्तुमेव। नहि स्वयमेवेशस्य परावष्टम्भापेक्षा। परनियमनधारणादिकं तु तस्य स्वभाव एव। 'देवस्यैषः स्वभावोऽयम्' [मां.१.१९] इत्यादिश्रुतेः। 'स द्विधेदं बिभर्त्यन्तर्बहिश्च' इति वचनाद् धारणार्थं चान्तःप्रवेशः[7] । 'स्वयम्भूः' इत्यनन्याधीनसत्तावचनान्नित्यत्वं चाभिप्रेतम्। 'यत् ते रूपं कल्याणतमम्' इति ज्ञानरूपत्वं चार्थादुक्तम्। 'अकायम्' इति प्राकृतदेहस्य निषिद्धत्वात्। क्रतुशब्देन विस्पष्टं चोक्तम्। तथा व्याख्यनात्। 'अमृतम्' इति मुख्यत एव विशेषणात् पूर्णानन्दत्वमपि सूक्तमेव भवति। 'कुर्वन्नेव' इत्यादौ मनोवाक्कायकर्मणां तद्विषयत्वेन कर्तव्यताविधानात् सर्वयज्ञभुक्त्वं चात्र हरेरुक्तम्। 'सत्यधर्माय दृष्टये' इति सत्यधर्मत्वलक्षणानां श्रीब्रह्मरुद्रादीनां

---

१. **'सर्वेषामपि मुख्येष्टः'** क.     २. **'तोयमीप्सितम्'** क.     ३. **'–भूतं हि नम–'** ख.ग.
४. **'इति वचनात्'** क.     ५. **'प्रतिपाद्यमानस्य'** क.     ६. **'ईशावास्यमित्यादौ'** ख.ग.
७. **'धारणार्थं च तत्प्रवेशः'** ख. **'धारणार्थं प्रवेशः'** क.

ज्ञानस्फूर्तिरपि भगवत्प्रसादादेवेति लक्षितम्। 'मनीषी' इति विशेषणाच्च। एवं चास्यामुपनिषदि प्रतिपादित एवात्र भाष्यकारेण प्रणत इति गम्यते। तस्माद् [१]तद्भाष्यमिदमिदानीमारभ्यत इति वस्त्वप्यर्थान्निर्दिष्टमेव स्यात्॥

किञ्चात्रैवाधिकारिविषयादयश्च सूचिता भवन्ति। तथाहि– हरिनन्ताऽधिकारी। हरिर्विषयः। स्वभक्तेषु पूरितानन्दत्वात् पूर्णानन्द इति योजनया मोक्षः प्रयोजनं सूचितम्। भक्तिज्ञानादिसाधनैः पूर्णं जीवमादाय आ समन्तान्नन्दयति भगवानिति[२] सूचनम्[३]। अनयोरेव ज्ञातृज्ञेययोः वक्तृवाच्यादिभावः सम्बन्धः। तदुभयनान्तरीयकत्वादुपनिषद्वचनस्य॥ ॐ॥

## भावचन्द्रिका

**सम्प्रणम्य चिदानन्दविग्रहं श्रीपरिग्रहम्।**
**पूर्णप्रज्ञं च विज्ञानदानेन सदनुग्रहम्॥ ॐ॥**

**लिकुचान्वयसम्भूतान् सर्वान् पूर्वगुरूनपि।**
**याज्ञीयोपनिषद्भाष्यटीका किञ्चिद् वितन्यते॥ ॐ॥**

भाष्यकारस्य मङ्गलश्लोकं विवृण्वन्नेव मङ्गलमाचरति। **विष्णुमिति अजमिति** नित्यानित्यजगद्धात्रे नित्यायेति व्याख्यातम्। विवेश भूतानि चराचराणीति विष्णुः, धारणार्थं च तत्प्रवेश इति स्वयं वक्ष्यति। **सम्पूर्णानन्दचिद्घनमिति** ज्ञानमूर्तये पूर्णानन्दायेति व्याख्याति पूर्णज्ञानानन्दमूर्तय इति। घनस्तमोवृतो जीवः सम्पूर्णानन्दचिद् येनेति च विग्रहः। उपरिष्टात् स्फुटमेतत्। अग्नीन्द्रादिसर्ववेदपदेड्यत्वात् सर्वयज्ञभुक्। सर्वेश्वरत्वाच्च। सहि प्रभवति सर्वेभ्योऽग्नीन्द्रादिभ्यः। अन्तर्यामी स एव भुङ्क्ते भुनक्ति च। स एव च हरिः। हरति यज्ञभागमिति। पूर्णानन्दत्वादेव **निर्दोषं सदा वन्दे** कायेन मनसा च प्रह्वो भवन् स्तौमीत्यर्थः। भाष्ये नम इति च स एवार्थः। तेन मनोवाक्तनुभिः कृतं

१. 'तद्भाष्यमिदानी–' ख. २. '–नन्दयतीति भगवानिति' इति सर्वत्र कोशेषु।
३. वस्तुतः स्फुटवचनमेवेदम्। तेन 'सुवचनम्' इत्यपि पाठः स्यात्।

मङ्गलम्। **रमानाथमि**ति द्वितीयश्लोकार्थसङ्ग्रहः ॥ ✻ ॥ वेदवेद्यो नतः। वेदवेत्ता नम्यते । सर्वेषां वेदानां सर्वमप्यर्थं वेत्तीति सर्ववेदार्थवेदनादेव विष्णु-परायणस्त्रैलोक्याचार्यश्च। उत्तमश्चायमाचार्येषु। गुरुतम इत्येतत्। विष्णुरेव हि सर्ववेदार्थः। विष्णुपरायणत्वादेव च सर्ववेदार्थवेत्ता। नहि विष्णोरवेत्ता वेदानां वेत्ता भवति ॥ ✻ ॥ **गुरुतमान्** त्रिविक्रमाचार्यान्। 'कर्तव्यमाचरन् काम-मकर्तव्यमनाचरन्। आर्यः–' इति वसिष्ठः ॥ ✻ ॥ यज्ञाख्यस्य भगवत एत-दुपनिषद्देवतायाः **प्रसत्तये** प्रसादाय ॥ ✻ ॥

अस्या उपनिषदो यज्ञो देवतेति, सा चेयं मन्त्रभागे संहितायामेव पठिता न तु ब्राह्मणारण्यकयोरिति याज्ञीयमन्त्राख्या। वाजिरूपेण सूर्यगतेन भगवता याज्ञवल्क्याय प्रोक्ते, अत एव वाजसनेयनामके शुक्लयजुर्वेदे पञ्चदश शाखाः। तत्र द्वे सम्प्रत्युपलब्धे काण्वसंहिता माध्यन्दिनसंहिता च । तत्र चरमश्च-त्वारिंशत्तमोऽध्याय एवेयमुपनिषत्। तेनेयं मन्त्रोपनिषत्। अन्या उपनिषदो ब्राह्मणेष्वारण्यकेषु वा पठ्यन्त इति न ता मन्त्रोपनिषद उच्यन्ते। ननु तास्वपि मन्त्रा भवन्ति? सत्यं तास्वपि मन्त्रा भवन्ति। न ता एव मन्त्रा भवन्ति। यद्यपीयमुपनिषत् काण्वसंहितायामपि पठ्यते। माध्यन्दिनसंहितायामपि। अथापि काण्वः संहितापाठ एव सर्वभाष्यसम्मतः। ननु काण्वे कः पक्षपातः? स एव स्वायम्भुवमनुदृष्ट इति युक्तः पक्षपातः। अत एवेमां मानवीमुपनिषद-मप्याहुः। काण्वीमुपनिषदमपि। **मङ्गलाचरणाद्यर्थम्**। भगवतः स्तुतिनती हि मुख्यतो मङ्गलाचरणं नाम। आदिना भाष्यकरणरूपवस्तुनिर्देशो विषयादि-सूचनं च। **साक्षाद् भगवान्** परममुख्यवृत्त्या भगवत्पदार्थः। **ईप्सित आत्मा,** आदत्त इति, आलम्बनम्। **इति वचनाच्च** भागवते ॥ ✻ ॥

**गुरुर्गुरूणाम्** । जगद्गुरूणां ब्रह्मादीनां गुरुः । जगद्गुरूणामस्माकं गुरुरिति मध्वदेवस्य स्ववचनम्–'गुरुर्गुरूणां प्रभवः शास्त्राणां बादरायणः' इत्य-नुव्याख्याने। 'तमेव शास्त्रप्रभवं प्रणम्य जगद्गुरूणां गुरुमञ्जसैव' इति च। आह च स्वयं स्फुटं स्वकृते स्तोत्रे कुरुभुङ्क्ष्वीये– अस्माकं परः हरिरेव; गुरुश्च

हरिरेवेति। अत्र **'यस्मात्–'** इत्यादिद्वितीयमङ्गलपद्ये पूर्वार्धोत्तरार्धयोराद्याक्षराभ्यां यज्ञाख्या देवतेति च सूचयतीव भाष्यकारः ।। * ।।

**नित्यत्वं चाभिप्रेतम्**। 'सदाऽनन्याश्रयत्वाच्च स्वयम्भूः' इति व्याख्यानात्। कारणान्तरं विना स्वयमेव सर्वदा भवतीति विवरणाच्च। योऽन्याश्रयः पुनःपुनर्जायते म्रियते च स कथं स्वयमेव सदा भवति प्रभवति वा? पराधीनविशेषावाप्तिश्च हि जनिविशेष एव। तेनानन्याश्रय एव मुख्यतो नित्यः। **तथा व्याख्यानात्** 'स क्रतुर्ज्ञानरूपत्वात्' इति । **अमृतमिति मुख्यत एव** । अस्फुटार्थं वाक्यम्। 'अमृतमिति मुख्यप्राणस्यैव विशेषणात्' इति सम्भावितः पाठः। अयमर्थः– वायुरनिलममृतमिति वायुरप्यमृतः श्रूयते। किमुत तस्यापि निलयनं भगवान्। स किल तर्हि मुख्यत एवामृतः । 'मुख्यामृतः स्वयं रामः' इति वक्ष्यमाणवचनात् । तेन पूर्णानन्दत्वं सूक्तमेव भवति । 'अमृतं स्वरूपानन्दादि' इति स्वयमेव वक्ष्यति। **'कुर्वन्नेव'** इत्यादौ **सर्वयज्ञभुक्त्वं हरेरुक्तम्**। 'तस्मिन्नपो मातरिश्वा दधाति' इति च स्फुटम्। **सत्यधर्मत्वलक्षणानां श्रीब्रह्मरुद्रादीनाम्**। 'सत्यं ब्रह्म हृदये धारयतीति सत्यधर्मा' इति किल भाष्यवचनम् । **मनीषीति विशेषणाच्च** ।'ब्रह्मादिसर्वमनसां प्रकृत्या मनसोऽपिच। ईशितृत्वान्मनीषी सः' इति तद्व्याख्यानात्। **आ समन्तान्नन्दयति भगवानिति** व्याख्याने स्फुटमधिकारिप्रयोजनयोः सूचनमिति महानयमर्थविशेषलाभः ।। * ।।

**'पूर्णमदः–'** इत्यादिः वाजसनेयिनां शान्तिमन्त्रः। 'ओ३म्' इत्यभ्यादानत्वात् प्लुतः। 'ओमभ्यादाने' [अष्टा.सू.८.२.८७]। 'अभ्यादानं प्रारम्भः। तत्र य ओमुशब्दस्तस्य प्लुतो भवति। ओ३म् अ॒ग्निमी॑ळे पु॒रोहि॑तम्' इति वामनः। अदः मूलरूपं पूर्णम्। इदमवताररूपमन्तर्यामिरूपं वा। पूर्णात् मूलरूपात् पूर्णमवताररूपं उदच्यते। उद्गतं भवति। अञ्चु गतौ। पूर्णस्य अवताररूपस्य पूर्णमंशमादाय मूलरूपे निधाय चान्ते पूर्णमेवावशिष्यते। तथाहि तत्वप्रदीपे–

'पूर्णमदो मूलरूपम् । पूर्णमिदमवताररूपम् । अमुष्मादिदं सङ्ख्यामात्रेण उदच्यते उद्रिच्यते । एकमेव बहुसङ्ख्याकं भवति, विशेषादेव । स्वस्य पूर्णस्य पूर्णमिदमवताररूपमादाय तन्मूलरूपमेवावशिष्यते' [१.१.९] इति । शं सुखम् । इः ज्ञानम् । पूर्णज्ञानानन्दो भगवान् शान्तिरिति प्राचीनम् । याजुषी पञ्चपदाऽनुष्टुप् । अन्त्या सप्ताक्षरेति निचृदनुष्टुप् । एवमष्टादशपद एकोनचत्वारिंशदक्षरोऽयं याजुषः शान्तिमन्त्रः काण्वानां च माध्यन्दिनानां च । हयग्रीव ऋषिः । परमात्मा देवता । शान्त्यर्थे विनियोगः ।। * ।।

**(भा.) स्वायम्भुवो मनुरेतैर्म्मन्त्रैर्भगवन्तमाकूतिसूनुं यज्ञनामानं विष्णुं तुष्टाव–**

**'स्वायम्भुवः स्वदौहित्रं विष्णुं यज्ञाभिधं मनुः ।**
**'ईशावास्यादिभिर्म्मन्त्रैस्तुष्टावावहितात्मना ।।**

**'रक्षोभिरुग्रैः सम्प्राप्तः खादितुं मोचितस्तदा ।**
**'स्तोत्रं श्रुत्वैव यज्ञेन तान् हत्वाऽवद्ध्यतां गतान् ।।**

**'प्रादाद्धि भगवांस्तेषामवद्ध्यत्वं हरः प्रभुः ।**
**'तैर्वद्ध्यत्वं तथाऽन्येषामतः कोऽन्यो हरेः प्रभुः' इति ब्रह्माण्डे ।।**

**भागवते चायमर्थ एवोक्तः ।। * ।।**

**(टी.)** एवं चेदस्यां शाखायां को नु वक्ता? कश्च वाच्यः? वचनं वा कीदृशमित्याकाङ्क्षायामाह– **स्वायम्भुव** इत्यादि[1] । स्वायम्भुवो मनुर्वक्ता[2] । यज्ञनामको विष्णुर्वाच्यः । यदिदं मन्त्रात्मकमुपनिषद्वचनं तत् तस्य स्तुतिरूपम् । स एभिस्तं **तुष्टाव** इत्युक्तत्वात् ।।

अस्मिन्नर्थे ब्रह्माण्डवचनं प्रमाणमाह– **'स्वायम्भुवः स्वदौहित्रम्–'** इति । 'ईशावास्यम्' इत्यादिभिर्मन्त्रैः[3] 'नमउक्तिं विधेम' इत्यन्तैः । **अवहितात्मना** विष्णावेव निहितेन मनसा ।।

१. 'इत्यादिना' क. २. 'मुनिर्वक्ता' ख.ग. ३. 'ईशावास्यादिभिर्मन्त्रैः–' क.

अथाप्येतस्मिन्नर्थे मानान्तरसिद्धिद्योतनेन दार्ढ्याधिक्यं दर्शयति– **भागवते चेति** । **भागवते चायमर्थ** एवमेवोक्तः– 'आत्मावास्यमिदं सर्वं यज्जगत्यां जगन्मनः। तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यचिद्धनम्' [८.१.१०]। 'इति मन्त्रोपनिषदं व्याहरन्तं समाहितम् । दृष्ट्वाऽसुरा यातुधाना [1]जग्धुमभ्यद्रवन् क्षुधा । तांस्तथाऽवसितान् वीक्ष्य यज्ञः सर्वगतो हरिः । यामैः परिवृतो देवैर्हत्वाऽशासत् त्रिविष्टपम्'[८.१.१७–१८] इति ॥ ❊ ॥

**(भा.चं.) अस्यां शाखायामिति**। अस्यामुपनिषद्रूपायां शाखायाम् । नहि सर्वां काण्वीं शाखां मनुरुवाच। निगमकल्पतरोः शाखारूपायामुपनिषदीति वा। भाष्ये **यज्ञनामानं विष्णुमिति**। 'यज्ञो वै विष्णुः'[तै.ब्रा.३.१.६.७] इति हि श्रुतिः[2] । अवततार चात्र विशिष्य यज्ञनाम्ना मनोः स्वायम्भुवस्य दुहितर्याकूत्यां पुत्रतया। तेन यज्ञस्येयं याज्ञीया भवत्युपनिषत्। देवतानाम्ना, ऋषिनाम्ना, छन्दोनाम्ना वा मन्त्राः प्रख्यायन्त इति प्राचीनानां सम्प्रदायः। अर्वाचीनास्तु मन्त्रप्रथमाक्षरैरेव ईशोपनिषदिति, ईशावास्योपनिषदिति वा व्याहरन्ति। तद्यथा– नासदीयसूक्तमिति, शन्नःसूक्तमिति । ननु नामधेयस्य वृद्धसञ्ज्ञायां यज्ञस्येदं यज्ञीयमिति स्यात्। कथं याज्ञीयमिति? यज्ञीयमेव याज्ञीयमित्यवधारयति। 'दैर्घ्यं प्लुतं च हुङ्कारो बिन्दुरप्यवधारणे' इति हि स्मरन्ति। तद्यथा– अनुपममिति वक्तव्ये अनूपममित्याचक्षते। 'आधिक्येऽधिकम्' इति च सूत्रम्। यज्ञशब्दाच्छण् वा वक्तव्यः ॥ ❊ ॥

अवधारणेन क्वचिन्निहितं नन्ववहितमुच्यते। तेन **'अवहितात्मना'** इति पौराण-पदस्य फलितमर्थमाह– **विष्णावेव निहितेन मनसा**। **'एवोक्तः'** इति भाष्यं व्याख्याति– **एवमेवोक्त** इति। एतेन 'अयमर्थः एवा+उक्तः' इति पदपाठः सूचितो भवति। **एवा** एवमेव। 'एवा ह्येवैव' इति हि श्रुतिः। एवकारस्यैव वा तात्पर्यकथनमिदम् ॥

---

१. '–धाना अत्तुमभ्य–' ख.

२. इदं वचनं तैत्तिरीयादिश्रुतिष्वसकृत् पठ्यते।

तथाच स्वायम्भुवो मनुः प्रथमद्रष्टा ऋषिः । तस्य च मनोस्तिस्रः सुताः । आकूतिर्देवहूतिः प्रसूतिरिति । आकूतिं रुचिप्रजापतिरुवाह । तस्मात् तस्यां भगवान् यज्ञनामा सन्नवततार । स एव स्वदौहित्रोऽत्र देवता । यथायोग्यं छन्दांसीति । मनोरनन्तरमेतानेव मन्त्रान् दध्यङ् आथर्वणो ददर्श । स द्विधेमान् ददर्श । ततो याज्ञवल्क्यः । सोऽपि द्विधा ददर्श । तत एकं कण्वो जग्राह । अपरं मध्यन्दिनः । त एते पाश्चात्या ऋषयः । तेनैतस्या उपनिषदः वाजसनेयोपनिषदिति, याज्ञवल्क्योपनिषदिति, काण्वोपनिषदिति च सञ्ज्ञा भवन्ति ॥

अन्यत्र च भागवते– 'जातो रुचेरजनयत् सुयशाः सुयज्ञ आकूतिसूनुरमरानथ दक्षिणायाम् । लोकत्रयस्य महतीमहरद् य आर्तिं स्वायम्भुवेन मनुना हरिरित्यनूक्तः' [२.७.२] इति । अयं यज्ञः हरिरिति ज्ञात्वा अनूक्तः वेदमन्त्रैः स्तुतः । एतत् ज्ञापयितुमेव भगवत्पादोऽपि मङ्गलाचरणे हरिपदमुपादत्त– **'हरये गुरवे नमः'** इति ॥

प्रमाणवचने **'स्वदौहित्रम्'** स्वस्य दुहितर्याकूत्यां रुचिप्रजापतिना जातम् । **स्वायम्भुवो मनुः** यदा **तुष्टाव तदा रक्षोभिः खादितुं प्राप्तः** । हरिस्तुतिपरस्य हीनेयं हननाशेति दर्शयितुं **'रक्षोभिः'** इति नपुंसकपदेन निर्दिदेश । यदा **रक्षोभिः खादितुं प्राप्तः तदा यज्ञेन मोचितः** । कीदृशेन? **स्तोत्रं श्रुत्वैव** प्रसन्नेन । **श्रुत्वैव** श्रवणसमनन्तरमेव, विना विलम्बमिति च । **अवहितात्मना** किल **तुष्टाव** । कीदृशै रक्षोभिः? **उग्रैः** मनुविहितव्यवस्थालुलुप्सया लोकलुण्टाकैः । स्वभावतश्च पिशिताशनैः । तथाहि भागवते– 'जग्धुमभ्यद्रवन् क्षुधा' इति । भगवतः **स्तोत्रं श्रुत्वैव** च पुनरपि **उग्रैः** । कथं मोचितः? **अवध्यतां गतानपि तान्** राक्षसान् **हत्वा** । रक्षोभिरिति नपुंसकत्वं पदगतमेव, नार्थगतमिति **'तान् हत्वा'** इत्याह । कथमवध्यतां गताः? **हि** यस्मात् **प्रभुर्भगवान् हरस्तेषामवध्यत्वं प्रादात्** । प्रभवति च स वरदानाय । यतो **भगवान्** । 'उत्पत्तिमायतिं चैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स

वाच्यो भगवानिति' । भगवत्प्रतिबिम्बत्वाद्वा **भगवान्** । भगवदिच्छा-नुगुणमेव वरदानमित्यनेनाऽऽह । हरेणावध्यतां गतानपि हन्ति स्म हरिः । अत एव हि स हरिरुच्यते । हरादतिशयित एव हि हरिः । 'तृतीयोऽतिशये' इति हि स्मरन्ति । यद्यपि हरः प्रभुरेव वरदाने । अपितु, तद्धरेणावध्यानपि हरि-र्जघान । **अतः** प्रभूणामपि प्रभोः **कोऽन्यो हरेः प्रभुः**? यातुं यातनां दधति पुष्णन्तीति यातुधानाः । **तथाऽवसितान्** जग्धुं कृतनिश्चयान् **वीक्ष्य,तान् हत्वा, त्रिविष्टपमशासत्,** स किलेन्द्रस्तस्मिन् मन्वन्तरे । यामाश्च तत्र देवाः । यथा सम्प्रत्यादित्याः । तथाहि ब्रह्माण्डे– 'त्रेतायुगमुखे पूर्वमासन् स्वाय-म्भुवेऽन्तरे । देवा यामा इति ख्याताः पूर्वं ये यज्ञसूनवः' [पू.भा.१३.८९] इति, 'यामा द्वादश कीर्तिताः' [१३.९३] इति च । 'यज्ञस्य दक्षिणायां तु पुत्रा द्वादश जज्ञिरे । यामा इति समाख्याता देवाः स्वायम्भुवे मनौ' [१.७. २१] इति श्रीविष्णुपुराणे । ननु भागवते ते तुषिता इत्याख्यायन्ते, न यामा इति । तथाहि पूर्वमुक्तम्– 'तुषिता नाम ते देवा आसन् स्वायम्भुवेऽन्तरे' [४.१.८] इति । सत्यमुक्तम् । यामा एव देवास्तत्र तुषितपदेन गृह्यन्ते योगार्थेन । 'व्यत्यासः प्रातिलोम्यं च' इत्यादिना चेदृशी हि पुराणानां शैली भवति । स्वारोचिषे हि मन्वन्तरे तुषिताः श्रूयन्ते । तथाहि भागवत एव–'स्वारोचिषो द्वितीयस्तु मनुरग्नेः सुतोऽभवत् । तत्रेन्द्रो रोचनस्त्वासीद् देवाश्च तुषितादयः' [८.१.१९–२०] इति ॥ * ॥

**ओ३म्॥ ईशावास्यमिदꣳ सर्वं यत्किञ्च जगत्यां जगत् ।**
**तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम् ॥ १ ॥**

**(भा.)** **ईशस्य वासयोग्यमीशावास्यम् । जगत्यां प्रकृतौ । तेन ईशेन त्यक्तेन दत्तेन भुञ्जीथाः ।**

**'स्वतः प्रवृत्त्यशक्तत्वादीशावास्यमिदं जगत् ।**
**'प्रवृत्तये प्रकृतिगं यस्मात् स प्रकृतीश्वरः ॥**

**'तदधीनप्रवृत्तित्वात् तदीयं सर्वमेव यत् ।**
**'तद्दत्तेनैव भुञ्जीथा अतो नान्यं प्रयाचयेत्' इति ब्राह्मे ॥ * ॥**

**(टी.)** **'ईशावास्यम्–'** इत्यादिस्तुतिमन्त्रं व्याख्याति– **ईशस्येति** । **यत् किञ्चेदं** चराचरं **जगत्** जगतीसंज्ञायां **प्रकृतौ** संस्थितं, तत् **सर्वं** सर्वेश्वरेण [१]हरिणा तन्नियन्तुमावास्यम् । नचात्र जगतीशब्देन पृथिव्युच्यते । नह्यस्यामेव सर्वजगदवस्थानं [२]युज्यते । जगत् गतमस्यामिति जगती प्रकृतिः । नचेयं स्वशक्त्यैव सावरणाण्डं धत्ते । **'यस्मात् स प्रकृतीश्वरः'** इति वक्ष्यमाणत्वात् । एवं भोक्तृभोग्यादेः सर्वस्येशाधीनत्वात् **तद्दत्तेनैव** वित्तेन भोजनाच्छादनादि कुर्याः । अथ यत् तेन तुभ्यं न दत्तम्, अन्यस्मै वा दत्तम्, तदन्यस्य **कस्यचिद् धनम्** । तस्मात् त्वं तत् **मैव गृधः** । 'गृधु अभिकाङ्क्षायाम्' । एवं सुखदुःखादिकमपि दैवप्राप्तमिति बुद्ध्वा भोक्तव्यमिति[३] भावः । इयं हि सम्बुद्धिः स्वबुद्धिविषयैवेति बोद्धव्या[४]। प्रतियोग्यन्तरादृष्टेः[५]। 'मतिं वसिष्ठ मीळ्हुषे भरस्व' इत्यादिवत् । ब्राह्मवचनं चाऽह– **स्वत** इति ॥ १ ॥

**(भा.चं.)** मूले प्रथमो मन्त्रः स्फुटमनुष्टुप् । मन्त्रेऽस्मिन् द्वात्रिंशदक्षराणि, सप्तदश पदानीति कण्वोपज्ञं प्रतृण्णं पठन्तः सम्प्रदायज्ञा मन्यन्ते । अक्षरेषु न विवादः । पदपाठे तु मनूपज्ञं षोडशैव पदानि भवन्ति । ईशावास्यमित्यैकपद्याङ्गीकारात् । अथ यद्यभिनिविश्यते सप्तदशभिरेव पदैर्भवितव्यं सम्प्रदायानुगुण्यायेति, तदा कः सम्प्रदाय इति निर्वक्तव्यम् । नहि काण्व एव सम्प्रदायो न मानव इति वक्तुं युक्तम् । मनुर्हि कण्वादपि प्रतनः । प्रतनो हि सम्प्रदायो भवति । तेन षोडश पदानीति मानवः सम्प्रदायः, सप्तदशेति काण्व इति द्वावपि प्रामाणिकाविति सन्तोष्टव्यम् । ये काण्वपदपाठविरोधेन ऐकपद्यं नेच्छन्ति तेषां द्वैपद्यमपि मनुपदपाठविरुद्धमिति समानयोगक्षेमता । सोऽयं परावृत्तेन स्वशरेणैव स्ववेधः । वस्तुतस्तु पदपाठविरोध इत्यसङ्गतं वचः । यतः पदपाठो

---

१. 'सर्वेश्वरेण तन्नियन्तु–' क. २. 'युक्तम् ।' ख.ग. ३. '–प्राप्तमिति बोद्धव्यमिति' क.
४. 'बोद्धव्यम्' क. ५. इदं वाक्यं क. पाठे न पठ्यते ।

नामायोगव्यवच्छेद एव, नान्ययोगव्यवच्छेदः। **'इद९ सर्वम्'** इति। रेफे शलि च परे पूर्वोऽनुस्वारोऽनुनासिकतामापद्यते याजुषाणाम्। तथाच – 'इदं सर्वम्' इत्येतत् 'इदङ् सर्वम्' इतीवोच्चारयन्ति। सोऽयमुच्चारविशेषः अर्धचन्द्रेण सङ्केत्यते वेदज्ञैः सबिन्दुना '९' इति। एवमुत्तरत्रापि। भाष्ये 'ईशस्याऽ-वासयोग्यम्' इत्येव सार्वत्रिकः पाठः। प्राचीनतमकोशे तु, प्रायो यदनुसारिणी चेयं प्राचीनटीका, 'ईशस्य वासयोग्यम्' इति पठ्यते। युज्यते च। यदेतेन काण्वसंहितायां प्रचलितम्, 'ईशा। वास्यम्' इति पदपाठमपि भगवाना-चार्योऽनुमन्यत इति विज्ञायते। अर्थ एव विवादो न पाठे। तेन वास्यमाच्छाद्य-मिति परव्याख्यानं निरसितुं वासयोग्यमित्याह। अत उभयविधोऽपि पदपाठः– 'ईश+आवास्यम्' इति, 'ईशा। वास्यम्' इति। प्रथमो भागवताद्यभिमतः। द्वितीयः श्रौतसम्प्रदायसिद्धः। अथवा प्रथमः स्वायम्भुवमनुदृष्टः। द्वितीयो दधीचाऽऽथर्वणेन दृष्टः पाठ इति। विदाङ्कुर्वन्ति च वेदसम्प्रदायविदो यत् पदपाठो नामायोगव्यवच्छेद एव नान्ययोगव्यवच्छेद इति। तेन 'ईशा। आवास्यम्' इत्यपि स्यादेव पदपाठः। एवं द्विविधमपि प्राचीनं प्रतृण्णं मनसि कृत्वेव टीकायामुक्तम्– **सर्वेश्वरेण हरिणा तन्नियन्तुमावास्यम्**। अन्यथा 'ईशस्य' इति मूलानुगुणतया 'सर्वेश्वरस्य हरेः' इत्याद्यवक्ष्यत्॥ ❋॥

यत्तु कश्चिदाह– 'ईशावास्यमित्यैकपद्यं पदपाठविरुद्धम्। अपिच समस्तपदत्वे 'समासस्य'[अष्टा.सू. ६.१.२२३] इत्यन्तोदात्तता स्यात्। तथाच 'ई॒शा॒वा॒स्यम्' इति स्वराणां स्थितिर्युक्ता। नतु 'ई॒शावा॒स्यं॑म्' इति। अतो नेदं युक्तम्' इति। प्रज्ञावाद एवायम्। पदपाठो नामर्षिसम्प्रदायभेदेन क्वचिद् विभिद्यते चेति विदितमेव प्रतृण्णसम्प्रदायविदाम्। 'अ॒रु॒णो मा॑ स॒कृद् वृकः' [ऋ.सं.१.१०५.१८] इति मन्त्रे– मा॒। स॒कृत् इति पदपाठे स्थितेऽपि, 'मासानां चार्धमासानां च कर्ता मा॒स॒कृत्' इति यास्कः। आह च सायणः– 'अत्र मासकृदिति यास्क एकं पदं मन्यते। शाकल्यस्तु पदद्वयम्' इति। ननु तत्र पदपाठभेदेऽपि न स्वरः कुप्यति। अत्र तु कुप्यति। न भोः, मा स्वरः

कुपत्। किं न स्मरसि वैयाकरणम्मन्य वचनान्तरस्य? यदाहुः– 'परादिश्च परान्तश्च पूर्वान्तश्चापि दृश्यते। पूर्वादयश्च दृश्यन्ते व्यत्ययो बहुलं ततः' इति। सायणोऽपि 'सोमपीतये' [ऋ.सं.१.२.३] इति पदं व्याकुर्वन्नाह– 'सोमपीतय इत्यत्र बहुव्रीहित्वाभावेऽपि व्यत्ययेन पूर्वपदप्रकृतिस्वरः' इति। एवं 'उरुक्षयां' [ऋ.सं.१.२.९] इति पदं व्याकुर्वन्नाह– ''परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वं द्रष्टव्यम्' इति। यदि तद् युक्तं कथं नामेदमयुक्तम्? अहो व्याकरणकौशलं भवतः! तद् यथा व्यत्ययेन पूर्वाद्युदात्तं पराद्युदात्तं च तथेदं व्यत्ययेन पूर्वान्तोदात्तं भवति। किञ्च, त्वदुक्तन्यायेन 'वनस्पतिः' इति न स्यात्। 'वनस्पतिः' इत्येव स्वरस्थितिः स्यात्। 'बृहस्पतिः' इति, 'बृहस्पतिः' इति वा न स्यात्। 'बृहस्पतिः' इत्येव स्यात्। 'शचीपतिः' इति, 'शचीपतिः' इति वा न स्यात्। 'शचीपतिः' इत्येव स्यात्। एवंवादिनं प्रति किं ब्रूषे? अथ यदि ब्रूयाः 'समासस्येत्युत्सर्गः, स च 'उभे वनस्पत्यादिषु युगपत्' [६.२.१४०] इत्यपोद्यते। तेन वनस्पत्यादिषु पूर्वोत्तरपदे उभे अपि प्रकृत्या भवतः' इति, ननु भोः निगृहीतोऽसि। समं नः समाधानम्। 'ईशावास्यम्' इत्यत्रापि उभे अपि पदे प्रकृत्या भवतः 'ईश+आवास्यम्' इति। नन्वनुक्तमेतत् सूत्रे? तर्हि 'शचीपतिः, बृहस्पतिः' इत्यप्यनुक्तम्। यद्यादिपदेन गृह्यते, तर्ह्युपसङ्ख्यायता-मीशावास्यपदमपि, प्रामाणिकत्वात्। ननु यद्युपसङ्ख्यायेत स्यात् तर्हि प्रामाणिकम्। यदि स्यात् प्रामाणिकं तर्ह्युपसङ्ख्यायेत। कथमन्योन्याश्रय-ग्रहान्निस्तारः? भ्रान्तोऽसि। 'आत्मावास्यमिदं सर्वम्' इति पुराणगृहीतत्वात् प्रामाणिकम्। प्रामाणिकत्वात् प्रयोगशरणेन वैयाकरणेन सूत्रे ग्रहीतव्य-मुपायान्तराभावादिति क्वान्योन्याश्रयता। अपि च प्रियव्याकरणा अनधीत-तत्ववादप्रकरणाः किञ्चिदिव बोधनीयाः। व्याकरणे तावत् स्वरो नाम शब्द-स्वभावः। नार्थानुगुणः प्रायः। तदेतत् तत्ववादिनां नानुमतम्। लोकेऽप्यनुभव-सिद्धमेतत्– यत् स्वरविशेषेण पदेष्वर्थविशेष आधीयत इति। भवतु नाम शब्दस्वभावोऽपि। अथाप्यर्थानुगुण्याय क्वचिद् व्यतीयते च। अयमत्रार्थक्रमः–

'ईश–' इत्यनुदात्तोदात्ताभ्यां स्वराभ्यां भगवदीशनं सुदृढं सर्वोच्चं चेत्याह। 'आवास्यम्' इत्यनुदात्ताभ्यां स्वरितेन च भगवदावासस्थानस्य जगतः सदा सुदृढं भगवदपेक्षयाऽवरत्वम्, न क्वाप्येतदपोह्य भगवत्स्वरूपतामापद्यत इत्याहेति सर्वं सुन्दरम्। तथाहि स्मरन्ति– 'दार्ढ्यमेवानुदात्तार्थ उदात्तस्योच्चता तथा। नीचता स्वरितस्यार्थः प्रचयस्य यथास्थितिः' इति। तथाच 'ईश+आवास्यम् =ईशावास्यम्' इति रूपसिद्धिरिति। 'ईशा। वास्यम्' इति माध्यन्दिनानां काण्वानां च पदपाठे द्वैपद्यम्। स्वायम्भुवमनोः पदपाठे त्वैकपद्यं भागवतप्रमाण्यादिति। एकस्मिन्नेव मन्त्रेऽन्यमन्यमर्थमनुसन्दधत ऋषय इति सुविदितम्। स्वायम्भुवमनोः प्रथमद्रष्टृत्वात्, पुराणगृहीतत्वाच्च स एवार्थः पुरस्कृतो भाष्यकारेणापीति। परैरप्येतदङ्गीकृतमेवेति नातितरां प्रत्यायनार्थं प्रयतितव्यम्। तथाहि श्रुतप्रकाशिकायाम् [३.४.१४]– 'ईशावास्यमिति ईट्शब्द-स्तृतीयान्त ईशा। तेन वास्यम्। यद्वा ईशेन आवास्यम्। ईश्वरपरतन्त्रमित्यर्थः' इति। शैवोऽपि कश्चिदाह– 'ईशेन रुद्रेण आवास्यं व्याप्यम्' इति ॥ ❊ ॥

मूले **'जगत्यां जगत्'** इति श्रूयते। तत्र जगतीपदं पाद्मवचनेन विवृतं भाष्ये– **'प्रकृतिगम्'** इति। तेन निर्गळितार्थमाह– **यत् किञ्चेदं** चराचरात्मकं **जगत् जगतीसञ्ज्ञायां प्रकृतौ संस्थितमिति**। कथं जगती प्रकृतिः? आह– **'जगत् गतमस्यामिति जगती प्रकृतिः'** इति। 'जगत्यां पृथिव्याम्' इति स्थूलं दर्शनम्। नहि पृथिवीमात्रं भगवन्नियतमिति वक्तुं युक्तम्। नापि जगती-पदस्य विशिष्य कृत्यं तत्पक्षे। स्वोपादाने जडप्रकृतौ गतमिदं जगत्, प्रकृतिश्च प्राकृतं च जगदित्येतत् **सर्वमीशावास्यम्; स्वतः प्रवृत्त्यशक्तत्वात्**। अथच जगन्मातरि चित्प्रकृतावाश्रितमपि इदं **सर्वमीशावास्यमेव**। तस्या अपि **स्वतः प्रवृत्त्यशक्तत्वात्**। यस्माच्च **स** हरिश्चित्प्रकृते रमाया अपीश्वरः। **तद्दत्तेनैव भुञ्जीथाः**। अत्र यदाह कश्चित्– 'त्यागो न दानम्। अपितु दानपदार्थैक-देशः। अतो न युक्तमेतत्' इति। विस्मृता तेन 'पितृभ्यः पिण्डान् त्यजति ददातीत्यर्थः' इति प्राचीना व्याख्यासरणिः। भवतु नाम पदार्थैकदेशः। तेन

को दोष उद्घोष्यते। दृश्यन्ते हि प्रयोगाः– 'करिकलभः, पाकं पचति, वचनमुवाच' इत्यादयः। अहो एवं परभाष्यखण्डनव्यामोहेन 'तद्दत्तेनैव भुञ्जीथाः' इति पुराणवचनमेव खण्डयामासेत्यपि न जानीते। एवमन्यत्राविद्यमानमपि दोषमुद्घोषयन् चक्षूरोगी स पुरोभागी प्रष्टव्यः– 'भुञ्जीथाः पालयेथाः' इति स्वपूर्वाचार्यभाष्ये 'भुजोऽनवने' इति व्याकरणविरोधं प्रकटं पश्यन्नपि किमिति तूष्णीमास्स इति। **'अतो नान्यं प्रयाचयेत्'** इति। **अतः** सर्वस्य तदधीनत्वात्, **अतः** सर्वाभीष्टप्रदात् **अन्यं** कमपि कोऽपि किमपि **न प्रयाचयेत्**। परिवारतयाऽन्येषामपि याचना कथञ्चित् स्यादिति प्रयाचयेदित्याह। टुयाचृ याच्ञायाम्। **याचयेद्** याचेदित्येकोऽर्थः। यथाऽऽहुर्वैयाकरणाः– 'भूवादिनवगणोक्ताः स्वार्थे णिजन्ता अपि भवन्ति। चुरादिपाठस्तु निदर्शनार्थः' इति। तद् यथा– 'रामो राज्यमकारयत्' [युद्ध.१२८.१२५] इति रामायणे। लोकेऽपि हि प्रयुञ्जते– गौरित्वानं वाहयति; वटुर्वेदं वाचयति; वीरः शत्रून् घातयतीत्यादि। अर्थविशेषलाभश्च णिचा भवति– स्वयं हरेरन्यं न याचेत; नापि कमप्यन्यं याचनाय प्रचोदयेदिति ॥

**प्रतियोग्यन्तरादृष्टेः**। 'यज्जगत्यां जगन्मनः' इति भागवते निगदं स्वबुद्धिविषयतया व्याख्यानाच्च।'प्र शुन्ध्युवं वरुणाय प्रेष्ठां मतिं वसिष्ठ मीळ्हुषे भरस्व' [ऋ.सं.७.८८.१] इति वसिष्ठदृष्टो वरुणदैवत्यो मन्त्रः। वसिष्ठः स्वात्मानमाह– हे वसिष्ठ, त्वं मीळ्हुषे अभिलषितसेचकाय वरुणाय वासुदेवाय शुन्ध्युवं शब्दतोऽर्थतश्च परिशुद्धामत एव तस्यातिप्रियां मतिं स्तुतिं प्रभरस्व धारयेति। वरुणाय तदनुग्रहाय तद्विषयां प्रज्ञां प्रकर्षेण भरस्वेति वा ॥ * ॥

'जगत्यां भूमौ यत्किञ्चिदिदं जगत् भोग्यभोक्तृरूपं वस्तुजातं वर्तते, तदिदं सर्वं ईशा सर्वनियन्त्रा विष्णुना वास्यं व्याप्यं धार्यं च। तेन जगता परित्यक्तेनोपलक्षितः सन् देहधारणमात्रौपयिकं भुञ्जीथाः। कस्यचित् बन्धोरबन्धोर्वा धनं माऽभिकाङ्क्षीः' इति रामानुजीया व्याचक्षते। 'ईशा

वास्यमिदं सर्वं भुञ्जीथाः' इत्येके । सर्वोऽप्ययमर्थप्रयासो ब्राह्मवचनानुपलम्भनिमित्त इति स्फुटम् । 'जगत्यां पृथिव्युपलक्षितेषु लोकेषु यत् किञ्च द्वैतरूपं जगत् विकारजातम्, इदं सर्वमनृतं ईशा सत्यरूपेणाऽत्मना वास्यमाच्छादनीयं व्यपोह्नीयम्। तेन त्यक्तेन त्यागेन आत्मानं भुञ्जीथाः पालयेथाः । कस्य स्विद् धनम्? न कस्यापि । सर्वस्य द्वैतप्रपञ्चस्य मिथ्यात्वात् । अतो मा गृधः' इति शाङ्करं व्याख्यानम् । सर्वं श्रुत्यक्षराननुगुणमिति स्फुटं निर्मत्सराणां चक्षुष्मताम् । न वयं खण्डनखण्डखाद्ये दीक्षिताः । किन्तु मण्डनमण्डखाद्ये ॥ * ॥

तथाचायं मन्त्रार्थः– **ईशा** सर्वेश्वरेण हरिणा तन्नियन्तुं वस्तुं योग्यं **वास्यमावास्यं** वा, अत एव च ईशस्य तस्य **आवास्यम्** आवासस्थानम्, **यत् किमपि जगत्यां** प्रकृतौ गतं, जडप्रकृत्युपादानकं चेतनप्रकृत्याश्रितं च इदं चेतनाचेतनात्मकं **सर्वं जगत्**। तेन सर्वस्येशाधिष्ठितत्वेन, ईशाधीनत्वेन च, तेन ईशेन **त्यक्तेन** दत्तेन **भुञ्जीथाः** । तेन यद् दत्तं तत् तस्य प्रसाद इति भुङ्क्ष्व । तेन यन्न ते दत्तम्, यदन्यस्मै वा दत्तम्, तदन्यस्य कस्यचिद् **धनमिति** मत्वा **मा गृधः**। अथ च यन्न ते तत् **मा गृधः**? कुतः? **कस्य स्विद् धनम्?** न कस्यापि । यतः सर्वं भगवदीयमेव । अतस्तद्दत्तेनैव भुञ्जीथाः । अत एव चान्यं यङ्कमपि मा याचीरिति ॥ १ ॥

**कुर्वन्नेवेह कर्म्माणि जिजीविषेच्छतꣳ समाः ।**
**एवं त्वयि नान्यथेतोऽस्ति न कर्म्म लिप्यते नरे ॥ २ ॥**

**(भा.)** अकुर्वतः कर्म्म न लिप्यत इति नास्ति–

'अज्ञस्य कर्म्म लिप्येत कृष्णोपास्तिमकुर्वतः ।
'ज्ञानिनोऽपि यतो ह्रास आनन्दस्य भवेद् ध्रुवम् ।
'अतोऽलेपेऽपि लेपः स्यादतः कार्यैव सा सदा'

इति नारदीये ॥ * ॥

**(टी.)** न केवलमीशदत्तभोजनेतरवर्जनादेव पूर्यते । किन्तु कर्तव्यं च भगवदुपासनादिकर्मेत्याह– **कुर्वन्नेवेति**। इह परमेश्वरे मनोवागादिभिः सत्कर्माणि **कुर्वन्नेव** जीवः **शतं समाः** जीवेत् । **एवं नरे त्वयि** अज्ञानादिना क्रियमाणमयोग्यं[1] **कर्म न लिप्यते**। [2]इतोऽ**न्यथा** न लिप्यत इति **नास्ति**। किन्तु लिप्यत एव ॥ ❊ ॥

अत्रायं पाठविशेषः। **एवं त्वयि न कर्म लिप्यते नरे** इति पूर्ववाक्यम्। **नान्यथेतोऽस्ति** इत्युत्तरवाक्यम्[3] । तथाऽप्येतत्[4] पूर्वस्यान्तर्भागे पठ्यते संहितायां विषये । कुतः? 'नरा वा शंसम्' [ऋ.सं.१०.६४.३] इत्यादाविवान्तःपदन्यायेनान्तर्वाक्यस्यापि सम्भवात्। एतदभिप्रायं व्यक्तं वक्ति– **अकुर्वत** इति। भगवद्विषयकर्माणि **अकुर्वतः**[5] पापं **कर्म न लिप्यत इति नास्ति**। लिप्यत एवेत्यर्थः। [6]अत्र नारदीयवचनं चाऽह– **अज्ञस्येति**। अज्ञस्य कर्मलेपो नाम ज्ञानोत्पत्तिनिरोधः । ज्ञानिनस्त्वानन्दह्रास इति भेदः । अतस्तत्परिहारार्थं भगवदुपासनादिकं कार्यमेवेत्यर्थः ॥ २ ॥

**(भा.चं.)** द्वितीयो मन्त्र एकाक्षराधिकस्तृतीयपाद इति भुरिगनुष्टप्। तथाहि सम्प्रदायज्ञा आचक्षते– 'चतुष्पाद् याजुषी भुरिगनुष्टुप् छन्दः, त्रयस्त्रिंशदक्षराणि, सप्तदश पदानि' इति। **शतं समाः** शतं वर्षाणि, यावज्जीवमित्येतत्। शतशब्दः पूर्णत्ववचनः न सङ्ख्यावचनः । अतः शताधिकाः समा यदि जीवति सोऽपि शतं समा जीवति । यावज्जीवति तावतीः समाः कर्माणि कुर्वन्नेव जीवेत् । 'जीवेम शरदः शतम्', 'यावज्जीवमग्निहोत्रं जुहोति' इत्यादि श्रवणात् । 'कालाध्वनोरत्यन्तसंयोगे' [अष्टा.सू.२.३.५] इति द्वितीया। **नरे** अज्ञानादिना पापप्रचुरे नष्टरमणेऽपि **त्वयि**, ईश्वरार्पणबुद्ध्या कर्मकरणात्, फलकामनयाऽकरणाच्च फलेषु न रमत इति वा **नरे त्वयि** ईशार्पणधिया कर्माणि कुर्वति सति। व्याचख्यौ च पण्डिताचार्यः स्वयं तत्वप्रदीपे [३.४.७]–

१. '–मयोग्यादिकं कर्म' क. २. 'न लिप्यते। अन्यथा' क.ख. ३. 'इत्युत्तरं वाक्यम्' ख.ग.
४. '–ऽप्येतस्यान्तराळे पठ्य–' क. ५. 'कर्माण्यप्यकुर्वतः' क. ६. 'तत्र' ख.ग.

'इह परमेश्वरे। ईशावास्यमित्यादिपूर्ववाक्ये तस्य प्रस्तुतत्वात्। तस्मिन्नुपास्तिं तदर्पणेनान्यानि वा कर्माणि कुर्वन्नेव जिजीविषेत्। एवं त्वयि नरे न कर्म लिप्यते। इतोऽन्यथा न लिप्यत इति नास्ति' इति। अत्रापि 'त्वयि' इति मनुः स्वात्मानं प्रत्येवाऽह। परेषामप्रसक्तेः। श्रीजयतीर्थास्तु 'शतं समाः शतं वर्षाणि इह मानुषादिजन्मनि यज्जिजीविषेत् तत् स्वोचितानि कर्माणि कुर्वन्नेव। एवं कुर्वति नरे मनुष्यमात्रेऽपि त्वयि पापं कर्म न लिप्यते' इति व्याचक्षते। तत्पक्षे नेयं स्वात्मानं प्रत्युक्तिः। किन्त्वन्यान् साधकान् प्रतीमं द्वितीयं मन्त्रं मनुर्ददर्शेति वक्तव्यम्। अत्र यत् केनचिदुक्तम्– 'ईशशब्देन रूढ्योपोद्बलितस्य शिवस्यैव शीघ्रोपस्थितेर्नायं विष्णुपरः' इति। तेन स्वपूर्वाचार्यवचनमेव विस्मृतमिति शोच्य एव सः। तथाहि 'ईश्वरः सर्व-भूतानाम्–'[१८.६१] इति गीतावचनस्य शाङ्करं भाष्यम्– 'ईश्वरः ईशनशीलो नारायणः' इति। किं तत्राप्ययं स्वपूर्वाचार्यं विरुरुत्सति– 'ईश्वरशब्देन रूढ्योपोद्बलितस्य शिवस्यैव शीघ्रोपस्थितेर्नायं नारायणपरः' इति। **कुर्वन्नेव जिजीविषेत्।** भगवदाराधनात्मकं कर्म कर्तुमेव जिजीविषेत्। चिकीर्षन्नेव जीवेदित्येतत्। 'ब्रह्मविदोऽपि यावद्विद्यापूर्ति जीवनमिष्टं भवतीति ज्ञापनाय सन्प्रयोगः' इति वेदान्तदेशिकः। 'यद्यपि जिजीविषेदिति विधिः श्रूयते। तथाऽपि 'स्नात्वा भुञ्जीत' इत्यत्र स्नान इव कर्मानुष्ठाने विधिर्योजनीयः' इत्यन्ये। 'नराशंसं वा' इति वक्तव्ये 'नरा वा शंसम्' इत्याह। सोऽयमन्तःपदन्यायः। एवमत्रापि 'एवं त्वयि न कर्म लिप्यते नरे नान्यथेतोऽस्ति' इति वक्तव्ये 'एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे' इत्याह। सोऽयमन्तर्वाक्यन्यायः। वाक्यस्यान्तर्मध्येऽन्यद् वाक्यं यत्र तदन्तर्वाक्यम्॥ * ॥

भाष्ये **'अतोऽलेपेऽपि लेपः स्यात्'** इति। मोक्षप्रतिबन्धरूपलेपाभावेऽपि आनन्दह्रासरूपो लेपः स्यादित्यर्थः। **अतः कार्यैव सा** कृष्णोपास्तिः। न केवलं कृष्णोपास्तिः। तदुपयोगि सर्वमित्याह– **भगवदुपासनादिकं कार्यमेवेत्यर्थ** इति। श्रवणं मननं ध्यानं चोपासा। गुरुशुश्रूषणादिकमादिपदार्थः॥ * ॥

मन्त्रोऽयमविद्वद्विषय इति मायावादभाष्यम् । तत्र कारणं चाभ्यधित– 'विद्याकर्मणोः गोव्याघ्रयोरिव परस्परविरोधेन एकत्र उभयोः सहावस्थानासम्भवात्, ज्ञानिनो जिजीविषासम्भवाच्च' इति । विस्मृतं तेन– 'कर्मणा ज्ञानमातनोति','यदेव विद्यया करोति' इत्यादिश्रुतिवचनम् । आदौ तावत् कर्मकाण्डस्यातत्वावेदकत्वं वदन् ज्ञानकाण्डमात्रस्य तत्वावेदकतामाह । इदानीं ज्ञानकाण्डतयाऽभ्युपगतानामुपनिषद्वचनानामपि अविद्वद्विषयतयाऽतत्वावेदकतामभ्युपयन् स्वयमेव स्वस्यावैदिकतामुदघोषयदित्यहो अयमुपेक्ष्य एव वेदार्थचिन्तकैः ॥ ❊ ॥

तथाच मन्त्रार्थः– इह ईशपदप्रस्तुते परमात्मनि अर्पणबुद्ध्या कर्तव्य**कर्माणि कुर्वन्नेव,** कर्तुमेव च **शतं** वर्षाणि जीवितुमिच्छेत् । **एवं** कुर्वति **नरे** न रीयत इति स्वतो नाशरहिते चिदानन्दस्वरूपे, सम्प्रति प्रारब्धबलात् न रमत इति दुःखादिभाजनेऽपि, दुःखमयसंसारबद्धेऽपि वा, कर्मफलेषु न रममाणे वा निःसङ्गे **त्वयि न** पापं **कर्म लिप्यते** । प्रथममन्त्रे 'मा गृधः' इति स्वात्मानं प्रत्येवोक्तमिति, अत्रापि त्वयीति स्वीयं स्वान्तमेव मनुराहेति युक्तम् । **इतोऽन्यथा,** कर्माकरणेन न लिप्यत इति **नास्ति** । किन्तु लिप्यत एव । न कर्मणामकरणमलेपहेतुः । किन्तु भगवदर्पणबुद्ध्या करणमेवेत्यर्थः । 'यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः' [भ.गी.३.९]इति हि भगवद्वचनम् ॥ २ ॥

**असुर्या नाम ते लोका अन्धेन तमसाऽऽवृंताः ।**
**ताꣳस्ते प्रेत्याभि गच्छन्ति ये के चाऽत्महनो जनाः ॥ ३ ॥**

**(भा.) सुष्ठु रमणविरुद्धत्वादसुराणां प्राप्यत्वाच्च असुर्याः । 'न च[1] रमन्त्यहो असदुपासनयाऽऽत्महनः' इत्युक्तत्वात् ।**

---

१. यद्यपि हृषीकेशतीर्थलिखित आदर्शे **'न खलु'** इति पठ्यते । स एव च भागवते प्रचलितः पाठः । अथापि भागवततात्पर्यविरोधात्, अत्रापि **'नच रमन्ति नैव रमन्ते'** इति व्याख्यानविरोधाच्च **'न खलु'** इत्यनवधानमूलं लेखनमिति सम्भाव्यते ।

**'महादुःखैकहेतुत्वात् प्राप्यत्वादसुरैस्तथा ।**
**'असुर्या नाम ते लोकास्तान् यान्ति विमुखा हरौ'**
**इति वामने ॥**

**ये केचनेत्यनेन नियम उक्तः ।**
**'नियमेन तमो यान्ति सर्वेऽपि विमुखा हरेः' इति च ॥ * ॥**

**(टी.)** एवं सत्यविद्यया विद्यया वा तदुपासनं कार्यम् । उभयथाऽपीष्टसिद्धेरित्यत आह– **असुर्या** इति । एतत् पदं निर्वक्ति– **सुष्ठ्विति** । तत्र [प्रमाणमाह[1]]– **नचेति** । ये स्वव्यतिरेकेण परमात्मानं नाङ्गीकुर्वन्ति, निर्गुणत्वाद्युपासनया च तं परित्यजन्ति त एव[2] **आत्महन** उक्ताः । नहि परमात्मनः केनापि हन्यत्वं युक्तम् । प्रत्युताविद्यमानोपासकाः परेण[3] स्वयमेव हन्यन्ते । 'हन्ति रक्षो हन्त्यासद्वदन्तम्' इत्यादेः । एवं स्वरूपदूषणाच्चाऽत्महनस्त उक्ताः–'असत्यमप्रतिष्ठं ये जगदाहुरनीश्वरम् । त आसुराः स्वयं नष्टाः' इति व्यासस्मृतेः । ते **'नच रमन्ति'** नैव रमन्ते । तमःप्राप्त्यनन्तरं दुःखैकस्वरूपत्वात् । **इत्युक्तत्वात्** श्रुतिगीतायाम् [भाग.१०.९४.२४] ॥

एतमर्थं **'महादुःख–'** इत्यादिवामनवचनेनापि व्यक्तं कथयति । **'ये के चाऽत्महनः'** इति विभागश्रवणादात्महनोऽपि केचिदेवान्धं तमो गच्छन्तीत्याशङ्क्य परिहरति– **ये केचनेति** । नानायोनिषु जीवेषु केचिदेव परमात्मानं द्विषन्ति । नहि सर्वे । तद्द्वेष्टारस्तु सर्वेऽप्यन्धं[4] तमो गच्छन्तीत्यभिप्रेतत्वान्न कश्चिद् विरोधः । अत्रापि वामनवचनं प्रमाणमाह– **नियमेनेति** । अतः सम्यग् ज्ञात्वैव भगवानुपास्य इति सुस्थितम् ॥ ३ ॥

**(भा.चं.)** तृतीयमन्त्रेऽपि स्फुटमनुष्टुप् । 'द्वात्रिंशदक्षराणि, सप्तदश पदानि' इति प्रतृण्णज्ञाः । अस्य समाख्यामन्त्रो बृहदारण्यके पठ्यते–'अनन्दा नाम ते

---

१. [ ] एतदन्तर्गतो भागः लिखितपाठेषु लुप्तः । २. **'एत एव'** क.ख.
३. **'परेण हन्यन्ते'** क. ४. **'सर्वेऽन्धम्'** क.ग.

लोका अन्धेन तमसाऽऽवृताः। तांस्ते प्रेत्याभिगच्छन्ति अविद्वांसो बुधो जनाः' [६.४.११] इति। व्याख्यातं चैतत् नारदीयवचनेन भाष्ये–'नित्य-दुःखस्वरूपत्वादनन्दं तत् तमो मतम्। बोधके विद्यमानेऽपि ये विदुर्न परं हरिम्। तेऽपि यान्ति तमो घोरं नित्योद्रिक्तासुखात्मकम्' इति। 'बोध-नाज्ज्ञानवान् भुत् स्यात् तत्सकाशाच्च ये हरिम्। न विदुस्ते तमो यान्ति सर्वदुःखात्मकं परम्' इति च। तथाच मन्त्रे 'बुधः' इति ल्यब्लोपनिमित्ता पञ्चमी। बुधं बोधकं प्राप्याप्यविद्वांस इत्यर्थः। एतदनुगुणतया अत्रापि 'असुर्य'पदं व्याचष्टे भगवान् भाष्यकारः– **सुष्ठुरमणविरुद्धत्वादसुर्याः**। सुष्ठु-रमणयोग्याः सुरम्या लोकाः सुर्याः। सुष्ठुरमणयोग्या न भवन्ति, प्रत्युत तद्विरुद्धत्वात् सुष्ठ्वरमणयोग्या लोका असुर्याः। अथच, **असुराणां प्राप्य-त्वादसुर्याः**। असुराणां योग्या असुर्याः। असुरैरीयन्ते, असुरा यान्त्यत्रेति वा **असुर्या** इति **नाम** प्रसिद्धाः। असुरस्य स्वभूता इत्यर्थे यत्प्रत्ययेनासुर्यशब्द-निष्पत्तिरिति वैयाकरणाः। 'असुरस्य स्वम्' [अष्टा.सू.४.४.१२३] इति हि पाणिनिः। अविरुद्धमेतत्। 'असुरप्रकृतीनामनुभाव्याः' इति हि फलितोऽर्थः। एतन्मूलमेतद्विवरणरूपं चेदं श्रुतिगीतापद्यमसुर्या इति पदं **'नच रमन्ति'** इति व्याचष्टे। **'असदुपासनयाऽऽत्महनः'** इत्यसुरप्राप्यत्वं सूचयति। तेनायमर्थो गम्यत इति। अथ कथमसुराः? असुषु रमन्त इति। सुरविरुद्धत्वाच्चासुराः। कथं सुराः? सुष्ठु भगवति रमन्त इति। सुरन्तीति वा। सुर षुर वा ऐश्वर्य-दीप्त्योः। **हन्ति रक्षः**। तथाहि मन्त्रः– 'न वा उ सोमो वृजिनं हिनोति न क्षत्रियं मिथुया धारयन्तम्। हन्ति रक्षो हन्त्यासद् वदन्तमुभाविन्द्रस्य प्रसितौ शयाते' [ऋ.सं.७.१०४.१३] इति। वासिष्ठः सोमदैवत्यो मन्त्रः। सोमः पवमानो नारायणश्च। वृजिनं पापरूपं रक्षो न हिनोति न सत्त्वे प्रेरयति वर्द्धयति वा। हि गतौ वृद्धौ च। मिथुया मिथ्यावचनं धारयन्तं सदा वदन्तं क्षत्रियं बलवन्त-मपि नवा उ हिनोति नैव प्रेरयति सतां पथि। प्रत्युत तादृशं रक्षो हन्ति। असद्वदन्तं च हन्ति। इन्द्रस्य सर्वसमर्थस्य वायोर्नारायणस्य च प्रसितौ

तमआख्ये बन्धने, विभक्तिव्यत्ययेन इन्द्रेण प्रसितौ बद्धौ वा, तौ शयाते। कदाऽपि ततोऽनुत्थानादिति। संहितायाम्– 'आसद्धदन्तम्' इति दैर्घ्यमाधिक्यार्थम्। सदा मिथ्याभाषिणमित्येतत्। एतदेवोक्तम्– **'नच रमन्ति नैव रमन्ते'** इति। चकारोऽवधारणार्थः। तदेव केवलार्थैनैकशब्देन विव्रियते– **महादुःखैकहेतुत्वादिति**। एतेन प्रमाणवचनेन विरोधादेव– 'असुर्या इत्यसूर्या लोकाः' इति व्याकुर्वन्तः परास्ताः। 'अन्धेन तमसाऽऽवृताः' इति पुनरुक्तं च तेषाम्। 'अनन्दा नाम ते लोकाः' इति समाख्याश्रुतिविसंवादश्च तत्पक्षे। **स्वरूपदूषणाच्च**। जगतः सत्यस्वरूपनिराकरणाच्च त आत्महन उच्यन्ते। ये जगदसत्यमाहुः ते स्वयंनष्टा इति हि स्मरन्ति। **एवं** जीवस्वरूपनिराकरणादीश्वरस्वरूपंनिराकरणाच्च। चतुर्विधा ह्यात्मनो हत्या भवति। आत्मा देहः। तेन शरीरघातनं प्रथमा हत्या। आत्मा मनः। यदसाधुविषयेष्वेव सदा मनसः प्रवर्तनं सा द्वितीया। आत्मा जीवस्वरूपम्। तस्य यदन्यथाचिन्तनं सा तृतीया। आत्मा परमात्मा। तस्य परित्यागोऽन्यथाचिन्तनं सा तुरीया हत्या। उत्तरोत्तरं गरीयसी चेयं भवति। यः प्रथममन्त्रे ईशपदगदितः स एवात्र मुख्यत आत्मेति परामृश्यते। स च हरिरेवेति वामनवचनेन स्फुटम्। 'एष त आत्माऽन्तर्याम्यमृतः' इति श्रुतौ 'अन्तर्यामी आत्मा नारायणः' इति शाङ्करं भाष्यमपि ईशशब्दवदात्मशब्दस्यापि विष्णुपरत्वं स्फुटमभ्युपैति। 'योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते। किं तेन न कृतं पापम्' इत्यादि च भारते॥

**'ये केचनेत्यनेन नियम उक्तः'** इति भाष्यम्। ननु मूले ये के चेति श्रूयते न ये केचनेति? सत्यम्। आर्थिकोऽयमनुवादः। तस्य चेदं बीजम्। अर्थश्चानेन विवृतो भवति। पदपाठान्तरं च सूचितं भवतीति। तथाहि ये के चेति त्रीणि पदानीति सम्प्रदायज्ञाः। वस्तुतस्तु 'ये केच' इति द्वे पदे इति सुन्दरमर्थानुगणं च। तद्यथा लोके 'केचन', 'कश्चन', 'किञ्चित्' इत्यादिकमैकपद्येन व्याहरन्तीति। नानायोनिषु जीवेषु ये परमात्मानं द्विषन्ति तेषु केचनेति नार्थः। किन्तु ये त्रिविधा जीवास्तेषु केचनैव तामसा द्विषन्ति। ये केचन द्विषन्ति ते

सर्वेऽपि तमो यान्तीति । **हरौ विमुखाः**, ये विगतादराः, ये च बद्धद्वेषाः । **हरेर्विमुखाः**, हरेः सम्बन्धि सर्वमपि पृष्ठतः कृत्वा, ततः परावृत्य मुखं ये जिजीविषन्ति । हरौ वैमुख्यं बीजम् । हरेर्वैमुख्यं प्रसवः । ये **हरेर्विमुखाः** ते **सर्वेऽपि तमो यान्ति** । नास्य क्वचिदपवादः शङ्कनीयः । **नियमेन यान्ति** यान्त्येव विनाऽपवादमिति ॥ ❊ ॥

'ये के च देवजातीया मनुष्यजातीया वा आत्मघातिनः, ते पृथिव्यन्तरिक्ष-स्वर्गरौरवादिसञ्ज्ञितान् नरकलोकानभिगच्छन्ति' इति केचित् । श्रुतिपदविरुद्धं भाषमाणा अद्भुतास्ते शोच्या एव । अपरे तु कत्थन्ते–'असुरा इत्यद्वैत-ज्ञानविधुराः । तैः प्राप्योऽयं संसार एवासुर्यलोकः । नामेति व्यर्थं पदं वाक्यालङ्कारे' इति । स्वमताभिनिवेशमुषितमनसामेवंविधा अर्थाभासा भासन्ते । स्वार्थसाधनाय श्रुतिपदमपि निरर्थं निगदन्तः शोचनीया एवेति स्फुटं वागर्थसम्बन्धविदाम् । 'असुर्या इत्यसूर्या लोकाः' इत्यन्ये । ननु भगव-ल्लोकोऽप्यसूर्यः । 'न तत्र सूर्यो भाति' इति श्रवणात् । ननु तेन तमोमयत्व-मुच्यते । तर्हि पुनरुक्तं भवति 'अन्धेन तमसाऽऽवृताः' इत्यनेन । चापलाय प्रचोदिताः सर्वेऽप्येते परमनुकम्पनीया अविद्यायामन्तरे वेष्टचमानाः ॥ ❊ ॥

तथाच मन्त्रार्थः– सुष्ठुरमणविरोधाद् दुःखबहुलतया, असुरप्राप्यतया च **असुर्या नाम ते** शास्त्रप्रथिता **लोकाः** सन्ति । ते च **अन्धेन तमसा आवृता** इत्यन्वर्थ-मन्धन्तमःपदगदिताश्च । **ये केचन** निर्गुणोपासनादिना परमात्मानं घ्नन्ति, **जनाः** संसारे पुनःपुनर्जायमानाः **ते** सर्वेऽपि अन्ते अस्मात् संसारात् **प्रेत्य तानेव** लोका**नभिगच्छन्ति** निरन्तरं निरवधि च गच्छन्ति । ये भगवतो विमुखास्ते तमसोऽभिमुखा इति स्फुटयति–**'अभिगच्छन्ति'** इति । अपिच, असुराणां वासयोग्यास्तामसदेहा अप्यसुर्या लोकाः । तेऽपि चान्धयतीत्य**न्धेन** यथार्थज्ञानप्रतिबन्धेन **तमसा**ऽज्ञानेना**ऽवृताः** । रक्षोभूततिर्यगादियोनिभाजो भवन्तीत्यर्थः । तथाहि गीतासु–'तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।

क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु। आसुरीं योनिमापन्ना मूढा जन्मनि-जन्मनि। मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्' [१६.१९-२०] इति। **'अन्धेन तमसाऽऽवृताः'** पुनःपुनः गर्भवासपीडिता इति वा। 'अन्धमिव वै तमो यद् योनिः' इति तलवकारब्राह्मणम्। एतदेवोक्तम्–'मूढा जन्मनि-जन्मनि' इति ॥ ३ ॥

**अनेजदेकं मनसो जवीयो**
**नैनद् देवा आप्नुवन् पूर्वमर्षत्।**
**तद् धावतोऽन्यानत्यैति तिष्ठत्**
**तस्मिन्नपो मातरिश्वा दधाति ॥ ४ ॥**

**(भा.)** 'अनेजन्निर्भयत्वात् तदेकं प्राधान्यतस्तथा।
'सम्यग् ज्ञातुमशक्यत्वादगम्यं तत् सुरैरपि ॥

'स्वयं तु सर्वानुगमात् पूर्वमेव स्वभावतः।
'अचिन्त्यशक्तितश्चैव सर्वगत्वाच्च तत् परम् ॥

'द्रवतोऽत्येति सन्तिष्ठत् तस्मिन् कर्म्माण्यधान्मरुत्।
'मारुत्येव यतश्चेष्टा सर्वा तां हरयेऽर्पयेत्' इति ब्रह्माण्डे ॥

ऋष ज्ञाने ॥ * ॥

**(टी.)** [१]अथो तस्य स्वरूपं कीदृशमित्याकाङ्क्षायामाह– **अनेजदिति**। इह तावन्मन्त्रग्रहणे मनुर्मन्त्रमाहेति भाष्यकर्तुरभिप्रायं सूचयित्वा भाष्याभिप्राय-मेव[२] वयं किञ्चिद् ब्रूमः। भाष्यग्रहणे भाष्यकारस्तदाहेत्येष एव विशेषः ॥

इमं मन्त्रं **'अनेजन्निर्भयत्वात् तत्–'** इत्यादिब्रह्माण्डवचनेन व्याख्याति। **अ-नेजत्** भयकम्परहितम्। एजृ कम्पन इति धातोः। **देवा एनत् नाऽप्नुवन्**

१. 'अहो तस्य' क.  २. '–भिप्रायमेव किञ्चिद्–' ख. 'यत्किञ्चिद्–' ग.

सम्यग्ज्ञातुं नाशक्नुवन्। 'न यस्येन्द्रो वरुणो न मित्रो व्रतमर्यमा न मिनन्ति रुद्रः' इत्यादेः। सर्वस्मात् पूर्वतनं चेदम्। सर्वस्रष्टृत्वात्। नचैतदौपाधिकम्। '**स्वभावतः**' इति वचनात्। **अर्षत्** सर्वं व्यजानात्। **ऋष ज्ञान** इति धातोः। तिष्ठत एव धावज्जनात्ययः सर्वैश्वर्यात्। **तस्मिन्** उक्तलक्षणे विष्ण्वाख्य-ब्रह्मणि **अपः** स्वमनोवाक्कायकर्माणि मुख्यप्राणः समर्पयेत्[1]। या पुनः सर्व-प्राणिषु दृश्यमाना सर्वचेष्टा साऽपि **मारुती** मरुतैव कारिता। 'वायुना हि सर्वे लोका नेनीयन्ते' इत्यादिश्रुतेः। अतस्तामपि सर्वां स्वस्वामिनि विष्णौ सम-र्पयेत्[1] तत्पूजाऽस्त्विति ॥ ४ ॥

**(भा.चं.)** चतुर्थे मन्त्रे तृतीयपादे 'अति+एति' इति क्षैप्रविश्लेषेण, 'धावतो+अन्यान्' इति वा विश्लेषेण त्रिष्टुप्। अन्यथा निचृत् त्रिष्टुप्। तथाहि प्रतृण्णपारायणिकाः– 'याजुषी निचृत् त्रिष्टुप् छन्दः। त्रिचत्वारिंशदक्षराणि। पदानि विंशतिः' इति। **'इह तावन्मन्त्रग्रहणे'** इत्यादिना स्वस्य विनयातिशयं दर्शयति। 'विनयो हि भूषयति सर्वरसम्'। अनुसृता च भवति तेन पूर्वाचार्य-परम्परा। तथाहि तत्वदीपिका– 'अस्माकं तु भाष्यार्थमात्रान्वेषणपरि-खिन्नात्मनामनवरतं भाष्यानुवादेऽप्यध्यासितालस्यानामत आहेत्यभिसूत्रं भाष्यानुकरणेऽपि प्रतिवाक्यमन्य एवाभिप्रायो निश्चेतव्यः। अतः पूर्वपक्षप्राप्तेः परिहारार्थं सूत्रमुदाहृत्य तस्य भाष्यमाह भगवानाचार्य इति' इत्यादि ॥

**अनेजदिति**। प्रथमपद्ये तावदीशशब्देन परमात्मा प्रस्तुतः। तत आत्महन इत्यात्मशब्देन। तदेव च परं ब्रह्मेति स्मारयन्ननेजदित्यादीनि नपुंसक-पदान्युपादत्त। अन्यथा 'अनेजन्नेको मनसो जवीयान्' इत्यादिपुल्लिङ्गनिर्देशः स्यात्। 'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते' इति च भागवते। सर्वनामत्वात् सर्वलिङ्गमपि स्त्रीपुन्दोषविहीनं हि तदिति च सूचयति ॥

**अनेजन्निर्भयत्वादिति**। द्वयोरर्थयोरेजतिं पठन्ति। एजृ दीप्ताविति, एजृ कम्पन इति। दीप्तावर्थेऽयमात्मनेभाषः। कम्पने परस्मैभाषः। तस्मादेजते

१. 'समार्पयेत्' ख. 'समर्पयत्' क.

भगवान्। किन्तु नैजति। तदेतदुक्तम्– **'निर्भयत्वादनेजत्'** इति। तदेकमनेजदभयम्। अन्यत् सर्वमेजद् भयग्रस्तम्। संसार एव हि भयम्। 'नो भयं ससृजुर्ह्यदः' [२.६.३३] इति भागवते। तैत्तिरीया अपि पठन्ति– 'भीषाऽस्माद् वातः पवते भीषोदेति सूर्यः। भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः' इति। काठका अपि पठन्ति– 'भयादस्याग्निस्तपति भयात् तपति सूर्यः। भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः' इति। ततोऽन्यत् सर्वं तत एजतीति चोपरिष्टात्॥

तदेकं सर्वोत्तमं च, भक्तानां स्वाधीनमपि स्वानधीनद्वितीयरहितम्। जीवजातमनेकमवरं पराधीनं च। मनो हि जववत्तरं लोके। तन्मनसोऽपि जवीयः। जीवास्तु मनसा जवन्ते। श्रूयते हि– 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति। स्मर्यते च– 'वर्षायुतशतैर्वाऽपि पक्षिराडिव सम्पतन्। नैवान्तं कारणस्येयाद् यद्यपि स्यान्मनोजवः' [अहिर्बुध्न्यसं.२.४३] इति। अथापि देवाः प्रभवेयुरेव मनसा तदाप्तुमित्याशङ्क्य नेत्याह– **नैनद् देवा** अपि मनसा **आप्नुवन्**। किं तर्हि सर्वथाऽज्ञेयम्? न भोः। जिज्ञासवो जानन्ति। अथापि न जानन्ति सामस्त्येन। अवेद्यत्वाभावविशिष्टसुवेद्यत्वाभावलक्षणं हि तत्। तदिदमाह– **सम्यग् ज्ञातुमशक्यत्वात्**। यन्मनोमानिनः शङ्करादयोऽपि नावगन्तुमीशते, का च कथाऽन्येषाम्?

**न यस्येन्द्र** इति गृत्समददृष्टः सावित्रो मन्त्रः। तथाहि समग्रो मन्त्रः– 'न यस्येन्द्रो वरुणो न मित्रो व्रतमर्यमा न मिनन्ति रुद्रः। नारातयस्तमिदं स्वस्ति हुवे देवं सवितारं नमोभिः' [ऋ.२.३८.९] इति। यस्य व्रतं सृष्ट्यादिकर्म इन्द्रादयो न जानन्ति देवाः, नाप्यरातयोऽसुराः। तमिदानीं नमउक्तिभिः सह स्वस्ति हुवे। इन्द्र इति वायुः। वरुण इतीन्द्रः। 'रुद्रा उपजीवन्तीन्द्रेण मुखेन, आदित्या उपजीवन्ति वरुणेन मुखेन' इत्यादेः। मित्रार्यमणौ गरुडशेषौ। वेदप्रमितिं रातीति मित्रः। वेदपुरुषो हि गरुडः। अर्यं मेयं वस्तु मापयति ज्ञापयतीति छन्दःपुरुषोऽर्यमा। शरीरजानां रुजां द्रवणाद् रुद्रः

शरीरपुरुषः शिवः। प्रातीतिकोऽप्यर्थोऽविरोधात् स्वीकार्य एव। **पूर्वं** सर्वस्माद् पूर्वभावि सर्वकारणं च तत्। अन्यत् सर्वमुत्तरकालीनं ततः सृष्टम्। **सर्वानुगमा-** दिति पौराणस्य पदस्य भावमाह– **सर्वस्रष्टृत्वात्**। सर्वस्य तत्तत्स्वभावा-नुगुणं स्वरूपाभिव्यञ्जनं हि सर्वानुगमः। तेन सर्वानुगमादित्यस्य सर्वसृष्टेरिति सर्वस्रष्टृत्वादिति वाऽर्थः। सर्वत्रानुगमः सृष्ट्यनन्तरकालीनः प्रवेशो वा। 'तत् सृष्ट्वा तदेवानुप्राविशत्' इति हि श्रुतिः। अत्र द्वेधा पाठः श्रूयते– 'स्वयं तु सर्वानुगमात्' इत्येकः। 'स्वयं तु सर्वानगमत्' इत्यपरः। हृषीकेशतीर्थादृतः प्रथमः। व्याख्यातृपरम्परादृतो द्वितीयः। यद्यपीयं टीका सावकाशा द्वयोरपि पाठयोः। अथापि प्रायो हृषीकेशतीर्थादिभिरादृतं पाठमेवावलम्बत इत्यत्रापि स एव पाठः स्वीकृतः। अथच **'पूर्वम्, अर्षत्'** इति पदद्वयं विशेषणद्वय-परतया व्याचक्षाणेयं टीका पूर्वाचार्यपाठमेव कटाक्षयतीव। **'अर्षत् सर्वं व्यजा-नात्'**। तत् सर्वज्ञम्। अल्पज्ञानाश्च जीवाः। **'अर्षत्'** इति श्रौतं पदं प्रमाणे न व्याख्यातमिति स्वयं धातुपाठं पठित्वा व्याचख्यौ भाष्यकारः। **'ऋष ज्ञाने'** इति प्राचीनो धातुपाठः। 'ऋषी गतौ' इत्यर्वाचीनाः॥

सर्वगत्वात् **तत् तिष्ठदेव धावतोऽन्यानत्येति**। नन्वस्तु तत्। अणोरणीयोऽपि रूपमस्ति ब्रह्मणः। मध्यमपरिमाणं चावतारेषु। तदपि धावतोऽत्येति। सर्वगत्वादेव। कथमणोरणीयः सर्वगतम्? कथं वा रामकृष्णादिरूपं सर्वगतम्? सेयमचिन्त्या शक्तिर्भगवतः। सर्वैश्वर्याच्चेदं सर्वं सुघटमित्यवैहि॥

**अपः** स्वेन कृतानि कर्माणि, स्वेन कारितानि जीवानां च कर्माणि **तस्मिन् मातरिश्वा दधाति**। तदेतदाह– **स्वमनोवाक्कायकर्माणी**त्यादि। आपयन्ति पुण्यपापाख्यं फलमित्यापः कर्माणि। 'आपीयन्त इत्यापः कर्माणि' इति च तत्वप्रदीपे [२.१.१६]। कस्मान्मातरिश्वा। मातरि आकाशे श्वयति गच्छतीति, मातरि वेदवाचि सदा सञ्चरतीति च **मातरिश्वा**। 'वाचो मा मातरः स्मृताः' इति हि स्मरन्ति। जगन्निर्मातरि सदा चरतीति च। अतः स एवाधिकृतः सर्वकर्मणां भगवति समर्पणे॥ * ॥

अत्र केचिद् रामानुजीया एवं मन्त्रार्थं वर्णयन्ति–'अतिक्षिप्रमेव चिन्ताप्रदेशाच्चिन्तितप्रदेशे कार्यानुगुणसन्निधानयोग्यतावत्त्वं मनसो जवीयस्त्वम् । यथा वैकुण्ठादिषु सत एव भगवतः प्रह्लादचिन्तासमकालं स्तम्भे स्फुरणम् । यद्वा एकाकारेण क्वचित् तिष्ठत एवाऽकारान्तरेणातिक्षिप्रमतिवेगगमनेनापि चिन्तितकार्यार्थसन्निधानयोग्यत्वमिह जवीयस्त्वम् । यथा ग्राहग्रस्तगजेन्द्ररक्षणादौ' इति । चरमचरणव्याख्याने च तत्पक्षीयाणामैककण्ठ्यम्–' तस्मिन् परमात्मनि स्थितः मातरिश्वा, तदालम्बबलेनैव अबुपलक्षितं सर्वं जगद् धारयति' इति । यद्यदिह भगवन्महिमोपहितं प्रमितं सर्वं तदनुमन्यामहे ॥ * ॥

तथाच मन्त्रार्थः–**अनेजत्** भयकम्परहितम्, **एकं** सर्वोत्तमम्, एतदेव करोतीति सर्वकारणं वा, **मनसो** वेगवत्तरम्, मनोमानिनाऽपि न ज्ञेयम्, अत एव यदेतदिन्द्रियमानिन इन्द्रादि**देवा** अपि **न** मनसाऽऽ**प्नुवन्**, यच्च सर्वस्मात् पूर्वतनम्, यच्च सर्व**मर्षत्** सर्वज्ञम्, **तत् धावतोऽन्यान्** सर्वानपि स्वयं **तिष्ठ**देवा**त्ये**ति सर्वगतत्वात् सर्वैश्वर्याच्च । **तस्मिन्** परतत्वे नारायणे **मातरिश्वा** मुख्यप्राणः **अपः** सर्वाणि स्वकृतानि कर्माणि स्वेन कारितानि सर्वजीवानां च कर्माण्यर्पयतीति ॥ ४ ॥

**तदे॑जति॒ तन्नैज॑ति॒[१] तद् दू॒रे तद्व॑न्ति॒के ।**
**तद॒न्तर॑स्य॒ सर्व॑स्य॒ तदु॒ सर्व॑स्यास्य बाह्य॒तः ॥ ५ ॥**

**(भा.)** तदेजति तत एजत्यन्यत् । तत् स्वयं नेजति ।
'ततो बिभेति सर्वोऽपि न बिभेति हरिः स्वयम् ।
'सर्वगत्वात् स दूरे च बाह्येऽन्तश्च समीपगः'
इति तत्वसंहितायाम् ॥ * ॥

**(टी.)** **तदेजति** इति वाक्यमनूद्य **तत एजत्यन्यत्** इति व्याख्याति । 'सप्तसु प्रथमा' इति सूत्रात्[२] । तत् स्वयमेजतीत्यर्थाङ्गीकारे अनेजदिति पूर्वोक्त-

१. 'तदु नेजति' इति केचित् । 'तन्नैजति' इत्यपरे ।
२. इदं वाक्यं क. पुस्तके न पठ्यते ।

विरोधः । स्वयमनेजदपि कारणान्तरवशादेजतीति शङ्का[निरासाय तद]र्थं[1] **'ततो विभेति सर्वोऽपि–'** इत्यादिना[2] तत्वसंहितावचनेन दृढयति ॥ ५ ॥

**(भा.चं.)** पञ्चमे मन्त्रे द्वितीयपाद एकाक्षरन्यूनश्चतुर्थ एकाक्षराधिकः । संहत्य केवलानुष्टुप् । 'तदु+अन्तिके' इति विश्लेष एकाक्षराधिका भुरिगनुष्टुप् । तथाहि साम्प्रदायिकाः–'याजुषी निचृदर्धा भुरिगनुष्टुप् छन्दः । द्वात्रिंशद-क्षराणि । पदानि चतुर्दश । पुनरुक्तानि पञ्च । एकोनविंशतिराहत्य' इति । **सप्तसु प्रथमेति सूत्रात्** । तदिति पञ्चम्यर्थेऽव्ययमिति च शक्यं व्याख्यातुम् । तथाऽपि पूर्वोत्तरवचनयोः कार्यकारणभावनिदर्शनार्थमेव बहुलस्तादृशः प्रयोगः । न पुरुषपरतया । तस्माद्धेतोरिदमित्थमिति । नतु तस्मात् पुरुषा-दिति । तेनानव्ययतामेवाभ्युपेत्य पञ्चम्यन्ततामाह । श्रीजयतीर्थास्तु 'तदिति पञ्चम्यर्थेऽव्ययम्' इत्येव व्याचक्रुः । **अनेजदिति पूर्वोक्तविरोधः । तन्नेजति** इत्युत्तरवचनविरोधश्च । ननु भोः, एवं व्याख्यास्यामः– तद् रामकृष्णादिरूपेषु एजति चलति । स्वयं तु सर्वगतत्वान्न चलतीति । तत् को विरोधः? किं न शृणोषि 'अनेजन्निर्भयत्वात्तत्' इति ब्रह्माण्डवचनम्? तद्विरुद्धं कथं व्याचिख्यासिस? नच सर्वगतं ब्रह्म न चलति । नापि चैजनं नाम चलन-मात्रम् । किन्तु भयपूर्वं चलनम् । तदेतत् सर्वं मनसि निधायोक्तम्– **अनेजदिति पूर्वोक्तविरोध** इति । 'भीषाऽस्माद् वातः पवते', 'भयाद-स्याग्निस्तपति' इत्यादिश्रुतिसंवादश्चास्मिन्नर्थे । गुणविशेषानुसन्धानसुकरता च । **कारणान्तरवशादेजतीति** । एतेन मायावादभाष्यं कटाक्षयतीव । तथाहि तद्भाष्यम्– 'तदेजति चलति । तदेव च नेजति स्वतो नैव चलति । स्वतोऽचलमेव सत् चलतीवेत्यर्थः' इति । यतः सर्वं बिभेति स कथमन्यतो बिभीयादिति **दृढयति** । दृढ धारणे । स्थिरीकरणे चेति पठनीयम् । अर्वाचीना दृहधातोरेव निष्पादयन्ति निपातनेन 'दृढः स्थूलबलयोः' [अष्टा.सू.७.२.२०]

---

१. **'शङ्कार्थं'** इति सर्वत्र कोशेषु ।

२. **'ततो बिभेतीत्यादिना'** ख.

इति। तदा तु 'द्रढयति' इति रूपम्। श्रुतिपाठमनुकुर्वन् स्वयमपि भाष्य-कारः– **'नेजति'** इत्याह। नैजतीत्यर्थः। तथाहि कात्यायनः– 'एजत्योजोरेकेषाम्' [४.५७] इति वाजसनेयिनां प्रातिशाख्ये। अवर्णात् परयोरेजत्योजयोः अकारस्य परसवर्णः स्यादेकेषां काण्वानां मते। यथा 'तन्नेजति'। न माध्यन्दिनानां मते। तेषां 'तन्नैजति' इत्येव श्रुतिपाठः। अत्र यत् कश्चित् प्रळलाप– 'तत् प्रपञ्चः एजति बिभेति। तद् ब्रह्म नेजति न बिभेति इति माध्वं व्याख्यानं न युक्तम्। तत्पदाभ्यामेकस्यैव ग्रहणस्य स्वरसत्वात्' इति। ननु भोः क एवं व्याचख्यौ? न मध्वः। नापि माध्वाः। 'तत एजत्यन्यत्। तत् स्वयं नेजति' इति तत्पदाभ्यां ब्रह्मण एव ग्रहणात् स्फुटमनुक्तोपालम्भोऽ-यम्। उक्तार्थग्रहणेऽप्यकुशलः स्वयं निगृहीतः प्रमाणप्रमितमपि चिखण्ड-यिषतीत्यहो चापलमबोधविजृम्भणस्य। वस्तुतस्तु स्वसमर्थने परनिराकरणे वा नास्माभिः प्रयतितव्यम्। प्रमाणवचनैरेव भाष्ये व्याख्याततत्वात्। यः प्रमाणावगतोऽर्थः स ग्राह्यः, यस्तद्विरुद्धः स न ग्राह्य इति स्फुटं वि-वेकिनाम्। **तद् दूरे**। कुतः? यतः **सर्वस्यास्य बाह्यतः**। सर्वस्माद् बहिरप्यव-तिष्ठते। **तदेव अन्तिके** च। कुतः? यतः **तदन्तरस्य सर्वस्य**। तदुभयमपि कुतः? **सर्वगत्वात्**। तदाह प्रमाणवचनम्– **दूरे च बाह्ये** चेति। **अन्तश्च समीप-गश्चे**ति। एतेन पूर्वोत्तरार्द्धे हेतुहेतुमद्भावेन व्याचष्टे। 'दूराद् दूरतरं यत्तु तदेवान्तिकमन्तिकात्' इति च भगवत्पादवचनम्॥ ※॥

रामानुजीया व्याचक्षते–'दैवप्रकृतीनामन्तिके। असुरप्रकृतीनां दूरे' इत्यादि। एतदपि ग्राह्यमेव। निदर्शयन्ति च विष्णुधर्मवचनम्–'पराङ्मुखानां गोविन्दे विषयासक्तचेतसाम्। तेषां तत् परमं ब्रह्म दूराद् दूरतरे स्थितम्। तन्मयत्वेन गोविन्दे ये नरा न्यस्तचेतसः। विषयत्यागिनस्तेषां विज्ञेयं च तदन्तिके' [९९.१३–१४] इति॥ ※॥

तथाच मन्त्रार्थः– तत् तस्मात् तन्नियतिभयात् अन्यत् **सर्वमेजति** कम्पते। **तत् तु स्वयं नेजति** नान्यस्मात् कस्माच्चिदपि बिभेति। विरोधाभासोऽयम्।

इदानीं विरुद्धधर्मा अपि तत्राविरुद्धा इत्याह– **तद् दूरे, तदेवान्तिके**। **तदन्त-र्याम्यस्य सर्वस्य** जगतः । **तदेव सर्वस्यास्य** बहिरपि । ज्ञानिनामन्तरन्तिके, हृदयगुहायामेव भासते । अज्ञानिनां बहिर्दूरे च । तस्मान्न भासते ॥ ५ ॥

यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति[१] ।
सर्वभूतेषु चाऽत्मानं ततो न वि जुगुप्सते ॥ ६ ॥

**(भा.) 'सर्वगं परमात्मानं सर्वं च परमात्मनि ।**
**'यः पश्येत् स भयाभावान्नाऽत्मानं गोप्तुमिच्छति'**
**इति सौकरायणश्रुतिः ॥ * ॥**

**(टी.) 'यस्तु–'** इत्यादिमन्त्रार्थं **'सर्वगम्–'** इत्यादिकया सौकरायणश्रुत्या व्यक्तं वक्ति । परमात्मा सर्वभूतान्यन्तर्बहिश्च व्याप्य स्थित्वा तानि बिभर्ति । न पुनस्तान्यमुं बिभ्रति ॥ ६ ॥

**(भा.चं.)** षष्ठे सप्तमे च 'भूतानि+आत्मन्येव' इति, 'भूतानि+आत्मैव' इति च पादौ विश्लिष्य केवलाऽनुष्टुप्। तथाहि प्राचीनम्– 'य इत्यादि मन्त्रस्य, यस्मिन्नित्यादिमन्त्रस्य च निचृदर्धाऽनुष्टुप् छन्दः । एकत्रिंशदक्षराणि । चतुर्दश पदानि' इति । यद्यपि सर्वत्रोपनिषत्पाठः 'आत्मन्येवानुपश्यति' इति। परन्तु काण्वसंहितायाम् 'आत्मन्नेवानुपश्यति' इत्यधुनातनाः पठन्ति । वस्तुतस्तु–'आत्मन्येवानुपश्यति' इत्येव साधुः काण्वपाठः । 'आत्मन्नेवा-नुपश्यति' इति माध्यन्दिनानां पाठः । सर्वाणि भूतानि परमात्मन्याश्रितानि; परमात्मा च तेष्वाश्रित इति मा भूदित्याह– **परमात्मे**त्यादि । तथाहि श्रुतिः–

---

१. यद्यपि **'आत्मन्नेवानुपश्यति'** इति काण्वसंहितापाठं वैदिकाः पठन्ति । अथापि छन्दोगोपनिषद्भाष्ये **'आत्मन्येवानुपश्यति'** इति प्रतीकग्रहणात् स एव भाष्यकृत्सम्मतः पाठ इति गम्यते । वैदिक-सम्प्रदायागतः पाठ एव भ्रममूलः । तद् यथा **'त्वामेव'** इति भाष्यसम्मते पाठे स्थितेऽपि **'त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि'** इति वैदिकाः पठन्ति । विनाऽर्थं शब्दमात्रपारायणपरायणा वैदिका अपि भ्रमन्ति ।

'अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः' इति। तथाच **सर्वभूतेषु** पूर्वमन्त्रोक्तदिशाऽन्तर्बहिश्च गतं **परमात्मानं यः पश्यति**। कथं पश्यति? **अनुपश्यति**। यथा वस्तु तथा दर्शनमनुदर्शनं नाम। शास्त्रानुगुणं च पश्यति। अन्वहं च पश्यति। भगवदनुग्रहेण च पश्यति। **सर्वाणि भूतानि आत्मन्यनुगतानि पश्यति। आत्मानं च भूतेष्वनुगृह्णानं पश्यति। स भयाभावान्नाऽत्मानं गोप्तुमिच्छति**। ब्रह्मैकमेवानेजत्। अन्यत् सर्वं भयग्रस्तमिति पूर्वस्मिन् मन्त्र उक्तम्। इदानीं भयातीतस्य ज्ञानेन स्वस्यापि भयात्ययो भवतीत्याह– **न गोप्तुमिच्छती**ति। गोप्तुमिच्छा हि मूलतो जुगुप्सा नाम। द्वेधा हि जुगुप्सा भवति। यदनर्घं तदपि गोप्तुमिच्छन्ति। यदसह्यं तदपि। तेनासह्यभावो जुगुप्सेति पाश्चात्योऽर्थः। गोपनेच्छा मौलिकोऽर्थः। अथापि केचिद् वैयाकरणाः स्वार्थेऽयं सन्निति मन्वाना गोपनमेव जुगुप्सामाहुः। तथाच गुप गोपने। 'गुप्-तिज्-किद्भ्यः सन्' [३.१.५]। जुगुप्सते पापात् ॥ ❋ ॥

अन्ये पुनर्व्याकरणमुग्धाः गुप्-तिज्-किद्भ्यः 'निन्दाक्षमाव्याधिप्रतीकारेषु सन्निष्यते'[३.१.५] इति वार्तिकमनुरुन्धानाः 'न वि जुगुप्सते न निन्दां करोति' इति व्याचक्षते। स्फुटं सौकरायणश्रुतिविरोधस्तेषाम्। 'सर्वाणि भूतानि आत्मन्येवानुपश्यति आत्मव्यतिरिक्तानि न पश्यतीत्यर्थः' इति शाङ्करं व्याख्यानम्। अद्भुतमिदमुदक्षरं विवरणम्। ननु तर्हि 'भूतले घटं पश्यति' इति वाक्यं शृण्वतः 'भूतलव्यतिरिक्तं घटं न पश्यति' इत्यपि बोधः स्यादित्यहो व्याकरणपाटवम् ॥ ❋ ॥

तथाच मन्त्रार्थः– **यस्तु** पुरुषः **सर्वाणि भूतानि** जीवजातानि, पदार्थजातानि वा, पर**मात्मन्येवानु**गतानि आश्रित्य स्थितानि **पश्यति**। **सर्वभूतेषु च** पर**मात्मानम**न्तर्यामिणं तदनुग्रहेणैव पश्यति, स **ततः** रक्षकस्य भगवतः सर्वत्र दर्शनेन भयाभावादेव नाऽत्मानं **वि जुगुप्सते** न विशिष्य गोप्तुमिच्छतीति। **'यस्तु'** इति तुना एवंविदः पुरुषस्य दौर्लभ्यं नाम विशेषमाह ॥ ६ ॥

यस्मि॒न्त्सर्वा॑णि भू॒ता॒न्या॒त्मैवाभू॑द् विजान॒तः ।
तत्र॒ को मोह॒ः कः शोक॑ एक॒त्वम॑नु॒पश्य॑तः ॥ ७ ॥

**(भा.)** यस्मिन् परमात्मनि सर्वभूतानि स परमात्मैव तत्र सर्वभूतेष्वभूत् । एवं सर्वभूतेष्वेकत्वेन परमात्मानं विजानतः को मोहः?

'यस्मिन् सर्वाणि भूतानि स आत्मा सर्वभूतगः ।
'एवं सर्वत्र यो विष्णुं पश्येत् तस्य विजानतः ।
'को मोहः कोऽथवा शोकः स विष्णुं पर्यगादतः'
इति पिप्पलादशाखायाम् ॥

पूर्वोक्तानुवादेन शोकमोहाभावो विजानतश्चात्रोच्यते । अभ्यासश्च सर्वगतत्वस्य तात्पर्यद्योतनार्थः ॥ ❊ ॥

**(टी.)** अन्योन्यभिन्नेषु भूतेषु स्थितानामपि पररूपाणां न कश्चिद् भेद इत्याह– **यस्मिन्निति** । **यस्मिन् परमात्मनि** प्रतिष्ठितान्युक्तानि **स परमात्मा** एक **एव तत्राभूत् सर्वभूतेषु** स्थितोऽभूत् । नचैतदज्ञमतम् । **विजानतः** इति विशेषणात्[१] । **तत्र** भूतबाह्यान्तरेषु भगवद्रूपेषु तस्य रूपिण **एकत्वं** विशेषेण ज्ञात्वा यथावत् **पश्यतः** कश्चन मोहः शोको वा न भवेत् ॥

ननु नायं जीवेशभेदः साधीयान् । अभेदस्याप्यत्र प्रतीयमानत्वात् । तथाहि **यस्मिन् सर्वाणि भूतानि** एकीभावेनावस्थितानि **स** परमात्मा एक **एव** तत्वतोऽ**भूत्** । ततोऽन्यन्मिथ्यैव । **तत्र** परमात्मनि तेषा**मेकत्वमनुपश्यतः** शोकमोहप्रहाणं स्यादिति । एतत्परिहारार्थं **'यस्मिन्–'** इत्यादिना शाखान्तरवाक्येनाप्येतन्मन्त्रार्थं सुव्यक्तं वक्ति । **स विष्णुं पर्यगादत**[२] इत्यनेन वाक्येन **स पर्यगात्** इति मन्त्रावयवं व्याचख्यौ । **सः** उपासकः स्वशक्त्यनुसारेण विष्णुं पर्यपश्यदिति यतः **अतः**[३] **तं पर्यगात्** । तत्परिवारतया तल्लोकं जगामेत्यर्थः ॥

---

१. 'विशेषणात् । भूत–' क.
२. 'पर्यगाद्यतः' क. 'पर्यगादित्यनेन' ख.ग.
३. 'अतः स पर्य–' क

सर्वगतत्वस्य पुनरुक्तेर्विशेषकृत्यमाह– **पूर्वोक्तेति**। **'यस्तु–'** इत्यादिपूर्ववाक्योक्तं सर्वगतत्वं **'यस्मिन्–'** इत्याद्युत्तरवाक्येनानूद्यते,[१] न पुनर्विधीयते। किमर्थमनुवाद इति चेत्, ज्ञानस्य[२] फलविशेषविधानार्थम्। पूर्वत्र[३] तु जुगुप्सा न स्यादिति सामान्यत एव हि तत्फलमुक्तम्। उत्तरत्र पुनः शोकादिराहित्यं विशेष[४] उच्यते। अथाप्यसकृदुक्तिस्तात्पर्यार्था युक्तेत्याह– **अभ्यासश्चेति**। अस्ति हि विष्णोः सर्वगतत्वादौ तात्पर्याधिक्यमिति भावः ॥ ७ ॥

**(भा.चं.)** अत्र मन्त्रे उत्तरार्द्धे पठ्यमानं तत्रेति पदं पूर्ववाक्येऽप्यन्वेति। यत्तदोर्नित्यसम्बन्धात् स इति वर्तते। एवमिति चाध्याहारः। **यस्मिन् सर्वाणि भूतानि** स्थितानीति पूर्वमन्त्र उक्तानि, शास्त्रेषूक्तानि, विद्वद्भिरुक्तानि वा, स **आत्मैव तत्राभूदित्येवं विजानतः को मोहः** विवेकवैधुर्यम्? मुह वैचित्त्ये। वैचित्त्यमविवेकः। **कश्च शोकः**? ननु नात्रैकत्वदर्शनम्? एवकारार्थोऽयमित्याह– **'स परमात्मा एक एव'** इति। स्फुटमेतदुत्तरवाक्ये– **'एकत्वमनुपश्यतः'** इति। अथापि **विजानतोऽनुपश्यत** इति पुनरुक्तमिव। नेत्याह– **एकत्वं विशेषेण ज्ञात्वा यथावत् पश्यत** इति। प्रथमं **स विष्णुं पर्यगात्** पर्यपश्यत्। ततश्च तं **पर्यगात्** परिवारतया अगात् तल्लोकमिति रमणीयं व्याख्यानम्। शोकादिराहित्यं फले विशेष उच्यते। विजानत इति चाधिकारे। **सर्वगतत्वादाविति**। आदिना निर्भयत्वादिः। योयो यत्रयत्राभ्यस्यते सस सर्वोऽपि ॥ * ॥

'सर्वाणि भूतानि आत्मैवाभूदिति बाधार्थं सामानाधिकरण्यम्। आत्मव्यतिरिक्तं किमपि नास्तीत्यर्थः' इति मायावादिनः। 'जगतः ब्रह्मपरिणामत्वाज्जगद्ब्रह्मणोरेकद्रव्यत्वम्, मृदेव घट इतिवत्' इति परिणामवादिनः। 'देवोऽहम्, मनुष्योऽहमित्यादिवत् शरीरात्मभावसम्बन्धेनैव सामानाधिकरण्यनिर्वाहः' इति रामानुजीयाः। सर्वमिदं प्रज्ञावादमूलम्। सति हि सामानाधिकरण्ये तदर्थचिन्ता। नात्र सामानाधिकरण्यमिति श्रुतिरेवान्यथा

१. 'वाक्येऽनूद्यते' क.
२. 'ज्ञातव्यफल-' क.
३. 'पूर्वत्र जुगुप्सा–' ख.
४. 'विशेषत उच्यते' क.ख

व्याचख्यौ–‘**स आत्मा सर्वभूतगः**’ इति। सामानाधिकरण्येऽपि ‘राजा राष्ट्रम्’ इतिवदधीनत्वविवक्षायां न नो हानिः ॥ ❋ ॥

अयं मन्त्रार्थः– ‘सर्वाणि भूतान्यात्मन्येव’ इति पूर्वमन्त्रे, **यस्मिन्** परमात्मनि **सर्वाणि भूतानि** अनुगतान्युक्तानि; स **आत्मैव** परमात्मैव **तत्र** सर्वभूतेषु **अभूत्**। एवं **तत्र** सर्वभूतगतेषु भगवद्रूपेषु तस्य रूपिणः **एकत्वं विजानतः**, विशेषेण ज्ञात्वा च **अनुपश्यतः** स्वरूपानुगुणं शास्त्रानुगुणं च यथावत् पश्यतः **को मोहः**? कीदृशं विपरीतज्ञानम्? कीदृशी वा ममता? तन्मूलः **को** वा **शोकः**? न कोऽपीति ॥ ७ ॥

**स पर्यगाच्छुक्रमकायमव्रण-**
**मस्नाविरꣳ शुद्धमपापविद्धम्।**
**कविर्म्मनीषी परिभूः स्वयम्भू-**
**र्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः ॥ ८ ॥**

**(भा.)** ‘शुक्रं तच्छोकराहित्यादव्रणं नित्यपूर्ण्णतः।
‘पावनत्वात् सदा शुद्धमकायं लिङ्गवर्ज्जनात् ॥

‘स्थूलदेहस्य राहित्यादस्नाविरमुदाहृतम्।
‘एवम्भूतोऽपि सार्वज्ञ्यात् कविरित्येव शब्द्यते ॥

‘ब्रह्मादिसर्वमनसां प्रकृत्या मनसोऽपि च।
‘ईशितृत्वान्मनीषी स परिभूः सर्वतो वरः ॥

‘सदाऽनन्याश्रयत्वाच्च स्वयम्भूः परिकीर्तितः।
‘स सत्यं जगदेतादृङ् नित्यमेव प्रवाहतः ॥

‘अनाद्यनन्तकालेषु प्रवाहैकप्रकारकम्।
‘नियमेनैव ससृजे भगवान् पुरुषोत्तमः ॥

'सज्ज्ञानानन्दशीर्षोऽसौ सज्ज्ञानानन्दबाहुकः ।
'सज्ज्ञानानन्ददेहश्च सज्ज्ञानानन्दपादवान् ॥

'एवम्भूतो महाविष्णुर्यथार्त्थं जगदीदृशम् ।
'अनाद्यनन्तकालीनं ससर्ज्जाऽत्मेच्छया प्रभुः'

इति वाराहे ॥ * ॥

**(टी.)** यानि पुनः शुक्रत्वादिविशेषणानि विष्णोरुक्तानि तानि तु **'शुक्रं तत्–'** इत्यादिना वाराहवचनेन व्याख्याति। कायः सूक्ष्मं लिङ्गशरीरम्। स्नाविरं स्थूलं भौतिकशरीरम्। **'आत्मैवाभूत्'** इति वचनात् तद्व्यतिरिक्तं मिथ्येत्याशङ्क्य व्यक्तं परिहरति– **कविरिति**। **एवम्भूत** इत्यदिना तन्मन्त्रार्थमाह। एवं स्थूलसूक्ष्मदेहविहीनोऽपि[१] स्वतः **सार्वज्ञ्यात् कविः**। कव ग्रहण इति धातोः। अन्यमनीषाणामीशत्वात् **मनीषी**। 'ई ईशने' इति धातोः। अत्र शकारस्य[२] षत्वविधानात् अन्यमनसामीशितृत्वाद्वा **मनीषीत्युच्यते**। **परिभूः** व्याप्तः। सर्वविजयी वा। कारणान्तरं विना स्वयमेव सर्वदा भवतीति **स्वयम्भूः**। **एतादृक्** वर्तमानजगत्सदृशम्। एवं च नीचोच्चवस्त्वात्मकं चिदचिद्रूपं चेत्युक्तं भवति। एवम्भूतस्य जगद्विशेषस्य परेणोत्पत्तिनाशवत्त्वात् **प्रवाहतो नित्यमेव** इत्युक्तिः। स च प्रवाह एकप्रकारः। [३]पराद्यन्तयोरुत्पत्तिनाशनियमात्। कल्पादिक्लृप्तिनियमाच्च । नच तन्नित्यत्वमनादित्वमात्रादनन्तत्वमात्राद्वा विवक्षितम्। किन्तूभयतश्च भवति। **शाश्वतीभ्यः समाभ्यः** इत्यस्य **अनाद्यनन्तकालेषु** इति विवरणात्। नच तेषु कालेषु[४] पदार्थानां मिथ्यासृष्टिः शङ्क्या। याथातथ्यतोऽर्थविधानस्य[५] **नियमेन** इत्यवधारणात्॥

अकायमिति करणाभावोक्तेः[६] सत्यसृष्ट्याद्यसम्भवस्तस्येत्यत आह– **सज्ज्ञानेति**। अप्राकृतदेहस्यापि सज्ज्ञानानन्दात्मकदेहेन्द्रियवत्त्वात् तत्सम्भवः।

---

१. '–देहहीनोऽपि' क.ख. २. 'शिकारस्य' क. ३. 'पराद्यन्तयोरेवोत्पत्ति–' ख.ग.
४. 'कालेषु मिथ्या–' क. ५. '–र्थं विदधानस्य' क. ६. 'करणाभावे सत्य-' क.

तदेतन्निगमयति– **एवम्भूत** इति । उक्तात्यन्तविलक्षणदेहादिमान् **एवम्भूत** इत्युक्तः । **महाविष्णुः** परं ब्रह्म । एवं सत्यजगत्कारणत्वं ब्रह्मणो निर्णीतम् । तत् परिणामेनेति माऽतिशङ्कि । **आत्मेच्छया** इति विशेषणात् । नहि सेच्छस्य कुलालादेः परिणमनं दृष्टम् । अतो निमित्तकारणमेव ब्रह्म नतूपादानमिति सिद्धम् । इदमत्राकूतम्– व्याप्तिधृतिशुक्रत्वादिभिः सह सत्यकर्मत्वं सच्चिदानन्दरूपे विष्णावुपसंहर्तव्यं महामुमुक्षुभिरिति ॥ ८ ॥

**(भा.चं.)** विचित्रा छन्दोविच्छित्तिरष्टमे मन्त्रे । प्रथमस्तावद् द्वादशाक्षर इति जागतः पादः । द्वितीयतृतीयावेकादशाक्षराविति त्रैष्टुभौ । चरमः षोळशाक्षरः । अथवा नवाक्षरश्चतुर्थो व्यदधादित्यन्तो बार्हतः । पञ्चमः 'समाभियः' इति विश्लेषेण पुनरानुष्टुभ इति भगवानिव पञ्चपादो मन्त्रः । पञ्चाशदक्षरा स्वराड् जगती वा । प्राचीनास्त्वेवमाहुः–'प्रथमपादे याजुषी शुद्धा जगतीच्छन्दः । द्वादशाक्षराणि । द्वितीयपादे साम्नी निचृद् गायत्री –एकादशाक्षराणि । तृतीयपादेऽपि साम्नी निचृद् गायत्री– एकादशाक्षराणि । चतुर्थपादे प्राजापत्या भुरिग् गायत्री नवाक्षराणि । पञ्चमपादे याजुषी भुरिग् गायत्री सप्ताक्षराणि । पञ्चाशदक्षराणि । एकोनविंशतिः पदानि' इति । **'शुक्रमकायमव्रणम्'** इति उपलब्धः श्रुतिपाठः । **'अब्रणम्'** इत्याचार्योदाहृतप्रमाणवचने प्राचीनपाठः । श्रुतिपाठोऽपि तथैव स्यादपि । शुक्रमित्यादि पुल्लिङ्गं वा स्यान्नपुंसकं वा । यमेतं **शुक्रं स** साधकः **पर्यगात्** सोऽयं **कविर्मनीषी परिभूः स्वयम्भूः** यथार्थतोऽर्थान् विदध इति । तदेतच्छुक्रं पर्यगादिति वा । ननु नपुंसकमिति श्रेयान् पक्षः । 'शुक्रं तच्छोकराहित्यात्' इति प्रमाणसंवादोऽपि तेन स्यादिति । न भोः । लिङ्गमशिष्यम् । प्रमाणवचनं निर्वचनमेव ग्राहयति न लिङ्गम् । उभयथाऽप्यत्र शक्यं व्याख्यातुम् । अनेजदिति नपुंसकपदेनापि प्रस्तुतं ब्रह्म । 'आत्मैवाभूद् विजानतः' इति पुल्लिङ्गपदेनापि । अथापि स्त्रीपुंदोषविहीनत्वान्नपुंसकप्रयोगोऽपि भगवति साधुरिति सूचयितुं वाराहे

**'शुक्रं तत्'** इति निर्दिदेशेति सर्वं रमणीयम् । अत एवोत्तरत्र **'एवम्भूतो महाविष्णुः'** इति पुल्लिङ्गेनैवोपसमाजहार । शुचा रहितं **शुक्रम्** । शुचं रहति रहयति वा । 'रह त्यागे' । स्वभक्तानां शुचं राहयति च । यदत्र कश्चिदाहा-नधिगतनिरुक्तिगन्धः– 'शोकं रहतीति व्युत्पत्त्या शोकरहितमित्यर्थोऽयुक्तः, शुक्रहमिति रूपापत्तेः' इति । न श्रुतमनेन 'अक्षरसाम्यान्निर्ब्रूयात्' इति यास्कवचनम्, 'वर्णागमो वर्णविपर्ययश्च' इत्यादिवैयाकरणानां च वचनम् । किञ्च यास्कनिर्वचनं शिरसा पुरस्कुर्वन्नयं कथं पुराणोक्तं व्यासनिर्वचनं निराचिकीर्षति? ईदृशं बालिश्यं कथं वा क्षम्येत? सोऽयं पुराणद्वेषी दूरतो वर्जनीयः सज्जनैरित्यलम् । **कायः सूक्ष्मं लिङ्गशरीरम्** । यद्यपि काय इति स्थूलं च भवति शरीरम् । सूक्ष्मं च । कं विषयसुखमाययतीति । अथापि लिङ्ग-शरीरे मनसः स्थितिरिति तदेव मुख्यतः कायपदगदितमिति । ननु कै शब्द इति धातोः कायन्ति शब्दयन्त्यनेनेति कायः स्थूलं शरीरमुच्यते । उच्यतामन्यत्र । नात्र । यतः स्नाविरमिति स्थूलं शरीरं पृथगुक्तम् । स्नावभिश्श्रितं हि स्नाविरम् । ष्णायन्ति कायमिति स्नायवः । ष्णै वेष्टने । स्नावयन्ति प्रस्रावयन्ति इति स्नावानि सिराः । स्नायवो वा । ष्णु प्रस्रवणे । न ब्रणयतीत्यब्रणम् । ब्रण गात्रविचूर्णने । अचूर्णं पूर्णमित्येतत् । तदाह– **अब्रणं नित्यपूर्णतः** । तच्च गुणपूर्णत्वं न कादाचित्कम् । किन्तु नित्यम् । कालतोऽपि पूर्णमित्येतत् । एवं देशतः कालतो गुणतश्च शक्तितश्चाऽनन्त्यमुक्तम् ॥

यद्यपि शुक्रः शुचिरित्यपि शक्यं व्याख्यातुम् । तथाऽपि **'शुद्धमपापविद्धम्'** इति पुनर्वचनान्न तथा व्याख्यायते । तथाच भगवान् शुक्रः शोकरहितः । अकाय-त्वादस्नाविरत्वाच्च । काये हि सति स्थूले सूक्ष्मे च शोकादयो भवन्ति । अब्रणत्वाच्च । अपूर्णं हि दुःखभाजनं भवति । 'दुःखप्राप्तिरपूर्णता' इति हि स्मरन्ति । शोकराहित्यादकायत्वाच्च स्वतः **शुद्धम्** । पावयति शोधयतीति पावकत्वाच्च **शुद्धम्** । पापपुण्यादिवेधविधुरत्वाच्च **शुद्धम्** । शुद्धत्वाच्च **अपापविद्धम्**॥

अर्वाचीनाः 'कव शब्दे' इति पठन्ति। कवति गृह्णाति सर्वमवगच्छतीति कविः। अन्ये कवधातुमेव न पठन्ति। तेषां मते कविरिति कुङ्धातुनिष्पन्नं पदम्– कवत इति कविः। कुङ् शब्दे। अकायोऽपि कविः। ज्ञानमयकाय इत्येव॥

नन्वन्येऽपि कवयो भवन्ति ब्रह्मादयः। सत्यं भवन्ति। किन्त्वनेन ते कवयो बभूवुः। सावधिकं च तेषां कवित्वम्। अयं तु स्वयं निरवधिकः कविरिति ज्ञापयति **मनीषी**ति। अतो मुख्यतः **स एव कविरिति शब्द्यते**। स एव चान्येषां सर्वेषां मनीषामयति नियमयतीति **मनीषी**। 'ई ईशने' इति प्राचीनानां धातुपाठः। अर्वाचीनास्तु केचिदीधातुमेव न पठन्ति विभ्रान्ताः। 'ई गतौ' इत्यन्ये। 'इ गतौ' इत्यपरे। मनसामीष्ट इति वा **मनीषी** वर्णव्यत्ययेन। ईश ऐश्वर्ये। ब्रह्मादीनाममुक्तिदशायां प्राकृतं मनोऽप्यस्ति। श्रियस्तु सदा स्वरूपभूतमेवेति **'प्रकृत्या मनसोऽपिच'** इति पृथगुक्तिः॥

**'सर्वतो वरः'** इति पदं द्वेधा व्याख्याति– **परिभूरि**त्यादिना। **परिभूः व्याप्तः** परितो भवतीति। व्याप्तिरब्रणपदेन गदितप्रायेति पुनरर्थान्तरमाह। **सर्वविजयी वा** परिभवति सर्वमिति, उपरि च भवति सर्वस्मादिति। **'नियमेनैव ससृजे भगवान् पुरुषोत्तमः' इति** वाराहवचनेऽ**वधारणात्**॥

**अप्राकृतदेहस्यापि**। प्रकृतदेहरहितस्यापीत्यर्थः। नह्यत्र अप्राकृतो देहो विधीयते। किन्तु प्राकृतो निषिध्यते। अन्यथा पुनरुक्तेः। **सज्ज्ञानानन्ददेहः** सज्ज्ञानानन्दमध्यदेहः। देहपदेन सन्देहग्रहणात्॥

भाष्ये वाराहवचने **'एवम्भूतो महाविष्णुः'** इति कथम्? विष्णुरिति पर्याप्तम्। पर्याप्तम्। अथाप्युच्यते महाविष्णुरिति। तेन किञ्चिज्ज्ञापयतीत्यवैहीत्याह – **महाविष्णुः परं ब्रह्म**। ब्रह्मेति विष्णुरिति चैकार्थम्। बृहि वृद्धाविति विष्लृ व्याप्ताविति च धातुपाठात्। 'परमं यो महद्ब्रह्म' इति स्मरणाच्च। ब्रह्मेति पर्याप्तम्। अथापि कथञ्चिद् वेदादावन्यत्रापि गतमिति स्पष्टत्वायोच्यते परं

ब्रह्मेति। विष्णुरिति पर्याप्तम्। अथापि शाक्ततन्त्रेषु कथञ्चिज्ज्वलेऽपि गतमिति स्पष्टत्वायोच्यते महाविष्णुरिति । य एव सर्वतो महान् स एव विष्णुरिति । यथेश्वर एव महेश्वरः । यथा पुरुष एव महापुरुषः । यथा गणपतिरेव महागणपतिः ॥

**महामुमुक्षुभिः** । मुमुक्षुषु महान्तः सुरादय उत्तमाधिकारिणः । चतुर्गुणेभ्यो यथाक्रममधिकगुणोपासकाः। तद्धावतोऽन्यानत्येतीति व्याप्तिः। तद् दूरे तद्वन्तिक इति च। परिभूरिति च। यस्तु सर्वाणि भूतानीति धृतिः। याथातथ्यतोऽर्थान् व्यदधादिति सत्यकर्मत्वम् ॥ ❊ ॥

'अत्र द्वितीयान्तं पदजातं ब्रह्मविषयम् । प्रथमान्तं ब्रह्मविद्विषयम् । विपर्ययेण वा योजनीयम्' इति रामानुजीयाः। सर्वस्य ब्रह्मविषयत्वे सम्भवति व्यर्थोऽयं प्रयासः। 'शुक्रमित्यादीनि पुल्लिङ्गत्वेन परिणेयानि। कविर्मनीषीत्यादिना पुल्लिङ्गत्वेनोपसंहारात्' इति मायावादभाष्यम् । शुक्रं पर्यगादिति द्वितीयान्तत्वेनैवोपपत्तौ किमर्थं व्यर्थं लिङ्गं विपरिणम्यत इति मायावादी प्रष्टव्यः ॥ ❊ ॥

तथाच मन्त्रार्थः– **सः** य एकत्वमन्वपश्यत् स साधकः परमात्मानं **पर्यगात्** व्यजानात्। तेन च परिज्ञानेन भगवन्तं **पर्यगात्** परिवारतया तमेव गच्छति। एष्यदपि निश्चितमतीततयोच्यते । ये गतास्ते गताः । ये न गतास्तेऽपि गमिष्यन्त्येवेति। कीदृशं परमात्मानम्? आह– **शुक्र**मित्यादि। शुचं रहतीति **शुक्रं** शोकरहितम्। **अकायं** लिङ्गदेहरहितम्। व्रणं चूर्णं न भवतीति **अव्रणं** अचूर्णमखण्डम्। स्नावभिश्चितं स्थूलशरीरं स्नाविरम्। तद्रहितत्वात् **अस्नाविरम्** । **शुद्धं** त्रैगुण्यवर्जितम् । अत एव च **अपापविद्धम्** । एतमेतादृशं परमात्मानं प्राप्य स्वयमपि शुक्रत्वादिकमापेति । एवं जीवप्राप्यान् धर्मान् द्वितीयान्तेनोल्लिख्याथ प्रथमान्तेनासाधारणधर्मानुपास्यानाह– **कविः** सर्वज्ञः। **मनीषी** सर्वमनसामीशिता। परितो भवतीति **परिभूः** सर्वगतः। सर्वान् परिभवतीति **परिभूः** सर्वविजयी। स्वयमेव भवतीति **स्वयम्भूः**रनन्याश्रयः। यश्च

**शाश्वतीभ्यः समाभ्यः** अनन्तकालावच्छेदेन सर्वपदार्थान् व्यदधात्, विदधाति विधास्यति च। कथम्? **याथातथ्यतः** यथा पूर्वं तथेदानीं, तथोपरिष्टादपि। यथार्थत्वेन च। यथा पूर्वं तथ्यं तथेदानीमपि तथ्यत्वेनैवेति। य एतादृशस्तं पर्यगादित्यन्वयः। यं पर्यगात् स एतादृश इति वा॥ ८॥

अन्धं तमः प्र विशन्ति येऽविद्यामुपासते।
ततो भूयइव ते तमो य उं विद्यायां रताः ॥ ९॥

अन्यदेवाहुर्विद्ययाऽन्यदाहुरविद्यया।
इति शुश्रुम धीराणां ये नस्तद् व्याचचक्षिरे[1] ॥ १०॥

विद्यां चाविद्यां च यस्तद् वेदोभयं सह।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥ ११॥

अन्धं तमः प्र विशन्ति येऽसम्भूतिमुपासते।
ततो भूयइव ते तमो य उ सम्भूत्यां रताः ॥ १२॥

अन्यदेवाहुः सम्भवादन्यदाहुरसम्भवात्।
इति शुश्रुम धीराणां येनस्तद् व्याचचक्षिरे[1] ॥ १३॥

सम्भूतिं च विनाशं च यस्तद् वेदोभयं सह।
विनाशेन मृत्युं तीर्त्वा सम्भूत्याऽमृतमश्नुते ॥१४॥

**(भा.)** ‘अन्यथोपासका ये तु तमोऽन्धं यान्त्यसंशयम्।
‘ततोऽधिकमिव व्यक्तं यान्ति तेषामनिन्दकाः॥

---

१. यद्यपि सर्वत्र प्रचलितः पाठः–‘विचचक्षिरे’ इति। तथैव च काण्वसंहितायामपि सम्प्रति पठन्ति। वस्तुतस्तु ‘विचचक्षिरे’ इति माध्यन्दिनानां पाठः। ‘व्याचचक्षिरे’ इति काण्वानाम्। बहुप्राचीनग्रन्थ-संवादात्। अत एवात्र टीकायामपि ‘व्याचचक्षिरे’ इत्येव प्रतीकमग्राहि। रामानुजीया अप्याहुः– ‘व्याचचक्षिरे’ इति स्थाने ‘विचचक्षिरे’ इति शब्दं माध्यन्दिनाः पठन्ति’ इति।

'तस्माद् यथास्वरूपं तु नारायणमनामयम् ।
'अयथार्त्थस्य निन्दां च ये विदुस्ते हि सज्जनाः ॥

'ते[ऽ]निन्दयाऽयथार्त्थस्य दुःखाज्ञानादिरूपिणः ।
'दुःखाज्ञानादिसन्तीर्ण्णाः सुखज्ञानादिरूपिणः ॥

'यथार्त्थस्य परिज्ञानात् सुखज्ञानादिरूपताम् ।
'यान्त्येव[1] सृष्टिकर्त्तृत्वं नाङ्गीकुर्वन्ति ये हरेः ॥

'तेऽपि यान्ति तमो घोरं तथा संहारकर्त्तृताम् ।
'नाङ्गीकुर्वन्ति तेऽप्येवं तस्मात् सर्वगुणात्मकम् ॥

'सर्वकर्त्तारमीशेशं सर्वसंहारकारकम् ।
'यो वेद संहृतिज्ञानाद् देहबन्धाद् विमुच्यते ।
'सुखज्ञानादिकर्त्तृत्वज्ञानात्[2] तद् व्यक्तिमाव्रजेत् ॥

'सर्वदोषविनिर्म्मुक्तं गुणरूपं जनार्द्दनम् ।
'जानीयान्न गुणानां च भागहानिं प्रकल्पयेत् ॥

'न मुक्तानामपि हरेः साम्यं विष्णोरभिन्नताम् ।
'नैव प्रचिन्तयेत् तस्मात् ब्रह्मादेः साम्यमेव वा ॥

'मानुषादिविरिञ्चान्तं तारतम्यं विमुक्तिगम् ।
'ततो विष्णोः परोत्कर्षं सम्यग् ज्ञात्वा विमुच्यते'

इति कौर्म्मे ॥ * ॥

**(टी.)** य इतोऽन्यथोपासकास्ते[3] **'अन्धन्तमः प्रविशन्ति'** इत्याह । पूर्वत्र ह्यन्यथोपासकत्वं **'आत्महनः'** इति किञ्चित्[4] सूचितमेव । अत्र तु

१. **'यान्त्येवम्'** इति प्रचलितः पाठः ।

२. **'–ज्ञानं तद्–'** इति प्राचीनादर्शे पठ्यते । तदा 'सुखज्ञानादिकर्त्तृत्वज्ञानं तद्व्यक्तिं सुखज्ञानाद्यभिव्यक्तिं प्रापयेत्' इति व्याख्येयम् । ३. **'ते ह्यन्धन्तमः'** क.ख. ४. **'कथञ्चित्'** क.

**'अविद्यामुपासते'** इति सुव्यक्तमुच्यते । तस्मान्न पुनरुक्तिः । **'अन्यथा–'** इत्यादि कौर्मवचनेन **'अन्धन्तमः–'** इत्यादिवाक्यानि व्याख्याति । अविद्याकल्पितं जगदित्युपासनमविद्योपासनम् । अथ तेषामविद्याकल्पितं हि जीवत्वम् । तत् सत्यमित्युपासनमप्यविद्योपासनमेव । ब्रह्मणो निर्गुणत्वाद्युपासनमपि तथैव । [१]एवमाद्यविद्योपासका नियमेन **अन्धन्तमः प्रविशन्ति** । अथ ये साक्षाद् **विद्यायामेव रताः** न पुनरविद्यानिन्दकास्ते **ततोऽपि भूय इव तमः** प्रविशन्ति । महातमःप्राप्तियोग्यानां तत्प्राप्तिवदेतेऽपि स्वयोग्यं किञ्चन तमः प्राप्नुवन्ति । स्वल्पं वा बहु वा अविद्यापरिहारोऽपि कर्तव्यः । तच्चाऽह– **तस्माद्यथेति** । **ते हि सज्जनाः** । अन्ये तु दुर्जनाः ॥ ९ ॥

विद्याभ्यासेनैवाविद्यानिन्दनफलमपि [२]कथञ्चित् सुलभं स्यादित्याशङ्क्याऽह– **अन्यदेवेति** । अनयोर्हि स्वकीयं[३] फलं नान्येन लभ्यम् । तच्च प्राज्ञा **आहुः** । तच्छ्रुत्वाऽन्ये [४]**व्याचचक्षिरे** । वयं तु **शुश्रुम** इति वचनात् ऐतिह्यप्रमाणसिद्धम्[५] ॥ १० ॥

**'विद्यां च–'** इत्यादिकं फलद्वयविशेषवादिवाक्यं व्याख्याति– **तेऽनिन्दयेति** । ते सज्जनाः अयथार्थज्ञानस्य[६] निन्दामकृत्वैवानादिकालतो [७]दुःखाज्ञानादिदोषसम्बद्धस्वरूपिणो बभूवुः । ततो[८] दुःखादितरणार्थमविद्याया[९] निन्दयाऽवश्यं भाव्यम् । तत्तरणानन्तरमेव च केवलसुखज्ञानादिगुणस्वरूपव्यक्तिमन्तस्ते भवेयुः । तद्व्यक्तिस्तु विद्याफलमित्याह– **यथार्थस्येति** । विद्याविद्ये उभे अपि सहैव वेदितव्ये । निर्दोषत्वेन च सदोषत्वेन च[१०] भेदः । [११]मृत्युर्मरणकारणत्वादज्ञानादिकम् । तद्राहित्यादमृतं स्वरूपानन्दादि ॥ ११ ॥

१. **'एवमविद्योपा–'** क. २. **'कथञ्चिल्लभ्यं स्या–'** क. ३. **'स्वस्वीयफलं'** ख.ग.

४. एतदनुसारेण **'ये नस्तद् व्याचचक्षिरे'** इत्येव श्रुतिपाठष्टीकाकृत्सम्मत इति स्फुटम् ।

५. **'–प्रमाणं सिद्धम्'** क. ६. **'अयथाज्ञानस्य'** ख.ग.

७. **'दुःखादिदोष–'** ख. ८. **'अतो–'** ख.

९. **'–मविद्यानिन्दया'** क.ख. १०. **'–त्वेन सदोपत्वेन च'** ख.ग.

११. **'मृत्युर्मरणादिकारण–'** ख.

अविद्योपास्त्यादौ विशेषवाचकं **'अन्धन्तमः–'** इत्युत्तरवाक्यम्। **'सृष्टिकर्तृत्वम्–'** इत्यादिना तद् विवृणोति। **असम्भूतिं** स्रष्टृत्वाभावं हरेः **य उपासते** क्रियादि[1] विशेषमनङ्गीकुर्वाणाः तेऽपि **तमः प्रविशन्ति। ये** चास्य **सम्भूत्यां** सृष्टिक्रियोपास्तावेव[2] **रताः** न पुनः संहारक्रियामुपासते तेऽप्युक्तन्यायेन **तमो यान्ति**॥ १२॥

सम्भवाद्युपास्तेस्तदभावोपस्तेश्चान्योन्य[3]विरुद्धफलमित्याह– **अन्यदेवेति**। सम्भवाद्युपासनात् **अन्यत्** विलक्षणम्, [असम्भवाद्युपासनाच्च अन्यत्][4] विलक्षणमेवानिष्टफलं[5] भवति। सर्वेष्टानिष्टनाशोत्पत्तिरूपत्वात्। अथवा सम्भवासम्भवौ सृष्टिसंहारौ। तदुपासनाभ्यां भिन्नमेवेष्टं फलद्वयं भवति॥ १३॥

तच्चानेनेदमिति विवेचयति– **सम्भूतिं चेति**। **'सर्वकर्तारम्–'** इत्यादिना तदभिप्रायं विवृणोति। मृतिकारणत्वात् **मृत्युः** देहबन्धः[6]। **अमृतं** सुखादिसम्पत्तिः। अपिच इह तावत् **'सम्भूतिं च विनाशं च'** इति जगतः सृष्टिसंहारावुदितौ। **'यस्मिन् सर्वाणि भूतानि'** इति स्थितिः। **'ईशावास्यम्'** इति नियमनम्। **'मनीषी'** इति निखिलमनोनियामकत्वोक्त्या ज्ञानमज्ञानं चार्थत उक्तम्। **'नान्यथेतोऽस्ति'** इति कर्मलेपोक्त्या बन्धः। **'अमृतमश्नुते'** इति मोक्षः। एवं जगतः [7]सृष्टिस्थितिसंहारनियमनज्ञानाज्ञानबन्धमोक्षाः परमपुरुषाद् विष्णोरुक्ताः। ते च तस्मिन्नुपसंहर्तव्या इत्याह– **तस्मात् सर्वगुणात्मकमिति**। तत्रतत्र[8] तदुक्तावप्यन्ते निगमनार्थत्वात् पुनस्तद्वचनम्। ये चात्र पुनः कायव्रणपापवेधादिदोषाणामभावा उक्तास्तेषामप्युपसंहारः कार्यः इत्याह– **सर्वदोषविनिर्मुक्तमिति**। मूलरूपवन्निर्दोषगुणात्मकत्वमवतारेष्वपि सममित्याह– **गुणरूपमिति**। ये पुनर्मनसो जवीयस्त्वादयस्तत्तद्गुणानामंशा उक्तास्तेषामपि

---

१. **'क्रियादिविशेषणमन–'** ख.ग. २. **'–पासन एव'** क.ख. ३. **'श्चात्यन्तान्योन्य–'** ख.ग.
४. सर्वत्रादर्शेषु इयान् भागः न पठ्यते। अर्थानुगुण्याय च आवरणान्तरुपक्षिप्तः।
५. **'इष्टफलं'** इति कोशेषु पठ्यते। अर्थौचित्यं चिन्त्यम्। ६. **'देहसम्बन्धः'** ख.
७. **'एवं सृष्टि–'** क. ८. **'यत्र तत्र'** क.

**हानिं न कल्पयेत्**। **'अमृतमश्नुते'** इत्युक्तस्य मुक्तजनस्य निर्दुःखानन्दादिरूपत्वात् भगवत्साम्यं तदैक्यं वा किं न स्यादित्याशङ्क्याऽह– **न मुक्तानामपीति**। असम्भाव्यत्वात् **नैव** इत्यवधारणम्। अत एव ब्रह्मरुद्रादेः परस्पर**साम्यमपि नैव चिन्तयेत्**। एवं चेत् केभ्यः क उत्तमाः क्व वा [1]तत्पर्यवसानमित्याकाङ्क्षायामाह–**मानुषादीति**। मानुषगन्धर्वादिषु विरिञ्चान्तेषु प्रायः शतगुणाधिक्येन **तारतम्यं** सुज्ञेयम्। तेभ्यो विष्णोः अत्यन्तानन्तगुणत्वेन परमोत्कर्षः सम्यग् ज्ञेयः। **'सम्भूत्याऽमृतमश्नुते'** इत्येतद् व्याख्याति– **सम्यग् ज्ञात्वा विमुच्यत** इति[2]। एवं चात्र सत्यजगत्स्रष्टृत्वात् सत्याख्यस्य[3] विष्णोर्विद्ययैव मोक्ष इति निर्धारितम्॥ १४॥

**(भा.चं.)** नवमे मन्त्रे 'ये+अविद्याम्' इति विश्लेषेण द्वितीयः पादोऽष्टाक्षरः। तृतीयो नवाक्षरस्तुरीयः सप्ताक्षर इति समाहत्यानुष्टुबेव। सम्प्रदायविदो वदन्ति– 'अन्धमित्यादि पूर्वमन्त्रस्य चतुष्पाद् याजुषी निचृदनुष्टुप्। एकत्रिंशदक्षराणि। चतुर्दश पदानि' इति। 'अविद्याऽसम्भूत्योश्च' [वाज. प्राति.४.६८] इति कात्यायनः। येशब्दात् परः अविद्या-असम्भूतिशब्दयोरकारः पूर्वरूपमेति। तद् यथा– 'येऽविद्यामुपासते' इति, 'येऽसम्भूतिमुपासते' इति च। अन्यथा नाभिनिधीयते। तद् यथा– 'ये अन्तरिक्षे ये दिवि' [का.सं.१४.६]। मन्त्रोऽयं मैत्रायणशाखायां पठ्यते [७.९] बृहदारण्यकेऽपि पठ्यते [६.४.१०]। व्याख्यातं चैतत् तत्र भाष्ये नारदीयवचनेन–'अन्यथोपासका येऽस्य ते यान्ति ह्यधरं तमः। ततः किञ्चिद्विशेषेण दुर्ज्ञानस्याविनिन्दकाः। सम्यगाचार्यवचनमविज्ञाय विरोधिनि। सत्त्वबुद्धिं यतः कुर्युरतस्तेऽधिकपापिनः। अप्राप्तत्यागिनः प्राप्तनिष्ठाहीनो हि दोषवान्' इति। अत्र पुनः **कौर्मवचनेन व्याख्याति** दार्ढ्यातिशयाय। **तत्** जीवस्याविद्याकल्पितत्वमत्र सत्यमित्युपासनमपि। अविद्यमानोपासनमेव ह्यविद्योपासनं नाम। **'यं अविद्यामुपासते'** अविद्यमानं विद्यमानमित्युपासते। **'य उ विद्यायां**

---

१. 'तात्पर्यमित्या–' ख.  २. 'सम्यग् ज्ञानाद् विमुच्यते' इति सर्वत्र कोशेषु।
३. 'सत्याख्यस्यैव' क. ख.

**रताः'**। विद्यायामेव रताः। ननु गुणोऽयम्? न भोः। मा स्म विभ्रमद् भवान्। सत्यमेतद् यत् ते विद्यमानमेव विद्यमानमित्युपासते। अथापि येऽविद्य-मानमेव विद्यमानमित्युपासते तान् तत्ववादपदवीतः परिभ्रष्टान् न करुणया बोधयन्ति इत्यहो महत्तरा तेषां निर्घृणता स्वमात्रनिर्भरता च। सोऽयं महान् दोषः, यदज्ञानेनाधोऽधः पततां सतामनुद्दिधीर्षा। भाष्ये **अयथार्थस्य निन्दां निन्द्यत्वं ये विदुः**। ननु जानीम एव निन्द्यत्वम्। ज्ञात्वा तूष्णीं वर्तामहे। निन्दनेन न किमपि फलमिति। अत आह– **स्वल्पं वा बहु वा**। स किल वञ्चकः, यस्त्वपथेन यान्तं पश्यन्नपि, हृष्यन्निव, न पन्थानं दर्शयति। अत एवाविद्यानिरासायाऽचार्यपुरुषा महान्तः करुणयाऽवतितीर्षन्ति। यद्यविद्या-निरासो भगवदुपासनाङ्गत्वेन कर्तव्यो नाभविष्यत् तर्हि महान्तः प्रायो ना-वातरिष्यन्। ननु **'भूयइव'** इति किमुच्यते? **'अधिकमिव'** इति च वाराहे। भूय एव वा स्यात्। अभूय एव वा स्यात्। किमिदमन्तराळे निपात्यते? आह– **महातमःप्राप्तियोग्यानां तत्प्राप्तिवदिति**। अयमर्थः–अविद्योपासका भूयस्तम इव एतेऽपि किञ्चित् तमः प्राप्नुवन्ति। अथच ते स्वयं तामसा अविद्यानिरासं द्विषन्तो भवन्ति, स्वयं चाविद्यायामेव प्रीतिमन्तो भवन्ति। ते विद्यामुपासीना अप्यन्ततस्तां त्यक्त्वा भूय एव तमो विशन्ति। अथ निरासोऽपि तर-तमभावेन भवति–अल्पनिन्दनेऽपि तत्र तात्पर्यविरहे किञ्चित् तमः। अनिन्दने ततो भूयः। एवमज्ञाननिरासभरव्यत्यासेन भूयोऽपि भवति। अभूयोऽपि भवति। तदेतदुक्तम्– **'भूयइव'** इति। **'अधिकमिव'** इति च। **व्यक्तं** निश्चयेन॥ * ॥

दशमे मन्त्रे 'विद्यया+अन्यदाहुः' इति प्रथमद्वितीययोः पादयोर्व्यूहेन स्फुटम-नुष्टुबेव। एकादशे 'विद्यां च अविद्यां च' इति संयुक्ताक्षरव्यूहेन प्रथमः सप्ताक्षर इति निचृदनुष्टुप्। सम्प्रदायज्ञा अविश्लेषेणैव छन्दोविचितिमाहुः–'अन्य-दित्यादिपूर्वमन्त्रस्य चतुष्पाद् याजुषी निचृदनुष्टुप्। एकत्रिꣳशदक्षराणि चतु-र्दश पदानि' इति, 'विद्यामित्यादिमन्त्रस्य चतुष्पाद् याजुषी विराडनुष्टुप्।

त्रिंशदक्षराणि। पञ्चदश पदानि' इति। 'विद्यां चाविद्यां च–' इत्ययं मन्त्रो मैत्रशाखायामपि[७.] पठ्यते। 'अन्यदेवाऽहुर्विद्याया अन्यदाहुरविद्यायाः' इति तलवकाराः पठन्ति! माध्यन्दिनाश्च। ब्रह्माद्या **आहुः**। सनत्कुमाराद्या **व्याचचक्षिरे** व्याख्यातवन्तः। स्वयं विचचक्षिरे, नश्च आचचक्षिरे इति वा। श्रुतं साक्षात्कृत्य व्याख्यातवन्त इत्येतत्। ननु कथं व्याचचक्षिर इति? शुश्रुमेति? परोक्षे हि लिड् भवति। सत्यम्। अथाप्यपरोक्षेऽपि कालमात्रेऽपि भवति। 'छन्दसि लुङ्लङ्लिटः' [अष्टा.सू.३.४.६] इति हि पाणिनिः। 'ब्रह्मविद्याया दुरवगाहत्वेनाशक्यनिःशेषग्रहणता लिडर्थः' इत्यपि व्याचक्षते। तेषां **धीराणां** प्राज्ञानां ब्रह्मादीनां मुखात् **शुश्रुम** ॥ ✻ ॥

भाष्ये **'ते[ऽ]निन्दया'** इत्यादि प्रमाणवचनस्यायमर्थः– **ते** सज्जनाः **अनिन्दया अयथार्थस्य** पूर्वं **दुःखाज्ञानादिरूपिणो** बभूवुः। ततश्च **ते अयथार्थस्य निन्दया दुःखाज्ञानादिसन्तीर्णाः** सन्तस्ततः **सुखज्ञानादिरूपिणो** भवन्तीति। एवं 'निन्दया, अनिन्दया' इति द्वेधाऽपि पदच्छेदमङ्गीकृत्य तदेतद् विवृणोति– **ते सज्जनाः**। ननु यदि ते सज्जनाः कथं दुःखाज्ञानादिरूपिणः। यदि दुःखाज्ञानादिरूपिणः, कथं ततः सन्तीर्णाः। कथन्तरां च सुखज्ञानादिरूपिणः? नहि स्वरूपस्य क्वचिद् विलयो वा व्यत्ययो वा शक्यसम्भवः। श्रूयताम्। **दुःखाज्ञानादिरूपिण** इत्येतद् **दुःखाज्ञानादिदोषसम्बद्धस्वरूपिण** इति व्याख्यायते। **सुखज्ञानादिरुपिण** इति च **केवलसुखज्ञानादिगुणस्वरूपव्यक्तिमन्त** इति। तेन न कश्चित् क्षुद्रोपद्रवः। ननु अयथार्थस्य निन्दया कथं सुखज्ञानादिरूपिणो भवेयुः। यथार्थपरिज्ञानस्य हि तत् फलम्। सत्यम्। तथैव व्याख्यायत इत्याह– **तद्व्यक्तिस्तु विद्याफलमित्याह**। तथाच पुराणवचनार्थः– **यथार्थस्य परिज्ञानादेव,** नायथार्थस्य निन्दामात्रात्, **सुखज्ञानादिरूपतां यान्ति**। **परिज्ञानात् सुखज्ञानादिरूपतां यान्त्येव** च। एवकारोऽयमेवमित्यर्थे च। तदा चायमुत्तरान्वयी। एवं पूर्वोक्तदिशैव सृष्टिकर्तृत्वादिकमप्यनुसन्धेयमिति। अथचार्थान्तरम्। **ते सज्जनाः** दुःखाज्ञानादिकं निरूपयति प्रापयतीति **दुःखा-**

**ज्ञानादिरूपिणोऽयथार्थज्ञानस्य निन्दया दुःखाज्ञानादिसन्तीर्णाः** सन्तः, सुख-ज्ञानादिरूपस्य **यथार्थस्य परिज्ञानात् सुखज्ञानादिरूपतां यान्तीति** ॥ * ॥

द्वादशेऽपि मन्त्रे तृतीयो नवाक्षरः पादस्तुरीयः सप्ताक्षर इति समीकृत्यानुष्टुबेव । तथाहि प्राचीनम्–'अन्धमित्याद्युत्तरमन्त्रस्य चतुष्पाद् याजुषी शुद्धाऽनुष्टुप् द्वात्रिंशदक्षराणि । पञ्चदश पदानि' इति । मन्त्रोऽयं द्वेधा विवृतष्टीकायाम्– जगतः सम्भूतिरिति सृष्टिः । ये असम्भूतिं जगतः सृष्ट्यभावम्, हरेर्जगत्स्रष्टृत्वाभावमित्येतत्, उपासते, न ब्रह्म जगज्जन्मादिदं भवितुमर्हति, तस्य निर्विशेषत्वान्निष्क्रियत्वाच्चेति, तेऽन्धं तमः प्रविशन्तीत्येकोऽर्थः । असम्भूतिः संहारः । येऽसम्भूतिमुपासते, संहर्तैव भगवान् न स्रष्टेत्युपासते तेऽपि तमो यान्तीत्यपरः ॥ * ॥

त्रयोदशो मन्त्रः स्फुटमनुष्टुप् । चतुर्दशश्च । पञ्चदशश्च । पदगणना तूक्ता प्रतृण्णज्ञैः– त्रयोदशे–'चतुर्दश पदानि', चतुर्दशे– 'पञ्चदश पदानि', पञ्चदशे च– 'त्रयोदश पदानि' इति । **सम्भवाद्युपास्तेः** स्रष्टृत्वादिमात्रोपास्तेः । **सर्वेष्टानिष्टनाशोत्पत्तिरूपत्वात्** । केवलस्रष्टृत्वोपासनेनानिष्टप्राप्तिः । केवलसंहर्तृत्वोपासनेनेष्टनाश इति विरुद्धं फलं जातम् । **सम्भवात् अन्यत्** अनिष्टस्य सम्भवः । **असम्भवात् अन्यत्** इष्टस्यासम्भव इति । एतेनान्धन्तमः प्रविशन्ति इति पूर्वमन्त्रसङ्गततया 'अन्यदेवाहुः' इत्युत्तरमन्त्रो व्याख्यातः । तमस्यपि दलद्वयम् । इष्टनाशोऽनिष्टप्राप्तिश्च । उभयोपासनेनोभयमपि फलमाप्नोतीति । इदानीमुत्तरमन्त्रसङ्गततयेमं मन्त्रमवतारयति– **अथवेति** । **अन्यत्** मृत्युतरणम्, **असम्भवात्** । **अन्यत्** अमृताशनम्, **सम्भवादिति** ॥ * ॥

**सर्वकर्तारमिति** । सर्वस्य जीवजडात्मकस्य प्रपञ्चस्य कर्तारम् । सर्वस्य च जीवजातस्य सृष्टिस्थितिसंहारनियमनज्ञानाज्ञानबन्धमोक्षाणां यथायोग्यं कर्तारम् । ईशानामेकदेशकर्तॄणां ब्रह्मादीनामपीशम् । संहर्तृत्वेन प्रसिद्धस्य ईशस्य रुद्रस्यापीशम् । अत एव **सर्वसंहारकारकम्** । **सुखज्ञानादिकर्तृत्व-**

ज्ञानात् तत् सुखज्ञानादिकं **व्यक्तिमाव्रजेत्**। **'मृत्युं तीर्त्वा'** इत्येतत् **'देह-बन्धाद् विमुच्यते'** इति विवृतं प्रमाणे । तदेतत् सङ्गमय्य समर्थयते– **मृतिकारणत्वादिति** । अत्र कश्चिदविदितपूर्वापरोऽज्ञातग्रन्थाशय आह– 'ये असम्भूतिमुपासते प्रळयकर्ता भगवान् सृष्टेरकर्तेत्युपासते ते नरकं यान्ति । ये सम्भूत्यां रताः भगवान् सृष्टेरेव कर्तेति ज्ञानवन्तः तेऽपि तमः प्रविशन्ति । अतो भगवान् सृष्टिप्रळययोः कर्तेत्युपासनीय इति व्याख्यानमयुक्तम् । एवं सति स्थिति-कर्तृत्वानुपासनात् पुनर्नरकप्राप्तिं को वारयेत्?' इति । तस्याज्ञानमपनि-नीषुरिवाऽह– **अपिचेत्यादिना** । येषामस्ति शुश्रूषा ते शृण्वन्ति । श्रुत्वा च सन्तं पन्थानमनुपतन्ति । ये च स्वरूपतो नरकप्राप्तियोग्यास्तेषां नरकप्राप्तिं कोऽपि न वारयति । यतस्तेषाम्– 'अन्धन्तमोऽप्यलङ्कारो नित्यदुःखं शिरोमणिः' ॥

**सर्वगुणात्मकमिति** पूर्वश्लोक उक्तम् । **गुणरूपमिति** पुनरुत्तरश्लोक उच्यते । ननु किमिदमाम्रेडितम्? न भोः । अनवगतभावो भवान् । अत्र पुनर्महानर्थभेद इत्याह– **मूलरूपवदित्यादि** । जनयतीति जनः स्रष्टा । अर्दयतीत्यर्दनः संहर्ता । स चासौ स चेति जनार्दनः । भक्तानामभीष्टं जनयन्, पालनार्थमात्मानं च जनयन्, दुष्टानर्दयतीति स्थितिनियमने चोक्ते । अज्ञानं जनयन्नर्दयति संसार इति अज्ञानबन्धावुक्तौ । ज्ञानं जनयन्नर्दयति नाशयति संसारमिति, जनं जननमर्दयतीति च ज्ञानमोक्षौ । तदेवं सृष्ट्याद्यष्टकस्य कर्ता जनार्दनः ॥

ननु भगवत्तत्वं सर्वतोऽपि जवीय एव । तत् किं मनसो जवीय इति महता कण्ठेनोच्यते । विशिष्योपासनार्थत्वादित्याह– **ये गुणानामंशास्तेषामपि हानिं न कल्पयेत्** । तदेतदुक्तं भाष्योदाहृते कौर्मे– **'भागहानिं न प्रकल्पयेत्'** इति । प्रत्येकशोऽपि न कल्पयेदित्यर्थः ॥

**हरेः साम्यं विष्णोरभिन्नताम्** इति । **हरेः** संसारपरिहारकस्य **विष्णोः** । कथं संसारात् तीर्णः ततस्तारयिता च समौ स्यातामभिन्नौ वा । कथन्तरां संसारी? **नैव प्रचिन्तयेत्** । शास्त्रेष्वापाततः प्रतीतमपि प्रमितत्वेन नैव चिन्तयेत् ॥

ततः तारतम्यस्य मुक्तिपर्यन्तत्वात्, 'ततः' तेभ्यः मानुषादिविरिञ्चान्तेभ्यो मुक्तामुक्तजीवेभ्यः ॥ * ॥

अत्राविद्यापदेन कर्मोच्यत इति रामानुजीया मायावादिनश्च। 'सादृश्यमन्यत्वं च नञर्थः । तेन विद्यान्यत्वे सति मोक्षोपायत्वेन विद्यासदृशं कर्माविद्या-पदगदितम्' इति च स्वमर्थं समर्थयन्ते। ननु तर्ह्यनेनैव न्यायेनाज्ञानमित्यापि कर्मोच्येत। अज्ञ इति च कर्मठः। अकर्मेति ज्ञानम्। अहो भाषाशास्त्रकौशलं तत्रभवतः । ननु तर्हि कथमब्राह्मणपदेन ब्राह्मणत्वानाक्रान्तः ब्राह्मणत्व-साक्षाद्व्यापकधर्माक्रान्तश्च कश्चिद् ब्राह्मणसदृशः क्षत्रियादिरेव बोध्यते न व्याघ्रादिरिति भाषाशास्त्रविचक्षणेन वक्तव्यम्। उच्यते। सावधानेन श्रूय-ताम्। यत्र धर्मिवचनं तत्र विवक्षाभेदेन सादृश्यमपि नञर्थो भवति। वि-रोधोऽपि भवति। सादृश्ये यथा– अब्राह्मणः। विरोधे यथा– असुरः। यत्र धर्मवचनं तत्र प्रायो नञ् विरुद्धधर्मानाचष्ट इति शाब्दो बोधक्रमः। तद्यथा– अविद्या, अज्ञानम्, अभेदः, असुखम्। ननु प्रायोवादोऽयम्। अयमपवादो भविष्यति। प्रेक्षावत्प्रयोगात्। तथाहि विष्णुपुराणे–'इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः। ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया'[६.६.१२] इति। इदमप्याशामात्रम्। नात्राविद्याशब्दः कर्मवचनः। नाप्यविद्यया तर्तुमिति पदान्वयः। अविद्यया प्राप्तं मृत्युं तर्तुमित्येव वचनार्थः। उपरिष्टात्पुराण एवा-विद्यापदस्य तथैव व्याख्यानात्। तथाहि पठ्यते–'तच्छ्रूयतामविद्यायाः स्वरूपं कुलनन्दन। अनात्मन्यात्मबुद्धिर्या चास्वे स्वमिति या मतिः। संसारतरु-सम्भूतिबीजमेतद् द्विधा स्थितम्' [६.७.१०–११] इति । ननु तर्हि मनुवचनमस्मत्पक्षं कटाक्षयति– 'तपसा कल्मषं हन्ति विद्ययाऽमृतमश्नुते' [१२.१०४] इति। स्फुटमिदमेतन्मन्त्रोपबृंहणमिति। एतदप्याशामात्रम्। तपसा शास्त्रार्थमननेनाविद्यामलं हन्ति। विद्यया चापरोक्षज्ञानेनामृतमश्नुत इति हि तदर्थः। तपसा ब्रह्मचर्याद्यनुष्ठानेन च। 'स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः। तद्धि तपस्तद्धि तपः' इति श्रवणात् ॥

यदपि 'विद्यापदेन देवताज्ञानादिरूपा अपरविद्योच्यते। अमृतपदेन चामुख्य-ममृतत्वमुच्यते देवतात्मभावाख्यम्। नतु मुख्यं ब्रह्मात्मभावाख्यम्। मन्त्रस्य कर्मविषयत्वात्' इति मायावादभाष्यम्। तदपि दुराग्रहमात्रम्। महदिदमाचतुर्यं यत् समग्रो मन्त्रसमुदायोऽमुख्यमधिकारिणमाचष्ट इति, मन्त्रगतं पदद्वय-मप्यमुख्यमर्थमाचष्ट इति। सम्भवति मुख्येऽर्थे नामुख्यमर्थं शब्दार्थज्ञाः सहन्ते। दौर्लभ्याच्छुद्धबुद्धीनाम्, बाहुल्यादल्पवेदिनाम्, दुराग्रहग्रहगृहीतत्वा-च्चैतादृशाः प्रज्ञावादाः प्रवर्तन्त इत्येते विपक्षाः प्रेक्षावद्भिरुपेक्ष्यन्ते ॥

एवं 'सम्भूतिः समाधिज्ञानम्। असम्भूतिः तद्विरोधिनां हिंसास्तेयादीनां निवृत्तिः' इत्येके रामानुजीयाः। अशब्दार्थोऽयम्। 'सम्भूतिः कर्म। असम्भूतिरात्मनिष्ठा' इत्यन्ये। तर्हि पुनरुक्तं भवति 'विद्यां चाविद्यां च' इत्यनेन। अवधारणार्थं पुनरुक्तिरित्यगतिका गतिः। 'सम्भूतिः शरीरपरिग्रहनिष्ठा। असम्भूतिस्ततो निवृत्तिः' इत्यन्ये। कथञ्चित् स्यान्नामायं पदार्थः। अर्थस्वारस्यं तु जिह्रेति। किमित्येवं हठादर्था आकृष्यन्ते ॥

'सम्भूतिः कार्यं ब्रह्म हिरण्यगर्भः। असम्भूतिः कारणं प्रकृतिः' इति माया-वादिनः। ततश्च 'सम्भूतिं च विनाशं च' इति मन्त्रः कुप्यति। तदर्थमेवं व्याचक्षते– 'विनाशपदेन विनाशवत् कार्यं ब्रह्मोच्यते। सम्भूतिपदेन चाकारप्रश्लेषेणासम्भूतिः प्रकृतिरुच्यते' इति। शब्दशास्त्रे क्वाप्यदृष्टचरमिदं व्याकरणकौशलम्, यत् तत्पदेनातदुच्यत इति। तर्हि घटाभाववति भूतळे 'घटोऽस्ति' इति वदन्नप्युपादेयवचनः स्यात्, नञ्प्रश्लेषेण 'घटो नास्ति' इत्यर्थवर्णनसम्भवात्। एवं च सर्वोऽपि वाग्व्यवहारो वैयाकुल्यमापद्येत। अपि चैवंवादिनं प्रति भेदवादिनः प्रत्यवतिष्ठेरन्–'तत् त्वमसि' इत्यस्य नञ्प्रश्लेषेण 'तत् त्वं नासि' इत्यर्थः, 'अहं ब्रह्मास्मि' इत्यस्य 'नाहं ब्रह्मास्मि' इत्यर्थः, 'सर्वं खल्विदं ब्रह्म' इत्यस्य 'नेदं सर्वं ब्रह्म' इत्यर्थ इति। तदा किमुत्तरं ब्रूषे मुखमुद्रणादृते। तत् स्वप्रज्ञाविलसितमिति न श्रुत्यर्थ इति यदि वदसे, इदमपि ते प्रज्ञाविलसितमिति समं समाधानम् ॥

'सम्भूतिरिति कर्मानुष्ठानलेशविधुरमात्मोपासनम्। शरीरनाश एव मुक्तिरिति बौद्धमतावलम्बनमुपासनमसम्भूतिः' इति महीधरो व्याचख्यौ स्वपूर्वाचार्यव्याख्याने स्वयमस्वरतां पश्यन्। अत्र बौद्धप्रक्रियाऽपि हठादानीता। न स्वरसप्राप्ता। अन्यथा बौद्धवदन्यान्यप्यवैदिकान्युपासनानि निराक्रियेरन्। भगवत्पादेन तु प्रमाणवचनेनैव मन्त्रार्थकथनादप्रमाणमूलानि सर्वाण्यपि व्याख्यानान्तराणि दत्तोत्तराणि वेदितव्यानि ॥ ❋ ॥

तथाच मन्त्रार्थः– **ये** अविद्यमान**मुपासते** ते **अन्धं तमः प्रविशन्ति** । **ये** पुनः **विद्यायां उ** विद्यायामेव **रताः** सन्तो नान्यथाज्ञानं निराकुर्वन्ति ते **ततो**ऽपि **भूयइव** बहुतरमिव **तमो** यान्ति। अविद्यानिरासः कर्तव्य एवेत्यवधारणार्थं **'भूयइव'** इत्याह। अज्ञानादनिरासे किञ्चित् तमः । इच्छापूर्वकमनिरासे ततो भूय इव। निरासद्वेषे भूय एवेति ॥ ❋ ॥ उपासितया **विद्यया अन्यदेव** फल**माहुः** । अविद्यया निरस्तया चान्यदेव फलमाहुः । इत्येवं धीमतां वचः **शुश्रुम** । **ये** च धीमन्तो ब्रह्मादय**स्तद्** ब्रह्मतत्वं **नो**ऽस्माकं व्याख्यातवन्तः ॥ ❋ ॥ तत् तस्मात् उभयोर्भिन्नफलत्वात्, **विद्यां च** विद्यात्वेन, **अविद्यां च**ाविद्यात्वेनेति **उभयं यः सह वेद** जानाति सः **अविद्यया** निरस्तया, अविद्यामयं मृत्युरूपं संसारं च निरस्य, **विद्यया**ऽनुष्ठितया **अमृतं** नित्यानन्द**मश्नुते** ॥ ❋ ॥ अथ **ये** परमात्मनः **असम्भूतिं** जगत्स्रष्टृत्वाभावं **उपासते** ते **अन्धं तमः प्रविशन्ति** । **ये** पुनः **सम्भूत्यां उ** सृष्टिकर्तृत्व एव **रताः**, सृष्टिकर्तैव भगवान् न संहारादिकर्तेति, **ते ततो भूयइव तमः** प्रविशन्ति ॥ ❋ ॥ भगवत्कृतत्वेनोपासितात् **सम्भवात्** सृष्टे**रन्यदेव** फल**माहुः** । तथोपासितात् **असम्भवात्** संहाराच्च **अन्यत्** फल**माहुः** । इति **शुश्रुम** धीमतां सकाशात् **ये नस्तद् व्याचचक्षिरे** ॥ ❋ ॥ **तत् यः सम्भूतिं च विनाशं च** इति **उभयं** च, उपलक्षणमेतत् । सृष्ट्याद्यष्टकमपि भगवतः सकाशादिति **वेद स विनाशेनो**पासितेन **मृत्युं** देहबन्धं विनाश्य **सम्भूत्या** उपासितया आनन्दप्राप्तिरूपां भूति**मश्नुत** इति ॥ ९–१४ ॥

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।
तत् त्वं पूषन्नपा वृणु सत्यधर्म्माय दृष्टये ॥ १५ ॥

पूषन्नेकऋषे[१] यम सूर्य प्राजापत्य व्यूह रश्मीन्त्समूह तेजो यत् ते रूपं कल्याणतमं तत् ते पश्यामि । योऽसावसौ पुरुषः सोऽहमस्मि ॥ १६ ॥

**(भा.)** 'पात्रं हिरण्मयं सूर्यमण्डलं समुदाहृतम् ।
'विष्णोः सत्यस्य तेनैव सर्वदाऽपिहितं मुखम् ॥

'तत्तु पूर्णत्वतः पूषा विष्णुर्दर्शयति स्वयम् ।
'सत्यधर्म्माय भक्ताय प्रधानज्ञानरूपतः ।
'विष्णुरेकऋषिर्ज्ञेयो यमो नियमनाद्धरिः ॥

'सूर्यः स सूरिगम्यत्वात् प्राजापत्यः प्रजापतेः ।
'विशेषेणैव गम्यत्वादहं चासावहेयतः ।
'अस्मि नित्यास्तितामानात् सर्वजीवेषु संस्थितः ॥

'स्वयं तु सर्वजीवेभ्यो व्यतिरिक्तः परो हरिः ।
'स क्रतुर्ज्ञानरूपत्वादग्निरङ्गप्रणेतृतः' इति ब्रह्माण्डे ॥

सत्यं ब्रह्म हृदये धारयतीति सत्यधर्म्मा । एकोऽसौशब्दः प्राणे स्थित इति ॥ * ॥

**(टी.)** अथेदानीं न केवलं [२]विद्यया मोक्षः । किन्त्वपरोक्षदर्शनादेवेत्यभिप्रायेण तद्दर्शनोपायं प्रार्थयति– **हिरण्मयेनेति** । तदभिप्रायं **'पात्रम्–'** इत्यादि-ब्रह्माण्डवचनेन प्रपञ्चयति । जगतः पातृत्वात् **पात्रम्** । श्रोतृत्वाच्छ्रोत्रमितिवत् । उदकं पिबति त्राति च जगदिति वा **पात्रं** तदुच्यते । हितं चेदं रमणीयं

---

१. **'पूषन्नेकर्षे'** इत्यनार्षः पाठः । २. **'न केवलविद्यया'** क.ग.

चेति **हिरण्मयम्**। सद्रूपं जगन्नियच्छतीति सत्यो विष्णुः। सुखपूर्णत्वात् **पूषा** च। **तत् मुखं सूर्यमण्डलेन अपिहितम्। सत्यधर्माय** त्वद्भक्ताय त्वन्मुखावरकं तत् मण्डलं [१]**त्वमेवापावृणु** तस्य त्वन्मुखदृष्टये ।। १५ ।।

स्वभक्तान् पुष्णातीति च **पूषा**। **प्राजापत्यः** विरिञ्चगम्यः। मण्डलस्यापावरणप्रकारः कथमित्याकाङ्क्षायामाह– **व्यूहे**ति। तस्य **रश्मीन्** इतस्ततो **व्यूह** विभज। **यत् तेजोरूपं** मण्डलं तत् **समूह** मध्यतो निर्भिन्धि[२]। **यत् कल्याणतमं** त्वद्रूपं **तत्** त्वदनुग्रहादेव **पश्यामि**। **योऽसौ** विष्णुरसुशब्दिते मुख्यप्राणे स्थितः। पूर्णषड्गुणत्वात् पुरुषाख्यः। **स** भगवान् अहेयत्वादहंनामा। अस्तीत्येव नित्यं प्रमितत्वाद**स्मि**नामकश्च। किञ्च अहमिति वेद्येषु जीवेषु नियामकत्वेन स्थितत्वाच्च **'अहमस्मि'** इति[३] व्यवहारो विष्णावुपपन्न इत्यभिप्रायेणाऽह– **सर्वजीवेषु संस्थित** इति। अमुष्मिन्नमुष्मिन् स्थितत्वाच्च **'असावसौ'** इति स उच्यते। तस्मात् सर्वजीवगतत्वं चात्रैवोक्तम्। **'अहं स पुरुषोऽस्मि'** इति जीवेशैक्यमाशङ्क्य परिहरति– **स्वयं त्वि**ति। जीवेशभेदे युक्तिमाह– **पर** इति। स्वातन्त्र्यादिभिरत्यन्तविलक्षणत्वात्[४] परश्चेत्यर्थः। नच जीवसाम्यमीशस्या[५]ऽशङ्क्यम्। **परो हरिः** इत्युत्तमत्वेन विशेषणात् ।। १६ ।।

**(भा.चं.) प्रार्थयतीति**। वैयाकरणा अर्थधातुमात्मनेभाषं भाषन्ते। प्रार्थयतीति च बहुलः प्रयोगः – 'प्रार्थयन्ति शयनोत्थितं प्रियाः' इत्यादिः। प्रयोगशरणास्ते नोष्ठं व्याददते। 'अर्थ उपयाच्ञायाम्' ।।

**पातृत्वात्** पालयितृत्वात्। रश्मिद्वारा उदकपानाद् वा हिरण्मयेन पात्रेण सत्यं पिहितमिति चाऽलङ्कारिकं वचः। येन पिहितादपि पिधानमेवाधिकं रमणीयं बभूव। तदेतन्निर्वचनेनैव ध्वनयति– **हितं च रमणीयं चेति**। **त्राति च जगत्**

---

१. **'त्वमपावृणु'** क.

२. अयं सम्भावितः पाठः। क.पुस्तके **'निर्भिदी'** इतीव पठ्यते। **'निर्भिण्णो–'** इतीव ख.पुस्तके। **'निर्भिन्द'** इतीव ग. पुस्तके।

३. **'–च्चास्मीति'** क. ४. **'–दिभिर्विलक्षणत्वात्'** क. ५. **'साम्यमीश्वरस्या–'** क.ख.

इति छान्दसीं सरणिमनुसरति। त्रायते च जगदित्यर्थः। **'पूर्णत्वतः पूषा'** इति मूलं विशदयति– **सुखपूर्णत्वात् पूषा** चेति। न केवलं भगवन्तमयं धारयति। भगवांश्चैनं धारयतीत्याह भाष्यकारः– **सत्यधर्मा**। सत्यं ब्रह्म धर्मं धारकं यस्य स सत्यधर्मा। 'यमेवैष वृणुते तेन लभ्यः' इति हि श्रूयते। तदेतद् भक्तगतं भगवदनुग्रहभाजनत्वं ध्वनयितुमेव **'सत्यधर्मा'** इत्यनिजन्तं प्रयुयोज। भगवन्तमयं भजति, भगवानमुं भजतीति। प्रीत्या स्वीकरणं हि भजनं नाम। अन्यथा यथा मूलं सत्यधर्म इत्येवावक्ष्यत्। 'धर्मादनिच् केवलात्' [अष्टा.सू.५.४.१२४] इति हि पाणिनिः। केवलात् पदाद् यो धर्मशब्दः, न पदसमुदायात्, तदन्ताद् बहुव्रीहेः किलानिच्प्रत्ययो भवति। अत एव **सत्यं ब्रह्म** भक्तो **हृदये धारयति**, भक्तं च **सत्यं ब्रह्म हृदये धारयति** इति पूर्ववाक्यमर्थद्वयं गर्भीकरोति। तेन 'सत्यधर्माय' इति पूर्वपदप्रकृतिस्वरत्वं च विवृतार्थं भवति। ननु मैत्रायणा भगवन्तमेव सत्यधर्मं पठन्ति, न भक्तम्। तथाहि मैत्रोपनिषदि– 'हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्। तत् त्वं पूषन्नपावृणु सत्यधर्माय विष्णवे। योऽसा आदित्ये पुरुषः सोऽसा अहमित्येष ह वै सत्यधर्मः...... एतद् ब्रह्मैतदमृतमेतद् भर्ग एतत् सत्यधर्मः'[६.३५] इति। नैष दोषः। एकस्मिन्नेव मन्त्रे अन्येऽन्ये ऋषयोऽन्यन्यमर्थं पश्यन्ति। अत्रापि सत्यधर्माय सत्यधर्मस्य विष्णोर्दर्शनायेत्यभ्युपगमे न किञ्चिद्धीयते। प्रमाणवचनं त्वयोगव्यवच्छेद एव ॥ ✻ ॥

'सत्यस्य जीवस्य मुखं मनः हिरण्मयेन पात्रेण भोग्यवर्गेणापिहितम्' इत्येके रामानुजीयाः। 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुतिसिद्धमुख्यार्थत्यागस्तेषां स्फुटो दोषः। 'सत्यं परं धीमहि' इति च भागवते। एतं दोषं परिजिहीर्षवस्तत्पक्षीया एव केचिद् व्याचक्षते–'हिरण्मयेन पात्रेण भोगोपकरणेन सत्यस्य परमात्मनः मुखं प्राप्तिद्वारमपिहितम्' इति। पुराणवचनविरोधस्तु स्फुटः। ततो वरं पुराणानुगुणं शाङ्करं व्याख्यानम्–'हिरण्मयेन ज्योतिर्मयेन सूर्यमण्डलेन सत्यस्य ब्रह्मणो मुखं द्वारमपिहितम्' इति ॥

**'तत् त्वं पूषन्'** इत्युक्तम्। तत् किं पुनरपि **'पूषन्नेकऋषे'** इति चर्वितमेव चर्व्यते? शब्दं चर्वित्वाऽपूर्वमर्थमनुसन्धेहीत्याह– **स्वभक्तान् पुष्णातीति च पूषा**। पुष्यति गुणैः पुष्टो भवतीति पूर्वमुक्तम्। अत्र तु स्वभक्तान् पुष्णाति भक्त्यादिभिः पुष्टान् करोतीति महानर्थभेदः। 'अर्षत्' इति पूर्वोक्तं स्मारयन्निव निर्वक्ति– **प्रधानज्ञानरूपतः एकऋषिः**। एकः प्रधानश्चासावृषिश्चेति। ऋषति सर्वमवगच्छतीत्यृषिः सर्वज्ञः। अयं तु सर्वज्ञतम इत्येकऋषिः। एकर्षिना-मन्याथर्वणिकेऽग्नौ सन्निहितश्च। 'एकर्षिश्चाप्यथर्वणाम्' इति स्मरणात्। यमयतीति यमनामा यमस्थितः। सूरिभिरीयते ज्ञायत इति सूरीय एव सूर्यः सूर्यगतः। प्रजापतेरयं गम्यः प्राजापत्यः। ननु सूरिगम्य इत्युक्तम्। प्रजा-पतिरपि सूरिः। अस्ति विशेष इत्याह– **विशेषेणैव गम्यत्वात्**। सर्वेभ्योऽधिकं ज्ञेयः। न हि ततोऽधिकं कोऽपि जीवो जानाति। सर्वेभ्योऽधिकं मुक्तौ गम्यश्च। स हि साक्षादेव भगवन्तमृच्छति। अन्ये च तेन द्वारेण। रुचिप्रजापतेः पुत्रतया स्वपौत्रतयाऽवतीर्ण इति चार्थं केचिद् वर्णयन्ति। उपासने गुण-विशेषानाधानान्नेदमुदितं प्रमाणे। 'तत् त्वं पूषन्नपावृणु' इति मन्त्रेण प्रार्थितस्या-पावरणस्य प्रकारः कथ्यते– **'व्यूह रश्मीन् समूह तेजः'**। तस्यार्थमाह– **तस्य रश्मीन् व्यूह विभजेत्यादिना**। श्रीजयतीर्थास्तु– 'रश्मीन् व्यूह। तेजश्च समूह। स्वरूपं बाह्यं च मदीयज्ञानं विस्तारयेति यावत्। आदित्य-रश्म्यादीनामपगमनादिना तदन्तर्गतब्रह्मप्रतीत्यसम्भवादादित्यरश्म्यादिविषयं व्याख्यानं न युक्तम्' इत्यभिप्रयन्ति। **'ते रूपं ते पश्यामि'**। त्वद्रूपं त्वद-नुग्रहादेव पश्यामि। कदाऽपि केनापि न हीयत इत्यहम्। ओहाक् त्यागे। 'न तदस्ति विना यत् स्यान्मया भूतं चराचरम्' [भ.गी.१०.३९] इति भगवद्वचनम्। केवलं स्वयं स्वस्याहेयो भवति। अयं तु सर्वाहेयः। सदा अस्तीति मीयते ज्ञायते इत्यस्मि। न कदाऽपि पूर्वं किलाऽसीदिति, इतः परं भविष्यतीति वा मीयते। माङ् माने। यदिदानीमस्ति तत् पूर्वं नाऽसीत्, न भविष्यति च भविष्यति। यत् पूर्वमासीत् तदिदानीं नास्ति। न भविष्यति।

यद् भविष्यति तदिदानीं नास्ति, नाऽसीत् पूर्वम् । अयं तु सर्वदाऽस्तीति व्यवह्रियते । ये पूर्वमासन् ते 'भगवानस्ति' इत्येवाऽहुः । य इदानीं सन्ति तेऽपि अस्तीत्येव वदन्ति । ये भविष्यन्ति तेऽप्यस्तीत्येव । 'यच्चान्यत् त्रिकालातीतं तदप्योङ्कार एव' इति हि श्रुतिः । तत्वप्रदीपे [१.१.१७] चोक्तम्– 'अहेयत्वादहम् । न हन्यत इति वा । अस्तीति मेयत्वादस्मि । ज्ञानरूपो नियन्तृरूपश्च यः । परोक्षत्वादसौ । असुष्वोतत्वादमुष्मिन् स्थितत्वाच्चासावसावित्युच्यते । 'सप्तसु प्रथमा' इति सूत्रादसाविति सप्तमी वा । सरणात् सारत्वाच्च सः' इति । 'अहंशब्दो युक्त्यागमविरोधाज्जीवस्वरूपं त्यक्त्वाऽहेयत्वयोगेन ब्रह्माभिधत्त इति श्लिष्यते । प्रसिद्धश्चायमर्थः श्रुतिस्मृतिषु –'तस्योपनिषदहमिति', 'अः इति ब्रह्म । तत्राऽगतमहमिति' । तत्र च ब्रह्मण्यागतमहमिति नाम वाचकत्वेनेत्यर्थः । अन्तर्यामित्वाच्च । 'सर्वान्तर्यामको विष्णुः सर्वनाम्नाऽभिधीयते' इत्यादेः । तन्नियामके च तच्छब्दोऽतिमुख्य इति 'तदधीनत्वात्–' [ब्र.सू.१.४.३] इत्यादावुदितम् । नचास्मीत्यनेन विरोधः । 'अहेयत्वादहंनामाऽस्म्यसनान्मिनुतेरपि' । अस्तीति मेयं चास्मीत्युच्यते । नचात्र क्लिष्टताशङ्का । अविद्धरूढेर्योगोपबृंहिताया विद्धरूढेरतिबलिष्ठत्वात्' [२.१.२६] इत्यादि च ॥

अथचार्थान्तरमाह– **अहमिति वेद्येषु जीवेषु स्थितत्वाच्च**। अयमर्थः– यथा यमान्तर्यामी यम इत्युच्यते, सूर्यान्तर्यामी सूर्य इत्युच्यते तथा मदन्तर्यामी अहमित्युच्यते । तथा च अहमस्मीति भगवान् मदन्तर्यामी सन्नस्तीत्यर्थः । ननु तर्हि अहमस्तीति वक्तव्यम्; न पुनरहमस्मीति । अहो व्याकरणकौशलं भवतः । अस्मच्छब्दयोगे किलोत्तमपुरुषमिच्छन्ति वैयाकरणाः । न तत्रार्थविशेषो विधीयते– जीवपरास्मच्छब्दयोग एव, न परमात्मपरास्मच्छब्दयोग इति । तस्माद् युक्तमुक्तम्– 'अहंनामा भगवान् मय्यस्तीति । 'अहंशब्दो यतो विष्णौ ततश्चोत्तमपूरुषाः । वर्तन्तेऽभवमित्याद्याः सर्वान्तस्थे जनार्दने' इति च पौराणं वचनम् ॥

**परो हरिः**। सर्वस्मादुत्तमो विलक्षणश्चेत्यर्थः। तदेतदाह– **जीवेशभेद** इत्यादि। षोडशस्य मन्त्रस्य निगदात्मकत्वान्न च्छन्दोगवेषणा। अथापि पद्यगन्धि गद्यं भवति। अत एव चाऽहुः सम्प्रदायज्ञाः–'पूषन्नित्यादि-मन्त्रस्य त्रिपात् साम्नी आसुरी वा यजुरन्ता मिश्रा उष्णिक् छन्दः। अन्त्यो द्वादशकः। एकोनपञ्चाशदक्षराणि' इति। नातिस्वरसमेतत्। एवं वक्तव्यम्– '–प्राजापत्य' इत्यन्ता साम्नी उष्णिक्। ततो नवभिरक्षरैर्याजुषी बृहती। ततः पुनः साम्नी उष्णिक्। अन्ते द्वादशाक्षरा याजुषी जगतीति। अथवा प्रथमं वाक्यं सप्तत्रिंशदक्षरं ब्राह्मी नाम भुरिग् गायत्री। तत एकादशाक्षरा याजुषी त्रिष्टुप्। व्यूहेन जगती वा॥ * ॥

'सोऽहमस्मि तत्सदृशो भवामि। 'मम साधर्म्यमागताः' इति, 'परमं साम्यमुपैति' इत्यादिप्रमाणप्रतिपादितसारूप्यवानहमस्मीति भावः' इत्येके रामानुजीयाः। 'अहंशब्दोऽत्र जीवद्वाराऽन्तरात्मपर्यन्तः। अत एवास्मीत्यपि परमात्मनि विश्राम्यति। 'अस्मद्युत्तमः' इत्येतावदेव ह्यनुशिष्टम्। न पुनरस्मच्छब्दस्य परमात्मपर्यन्ततायामुत्तमनिवृत्तिः' इत्यन्ये। 'अहमस्मि श्रुतिप्रसिद्धः पुरुषः मदन्तर्यामीत्यर्थः' इत्यपरे। सर्वमेतदविरुद्धम्। मायावादिनस्तु व्याचक्षते–'ते रूपं ते तव प्रसादात् पश्यामि। किन्तु न त्वां भृत्यवद् याचे। यतः योऽसावादित्यमण्डलस्थः पुरुषः सोऽहमस्मि' इति। अपूर्वमिदं व्याहरणं व्याहतिशिरःशेखराणाम्। यत् तव प्रसादात् त्वमेवाहं भवामीति। नहि स्वस्य स्वात्मभावः स्वप्रसादमपेक्षते। अन्यो हि प्रसीदत्यन्यः प्रसादयति। अद्भुतमिदं दर्शनं ये व्याहतभाषणमपि भूषणं मन्यन्ते॥ * ॥

तथाच मन्त्रार्थः– सूर्यमण्डलाख्येन **हिरण्मयेन पात्रेण सत्यस्य** परमात्मनो **मुखं** स्वरूप**मपिहितम्**। हे **पूषन्** परिपूर्ण भगवन्, **त्वं सत्यधर्माय** सत्यस्य परमात्मनस्तव हृदि धारकाय, त्वद्भक्ताय तदनुग्रहार्थम्। षष्ठ्यर्थे वा चतुर्थी, त्वद्भक्तस्य **दृष्टये** त्वद्दर्शनार्थं **तत्** पिहितं मुखं **अपावृणु** अपगतावरणं कुरु॥ * ॥ हे **पूषन्**, भक्तपोषक, **एकऋषे** पूर्णज्ञान, **यम** सर्वनियामक, **सूर्य**

सूरिभिरेव ज्ञेय, न सूर्यमण्डलवदसूरिभिरपि, **प्राजापत्य,** सूरिश्रेष्ठेन प्रजापतिना विशेषतो ज्ञेय, आवरणभूतान् सूर्यस्य **रश्मीन् व्यूह** विभज्यापसारय। यत् **तेजो**मण्डलं तत् **समूह** एकत्र पुञ्जीकृत्य सावकाशं कुरु। **यत्** तव **कल्याणतमं रूपं तत् ते** तवानुग्रहादेव **पश्यामि** । **यः, असावसौ** अस्मिन्नस्मिन् जीवे स्थितः, **सः अहमस्मि** मयि च स्थितो भवति । अपिच **योऽसौ** सूर्ये स्थितः **परमपुरुषः, असौ** मुख्यप्राणे च स्थितः **स** अहेयत्वादहंनामा भवति । सदाऽस्तीति प्रमितत्वाद**स्मि**नामकश्च भवति। अहमस्मीति रहस्यं नामद्वयमवश्यमुपास्यमित्येतत् ।। १५-१६ ।।

**वायुरनिलममृतमथेदं भस्मान्तꣳ शरीरम् ।**
**ओ३म् क्रतो स्मरं कृतꣳ स्मर क्रतो स्मरं कृतꣳ स्मर ।। १७ ।।**

**(भा.) यस्मिन् प्राणे स परः स्थितः सोऽप्यमृतः । किमु परः? अः ब्रह्मैव निलयनं यस्य वायोः सोऽनिलम् ।**

**'अतिरोहितविज्ञानाद् वायुरप्यमृतः स्मृतः ।**
**'मुख्यामृतः स्वयं रामः परमात्मा सनातनः' इति रामसंहितायाम् ।**
**'भक्तानां स्मरणं विष्णोर्न्नित्यज्ञप्तिस्वरूपतः ।**
**'अनुग्रहोन्मुखत्वं तु नैवान्यत् क्वचिदिष्यते' इति ब्रह्मतर्के ।। * ।।**

**(टी.)** सर्वसंस्थस्यापि हरेः प्राणे विशेषस्थितिरुच्यते– **वायुरिति** । [1]आत्मसंस्थस्य हरेः अखण्डितदर्शनात् वायुरप्यमृतः । अत्र पुनः कैमुत्यन्यायादर्थान्तरं च सिद्ध्यतीत्याह– **यस्मिन्निति** । अनिलशब्दार्थं व्युत्पादयति– **अः** इति । 'अः इति ब्रह्म' इति श्रुतिः । अस्मिन्नर्थे रामसंहितावचनं प्रमाणमाह– **अतिरोहितेति** । बिम्बापरोक्षमात्रं हि [2]ध्यातव्यभावे लभ्यत इत्यविरोधः । अतिरोहितज्ञानस्यापि देहसम्बन्धसिद्धेः तद्विनाशेनैव विमोक्ष[3] इति ज्ञापयंस्तत्प्रकारमाह–

१. **'आत्मस्थस्य'** क.ख. २. **'–मात्रं हि मातव्यभावे'** क.
३. **'–शेनैव मोक्ष–'** क.ख.

**अथेति**। इदं वाय्वधिष्ठितमचिच्छरीरं[१] परमात्माग्नौ भस्मीभावेन विनश्यति। एवं लिङ्गशरीरभङ्गात् स्वरूपानन्दाभिव्यक्तिर्भवतीति भावः । अन्येषामप्येवं मोक्षप्रकार इति सिद्धम् ॥

एवं भगवन्तं स्तुत्वा प्रसादयन्ननुग्रहाय प्रार्थयति– **ओमिति** । सर्वगुणैरोतत्वान्नारायण ओमित्युच्यते। तच्चोक्तं भगवतैवान्यत्र– 'ओमशेषगुणाधार इति नारायणोऽप्यसौ' इति । [क्रियत इति क्रः[२]] व्यतिकरः कर्मणः[३] । ततस्तारणशीलत्वात् क्रतुरिति ज्ञानमुच्यते। अतः **क्रतो** इति ज्ञानस्वरूपस्य हरेः सम्बोधनम्। **स क्रतुर्ज्ञानरूपत्वात्** इति हि पुरस्ताच्चोक्तम्। हे यज्ञाख्य नारायण त्वत्पादैकसंश्रयानस्मान् अनुग्रहाय **संस्मर**। अस्माभिः **कृतं** त्वत्प्रार्थनमपि **स्मर**[४]। अनुग्रहोन्मुखो भवेत्यर्थः। नहि स्मरणमात्रं तं प्रति प्रार्थनीयम्। सर्वज्ञस्य विस्मृतेरेवाभावात्। अत्र ब्रह्मतर्कवचनं चाऽह– **भक्तानामिति** ॥ १७ ॥

**(भा.चं.)** हरेः अखण्डितं निरन्तरमतिरोहितं यद् दर्शनं तस्मात्। प्रळयेऽपि प्रतिभातपरावरत्वात्। प्राणे स्थितः पर इत्युक्तम्। इदानीं तस्मिन् प्राणः स्थित इत्याह– **अः** ब्रह्मैवेति । एतेन 'यस्मिन् सर्वाणि भूतानि' इत्युक्तं परस्पराधिष्ठानत्वं प्राणेऽप्यनुसंहितं भवति। **बिम्बापरोक्षमात्रं ध्यातव्यभावे**। अन्यत् सर्वमतिरोहितं सर्वदाऽपि सत्यालोचने । नन्वथेदं भस्मान्तं शरीरमिति किमपूर्वमुच्यते? किमग्निरुष्ण इत्यपि वक्तव्यम्? शृणु तर्हि अपूर्वमर्थम्–**इदं वाय्वधिष्ठितमचिच्छरीरमिति**। **अन्यत्रेति** ऋग्भाष्ये। अनुव्याख्यायां च– 'ओतत्ववाची ह्योङ्कारो वक्त्यसौ तद्गुणोतताम्' इति। क्रतुपदनिर्वचनपरं टीकावाक्यमपूर्णम्। लिपिकृद्भिः कानिचन पदान्यन्तरितानीति

१. 'वाय्वधिष्ठितचिच्छरीरम्' (?) इति सर्वत्र कोशेषु पठ्यते।

२. अर्थपूरणाय सम्भावितः पाठः [ ] एतच्चिह्नान्तर्गतः पूरितः।

३. 'व्यतिकरः कर्मबन्धः' ख. ग.

४. इदं वाक्यं क.पुस्तके न पठ्यते।

भाति। अयं तु सम्भावितः पाठः– 'क्रियत इति क्रः व्यतिकरः कर्मणः' इत्यादि । सप्तदशोऽपि मन्त्रो निगदात्मकः । अथापि पद्यगन्धी भवत्य-नुष्टुब्गर्भत्वात्। तथाहि साम्प्रदायिकाः– 'वाक्यद्वयं यजुषी। मध्ये प्रणवः। चतुस्त्रिंशदक्षराणि, षोडश पदानि' इति ॥ ❊ ॥

'वाति नानाशरीरेषु गच्छतीति वायुर्जीवः । अनिलमित्यनिलयनोऽप्रतिष्ठः । अमृतश्च स्वरूपतः' इति रामानुजीयाः । स्फुटः प्रसिद्धार्थत्यागः । न ह्यसति बाधके प्रसिद्धार्थत्यागो युक्तः । मुखतः प्रतीतेऽर्थे बाधकं पश्यन्नेव ह्यर्थान्तरं प्रत्येतीति शाब्दो बोधक्रमः। 'मम मरिष्यतो वायुः प्राणः अनिलममृतं सूत्रात्मानं प्रतिपद्यतामिति वाक्यशेषः । अथेदं शरीरमग्नौ हुतं भस्मान्तं भूयात्' इति शाङ्करं भाष्यम् । न वक्तव्यमेतत् । नहि वायोः स्वरूपप्रतिपत्तिर्हुतस्य वा भस्मीभावः कस्यचिदाज्ञां प्रतीक्षते । नहि भुक्तमन्नं विशतु जठरमिति कोऽप्याज्ञापयति, भवतु जीर्णमिति प्रार्थयते वा ॥ ❊ ॥

तथाच मन्त्रार्थः– मुख्यवायुः **अनिलं** अनिलयनम्। अकारवाच्यस्य विष्णो-रधिष्ठानं मुख्यप्रतीकमित्यर्थः। अत एव **वायुरमृतं** तत्वमित्युच्यते। प्रळयेऽपि भगवन्निलयत्वात् तन्मनसः। अः निलयनं यस्येति **चानिलं वायुः**। सदा भगवदाश्रितः। तथा जानन्नित्येतत्। अतिरोहितविज्ञानत्वात्। यद्यपि वायु-रमृतः। **अथापि** तदिदमस्य वायोः भौतिकं **शरीरं भस्मान्तम्,** भस्मीभावेन नाशवदेव। **ओम्** सर्वगुणैरोत, **क्रतो** ज्ञानस्वरूप भगवन्, मां **स्मर,** मया कृतं च यत्किञ्चित् ते सेवाकर्म तदपि **स्मर, कृतमिदं** प्रार्थनं च **स्मर**। मयि च मत्कृते च तव कृपादृष्टिवृष्टिरस्तु। पुनरुक्त्या भगवन्तमावर्जयन्नवधारयति ॥ १७ ॥

**अग्ने नय सुपथा राये अस्मान्**
**विश्वानि देव वयुनानि विद्वान्।**

युयोध्यस्मज्जुहुराणमेनो
भूयिष्ठां ते नमउक्तिं विधेम ॥ १८ ॥

इति याज्ञीयमन्त्रोपनिषत् समाप्ता

—०—

ॐ ॥ पूर्ण्णमदः पूर्ण्णमिदं पूर्ण्णात् पूर्ण्णमुदच्यते ।
पूर्ण्णस्यं पूर्ण्णमादायं पूर्ण्णमेवावं शिष्यते ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

—०—

**(भा.)** वयुनं ज्ञानम् । 'यद्दत्तया[1] वयुनयेदमचष्ट विश्वम्' इति वचनात् । जुहुराणं अस्मानल्पीकुर्वत्[2] । युयोधि वियोजय ।

'यदस्मान् कुरुतेऽत्यल्पांस्तदेनोऽस्मद् वियोजय ।
'नय नो मोक्षवित्तायेत्यस्तौद् यज्ञं मनुः स्वराट्' इति स्कान्दे ॥

युयु वियोग इति धातुः । भक्तिज्ञानाभ्यां भूयिष्ठां नम इत्युक्तिं विधेम ॥

पूर्ण्णशक्तिचिदानन्दश्रीतेजःस्पष्टमूर्त्तये ।
ममात्यधिकमित्राय नमो नारायणाय ते ॥ * ॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचितं
याज्ञीयमन्त्रव्याख्यानं समाप्तम्

—०—

**(टी.)** कथं तर्हि विशेषप्रार्थनमित्यत आह– अग्ने नयेति । अत्राग्निशब्दस्यार्थः पुरस्तादेवोक्तः– 'अग्निरङ्गप्रणेतृतः' इति वचनात् । हे नारायणाग्ने, संसारे

१. 'त्वद्दत्तया' इति प्रचलितः भाष्यपाठः । भागवते च तथैव प्र.पाठः ।

२. 'अस्मानल्पं कुर्वत्' इति प्राचीनादर्शे ।

सुखदरिद्रान् **अस्मान् सुपथा** शोभनेन ज्ञानमार्गेण **राये** मोक्षसुखाख्यवित्ताय[1] **नय, विश्वानि** सर्वपदार्थविषयाणि सर्वजनाश्रयाणि वा **वयुनानि** ज्ञानानि **विद्वान्**। **'वयुनं ज्ञानम्'** इति व्याचख्यौ। **'यद्वत्तया–'** [४.१०.८]इत्यादि[2] भागवतवचनात्। यत् पुनरस्माभिरनादिकालतः कृत**मेनः**पुञ्जं **तदस्मत्तो युयोधि वियोजय**। **युयु वियोगे** इति धातोरुद्धरिष्यमाणत्वात्[3]। **जुहुराणं अस्मान**तीव ह्रासयत् **अल्पीकुर्वदित्यर्थः**। स्कान्दे चैतदुक्तमित्याह– **यदस्मानिति। स्वराण् मनुः** स्वायम्भुवः। सोऽयं मनुर्मन्त्रान्ते 'नमो विष्णवे महते करोमि' इति शाखान्तरमनुस्मरन् तस्मा एव विष्णवे नमस्करोति– **भूयिष्ठां त** इति। हे नारायण, त्वत्परायणा वयं **ते** तुभ्यं भक्तिज्ञानादिभिः **भूयिष्ठां नम इति उक्तिं**[4] **विधेम**। नचायं [5]तेशब्दस्ते वयमिति बहुवचतान्तः शङ्क्यः। अनुदात्तत्वात्। 'ते षष्ठ्यर्थोऽनुदात्तः स्यादुदात्तो बहुवाग्भवेत्' इति स्वयमेव भगवानन्यत्राह। 'अनुदात्तं सर्वमपादादौ' इति सूत्राद् युष्मदस्मच्छब्द-योरादेशरूपाणां तेमे इत्यादीनां सर्वेषामप्यनुदात्तत्वनियमाच्च। अपि च पादादौ वाक्यादौ चैतेषां प्रयोगनिषेधोऽपि नियमाद् बोद्धव्यः। अतस्तुभ्यं नमउक्तिं विधेमेत्येवात्र शब्दयोजना साध्वीति सिद्धम्। अपरथा नम्यानुक्ति-प्रसङ्गाच्च ॥ १८ ॥

अथेदानीं गुरूणां गुरुतमो भाष्यकारभट्टारको ग्रन्थावसानेऽपि स्वकृत-समर्पणपूर्वकं स्वेष्टदेवतायै नारायणाय नमस्करोति– **पूर्णेति** ॥ * ॥

**सृष्टिसंहारनियमज्ञापनादौ[6] स्वशक्तयः।**
**सम्पूर्णा यस्य सततं नारायण नमोऽस्तु ते ॥ * ॥**

**[7]उक्तशक्तिचिदानन्दश्रीतेजोबलपूर्वकाः।**
**गुणाः सुसान्द्रा यन्मूर्तिर्नमो नारायणाय ते ॥ * ॥**

---

१. '–सुखवित्ताय' ग. २. 'इति भाग–' क.ख. ३. इदं वाक्यं क.पुस्तके न पठ्यते।
४. 'नमउक्तिम्' ग. ५. 'नचायं शब्दस्ते' क. ६. 'नियमनज्ञानादौ' ख.
७. ख.पुस्तके इदं पद्यं न पठ्यते।

श्रीमदानन्दतीर्थार्यमहाचार्यस्य सन्मतेः ।
अत्यन्ताधिकमित्राय नमः श्रीवल्लभाय ते ॥ * ॥

यस्य त्रिरूपाण्युदितानि वायोर्वेदे बलज्ञानवतो बळादौ ।
दशप्रमत्याख्यतृतीयरूपी याज्ञीयभाष्यं कृतवान् रमेशे ॥ * ॥

याज्ञीयमन्त्रोपनिषत्सुभाष्यटीकामिमां लेशत एव कृत्वा ।
भक्त्या हरावर्पयतीन्दिरेशे त्रैविक्रमार्यानुचरोऽस्य तुष्ट्यै ॥ * ॥

वन्दे रमेशं विधिवायुवीन्द्रशेषेशशक्रादिसुरान् सभार्यान् ।
वन्दे पुनर्व्यासहयास्यमध्वान् जगद्गुरूनप्यथ मद्गुरूंश्च ॥ * ॥

**इति श्रीमदानन्दतीर्थभगवत्पादविरचितयाज्ञीयमन्त्रोपनिषद्भाष्यटीका त्रैविक्रमार्यदासविरचिता समाप्ता**

—०—

**(भा.चं.)** अष्टादशो मन्त्रस्त्रैष्टुभः । तृतीयपादे 'युयोधि+अस्मत्' इति क्षैप्रव्यूहेनाक्षरपूर्तिः । अस्य चरममन्त्रस्य केचिदगस्त्यमप्यृषिमामनन्ति तथाहि पठन्ति–'अग्न इत्यादिमन्त्रस्यागस्त्य ऋषिः । याजुषी निचृत् त्रिष्टुप् । त्रिचत्वारिंशदक्षराणि । सप्तदश पदानि' इति । वय गतौ । वयुनं ज्ञानम् । वयुना प्रज्ञा । 'माया वयुनं ज्ञानम्' [३.९] इति हि निघण्टुः । 'साधनभूमिर्बदरी व्रजता कृष्णेन मन्त्रिणे प्रोक्ता । तत्राऽस्ते स तु साक्षात् तद्वयुनं ग्राहयन् लोकान्' इति स्कान्दे [वैष्णवखं.भाग.मा.२.२२] । जुहुराणम् । येन स्वयं जिह्रेति, आनतशिराः सन्, तज्जुहुराणम् । भाष्ये 'अस्मानल्पं कुर्वत्' इति पाठे क्रियाविशेषणम् । ह्रासयत्, अल्पीकुर्वत् इत्यर्थः । अन्ये तु 'हृ प्रसह्य हरणे' इति, 'ह्वृ कौटिल्ये' इति, 'हुर्छा कौटिल्ये' इति वा धातोर्जुहुराणमिति पदं निष्पिपादयिषन्ति । युयोधि । 'युयु वियोगे' इति धातुः । अन्ये तु 'यु मिश्रणामिश्रणयोः' इति धातुपाठं पठन्ति । भगवत्पादस्तु वैय्याकरणै-र्विस्मृतमपूर्वं धातुं परिचाययन् युयुधातुमाह । वस्तुतस्तु 'यु मिश्रणे' इत्येव

प्राचीनो धातुपाठः। अमिश्रण इत्यर्वाचीनः प्रक्षेपः। तेन 'युयु वियोगे' इत्येव सूक्तम्। सर्वथा–'बहुलं छन्दसि' [अष्टा.सू.२.४.७६] इत्येव रूपनिर्वाहः। श्रुधि-कृधीत्यादिवत्। विधेम, 'विध विधाने' इति तौदादिकाद् विधतेः प्रार्थनायां लिङ्। केचित्तु धाञ् धातोश्छान्दसं रूपं मन्यन्ते। 'व्यत्ययो बहुलम्' [अष्टा.सू.३.१.८५] इति स्मरणात्। **शाखान्तरमनुस्मरन्**। तथाहि तैत्तिरीयाः पठन्ति–'नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः। नमो वाचे नमो वाचस्पतये नमो विष्णवे महते करोमि' इति। तैत्तिरीयारण्यके–**'नमो विष्णवे बृहते करोमि'** [२.१२.१] इति पठ्यते। आपस्तम्बश्रौतसूत्रे [१४.३४.५], आश्वलायनगृह्यसूत्रे च [३.३.४] **'–महते करोमि'** इति पठ्यते। ब्रह्मणि वेदे, अग्नौ, पृथिव्याम्, ओषधीषु, वाग्देवतायां रमायां सरस्वतीभारत्योश्च, वाचस्पतौ ब्रह्मणि वायौ च गताय तत्तन्नियन्त्रे च, अत एव सर्वगतत्वात् सर्वनियन्तृत्वाच्च महते विष्णवे नम इति। नमउक्तिमिति समस्तपदस्य विग्रहवाक्यं दर्शयति– **नम इत्युक्तिम्**। न मम किञ्चित्। सर्वं त्वदधीनम्। त्वदायत्तं मम नमनमपीत्युक्तिर्नमउक्तिः। 'न ऋते त्वत् क्रियते किञ्चन' इत्यादेः। केचित् 'नमः। उक्तिम्' इति प्रतृण्णंपठन्ति। तत्पक्षे पुनरितिशब्दाध्यारेण योजनीयमिति चानेन सूचितं भवति। **स्वयमेव भगवानन्यत्र** ऋग्भाष्य **आह**। अत्र **'ते'** इत्यनुदात्तं हि पठ्यते। 'अनुदात्तं सर्वमपादादौ' [अष्टा.सू.८.१.१८]। 'पदात्' इति पूर्वसूत्रम्। पदात् परं अपादादौ च प्रयुक्तं वक्ष्यमाणं सर्वमनुदात्तं स्यादिति। किं तत् सर्वम्? युष्मदस्मदादेशभूतं त्वामेत्यादिकम्। 'तेमयावेकवचनस्य' इति चोपरितनं सूत्रम् [८.१.२२] ॥ * ॥

'हिरण्मयेन पात्रेण–' इत्याद्याः, '–नमउक्तिं विधेम' इत्यन्ताश्चत्वारो मन्त्रा बृहदारण्यकेऽपि सप्तमाध्यायान्ते पठ्यन्ते। तत्र चैवमाह भगवान् भाष्यकारः–'सूर्यमण्डलनाम्ना तु पात्रेण स्वमुखं हरिः। पिधायैव जगत् सर्वं पश्यत्यमितविक्रमः। उदकं पीयतेऽनेन तमसस्त्रायते जगत्। यतोऽतः पात्रमुद्दिष्टं

विद्वद्भिः सूर्यमण्डलम् । पूषा पूर्णत्वतो विष्णुर्दृष्टये विष्णुधर्मिणः । स्वमुखं प्रकाशयेदेकं नान्यथा तु कथञ्चन । नान्यो यत् तादृशो ज्ञाता तस्मादेक-ऋषिर्हरिः । यमो नियमनात् प्रोक्तः सूर्य ऊरीकृतेरयम् । ज्ञेयः प्रजापतेरेव प्राजा-पत्यस्ततः स्मृतः । प्राणे स्थितो यः पुरुषः सोऽसावहमिति स्मृतः । अहेयत्वादसुत्वाच्च मेयत्वाच्चास्मिनामकः । अदोषत्वाद इत्युक्तो वायुस्तन्निलयो यतः । अनिलं तत एवासावमृतं चेति कीर्त्यते । तदाश्रयोऽपि ह्यमृतः किमु साक्षात् स्वयं हरिः । क्रतुश्च ज्ञानरूपत्वात् स एव हि जनार्दनः । सोऽग्नि-रङ्गप्रणेतृत्वात् विश्वज्ञानविदां वरः इति च' इति । गायत्रीसंहितागतान्येतानि वचनानि । सुष्ठु ऊरीक्रियते विद्वद्भिरिति सूर्यः । असुत्वात् सर्वप्रेरकत्वात् मीयत इति सर्ववेदमेयत्वाच्च अस्मिनामकः । अदोषत्वाद इत्युक्तो हरिः । तस्य निलय आश्रय इति वायुरनिलम् । 'वयुनानि विद्वान्' विश्वज्ञानविदां वर इति ॥ ❋ ॥

तथाच मन्त्रार्थः– हे **अग्ने देव**, सर्वाङ्गानां नेतर्नारायण, **नय** मां **सुपथा** ज्ञानमार्गेण **राये** मोक्षरूपायै सम्पदे । यतस्त्वमेव सर्वेषां नः **विश्वानि वयुनानि** ज्ञानानि **विद्वान्** । **जुहुराणं** भारभरेणास्मान् कुब्जान् कुर्वदेनः पापमस्मत्तो **युयोधि** वियोजय । भक्तिज्ञानाभ्यां **भूयिष्ठां 'ते नमः'** इत्युक्तिं केवलं **विधेमेति** ॥ १८ ॥

भाष्यश्लोकमेव स्वयं त्रिभिरुपश्लोकयति– **सृष्टीत्यादिना** ॥ ❋ ॥ **सुसान्द्रा गुणा** एव यन्मूर्तिः ॥ ❋ ॥ नारायणायेत्येतत् **श्रीवल्लभाय** इति व्याचख्यौ । नारायाः श्रियोऽयनो नारायण इति ॥ ❋ ॥ **बळादौ** 'बळित्था तद्वपुषे धायि' इत्यादौ प्राणाग्निसूक्ते । बट् दर्शतमिति श्रौतं पदद्वयं मनसि निधायोक्तम् **बलज्ञानवतः** इति । **रमेशे कृतवान्** अर्पितवान् ॥ ❋ ॥ **हरावर्पयतीन्दि-रेशे** । तदनेन 'कुर्वन्नेवेह कर्म्माणि' इति विहितमनुष्ठितं भवति । **अस्य इन्दिरेशस्य तुष्ट्यै** ॥ ❋ ॥ हरेः गुरुपरम्परायाश्च नत्या ग्रन्थमुपसंहरति– **वन्दे रमेशम्** । **मद्गुरूंश्च** त्रिविक्रमार्यादिकान् ॥ ❋ ॥

नमामि यज्ञभोक्तारं यज्ञदेवं सदक्षिणम् ।
नमामि सर्वज्ञमुनिं नमामि त्रिकुचान्वयान् ॥ * ॥

नाम्ना विद्यामान्यान् यशसा मान्यानपि त्वसामान्यान् ।
विद्वद्वरमूर्धन्यान् धन्यान् प्रणतोऽस्मि देशिकाचार्यान् ॥ * ॥

नारायणार्यं पितरं विपश्चिद्गणतल्लजम् ।
तर्ककर्कशपाथोधितरणाय प्लवायितम् ॥ * ॥

मातरं सत्यभामां च नतोऽस्म्यथ पितामहीम् ।
नाम्ना पद्मावतीं चारुमतिं बुधमतल्लिकाम् ॥ * ॥

पितृव्यं श्रीनिवासार्यमन्यांश्च ज्ञानदान् गुरून् ।
नमामि शिरसा भक्त्या वेदमार्गप्रसक्तये ॥ * ॥

इमामाचार्यगोविन्दः प्रमृष्टां शब्दतोऽर्थतः ।
वितेने विमलां टीकां विदुषामेव तोषणीम् ॥ * ॥

**इत्याचार्यगोविन्दस्य कृतिषु याज्ञीयमन्त्रव्याख्यानटीकापञ्चिका**
**उपनिषद्भावचन्द्रिका सम्पूर्णा**

—o—

# याज्ञीयमन्त्रोपनिषत्

[संहितापाठः पदपाठश्च]

॥ हरिः ओ३म् ॥

पूर्ण्णमदः पूर्ण्णमिदम्पूर्ण्णात्पूर्ण्णमुदच्यते ।
पूर्ण्णस्यपूर्ण्णमादायपूर्ण्णमेवावशिष्यते ॥
ओ३म् ॥ शान्तिश्शान्तिश्शान्तिः ॥

पूर्ण्णम् । अदः । पूर्ण्णम् । इदम् । पूर्ण्णात् । पूर्ण्णम् । उदच्यत इत्युत्+अच्यते ॥ पूर्ण्णस्य । पूर्ण्णम् । आदायेत्या+दाय । पूर्ण्णम् । एव । अव । शिष्यते ॥ ओ३म् ॥ शान्तिः । शान्तिः । शान्तिः ॥

[अष्टादश पदानि ।]

ओ३म् ॥ ईशावास्यमिदँसर्वय्यँत्किञ्चजगत्याञ्जगत् ।
तेनत्यक्तेनभुञ्जीथामागृधः कस्यस्विद्धनम् ॥ १ ॥

ईशावास्यमितीश+आवास्यम् । [ईशा । वास्यम् ।] इदम् । सर्वम् । यत् । किम् । च । जगत्याम् । जगत् ॥ तेन । त्यक्तेन । भुञ्जीथाः । मा । गृधः । कस्य । स्वित् । धनम् ॥ १ ॥

[षोडश पदानि, सप्तदश वा ।]

कुर्वन्नेवेहकर्म्माणिजिजीविषेच्छतँसमाः ।
एवन्त्वयिनान्यथेतोस्तिनकर्म्मलिप्यतेनरे ॥ २ ॥

कुर्वन्। एव। इह। कर्म्माणि। जिजीविषेत्। शतम्। समाः॥ एवम्। त्वयि। न। अन्यथा। इतः। अस्ति। न। कर्म्म। लिप्यते। नरे॥ २॥

[सप्तदश पदानि।]

असुर्यानामतेलोकाऽअन्धेनतमसावृताः।
ताꣳस्तेप्रेत्याभिगच्छन्तियेकेचात्महनोजनाः ॥ ३ ॥

असुर्याः। नाम। ते। लोकाः। अन्धेन। तमसा। आवृता इत्या+वृताः॥ तान्। ते। प्रेत्येति प्र+इत्य। अभि। गच्छन्ति। ये। के। च। आत्महन इत्यात्म+हनः। जनाः॥ ३॥

[सप्तदश पदानि।]

अनेजदेकम्मनसोजवीयोनैनद्देवाऽआप्नुवन्पूर्वमर्षत्।
तद्धावतोन्यानत्येतितिष्ठत्तस्मिन्नपोमातरिश्वादधाति ॥ ४ ॥

अनेजत्। एकम्। मनसः। जवीयः। न। एनत्। देवाः। आप्नुवन्। पूर्वम्। अर्षत्॥ तत्। धावतः। अन्यान्। अति। एति। तिष्ठत्। तस्मिन्। अपः। मातरिश्वा। दधाति॥ ४॥

[विꣳशतिः पदानि।]

तदेजतितन्नेजतितद्दूरेतद्वन्तिके।
तदन्तरस्यसर्वस्यतदुसर्वस्यास्यबाह्यतः ॥ ५ ॥

तत्। एजति। तत्। न। एजति। तत्। दूरे। तत्। ऊँ इत्यूँ। अन्तिके॥ तत्। अन्तः। अस्य। सर्वस्य। तत्। ऊँ इत्यूँ। सर्वस्य। अस्य। बाह्यतः॥ ५॥

[एकोनविꣳशतिः पदानि।]

यस्तुसर्वाणिभूतान्यात्मन्येवानुपश्यति ।
सर्वभूतेषुंचात्मानन्ततोनविजुंगुप्सते　　　॥ ६ ॥

यः । तु । सर्वाणि । भूतानि । आत्मनि । एव । अनुपश्यतीत्यनु+पश्यति ॥ सर्वभूतेष्विति सर्व+भूतेषु । च । आत्मानम् । ततः । न । वि । जुगुप्सते ॥ ॥ ६ ॥

[चतुर्दश पदानि ॥]

यस्मिन्त्सर्वाणिभूतान्यात्मैवाभूद्विजानतः ।
तत्रकोमोहःकश्शोकऽएकत्वमनुपश्यतः　　　॥ ७ ॥

यस्मिन् । सर्वाणि । भूतानि । आत्मा । एव । अभूत् । विजानत इति वि+जानतः । तत्र । कः । मोहः । कः । शोकः । एकत्वमित्येक+त्वम् । अनुपश्यत इत्यनु+पश्यतः ॥ ७ ॥

[चतुर्दश पदानि ॥]

सपर्यगाच्छुक्रमकायमव्रणमस्नाविरꣳशुद्धमपापविद्धम् ।
कविर्म्मनीषीपरिभूस्स्वयम्भूर्याथातथ्यतोर्त्थान्व्यदधाच्छाश्वतीभ्यः
समाभ्यः ॥ ८ ॥

स । परि । अगात् । शुक्रम् । अकायम् । अव्रणम् । अस्नाविरम् । शुद्धम् । अपापविद्धमित्यपाप+विद्धम् ॥ कविः । मनीषी । परिभूरिति परि+भूः । स्वयम्भूरिति स्वयम्+भूः । याथातथ्यतः । अर्त्थान् । वि । अदधात् । शाश्वतीभ्यः । समाभ्यः ॥ ८ ॥

[एकोनविꣳशतिः पदानि ।]

अन्धन्तमःप्रविशन्तियेविद्यामुपासते ।
ततोभूयऽइवतेतमोयऽउंविद्यायांरताः ॥ ९ ॥

अन्धम् । तमः । प्र । विशन्ति । ये । अविद्याम् । उपासत इत्युप+आसते ॥
ततः । भूयइवेति भूयः+इव । ते । तमः । ये । ऊँ इत्यूँ । विद्यायाम् । रताः
॥ ९ ॥

[पञ्चदश पदानि ।]

अन्यदेवाहुर्विद्ययान्यदाहुरविद्यया ।
इतिशुश्रुमधीराणाँय्येनस्तद्व्याचचक्षिरे ॥ १० ॥

अन्यत् । एव । आहुः । विद्यया । अन्यत् । आहुः । अविद्यया ॥ इति ।
शुश्रुम । धीराणाम् । ये । नः । तत् । व्याचचक्षिर इति व्या+चचक्षिरे
॥ १० ॥

[चतुर्दश पदानि ।]

विद्याञ्चाविद्याञ्चयस्तद्वेदोभयंसह ।
अविद्ययामृत्युन्तीर्त्वाविद्ययामृतमश्नुते ॥ ११ ॥

विद्याम् । च । अविद्याम् । च । यः । तत् । वेद । उभयम् । सह ॥
अविद्यया । मृत्युम् । तीर्त्वा । विद्यया । अमृतम् । अश्नुते ॥ ११ ॥

[पञ्चदश पदानि ।]

अन्धन्तमःप्रविशन्तियेसम्भूतिमुपासते ।
ततोभूयऽइवतेतमोयऽउसम्भूत्यांरताः ॥ १२ ॥

अन्धम्। तमः। प्र। विशन्ति। ये। असम्भूतिमित्यसम्+भूतिम्। उपासत इत्युप+आसते॥ ततः। भूयइवेति भूयः+इव। ते। तमः। ये। ऊँ इत्यूँ। सम्भूत्यामिति सम्+भूत्याम्। रताः॥ १२॥

[पञ्चदश पदानि।]

अन्यदेवाहुस्सम्भवादन्यदाहुरसम्भवात्।
इतिशुश्रुमधीराणाँय्येनस्तद्व्याचचक्षिरे ॥ १३॥

अन्यत्। एव। आहुः। सम्भवादिति सम्+भवात्। अन्यत्। आहुः। असम्भवादित्यसम्+भवात्॥ इति। शुश्रुम। धीराणाम्। ये। नः। तत्। व्याचचक्षिर इति व्या+चचक्षिरे॥१३॥

[चतुर्दश पदानि।]

सम्भूतिश्चविनाशश्चयस्तद्वेदोभयꣳसह।
विनाशेनमृत्युन्तीर्त्वासम्भूत्यामृतमश्नुते ॥१४॥

सम्भूतिमिति सम्+भूतिम्। च। विनाशमिति वि+नाशम्। च। यः। तत्। वेद। उभयम्। सह॥ विनाशेनेति वि+नाशेन। मृत्युम्। तीर्त्वा। सम्भूत्येति सम्+भूत्या। अमृतम्। अश्नुते॥ १४॥

[पञ्चदश पदानि।]

हिरण्मयेनपात्रेणसत्यस्यापिहितम्मुखम्।
तत्त्वम्पूषन्नपावृणुसत्यधर्म्मायदृष्टये ॥ १५॥

हिरण्मयेन। पात्रेण। सत्यस्य। अपिहितमित्यपि+हितम्। मुखम्॥ तत्। त्वम्। पूषन्। अप। आ। वृणु। सत्यधर्म्मायेति सत्य+धर्म्माय। दृष्टये ॥ १५॥

[त्रयोदश पदानि।]

पूषन्नेकऽऋषेयमसूर्यप्राजापत्यव्यूहरश्मीन्त्समूहतेजोयत्तेरूप-
ङ्कल्याणतमन्तत्तेपश्यामि। योसावसौपुरुषस्सोहमस्मि ॥ १६ ॥

पूषन्। एकऋष इत्येक+ऋषे। यम। सूर्य। प्राजापत्य। वि। ऊह। रश्मीन्। सम्। ऊह। तेजः। यत्। ते। रूपम्। कल्याणतममिति कल्याण+तमम्। तत्। ते। पश्यामि॥ यः। असौ। असौ। पुरुषः। सः। अहम्। अस्मि ॥ १६ ॥

[पञ्चविꣳशतिः पदानि।]

वायुरनिलममृतमथेदम्भस्मान्तꣳशरीरम्।
ओङ्क्रतोस्मरकृतꣳस्मरक्रतोस्मरकृतꣳस्मर ॥ १७ ॥

वायुः। अनिलम्। अमृतम्। अथ। इदम्। भस्मान्तमिति भस्म+अन्तम्। शरीरम्॥ ओ३म्। क्रतो इति क्रतो। स्मर। कृतम्। स्मर। क्रतो इति क्रतो। स्मर। कृतम्। स्मर॥ १७॥

[षोडश पदानि।]

अग्नेनयसुपथारायेऽअस्मान्विश्वानिदेववयुनानिविद्वान्।
युयोध्यस्मज्जुहुराणमेनोभूयिष्ठान्तेनमऽउक्तिँविधेम॥ १८ ॥

अग्ने। नय। सुपथेति सु+पथा। राये। अस्मान्। विश्वानि। देव। वयुनानि। विद्वान् ॥ युयोधि। अस्मत्। जुहुराणम्। एनः। भूयिष्ठाम्। ते। नमउक्तिमिति नमः+उक्तिम्। विधेम॥ १८॥

[सप्तदश पदानि।]

ओम् ॥ पूर्ण्णमदःपूर्ण्णमिदम्पूर्ण्णात्पूर्ण्णमुदच्यते ।
पूर्ण्णस्यपूर्ण्णमादायपूर्ण्णमेवावशिष्यते ॥
ओम् ॥ शान्तिश्शान्तिश्शान्तिः ॥

[तथाच संहत्य अष्टादश मन्त्राः । अशीतिश्च द्वे शते च पदानि (२८०) । काण्वपाठे त्वेकाशीतिः(२८१) । शान्तिमन्त्रेण सह अष्टौ च नवतिश्च द्वे शते च(२९८) । काण्वपाठे नव च नवतिश्च (२९९) । त्रिꣳशच्च षट् शतानि चाक्षराणि(६३०) । शान्तिमन्त्रेण सहाष्टचत्वारिꣳशच्च षट् शतानि च (६४८) ॥]

—०—

## माध्यन्दिनसंहितापठिता उपनिषन्मत्राः

॥ हरिः ओ३म् ॥

ईशा वास्यमिदꣳ सर्वं यत् किं च जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद् धनम् ॥ १ ॥

कुर्वन्नेवेह कर्म्माणि जिजीविषेच्छतꣳ समाः ।
एवं त्वयि नान्यथेतोऽस्ति न कर्म्म लिप्यते नरे ॥ २ ॥

असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः ।
ताꣳस्ते प्रेत्यापि गच्छन्ति ये के चाऽत्महनो जनाः ॥ ३ ॥

अनेजदेकं मनसो जवीयो नैनद् देवा आप्नुवन् पूर्वमर्शत् ।
तद् धावतोऽन्यानत्येति तिष्ठत् तस्मिन्नपो मातरिश्वा
दधाति ॥ ४ ॥

तदेजति तन्नैजति तद् दूरे तद्वन्तिके ।
तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः ॥ ५ ॥

यस्तु सर्वाणि भूतान्यात्मन्नेवानुपश्यति ।
सर्वभूतेषु चाऽत्मानं ततो न वि चिकित्सति ॥ ६ ॥

यस्मिन् त्सर्वाणि भूतान्यात्मैवाभूद् विजानतः ।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥ ७ ॥

स पर्यगाच्छुक्रमकायमव्रण-
मस्नाविरꣳ शुद्धमपापविद्धम् ।

कविर्म्मनीषी परिभूः स्वयम्भू-
र्याथातथ्यतोऽर्त्थान् व्युदधाच्छाश्वतीभ्यः समाभ्यः ॥ ८ ॥

अन्धं तमः प्र विशन्ति येऽसम्भूतिमुपासते।
ततो भूयइव ते तमो य उ सम्भूत्याᳬं रताः ॥ ९ ॥

अन्यदेवाऽहुः सम्भवादन्यदाहुरसम्भवात्।
इति शुश्रुम धीराणां ये नस्तद् विचचक्षिरे ॥ १० ॥

सम्भूतिं च विनाशं च यस्तद् वेदोभयᳬं सह।
विनाशेन मृत्युं तीर्त्वा सम्भूत्याऽमृतमश्नुते ॥ ११ ॥

अन्धं तमः प्र विशन्ति येऽविद्यामुपासते।
ततो भूयइव ते तमो य उ विद्यायाᳬं रताः ॥ १२ ॥

अन्यदेवाऽहुर्विद्याया अन्यदाहुरविद्यायाः।
इति शुश्रुम धीराणां ये नस्तद् विचचक्षिरे ॥ १३ ॥

विद्यां चाविद्यां च यस्तद् वेदोभयᳬं सह।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥ १४ ॥

वायुरनिलममृतमथेदं भस्मान्तᳬं शरीरम्।
ओ३म् क्रतो स्मर क्लिबे स्मर कृतᳬं स्मर ॥ १५ ॥

अग्ने नय सुपथा राये अस्मान्
विश्वानि देव वयुनानि विद्वान्।
युयोध्यस्मज्जुहुराणमेनो
भूयिष्ठां ते नम उक्तिं विधेम ॥ १६ ॥

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्।
योऽसावादित्ये पुरुषः सोऽसावहम्। ओ३म् खं ब्रह्म ॥ १७॥

**इति माध्यन्दिनसंहितागता याज्ञीयमन्त्रोपनिषत् समाप्ता**
**[माध्यन्दिनसंहितायां चत्वारिंशोऽध्यायः]**

—०—

यज्ञं यज्ञवहं यज्ञपुरुषं यज्ञभावनम्।
यज्ञेश्वरं यज्ञभुजं वन्दे विष्णुं सदक्षिणम्॥ ※ ॥

माध्यन्दिनपाठानुसारी चायमर्थक्रमः– चतुर्थे मन्त्रे 'अर्षत्' इति काण्वपाठस्थाने माध्यन्दिनाः तालव्यशकारं पठन्ति–'अर्शत्' इति। व्यजानादित्येवार्थः। 'ऋश ऋष ज्ञाने' इति प्रतनो धातुपाठः सम्भाव्यते। उक्तमन्यैरपि–'ऋशी गताविति भौवादिकधातुसद्भावमाश्रित्य निर्वाहो बोध्यः' इति ॥ ※ ॥

पञ्चमे मन्त्रे काण्वाः एङि पररूपमाश्रित्य 'नेजति' इत्येव पठन्तीतीयानेव भेदः ॥ ※ ॥

षष्ठे मन्त्रे–'आत्मन्येवानुपश्यति' इत्यत्र 'आत्मन्नेवानुपश्यति' इति माध्यन्दिनानां पाठः। 'विजुगुप्सते' इत्यत्र 'विचिकित्सति' इति। 'आत्मन्' इति सप्तम्या लुक्। 'परमे व्योमन्' इति यथा। 'न विचिकित्सति' न संशेत इत्यर्थः। 'छिद्यन्ते सर्वसंशयाः' इति हि श्रूयते। कितधातोः संशयेऽर्थे चिकीर्षितप्रत्ययः। 'कित निवासे रोगापनयने च। चकारात् संशये च' इति हि पठन्ति। कुत्रचिद् गृहादौ न स्वत्वाभिमानेन विशिष्य निवस्तुमिच्छतीति वा ॥ ※ ॥

दशमे त्रयोदशे च मन्त्रे 'व्याचचक्षिरे' इत्यत्र 'विचचक्षिरे' इति पाठान्तरम्। समानोऽर्थः। अथच त्रयोदशे–'अन्यदेवाऽहुर्विद्याया अन्यदाहुरविद्यायाः' इति च पाठभेदः। विद्यायाः फलमन्यदेवेत्यादिः स्फुटोऽर्थः। एतदनुगुणतया काण्वपाठेऽपि विभक्तिव्यत्ययं मन्यन्ते वेदान्तदेशिकप्रभृतयः–'व्यत्ययानुशासनात्

पञ्चम्यर्थे तृतीया। अन्यशब्दान्वयात्। 'अन्यदेवाऽहुः सम्भवात्' इति वक्ष्यमाण-सारूप्याच्च' इति। तदन्ये रामानुजीया नानुमन्यन्ते–'अत्रान्यपदयोर्द्वयोरपि परस्परसमभिव्याहृतविद्याविद्यासाध्यफलभेदपरतायाः स्वरसत एव लाभेनान्य-पदानन्वयहेतुना विद्याविद्याशब्दगततृतीययोश्छान्दसव्यत्ययेनावधिपञ्चम्यन्त-परतास्वीकारेण केषाञ्चिद् व्याख्यानमयुक्तमेव' इति ॥ ✻ ॥

माध्यन्दिनानां पाठे पञ्चदशे मन्त्रे 'क्लिबे स्मर' इत्यधिकम्। क्लिश्यतो जनान् वेति धावति दुःखान्मोचयितुमिति क्लिबिर्भगवान्। यथा गजेन्द्रं ग्राहग्रहात्। यथा वा द्रौपदीं वस्त्रापहारात्। वी गतौ। वस्य बः। मैत्र्या करुणया मोदेन वा क्लिन्नान् सज्जनेषु, तपसा च क्लिष्टान्, परार्थं क्लिश्यतः, दुर्जनैश्च क्लिशितान् प्रीत्योद्दिधीर्षतीति च क्लिबिः। 'ब कामन' इति प्रतनो धातुपाठः। 'क्लिबे क्लीबत्वाय ममाधाष्टर्याय स्मर' इत्यपि व्याचक्षते। 'क्लीब अधाष्टर्ये' इति धातोः। नातिस्वरसमेतत्। 'क्लिबे क्लृप्ताय पुण्यलोकाय' इत्यन्ये ॥ ✻ ॥

'योऽसावादित्ये पुरुषः सोऽसावहम्' इति सप्तदशे च मन्त्रे पाठभेदः। य आदित्यगतः पुरुषः स एव च मयि सन्निहित इत्यर्थः। 'स यश्चायं पुरुषे यश्चासावादित्ये स एकः' इति श्रवणात्। मयि स्थितः सन्नहंशब्दवाच्य इति च ॥ ✻ ॥

'ओ३म् खं ब्रह्म' इति मन्त्रभागः काण्वैर्न पठ्यते। खं ज्ञानरूपं ब्रह्मे-त्यर्थः। 'कं ब्रह्म खं ब्रह्म' इति च च्छन्दोगोपनिषत्। 'नैजानन्दबलोद्रेकः कमित्युक्तो मनीषिभिः। बलज्ञानसमहारः पूर्णं खमिति शब्दितम्' इति च स्मरन्ति। खन्यतेऽनेन इति खम्। पदार्थजातमवदार्यावदार्य सूक्ष्मातिसूक्ष्ममपि येनावबुद्ध्यते तज्ज्ञानं परिपूर्णं खमित्युच्यत इत्यर्थः ॥ ✻ ॥

**इमामाचार्यगोविन्दो वितेने खिलटिप्पणीम्।**
**माध्यन्दिनोपनिषदो विदुषामेव तोषणीम् ॥ ✻ ॥**

——०——



श्रीमदानन्दतीर्थभगवत्पादप्रणीत-
भाष्यभूषिता

# काठकोपनिषत्

श्रीवामनपण्डिताचार्यविरचितया श्रीमद्भाष्य-
टीकया, आचार्यगोविन्दकृतया उपनिषद्-
भावचन्द्रिकाख्यया तत्पञ्चिकया च समेता



॥ हरिः ओ३म् ॥

सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै ।
तेजस्वि नावधीतमस्तु मा विं द्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

## भाष्यम्

ओ३म् ॥ नमो भगवते तस्मै[1] सर्वतः परमाय ते ।
सर्वप्राणिहृदिस्थाय वामनाय नमो नमः ॥ * ॥

## टीका

श्रीवामन सदानन्द प्राणापाननियामक ।
भूतभव्याखिलेशाय भूयोभूयो नमोनमः ॥ * ॥

नमोऽस्तु व्यासरूपाय निर्दोषगुणरूपिणे ।
यज्ज्ञानभास्करे सर्ववेदार्थोऽयं लवायते ॥ * ॥

मुख्यप्राणाय मध्वाय पूर्णप्रज्ञाय सर्वदा ।
व्यासशिष्यप्रधानाय त्रैलोक्यगुरवे नमः ॥ * ॥

सत्तत्वदीपिकाचार्यान् वन्दे विद्वन्महामणीन् ।
सच्छास्त्राभिरतान् सर्वानपि वन्देऽथ सज्जनान् ॥ * ॥

काठकोपनिषद्भाष्यं श्रीमन्मध्वकृतं परम् ।
व्याख्यास्यामो यथाबोधं प्रीयन्तां सर्वसज्जनाः ॥ * ॥

---

१. प्राचीनादर्शे 'ॐ नमो भगवते तस्मै' इति नवाक्षरः पादः पठ्यते ।

**‘नमो भगवते तस्मै–’** इत्यादिश्लोकेन श्रीमदानन्दतीर्थभगवत्पादाचार्य एतद् भाष्यमारभमाणः स्वेष्टदेवतायै विष्णवे नमस्करोति मङ्गलाचरणार्थम् । स्वामित्वेन गुरुत्वेन पितृत्वादिना च नम्यत्वात् त्रिः **नम** इत्युक्तिः । योऽसौ काठकशाखायाम्– ‘ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति । मध्ये वामनमासीनं विश्वे देवा उपासते’[२.३.३] इति समस्तदेवोपास्यः श्रूयते स एव ह्यत्र **‘सर्वप्राणिहृदिस्थाय वामनाय नमोनमः’** इत्युक्तः । तस्माद् तद्भाष्यमिदं क्रियत इति वस्तुनिर्देशोऽप्यर्थतः कृतो भवति । अपिचाधिकार्यादयश्चात्र सूचिताः । तथाहि– नन्तृनम्यावधिकारिविषयौ । वामं शुभं मोक्षफलं नयतीति वामनशब्देन प्रयोजनम् । उपास्योपासकयोर्नम्यनन्त्रोर्जिज्ञास्यजिज्ञासक-भावः सम्बन्धोऽपि सूचितः ॥ ※ ॥

## भावचन्द्रिका

हृदि स्थितं सदानन्दं परमं तं नमामि यम् ।
मध्ये वामनमासीनं विश्वे देवा उपासते ॥ ※ ॥

नमो व्यासाय मध्वाय तत्वदीपाय सादरम् ।
नमोऽस्तु तत्वदेवेभ्यो गुरुभ्यश्च नमोनमः ॥ ※ ॥

शशाप नचिकेतसं निभृतचेतसं तत्पिता
सतामभिमतो वरः स तु वभूव लोकोत्तरः ।
सुषाव च वरत्रयं पितृपतिः सुतुष्टस्तदा
ददावमृतमेव यन्मृतिमृतस्य मृत्युर्मुदा ॥ ※ ॥

अभिलप्य नमोवाकं तस्मै तस्मै च तस्मै च ।
तस्य च तस्य च निषदं विशदं विवरीषते कश्चित् ॥ ※ ॥

‘शान्त आत्मनि’[१.३.१३] इति श्रुतिं स्मरन्नाह– **सदानन्देति** । ‘न प्राणेन नापानेन’ [२.३.५] इत्यादि– **‘प्राणापाननियामक’** इति । ‘ईशानो भूतऽभव्यस्य’ [२.२.१२–१३] इति च **‘भूतभव्याखिलेशाय’** इति ॥ ※ ॥

**व्यासरूपाय भूतभव्याखिलेशाय** वामनाय **नमोऽस्तु । लवायते** परमाणुकणायते ॥ ❋ ॥ **सर्वदा पूर्णप्रज्ञाय सर्वदा नमः** ॥ ❋ ॥ **सच्छास्त्राभिरतान् सत्तत्वदीपिकाचार्यान्, सर्वांश्च** विद्वज्जनान् ॥ ❋ ॥ **काठकोपनिषद्भाष्यम् ।** काठकानामृषीणामियमुपनिषद् भवति । ये कठन्ति ते कठाः । कठोरतपस ऋषयः । कठ कृच्छ्रजीवने । कठो वैशम्पायनशिष्यः कश्चन ऋषिः । कठेन प्रोक्तं येऽधीयते तेऽपि कठाः । तेषामियमुपनिषत् काठकी भवति । तथा हीयं वैयाकरणानां प्रक्रिया–'कलापिवैशम्पायनान्तेवासिभ्यः' [अष्टा.सू.४.३.१०४] इति वैशम्पायनान्तेवासिनां ये वाचकाः शब्दास्तेभ्यो णिनिः प्रत्ययो विहितः । वैशम्पायनान्तेवासिनश्च नव भवन्ति– आलम्बिः, पलङ्गः, कमलः, ऋचाभः, आरुणिः, ताण्ड्यः, श्यामायनः, कठः, कलापी चेति । त एते चरका इत्यप्युच्यन्ते । यदाह जयादित्यः–'चरक इति वैशम्पायनस्याऽऽख्या । तत्सम्बन्धेन सर्वे तदन्तेवासिनश्चरका इत्युच्यन्ते' इति । ततश्च 'कठचरकाल्लुक्' [अष्टा.सू.४.३.१०७] । कठशब्दात् परस्य णिनेः, चरकशब्दात् परस्याणश्च लुग् भवति । कठाः । चरकाः । छन्दस्येव चायं नियमः । लोके तु कठेन प्रोक्तमधीयते ये ते काठकाः । तेनापि काठकानामियमुपनिषद् भवति । भगवद्विद्यालब्ध्यर्थं कृच्छ्रे तपसि वर्तमानो यः कोऽपि काठको भवति, स एवात्राधिकृतो भवतीत्यनेन सूचयति । नह्यननुष्ठिततपसां क्षुद्रकामोपहतानामियमुपनिषदात्मानं विवृणुते । कथमुपनिषत्? उपरि निषादयति, उपरं वा भगवन्तं नितरां सादयति गमयति, उपसदनेन वा नितरां सादयतीति । उपायं निरूप्य सादयतीति च ॥ ❋ ॥

अस्यां शाखायाम् **'सह नाववतु–'** इत्यादिः शान्तिमन्त्रः । **नौ** गुरुशिष्यौ **सहैवावतु** प्रविशतु भगवान् । पाठनपाटवाय गुरुम् । ग्रहणपाटवायान्तेवासिनम् । रक्षतु वा । **सहैव नौ भुनक्तु** पालयतु । भोजयतु वा । वीर्यवद् यथा स्यात् तथा शोभनं कर्म **करवावहै** । अन्यत् स्फुटम् । विवृतश्चायं मन्त्रो ग्रन्थान्ते टीकाकृतैव ॥ ❋ ॥

अस्या उपनिषदो यमनचिकेतसावृषी। वैशम्पायनकठौ च। कठा अप्यृषयः। यथायथं छन्दांसि। विष्णुर्वामनात्मा देवतेति स्फुटम्। 'तद् विष्णोः परमं पदम्' [१.३.९] इति, 'मध्ये वामनमासीनं विश्वे देवा उपासते'[२.२.३] इति च प्रकटं श्रवणात्॥ ❊ ॥

**(भा.) 'अग्नौ विष्णुं सदा ध्यायंस्त्रिशोऽग्निं नाचिकेतकम्।**
**'यश्चयीत स तु प्राप्य स्वर्ग्गं तत्र भयातिगः।**
**'उष्य मन्वन्तरं कालममृतत्वं भजेत् क्रमात्' इति ब्रह्मसारे॥**

**(टी.)** ननु नात्र नारायणो विषयः। तदन्यस्यैव जिज्ञास्यत्वात्। तथाहि– 'शोकातिगो मोदते स्वर्गलोके'[१.१.१२;१८] इत्यग्निचित एव [1][स्वर्गो]-पदेशात् कर्मैव मीमांस्यं गम्यते। 'स्वर्गे लोके न भयं किञ्चनास्ति'[१.१.१२], 'कर्मणैव हि संसिद्धिम्' [भ.गी.३.२०] इत्यादेश्च। अग्निप्रश्नादिकं कर्माङ्गत्वेन बोद्धव्यम्, इत्याशङ्कां परिहरति– **'अग्नौ विष्णुम्–'** इत्यादि ब्रह्मसारवचनेन। **सः** अग्निचित् सदा विष्णुध्यानकर्तृत्वात् कर्मफलभोगेच्छया स्वर्गस्थितावपि अधःपातादि**भयातिगः**। 'नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वा इमं लोकं हीनतरं वाऽऽविशन्ति' [आथ.१.२.१०] इत्यज्ञानिनां तद्भयश्रवणात्। भगवद्ध्यानसामर्थ्यादिव ह्ययं क्रमेण मन्वन्तरान्ते कर्मफलावसाने साक्षात् **अमृतत्वं भजेत्**। अतो न कर्मणा मोक्ष इति सिद्धम्। तस्माद् विष्णुरेवात्र जिज्ञास्य इत्यभिप्रायः॥ ❊ ॥

**(भा.चं.)** न किञ्चिच्चिकेत चकारेति नचिकेताः। अन्तर्मुखत्वात्। यद्यपि 'कित निवासे' इति धातुपारायणिकाः पठन्ति। 'निर्माणे च' इति वक्तव्यम्। प्रयोगमनुगच्छन् हि धातुपाठो भवति। 'यच्चिकेत सत्यमित् तन्न मोघम्' [ऋ.सं.१०.५५.६] इति च प्रयोगः। नचिकेतसोऽयमग्निः नाचिकेतकः। ननु नाचिकेतस इति भाव्यम्। सत्यम्। छान्दसः सलोपः। 'त्रिनाचिकेतः–',

---

१. कोशे **'ब्रह्मोपदेशात्'** इति पठ्यते।

'नाचिकेतमुपाख्यानम्' इत्यादिश्रवणात् । यद्वा अदन्तोऽप्यस्ति नचिकेत-शब्दः । तेन नचिकेतस्यायं नाचिकेतकः । तद् यथा– अथर्वणे, अथर्वाय । **उष्य** उषित्वा । सोपसर्गस्यापि क्त्वा भवति प्राचां प्रयोगेषु– प्रार्थयित्वा । निरुप-सर्गस्यापि ल्यप्– उष्य । 'क्त्वाऽपि च्छन्दसि' [अष्टा.सू.७.१.३८] । छन्दसि छन्दस्तुल्येषु च ल्यप् क्त्वाऽपि स्यात्, क्त्वा च ल्यबपि स्यादिति वक्तव्यम् । 'समासेऽनञ्पूर्वे क्त्वा इत्येतस्य क्त्वा इत्ययमादेशो भवति छन्दसि विषये– कृष्णं वासो यजमानं परिधापयित्वा । असमासे ल्यबपि भवति– अर्च्य तान् देवान् गतः' इति वामनः ॥ ❊ ॥

**ओ३म् ॥ उशन् ह वै वाजश्रवसः सर्ववेदसं ददौ । तस्य ह नचिकेता नाम पुत्र आस ॥ १ ॥ तꣳ ह कुमारꣳ सन्तं दक्षिणासु नीयमानासु श्रद्धाऽऽविवेश[1] । सोऽमन्यत ॥ २ ॥**

**(भा.)** 'इच्छन् वाजश्रवोनप्ता ददौ सर्वस्वदक्षिणाम् ।
'उद्दालकः स्वर्ग्गलोकं ददौ गाश्च निरिन्द्रियाः ॥ ❊ ॥

**(टीका.)** एवं चेत् **'उशन् ह वै–'** इत्युपक्रमोक्तं सर्ववेदसदानं किमिच्छोरि-त्याकाङ्क्षायां स्वर्गेच्छोरित्याह– **इच्छन्नित्यादिना** गतिसारवचनेन । तर्हि तद्भगवज्जिज्ञासां विना कर्मस्वरूपजिज्ञासा किमिह समारब्धेति चेत् कर्मणो मोक्षसाधनत्वाभावज्ञापनार्थमित्यविरोधः । भगवत्प्रश्नादेस्तु तत्रतत्र सविस्तरं करिष्यमाणत्वात् । योऽसौ नाम्ना वाजश्रवा ऋषिस्तस्य नप्ता उद्दालकः **वाज-श्रवस** उक्तः । [2]**'उशन्' स्वर्गलोकमिच्छन्** । वश इच्छायामिति धातोः ।

---

१. **'श्रद्धाऽऽविवेश** । इतीयदेव क्वचित् पठ्यते । **'सोऽमन्यत'** इति न पठ्यते ।

२. यद्यप्यादर्शे– उषन् स्वर्गलोकमिच्छन् । उष इच्छायामिति धातोः' इति पठ्यते । लिपिकृत्प्रमादः सम्भाव्यते । आदर्शान्तरालाभादनिर्णय एव शरणम् । 'उशन्' इति सर्वव्याख्यानानामैककण्ठ्यमिति स एव पाठोऽत्राऽऽदृतः ।

**तस्य** उद्दालकस्य **पुत्रो नचिकेताः । तं श्रद्धा आविवेश** सद्धर्माचरण एव श्रद्धावानभूदित्यर्थः ।। १–२ ।।

**(भा.चं.) 'उशन् ह वै'** इति निपातद्वयमितिहासप्रसिद्धिं विस्मयमानन्दं चाऽह । उद्दालकः प्रसिद्धः । तस्य सर्वस्वदानं च । तच्च नचिकेतसा ब्रह्मविद्याविष्कारणाय हेतुरासेति आनन्दातिशयः। विस्मयश्च। **'तस्य ह'** इति पुत्रस्य लोकोत्तरतामास्वदते । **'तं ह'** इति वयसा कुमारोऽपि ज्ञानेन वृद्ध इति । **'उशन्' इच्छन्, स्वर्गलोकमि**ति यावत्, **'वाजश्रवसः' उद्दालकः 'सर्ववेदसं'** सर्वां सम्पदं दक्षिणात्वेन **ददौ** सर्वमेधेनेष्ट्वा । विद्यत इति वित्तं वेदः। सान्तम्। सत्ता हि वित्ताधीना। लोकेऽपि व्याहरन्ति–'तस्य किं विद्यत इति कन्या दीयते' इति । वेदयति सुखमिति वा वेदो दक्षिणा । तेन **'सर्व-वेदसम्' सर्वस्वदक्षिणाम्।** यत्र यज्ञावसाने सर्वं स्वमृत्विग्भ्यो दक्षिणात्वेन दीयते तेन सर्वमेधेन विश्वजिता यज्ञेन **इष्ट्वा** सर्ववेदसं सर्वस्वं **ददौ** । सर्वं वेदः **सर्ववेदसम्**। 'अन्-असन्तान्नपुंसकाच्छन्दसि' [अष्टा.सू.५.४.१००७] इति टच्प्रत्ययः। अनन्ताद् यथा–'हस्तिचर्मे' । असन्ताद् यथा–'मनुष्य-च्छन्दसम्' । **'सर्ववेदसम्'** । कथमुद्दालको वाजश्रवसः? आह– **वाजश्रवो-नप्तेति**। वाजश्रवसः पुत्री अरुणा । तस्या अयं पुत्र इति वाजश्रवसो नप्ता । 'नमति नयति वा नप्ता। पौत्रो दौहित्रो वा' इति वैयाकरणाः । अत्र तु दौहित्रः। 'न पतन्ति पितरोऽनेन' इति च निर्वदन्ति। तृन्तृचोः प्रत्यययो-र्निरूढो निपातितोऽयं शब्द इति दशपादिका [२.३]। नमतेर्नयतेश्च नबा-देशः। पततेराद्याक्षरमात्रावशेषः। 'अस्य चोद्दालकस्य त्रीण्यपत्यानि। द्वौ पुत्रौ श्वेतकेतुनचिकेतसौ, एका च पुत्री सुजाता नाम । यामुद्दालकशिष्यः कहोळ उपयेमे। तस्यामस्य जज्ञे तनयोऽष्टावक्रः' इति च कथा महाभारते [शां.प. १०६]। अत्र पुनः– 'वाजश्रवसः पुत्रो वाजश्रवसः' इति व्याख्यान्तो गति-सारवचनविरोधादेव निरस्ताः । कथं वाजश्रवाः? वाजमन्नम्। वाजं वादाख्यं ज्ञानयुद्धं च। अन्नदानेन ज्ञानदानेन च श्रवः कीर्तिरस्येति वाजश्रवाः। तेना-

ग्निचयनं ज्ञानदानादिकं च पूर्वाचार्यपरम्पराप्राप्तमित्याह । कथमुद्दालकः? अज्ञानादुद्धृत्य दालयति दारयति संसारमिति । 'दल विदारणे' । अहो तस्याप्यज्ञानमास। येन **स्वर्गलोकमिच्छन् निरिन्द्रिया** अपि **गा ददौ। तस्य** वाजश्रवसस्य उद्दालकस्य **नचिकेता** इति विदितनामा **पुत्रो** बभूव । **तं ह** नचिकेतसं **कुमारं** बालमेव **सन्तं श्रद्धा आविवेश**। काम्यत इति कुमारः। कमेरारन्, उच्चोपधायाः। कुत्सितं मानं रमणं चास्येति वा। **कुमारमपि सन्तं** ज्ञानिनं च ॥ १–२ ॥

**पीतोदका जग्धतृणा दुग्धदोहा निरिन्द्रियाः ।**
**अनन्दा नाम ते लोकास्तान्त्स गच्छति ता ददत् ॥ ३ ॥**

**स होवाच पितरं तत कस्मै मां दास्यसीति। द्वितीयं तृतीयम्।**
**तꣳ होवाच मृत्यवे त्वा ददानीति[1] ॥ ४ ॥**

**(भा.)** 'मां दत्वाऽपि न ते गावो दातव्या ईदृशा इति ।
'उवाच पुत्रस्तं बालस्तं[2] शशाप पिता स्वयम् ॥ * ॥

**(टी.)** निष्फलनिरिन्द्रियगोदानात् निरानन्दलोकान् गच्छतीति श्रद्दधदपि ददतं पितरमुवाच– **मां दत्वाऽपीति**। **'तत कस्मै मां दास्यसि'** इति एतावद् वचनं **द्वितीयं तृतीयं** चोवाच। अथ कुपितस्तत्पिता **मृत्यवे त्वा ददानीति** वदन् तं पुत्रं **शशाप** ॥ ३–४ ॥

**(भा.चं.)** आविष्टश्रद्धः **सोऽमन्यत– पीतोदका** इत्यादि। पीतमेवोदकम्, नेतः परं पातव्यमस्ति, यासां याभिर्वा, ताः। जग्धमेव तृणम्, दुग्ध एव दोहो यासाम्। यद् दुह्यते स दोहः क्षीरम्। जराजीर्णाः। **निरिन्द्रिया** असमर्थाः प्रजनने। **ताः** तांश्च **ददत्**। आश्रमे हि धेनवोऽपि भवन्ति। उक्षाणोऽपि भवन्ति । अत एव भाष्योदाहृतप्रमाणे **'ईदृशा'** इत्युक्तम् । धेनूनां दानं

१. **'ददामीति'** इति शङ्कररङ्गरामानुजयोः पाठः ।

२. **'बालः तं शशाप'** इति प्राचीनादर्शे विश्लिष्य पठ्यते ।

महाफलमिति, व्यत्यये दोषोऽपि महानिति **'ताः'** इति मुखत उक्तम्। दुग्धदोहत्वं च तासामेव। ये ते शास्त्रगदिता **अनन्दा नाम लोकाः**। नामेति प्रसिद्धौ। निरानन्दत्वादनन्दा इति प्रथिता लोकाः। **तान्** स निरिन्द्रियगोप्रदाता **गच्छति**। श्रदित्यास्तिक्यम्। तद् धत्ते इत्यास्तिक्यबुद्धिः श्रद्धा। पितोद्दालकश्च स्वयं ज्ञानी श्रद्धावांश्च। अथापि निष्फला निरिन्द्रिया गा ददाविति विस्मयते– **श्रद्दधदपि ददतं पितरमिति**। स्वयं श्रद्धधत्। अथापि तादृशीर्गा ददतं पितरं दृष्ट्वोवाच। 'श्रद्दधतमपि ददतम्' इत्यपि पाठः सम्भाव्यते। ज्ञानिनमपि तात्कालिकेन प्रारब्धकर्मणा पिहितनयनम्, **उवाच पुत्रस्तं** पितरं **बालः**। ईदृश्यश्च ईदृशाश्च ईदृशाः। **गावो न दातव्याः**। नरकपातहेतुत्वात्। तत्स्थाने मां देहि इति वदन्तमपि पुत्रमलक्षयित्वा गा ददतमेव पितरं पुत्रः पुनराह– **तत** तात **कस्मै मां दास्यसीति**। 'तातोऽनुकम्प्ये पितरि' इत्यभिधानम्। शिशुभाषया प्रेमातिशयेन तातमेव ततमाह। तथाहि भागवते सत्यभामावचनम्–'यो मे सनाभिवधतप्तहृदा ततेन–'[१०.७१.९]। 'ज्ञानेन ततोऽपि किमेवं कुरुषे' इति ध्वनिश्च। तं बालं पुत्रं **शशाप पिता**। **स्वयं पिता शशापेति** सर्वथाऽप्यसाम्प्रतमेतदित्याह। कविरप्याह–'विषवृक्षोऽपि संवर्ध्य स्वयं छेतुमसाम्प्रतम्' इति। किमिति? **'मृत्यवे त्वा ददानि' इति**। तव जीवनेन न किमपि फलम्, यः पितरमपि प्रतिवचनदानेन घातयसि। कश्च त्वां प्रतिगृह्णाति यस्तूष्णीकमन्तर्मुखो गृह एव तिष्ठसि। तस्मान्मृत्युरेव तवोचितः प्रतिग्रहीतेति श्रद्धाविष्टं सुतं प्रति कोपाविष्टस्य पितुर्वचनम्॥ * ॥

तदिदमुपाख्यानं तैत्तिरीयब्राह्मणेऽपि पठ्यते। महाभारतेऽप्यनुशासनपर्वणि। तथाहि तैत्तिरीया आमनन्ति–'उशन् ह वै वाजश्रवसः सर्ववेदसं ददौ। तस्य ह नचिकेता नाम पुत्र आस। तꣳ ह कुमारꣳ सन्तम्। दक्षिणासु नीयमानासु श्रद्धाऽऽविवेश। स होवाच। तत कस्मै मां दास्यसीति। द्वितीयं तृतीयम्। तꣳ ह परीत उवाच। मृत्यवे त्वा ददामीति। तꣳ ह स्मोत्थितं

वागभिवदति[१]। गौतम कुमारमिति। स होवाच। परेहि मृत्योर्गृहान्। मृत्यवे त्वाऽदामिति। तं वै प्रवसन्तं गन्तासीति होवाच। तस्य स्म तिस्रो रात्रीरनश्वान् वसतात्। स यदि त्वा पृच्छेत्। कुमार कति रात्रीरवात्सीरिति। तिस्र इति प्रतिब्रूतात्। किं प्रथमाꣳ रात्रिमाश्ना इति [२]। प्रजां त इति। किं द्वितीयामिति। पशूꣳस्त इति। किं तृतीयामिति। साधुकृत्यां त इति। तं वै प्रवसन्तं जगाम। तस्य ह तिस्रो रात्रीरनाश्वान् गृह उवास। तमागत्य पप्रच्छ। कुमार कति रात्रीरवात्सीरिति। तिस्र इति प्रत्युवाच[३]। किं प्रथमाꣳ रात्रिमाश्ना इति। प्रजां त इति। किं द्वितीयामिति। पशूꣳस्त इति। किं तृतीयामिति। साधुकृत्यां त इति। नमस्ते अस्तु भगव इति होवाच। वरं वृणीष्वेति। पितरमेव जीवन्नयानीति। द्वितीयं वृणीष्वेति [४]। इष्टापूर्तयोर्मेऽक्षितिं ब्रूहीति होवाच। तस्मै हैतमग्निं नाचिकेतमुवाच। ततो वै तस्येष्टापूर्ते ना क्षीयेते। नास्येष्टापूर्ते क्षीयेते। योऽग्निं नाचिकेतं चिनुते। य उ चैनमेवं वेद। तृतीयं वृणीष्वेति। पुनर्मृत्योर्मेऽपजितिं ब्रूहीति होवाच। तस्मै हैतमग्निं नाचिकेतमुवाच। ततो वै सोऽप पुनर्मृत्युमजयत् [५]। अप पुनर्मृत्युं जयति। योऽग्निं नाचिकेतं चिनुते। य उ चैनमेवं वेद' [तै.ब्रा.३.११.८] इति॥

दक्षिणासु दक्षिणात्वेन दत्तासु जरद्गवीषु ऋत्विग्भिर्नीयमानासु तमप्राप्तवयसं कुमारमेव सन्तम्, यत् क्रियते अजिगर्धिषया तत् करणीयम्, शास्त्रानुगुणतया तत् करणीयमिति श्रद्धा आविवेश। तं ह कोपपरीतः पितोवाच। तं ह स्म मृत्युलोकं प्रति प्रस्थितं स्वाच्छरीरादुत्थितमुद्गतमशरीरा वागभ्यवदत्। किमिति? हे गौतम, कुमारमेव सन्तं त्वां स ते पितोवाच–'परेहि, मृत्यवे त्वामदाम्' इति। सत्यं पितृवचनात् त्वं मृत्वा मृत्युं गन्तासि। अथापि प्रवसन्तं मृत्युं गन्तासीति होवाच वाग्देवता। यथा वागभ्यवदत् तथैव तं प्रवसन्तं मृत्युं जगाम नचिकेताः। अनाश्वान् अनश्नन्। 'उपेयिवाननाश्वाननूचानश्च'

[अष्टा.सू.३.२.१०९] इति निपातितोऽयं शब्दः। पूर्वशरीर एव पुनर्जीवन् प्रसन्नं पितरमयानीति प्रथमो वरः। अग्निस्थनारायणवेदनेन इष्टापूर्तोपलक्षितसर्वकर्मणां मोक्षे सुखाधिक्यहेतुतयाऽनश्वरत्वसम्पादनं द्वितीयः। ना क्षीयते नैव क्षीयेते। अत्ति संसारमित्यग्निनाम्नोऽन्तर्यामिणो विद्या मोक्षसाधनी तृतीयो वरः। वाग्देवताशीर्वचनमेवात्र काठकेऽनुक्तं नूतनं प्रमेयम्। अन्यत् सर्वं समानम्॥ ❊ ॥

अथ महाभारते चानुशासनपर्वणि[१] –

‘अत्राप्युदाहन्तीममितिहासं पुरातनम्।
‘ऋषिरौद्दालकिर्दीक्षामुपगम्य ततः सुतम्।
‘त्वं मामुप चरस्वेति नचिकेतमभाषत[२]॥

‘समाप्ते नियमे तस्मिन् महर्षिः पुत्रमब्रवीत्।
‘उपस्पर्शनसक्तस्य स्वाध्यायनिरतस्य च॥

‘इध्मा दर्भाः सुमनसः कलशश्चाभितो जलम्।
‘विस्मृतं मे तदादाय नदीतीरादिहाऽव्रज॥

‘गत्वाऽनवाप्य तत् सर्वं नदीवेगसमाप्लुतम्।
‘न पश्यामि तदित्येव पितरं सोऽब्रवीन्मुनिम्॥

‘क्षुत्पिपासासमाविष्टो मुनिरौद्दालकिस्तदा।
‘यमं पश्येति तं पुत्रमशपत् क्रोधमूर्छितः॥

‘तथा पित्रा स निहतो वाग्वज्रेण कृताञ्जलिः।
‘प्रसीदेति ब्रुवन्नेव गतसत्त्वोऽपतद् भुवि॥

---

१. दाक्षिणात्यपाठेऽयं ६०तमोऽध्यायः। तत्रापि कुम्भकोणपा.अ.१०६तमः। पुण्यपत्तनपा. अ.७१-तमः। दक्षिणोत्तरभेदेन च बहवोऽध्यायभेदा भवन्ति। प्रायो न द्वयोरैकरूप्यम्।

२. सम्प्रति महाभारते– ‘नाचिकेतमभाषत’, ‘नाचिकेतं पिता दृष्ट्वा’, ‘नाचिकेतः कुरूद्वह’ इत्येवं सर्वत्रापि दीर्घादि नामधेयं पठ्यते। प्रायः पारम्परिको भ्रमोऽयम्।

'नचिकेतं पिता दृष्ट्वा पतितं दुःखमूर्छितः ।
'किं मया कृतमित्युक्त्वा निपपात महीतळे ॥

'तस्य दुःखपरीतस्य स्वं पुत्रमुपगूहतः ।
'व्यतीतं तदहःशेषं सा चोग्रा शर्वरी तदा ॥

'पित्र्येणाऽस्रप्रपातेन नचिकेतः कुरूद्वह ।
'प्रास्पम्पदच्छयने शुभ्रे वृष्ट्या सस्यमिवाऽप्लुतम् ॥

'पर्यपृच्छत् ततः पुत्रं श्लाघ्यं प्रत्यागतं पुनः ।
'दिव्यगन्धैः समादिग्धं क्षीणस्वप्नमिवोत्थितम्' इति ॥

आपातत अन्यादृशीवेयं कथा, यां न कठाः पठन्ति, नापि तैत्तिरीयाः । कठाः किञ्चित् पेठुः । ततोऽधिकं किञ्चित् प्रास्तावि तैत्तिरीयब्राह्मणे । अवशिष्टां कथामाह भगवान् बादरायणो महाभारतसंहितायाम् । इयं हि वेदविदुषां परिपाटी यन्नैकत्र जिग्रन्थिषन्ति सर्वमपेक्षितं प्रमेयजातम् । मा च स्म तत्वजिज्ञासवोऽल्पदर्शना बुभूषन्निति ॥

वस्तुतः सम्प्रति महाभारते नचिकेत इति न पठ्यते । नाचिकेत इत्येव सार्वत्रिकः पाठः । भगवान् प्रमादोऽयं लिपिकृताम् । अदन्तं नचिकेतपदमेव श्रुत्यनुगुणं मूलपाठानुगुणमिति च शक्यं निश्चेतुम् । 'आधिक्येऽधिकम्' इति वा दैर्घ्यं वक्तव्यम् । तेन नचिकेत एव नाचिकेतः । तद्यथा –सुकेशो भारद्वाज एव सुकेशा भारद्वाजः ॥

ऋषिरौद्दालकिरिति । उद्दालक एव उद्दालकस्य पौत्रत्वादौद्दालकिरपि । तदेतत् स्फुटं श्रुतावपि– 'औद्दालकिरारुणिर्मत्प्रसृष्टः' इति । उद्दालकस्य स्नुषा किलारुणा । वाजश्रवसो दुहिता । तस्या अयं पुत्र इत्युद्दालको वाजश्रवसो दौहित्र उद्दालकस्य पौत्रः । उपस्पर्शनं स्नानाचमनादि । सुमनसः पूजार्थानि पुष्पाणि । नदीतीरे कलशादिकं नास्तीति यदाऽऽह तदैव कोपपरीत आस । ततश्च समाप्तयज्ञे बुभुक्षापरीतं पितरं 'तत कस्मै मां दास्यसि' इति

क्रियासमभिहारेण पृष्ट्वा पुनरधिकं कोपयामास । अतः क्षुत्पिपासासमाविष्टः कोपसमाविष्टश्च तनयं शशाप । 'मृत्यवे त्वां दक्षिणात्वेनादाम् । तमेव गत्वा पश्य' इति । अथच पुत्रं मृतं दृष्ट्वा स्वयमपि शोकमूर्छितः पपात । अथ परेद्युर्यमलोकान्निवृत्तस्तदेव पूर्वशरीरं प्रविवेशेति । एतेन त्रीणि दिनान्युपोषुषो नचिकेतसो मृत्युरात्मानं दर्शयामासेत्यादि केवलं तथा तस्य प्रत्यभादिति व्याख्येयम् । यदि तत्र तिस्रो रात्रीरुपावात्स्यत्, न न्यवर्तिष्यत परेद्युरेव । अथचाऽगमनानन्तरं नचिकेताः पितरमाह–

'कुर्वन् भवच्छासनमाशु यातो ह्यहं विशालां रुचिरप्रभासाम् ।
'वैवस्वतीं प्राप्य सभामपश्यं सहस्रशो योजनहैमभौमाम् ॥

'दृष्ट्वैव मामभिमुखमापतन्तं गृहं निवेद्याऽसनमादिदेश ।
'वैवस्वतोऽर्घ्यादिभिरर्हणैश्च भवत्कृते पूजयामास मां सः ॥

'ततस्त्वहं तं शनकैरवोचं वृतं सदस्यैरभिपूज्यावनम्य ।
'प्राप्तोऽस्मि ते विषयं धर्मराज लोकानहं यामि तन्मे विधत्स्व' इति च ॥

'यमोऽब्रवीन्मां न मृतोऽसि सौम्य यमं पश्येत्याह स त्वां तपस्वी'
इत्यादि च ।

न त्वं सर्वात्मना मृतोऽसि । पूर्वदेहस्य चरमतया त्यागो हि मृतिर्नाम । तं च पुनस्त्वं प्रवेक्ष्यसीति न मृतोऽसि । नापि शापभङ्गः । 'मृत्यवे त्वामदाम्, तं पश्य' इति किल पितोवाच । नतु सर्वात्मना म्रियस्वेति । कामं वृणीष्वेत्युक्तः कं काममवृणीतेत्याह–

'तेनैवमुक्तस्तमहं प्रत्यवोचं प्राप्तोऽस्मि ते विषयं दुर्निवर्त्यम् ।
'इच्छाम्यहं पुण्यकृतां समृद्धाँल्लोकान् द्रष्टुं यदि तेऽहं वरार्हः ॥

'यानं समारोप्य तु मां स देवो हयैर्युक्तं सुप्रभं भानुमन्तम् ।
'सन्दर्शयामास तदा स्म लोकान् सर्वांस्तथा पुण्यकृतां द्विजेन्द्र' इति च ॥

पुण्यलोकसन्दर्शनमुपनिषदनुक्तः प्रसङ्गः। पुण्यलोकान् सन्दर्श्यैवाऽह– 'इमाः रामाः सुरथाः सतूर्या नहीदृशा लम्भनीया मनुष्यैः' इत्यादि। एवं न केवलं नचिकेतसेऽध्यात्मविद्यामुपदिदेश। उद्दालकायापि किञ्चित् कालोचितं सन्दिदेशेत्याह–

'शापो ह्ययं भवतोऽनुग्रहाय प्राप्तो मया यत्र दृष्टो यमो मे।
'दातुर्व्युष्टिं तत्र दृष्ट्वा महार्हां निस्सन्दिग्धो दानधर्मांश्चरिष्ये॥

'इदं च मामब्रवीद् धर्मराजः पुनःपुनः सम्प्रहृष्टो द्विजर्षे।
'दाने तावत् प्रयतोऽभूः सदैव विशेषतो गोप्रदानं च कुर्याः' इति च॥

'इत्युक्तोऽहं धर्मराज्ञा महर्षे धर्मात्मानं शिरसाऽभिप्रणम्य।
'अनुज्ञातस्तेन वैवस्वतेन प्रत्यागमं भगवत्पादमूलम्' इत्यादि च॥

वाराहेऽपि नातिभिन्नेदृश्येव कथा पठ्यते [१९३-१९४ इत्यादिनाऽध्यायकदम्बेन]। तस्मान्न क्वापि विरोध आशङ्कनीयः वेदे वा वैदिके वा। उक्तं हि भगवता बादरायणेनैव–'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इति॥ * ॥

'पीतोदकाः' इति मन्त्रे अनुष्टुप् छन्दः। 'स होवाच' इत्यादि गद्यम्। 'बहूनामेमि' इत्युत्तरमन्त्रे च केवलाऽनुष्टुप्॥ ३–४॥

**बहूनामेमि प्रथमो बहूनामेमि मद्ध्यमः।**
**किꣳ स्विद् यमस्य कर्त्तव्यं यन्मयाऽद्य करिष्यति ॥ ५॥**

**अनुपश्य यथा पूर्वे प्रतिपश्य तथाऽपरे।**
**सस्यमिव मर्त्त्यः पच्यते सस्यमिव जायते[1] पुनः ॥ ६॥**

**वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहान्।**
**तस्यैताꣳ शान्तिं कुर्वन्ति हर वैवस्वतोदकम् ॥ ७॥**

---

१. 'सस्यमिवाऽजायते' इति शङ्कररङ्गरामानुजयोः पाठः।

**(भा.)** ‘स जगाम यमं बालो ब्रह्मचारी यमस्य तु ।
‘पत्न्या सम्पूज्यमानोऽपि जग्राहार्घ्यादिकं नतु ।
‘आगते तु यमे प्राह यमं सोदकमाहर ॥ ॐ ॥

**(टी.)** अथ स बालः **‘बहूनामेमि प्रथमः–’** इत्यादिचिन्ताकुलः **यमं जगाम** । **‘अनुपश्य–’** इत्यादेरयमर्थः–त्वत्तः पूर्वागताः पापिनः **यथा** महादुःखानुभविनः तथा तान् **अनुपश्य** । **अपरे** आगताश्च **तथा** इति **प्रतिपश्य** । एवं वदद्भिः यमभृत्यैः **मर्त्यः** पापी **सस्यमिव** कुम्भ्यां **पच्यते** । पापक्षये **पुनः** तच्छेषेण **सस्यमिव** क्वचित् क्षेत्रे **जायते** । मर्त्योत्तमानां देवानां निरयाभोगज्ञापनार्थं **मर्त्य** इति विशेषणम् ॥ ५–६ ॥

एवं चिन्तयन् **ब्रह्मचारी** यमपुरं प्रविवेश । स तदा यममपश्यन् तत्पत्न्याऽऽहृतं **अर्घ्यादिकं न जग्राह** । अथ यमस्त्वन्यत्र स्थितस्त्रिरात्रात्यये स्वपुरमाजगाम । ततः **सा** यमपत्नी **यमं** प्रत्याह– **वैश्वानरः प्रविशतीत्यादि** । विश्वनरस्थो विष्णुरिह **वैश्वानरः** । स तु अतिथौ ब्राह्मणे स्थित्वा गृहस्थानां **गृहान् प्रविशति** । **तस्य** क्षुधादिज्वालया विश्वदिधक्षोः **एतां** अतिथिपूजाख्यां **शान्तिं कुर्वन्ति** । अतस्तदर्थं **उदकं हर** भगवन् **वैवस्वतेति** ॥ ७ ॥

**(भा.चं.)** उपनिषद्वचनं गतिसारवचनं चैकान्वयेन व्याख्याति– **अथ स बाल** इत्यादिना । **‘बहूनामेमि–’** इति, **‘अनुपश्य–’** इति च नचिकेतसः स्वगतं वचः । **बहूनां** सहमृतानामग्रेसरः सन् यामि । **बहूनां** च पूर्वमृतानां मध्यगतः सन् यामि । शैशव एव गन्तव्यमापतितमिति न मे व्यथा । पितृवचनपालनार्थं सोत्साह एव यामीति यावत् । अपि तु ममापीदं दानं व्यर्थं भविष्यति वेति चिन्ता बाधते । कुतः? **किं स्वित्** । **मया** प्रतिगृहीतेन **यत् करिष्यति** तत् करणीयं **किं** नु भवेद् **यमस्य** । प्रायः न किमपि । यतोऽहमप्रबुद्धो बाल इति नचिकेतसश्चिन्ता ॥ ५ ॥

**'अनुपश्य'** स्वयमनुभवतः पश्य जानीहि। **अपरे** त्वया सहाऽगताश्च **तथेति प्रतिपश्य**। प्रतिर्वीप्सायां वर्तते। येयेऽत्राऽगमिष्यन्ति ते सर्वेऽपि तथेति **पश्य** जानीहि। प्रत्येकं पश्य, प्रत्यक्षं वा पश्य। यमभटैरुच्यमानं वचः स्मरन्नचिकेता एतदाहेत्याह– **एवं वदद्भिर्यमभृत्यैः**। तथाच 'एवम्' इत्यध्याहारेण पूर्वोत्तरार्द्धयोरन्वयः। एवंविधेन सन्तर्जनवचसा **मर्त्यः पच्यत** इति। कैः? **एवं वदद्भिर्यमभृत्यैः**। **कुम्भ्यामिव सस्यं मर्त्यः** कुम्भीपाके **पच्यते**। **अनुपश्य प्रतिपश्येति** ल्यबन्ते वा पदे। पूर्वेषामपरेषां च गतिं दृष्ट्वा निश्चीयेत **सस्यमिव मर्त्यः पच्यते,** यथा चोप्ते बीजे **पुनः सस्यं जायते,** एवं मर्त्योऽपि स्त्रीगर्भे निषिक्तः **पुनर्देहान्तरमापद्य जायत** इतीति स्वात्मानं सान्त्वयंश्चिन्तयति नचिकेता इति ॥ ६ ॥

भाष्योदाहृतप्रमाणे– **यमस्य तु**। त्रिरात्रमदत्तदर्शनस्य यमस्येति कथाविशेषं तुनाऽऽह। अत एव 'मां बुद्धिपूर्वं निवारयतीव यमः' इत्याशङ्कमानो नचिकेताः तत्पत्न्या श्यामलया **सम्पूज्यमानोऽपि** सादरमातिथ्यस्वीकारायाभ्यर्थ्यमानोऽपि **जग्राहार्घ्यादिकं नतु** नैव जग्राह। **अर्घ्यादिकमिति** अर्घ्यं पाद्यमाचमनीयमासनं मधुपर्कं च। 'हस्तावनेजनं त्वर्घ्यं पाद्यं पादावनेजनम्'। **यमे पुनरागते तु** आगतमात्रे सम्भ्रान्तेव सा सत्वरमाह– **उदकमाहर** हे विवस्वतस्तनयेति। 'यमामात्या ऊचुर्यमं बोधयन्तः' इति व्याख्यानं तु प्रमाणवचनविरोधान्नाऽऽदृत्यम्। 'अनुपश्य–' इति मन्त्रे पूर्वार्धेऽनुष्टुप्। उत्तरार्धे नवाक्षरा बृहती। तेन द्व्यक्षराधिकाऽनुष्टुप्। 'वैश्वानरः प्रविशति+अतिथिः' इति विश्लेषेणोत्तरमन्त्रेऽष्टाक्षरत्वम् ॥ ७ ॥

**आशाप्रतीक्षे सङ्गतꣳ सूनृतां**
**चेष्टापूर्ते पुत्रपशूꣳश्च सर्वान्।**
**एतद् वृङ्क्ते पुरुषस्याल्पमेधसो**
**यस्यानश्नन् वसति ब्राह्मणो गृहे ॥ ८ ॥**

तिस्रो रात्रीर्यदवात्सीर्गृहे[1] मे-
ऽनश्नन् ब्रह्मन्नतिथिर्नमस्यः ।
नमस्तेऽस्तु ब्रह्मन् स्वस्ति मेऽस्तु
तस्मात् प्रति त्रीन् वरान् वृणीष्व ॥ ९ ॥

(भा.) 'इत्युक्तः स यमस्तं तु सम्पूज्यादाद् वरत्रयम् ।
'सौमनस्यं पितुश्चैव नाचिकेताग्निगं हरिम् ।
'मृते स्थितं च तं विष्णुमिति प्रादाद् वरत्रयम्'
इति गतिसारे ॥ * ॥

(टी.) अथ **यमस्तं** नचिकेतसं अर्घ्यादिना **सम्पूज्य** प्रतोषयन्नाह– **आशा-प्रतीक्षे** इत्यादि । आशा पुमर्थेच्छा । प्रतीक्षा तदुपायज्ञानम् । **सङ्गतं** सज्जन-संसर्गः । **यस्य** गृहिणो **गृहे ब्राह्मणोऽतिथिः** एकरात्रमपि **अनश्नन् वसति** तस्य **अल्पमेधसः पुरुषस्य** आशाप्रतीक्षादिकं यत् स्यात् तत् **एतत् सर्वं** वैश्वानरः **वृङ्क्ते** च्छिनत्ति । वृजि च्छेदने[2] । **तस्मात्** तत्परिहारार्थं **तिस्रो रात्रीः प्रति त्रीन्** अभीष्टवरान् **वृणीष्व** ॥ ८–९ ॥

(भा.चं.) 'आशाप्रतीक्षे–' इत्यत्र 'सूनृतां च +इष्टापूर्ते' इति विश्लेषेण प्रथमपादे द्वितीयार्द्धे च जगती । द्वितीयपादे त्रिष्टुबित्येकाक्षरोना जगती । 'तिस्रो रात्रीः–' इति त्रिष्टुप् । 'तिस्रो रात्रीः–' इति मन्त्रे 'मे+अनश्नन्' इति विश्लिष्यैकदशाक्षरता द्वितीयपादे । 'नमस्ते अस्तु' इति विश्लेषेण तृतीय-पादेऽप्येकादशाक्षरता । तुरीयपादो दशाक्षर इत्येकाक्षरोना त्रिष्टुप् । 'वृणीषुव' इति क्षैप्रविश्लेषे केवला त्रिष्टुप् ॥ * ॥

---

१. 'यदवात्सीद् गृहे' इति च पाठान्तरम् ।

२. 'वृङ् छेदने' इति कोशे पठ्यते । तथाऽपि स्यात् प्राचीनो धातुपाठः ।

इच्छापूर्तिं प्रति उपायानामीक्षा प्रतीक्षा । अलभ्यलाभेच्छा आशा । लभ्यस्य कालप्रतीक्षा प्रतीक्षेति वा । लौकिकोऽयमर्थः, नात्यन्तमन्तरङ्गसाधनसङ्गत इत्युपेक्षितष्टीकाकृता । सत्या प्रिया च वाणी सूनृता । 'सूनृतं मङ्गलेऽपि स्यात् प्रियसत्ये वचस्यपि' इत्यभिधानम् । **'इष्टापूर्ते'** इति । इष्टं यजनं यज्ञदानरूपं कर्म । 'इष्टं यज्ञे च दाने च वाञ्छितेऽपि प्रयुज्यते' इत्यभिधानम् । 'एकाग्नि-कर्म हवनं त्रेतायां यच्च हूयते । अन्तर्वेद्यां च यद् दानमिष्टं तदभिधीयते' इति स्मृतिः । पूरणं पूर्तम् । 'पुष्करिण्यः सभावापीदेवतायतनानि च । आरामाश्च विशेषेण पूर्तं कर्म विनिर्दिशेत्' इति च । 'अग्निहोत्रं तपः सत्यं वेदानां चानुपालनम् । आतिथ्यं वैश्वदेवं च इष्टमित्यभिधीयते । वापीकूपतटाकाश्च देवतायतनानि च । अन्नप्रदानमारामः पूर्तमित्यभिधीयते' इति तत्वमञ्जर्याम् । **'अल्पमेधसः'** युक्तायुक्तविवेचनविधुरस्य । अल्पा हि धारणशक्तिस्तस्य । निर्धारणशक्तिश्च । गतिसारवचने **'तं तु सम्पूज्य'** तं विशिष्टमतिथिं अर्घ्यादिना विशेषतः सम्यक् च पूजयित्वा । **'अदाद् वरत्रयम्'** वरत्रयदानं प्रतिजज्ञे । ततश्च यथाप्रतिज्ञं **'प्रादाद् वरत्रयम्'** । **'वृङ्क्ते' छिनत्ति** । 'वृजि वर्जने' इत्यर्वाचीनाः । 'वृजी' इत्यन्ये । तेषां मते 'वृक्ते' इति रूपम् । वस्तुतस्तु 'वृजि च्छेदने, अदने च' इति पठनीयम् । तथाहि छान्दोग्ये संवर्गविद्यायाम्– 'वायुर्ह्येवैतान् सर्वान् संवृङ्क्ते' [४.३.१] इति । 'वायुस्तु सर्वदेवात्ता' इति च प्रभञ्जनवचनं भाष्ये ॥ ८ ॥

हे **ब्रह्मन्** वेदज्ञ तत्वविज्ञानिन्, इति प्रशंसन् नचिकेतसमावर्जयति यमः । **त्वं मे नमस्यः** पूजार्हः **अतिथिः** । नत्वायुःक्षयेणाऽगतः पातकीव शिक्षार्हः । 'नमोवरिवश्चित्रङः क्यच्' [अष्टा.सू.३.१.१९] इति नमसः पूजायां क्यच् । अथापि मम पत्न्या दत्तमातिथ्यमनादृत्य, त्रीणि दिनानि **अनश्नन्नेव मे गृहेऽवात्सीः** । गृहस्थस्यातिथ्यलोपो नामायं महान् दोषः । अतस्तद्दोष-परिहाराय **ते नमोऽस्तु** । दोषशान्त्या **स्वस्ति** सुखमयं जीवनं **मेऽस्तु** । **'तस्मात्'** तवानशनात्, तन्निमित्तान्मदपराधाच्च, **तत्परिहारार्थं** तिस्रो रात्रीः

**प्रति त्रीन् वरान् वृणीष्व** । नमनयोग्यत्वमवधारयितुं पुनरपि **ब्रह्मन्** द्विजोत्तमेत्युल्लाघयति । **'तस्मात्'** इति ल्यबर्थे पञ्चमी । तं दोषपरिहार-मुद्दिश्य । तदेतदाह– **तस्मात् तत्परिहारार्थम्** ॥ ९ ॥

**शान्तसङ्कल्पः सुमना यथा स्याद्**
**वीतमन्युर्गौतमो माऽभि मृत्यो ।**
**त्वत्प्रसृष्टं माऽभि वदेत् प्रतीत**
**एतत् त्रयाणां प्रथमं वरं वृणे** ॥ १० ॥

**यथा पुरस्तात् भविता प्रतीत**
**औद्दालकिरारुणिर्म्मत्प्रसृष्टः**[1] **।**
**सुखं रात्रीः शयिता वीतमन्यु-**
**स्त्वां** [2]**ददृशिवान् मृत्युमुखात् प्रमुक्तम्** ॥ ११ ॥

**(टी.)** एवमुक्तो नचिकेताः स्वपितुः **सौमनस्यमेव** प्रथमं वरं वव्रे– **शान्त-सङ्कल्प** इत्यादिना । अयोग्यकृतौ **शान्तसङ्कल्पः**, योग्यकृतावेव **सुमनाश्च यथा स्यात्** मत्पिता **गौतमः** गोत्रविशेषतः । मां प्रति **वीतमन्युश्च यथा स्यात्** । अथ मां प्रति सूनृतवाणी**मभिवदे**च्च ॥ १० ॥

**यथा पुरस्तादि**ति यमस्य तद्वरदानवाक्यम् । मया नियुक्तः त्वत्पिता यथा **पुरस्तात्** शान्तसङ्कल्पः । इह पिता **औद्दालकिः** । असौ उद्दालकस्य पौत्रः । **आरुणिः** अरुणापुत्रः ॥ ११ ॥

**(भा.चं.) 'पितुश्चैव'** इत्यत्रैवकारार्थमाह– **स्वपितुः सौमनस्यमेव प्रथमं वव्रे,** नतु स्वार्थं किमपि वित्तादिकमिति नचिकेतसो निर्धारमेवकारेण प्रशंसतीव । लोके तावत् 'चैव', 'एवच' 'अपिच', 'चापि' इत्यादिषु संयुक्ते

१. **'–प्रसृष्टम्'** इति केचित् ।

२. **'त्वां ददृशिवान्'** इति रङ्गरामानुजयतिः । **'दर्शिवान्'** इति कश्चित् ।

अपि पदे समुच्चयार्थे भवतः । उत्सर्गोऽयं क्वचिद् विशिष्टमर्थं चावगमयतः । विशेषतश्च शास्त्रवचनेषु । **अयोग्यकृतौ 'शान्तसङ्कल्पः'** निवृत्ताशयः । **योग्यकृतावेव 'सुमनाः'** सुदृढमनाः । सुखितस्वान्तो वा । **'माऽभि'** मां प्रति **'वीतमन्युः'** गतक्रोधः । **'त्वत्प्रसृष्टं माऽभिवदेत् प्रतीतः'** । **इतो** मृत्युलोकात् त्वया प्रेषितं **मा** मां **प्रति** सूनृतां वाणीं **अभिवदेत्** । **प्रतीतः** सञ्जातपरिचय इति वा । **प्रतीतः** प्रहृष्ट इति वा । 'प्रतीतः सादरे ज्ञाते हृष्टप्रख्यातयोः' इति मेदिनी ॥ १० ॥

**'मत्प्रसृष्टः' मया नियुक्तः** तव पिता **औद्दालकिरारुणिः** त्वां **प्रति यथा पुरस्तात्** पूर्वं तथा **इतः** परमपि शान्तसङ्कल्पो **भविता** । **प्रतीतः** सञ्जातपरिचयः, त्वयि प्रत्ययवानिति वा । प्रहृष्ट इति वा । ननूद्दालक आरुणिरिति वक्तव्यम् । कथमौद्दालकिरारुणिरिति? आह– **असौ उद्दालकस्य पौत्र** इति । अयमर्थः– उद्दालकस्य मातामहो वाजश्रवा इत्युद्दालको वाजश्रवस उच्यते वाजश्रवसो दौहित्र इति । पितामहस्तूद्दालक इति औद्दालकिरप्युच्यते उद्दालकस्य पौत्र इति । माता चारुणा ख्याता ऋषिकेति स आरुणिरुच्यत इति । **ददृशिवान्** दृष्टवान् । त्वां दृष्ट्वेत्येतत् । पपिवान्, जग्मिवान्, तस्थिवानित्यादिवत् क्वसुप्रत्ययान्तं पदम् । छन्दसि लिटः क्वसुरादेशो भवतीति वैयाकरणाः । 'क्वसुश्च' [अष्टा.सू.२.२. १०८] इति । सुखशयनापेक्षया भूतं दर्शनमिति प्रत्ययार्थः । भूतस्यानद्यतनत्वं छन्दसि गतम् । तेन त्वां ददृशिवान् त्वद्दर्शनसमनन्तरमेव दिष्ट्या मम शापान्मुक्तो बाल इति **वीतमन्युः सुखं रात्रीः शयिता** शयिष्यते । 'शान्तसङ्कल्पः–' इति मन्त्रे चरमपादे द्वादशाक्षराणीत्येकाक्षराधिका त्रिष्टुप् । उत्तरमन्त्रेऽपि तथा ॥ ११ ॥

**स्वर्गे लोके न भयं किञ्चनास्ति**
**न तत्र त्वं न जरया बिभेति ।**
**उभे तीर्त्वा अशनायापिपासे**
**शोकातिगो मोदते स्वर्गलोके ॥ १२ ॥**

**स त्वमग्निꣳ स्वर्ग्यमध्येषि मृत्यो**
**प्र ब्रूहि तꣳ[1] श्रद्दधानाय मह्यम् ।**
**स्वर्गलोका अमृतत्वं भजन्त**
**एतद् द्वितीयेन वृणे वरेण ॥ १३ ॥**

**(टी.)** अथ नचिकेताश्च **'स्वर्गे लोके–'** इत्यादिना भगवल्लोकं प्रशस्य **'स त्वमग्निम्–'** इत्यादिना तत्प्रापकमग्निं पृच्छति। स्वयमेव रमते स्वस्मिन्नेव चेति स्वर्नामा नारायणः। तेन गतो वैकुण्ठादिस्तल्लोकः स्वर्गलोक उक्तः। तत्प्रापकत्वाद् विष्णुरेव स्वर्ग्याग्निरुच्यते। किञ्चित्कालं स्वर्गे स्थिता जना अपि **स्वर्गलोका** उच्यन्ते। 'जनो लोकः प्रजा प्रोक्तः' इत्यभिधानात्। ते क्रमात् **अमृतत्वं भजन्ते** । प्रागेव ज्ञानित्वात्। 'तत्र भयातिगः। उष्य मन्वन्तरं कालममृतत्वं भजेत् क्रमात्' इत्यधस्तादुक्तम्॥ १२–१३ ॥

**(भा.चं.) अग्निं पृच्छति** द्वितीयवरत्वेन। स्वयमेव रमते इति स्वरः। स्वस्मिन्नेव रमत इति च स्वरः। स एव स्वः। स्वः गतोऽत्रेति स्वर्गः। स्वर्गं स्वलोकमेवान्ते यापयतीति स्वर्ग्यः। आदौ किञ्चित्कालममुख्यस्वर्गं च। अत्ति नाशयति स्वर्गलोकप्रतिबन्धकं दुरितमित्यग्निर्नाचिकेताग्निस्थो नारायणः। **'न तत्र त्वं'** मृत्युर्भूत्वा भीषयितुं प्रभवसि। एतेन जन्ममृत्युराहित्यमाह। **न जरया** नच व्याध्या **बिभेति**। यद्यपि अशनायापिपासे तरति। अथापि मोक्षे लीलयाऽशनपानादिकं भवति। तमेतं विशेषमवगमयितुमेव 'तीर्त्वा अशनायापिपासे' इति प्रगृह्य पाठः। सर्वात्मना च तरणम्, न कादाचित्कमिति च। **शोकातिगः** मोहातिगश्च। तेन षडूर्मिराहित्यं स्वर्गलोकस्याऽह। 'शोकमोहौ जराव्याधी क्षुत्पिपासे षडूर्मयः'। अस्मितामूलः शोकः। ममतामूलो मोहः। देवयोनित्वेनाधिगतविज्ञानः **'स त्वं स्वर्ग्यमग्निं अध्येषि'** अधिकं जानासि। स्वः त्रिदिवं गता लोका जनाः

१. 'प्रब्रूहि त्वम्' इति शाङ्करः पाठः।

स्वर्गलोका इत्यप्यर्थः सम्भवीत्याह– **स्वर्गे स्थिता जना अपि स्वर्गलोका उच्यन्ते**। स्वर्गो लोको येषां पुण्यभोगाय त इति वा। येनाग्निनोपासितेनाऽदावधिगतामुख्यस्वर्गलोका अप्यन्ते **'अमृतत्वं भजन्ते'** किल। अधिगतमोक्षाख्यस्वर्गलोकाश्च तत्र **अमृतत्वमानन्दाधिक्यं भजन्ते**। **एतत् द्वितीयेन वरेण** द्वितीयवरत्वेन **वृणे**। द्वितीयवरनिमित्तमेतद् वरणीयं वृण इति वा। मन्त्रद्वयेऽपि केवला त्रिष्टुप्। 'प्र ते ब्रवीमि–', 'लोकादिम्–' इत्युत्तरमन्त्रद्वयमपि तथा॥ १२–१३॥

**प्र ते ब्रवीमि तदु मे निबोध**
**स्वर्ग्यमग्निं नचिकेतः प्रजानन्।**
**अनन्तलोकाप्तिमथो प्रतिष्ठां**
**विद्धि त्वमेतं निहितं गुहायाम्॥ १४॥**

**(भा.)** **'अग्र्यत्वादग्निनामाऽसौ नाचिकेताग्निगो हरिः।**
**'लोको विष्णोरनन्तस्य तज्ज्ञानान्नित्य आप्यते॥**

**'प्रतिष्ठा सर्वलोकस्य स विष्णुः सर्वहृद्गतः।**
**'स एव सर्वलोकादिस्तं ज्ञात्वा मुच्यते ध्रुवम्'**
**इति च॥ *॥**

**(टी.)** **'प्र ते ब्रवीमि–'** इति द्वितीयवरदानवाक्यं **'अग्र्यत्वात्–'** इत्यादिगतिसारवचनेन व्याख्याति। हे **नचिकेतः, ते स्वर्ग्यमग्निं प्रब्रवीमि**। तत्स्वरूपं मत्सकाशादेव **निबोध**। **अथो** अथ तादृक्स्वर्गिणः कर्मफलभोगसमाप्त्यनन्तरं अनन्तस्य विष्णोः वैकुण्ठादिलोकस्य प्राप्तिं तस्य पुनस्तत्रैव संस्थितिं च **ब्रवीमि**। **एतं** स्वर्गापवर्गदं भगवन्तं सर्वेषां हृदयगुहायां **निहितं विद्धि** इति हृद्गतम्। एवमनन्तो वैकुण्ठादिलोकः। तस्य प्रापकम्। **अथो** मुक्तामुक्तलोकस्य प्रतिष्ठापकं च॥ १४॥

**(भा.चं.) प्र ब्रूहि** प्रकर्षेण समग्रं ब्रूहीति नचिकेतसः प्रार्थनं सानन्दमनुमोदमान आह– **प्र ते ब्रवीमीति**। ब्रवीमि ते सरहस्यां समग्रामग्निविद्यामिति। त्वं स्वयं **'प्रजानन्'** अपि **'मे उ' मत्सकाशादेव 'निबोध'** नितरां बुध्यस्व। स्वयमहं तमग्निं **प्रजानन् प्र ते ब्रवीमीति** वा। उ इति प्रीतिसम्बोधने वा। अयि वत्सेति। **अग्रयत्वादग्निनामाऽसौ**। अग्रे भवतीत्यग्रयः। 'अग्राद् यत्' [अष्टा.सू.४.४.११६]। अग्रे सर्वोत्तमत्वेन सर्वादित्वेन च नीतो ध्यात इत्यग्निः। अग्रानपि ब्रह्मादीन् नयति यमयतीति च। अग्रं सर्वाधिकमनन्तं मोक्षं नयति प्रापयतीति च। तदेतदप्युक्तम्– **'विष्णोर्नित्यो लोक आप्यते'** इति। **'अनन्तलोकाप्तिम्'** इति श्रुतिवाक्यं द्वेधा व्याख्याति– अनन्तलोकस्याऽप्तिं तत्रैव **प्रतिष्ठां** शाश्वतीं स्थितिं च **ब्रवीमीति**, अनन्तलोकस्याऽप्तिर्येन तं च भगवन्तं **सर्वप्रतिष्ठापकं** च **ब्रवीमीति** च। अनन्तलोक इत्यनन्तस्य लोकः। अनन्तश्च लोकः। 'लोको विष्णोरनन्तस्य तज्ज्ञानान्नित्य आप्यते' इति भाष्योदाहृतगतिसारवचनात्। **एतं** अग्निनारायणं सर्वेषां हृदय**गुहायां निहितं विद्धि**। तदेतद् विवृतम्– **स विष्णुः सर्वहृद्गत** इति। **'सर्वलोकादिः'** इति उपरितनमन्त्रे पठ्यमानस्य **'लोकादिम्'** इत्यस्य विवरणम्। अनन्तस्यैव हि सर्वेऽपि लोकाः। स एव सर्वलोकानां कारणं तत्प्राप्तिकारणं च॥ १४॥

**लोकादिमग्निं तमुवाच तस्मै**
**या इष्टका यावतीर्वा यथा वा।**
**स चापि तत् प्रत्यवदद् यथोक्त-**
**मथास्य मृत्युः पुनराह[1] तुष्टः ॥ १५ ॥**

**तमब्रवीत् प्रीयमाणो महात्मा**
**वरं तवेहाद्य ददानि[2] भूयः।**

---

१. 'पुनरेवाऽह' इति शाङ्करः पाठः। २. 'ददामि' इति च पाठान्तरम्।

**तवैव नाम्ना भविताऽयमग्निः**
**[१]सृङ्कां चेमामनेकरूपां गृहाण ॥ १६ ॥**

**(भा.)** या इष्टका या इष्टकादेवताः ।

'इष्टकादेवतां विष्णुं षष्ट्युत्तरशतत्रिकम् ।

'यथावदेव विज्ञाय मुच्यते कर्म्मबन्धनात्' इति[२] [च]॥ * ॥

**(टी.)** स तं एनमग्निनामानं हरिं सर्वलोकादिमुवाच । मानान्तरेण च स्पष्टयति– **इष्टकेति** । इष्टकानां विष्णुर्देवता[३] । तासां सङ्ख्यानं **षष्ट्युत्तर-शतत्रिकं** भवति । त्रीणि शतानि च षष्टिश्च ता भवन्ति । तावत्यो विष्णुमूर्तय एव तासां देवता इति भावः ॥ * ॥

**(भा.चं.)** 'तमब्रवीत्–' इत्ययं चतुर्थचरणे द्वादशाक्षर इत्येकाक्षराधिका त्रिष्टुप् । स्रङ्कत इति सृङ्का । स्रकि गतौ । सृङ् इति कायतीत्यन्ये । कै शब्दे । 'सृङ्कां शृङ्खलाम्' इत्युपरि व्याख्यास्यति । कोशकाराः 'शृङ्खला पुंस्कटी-काञ्च्यां लोहरज्जौ च बन्धने' इत्यभिदधति । कण्ठमाला च सृङ्केतीममपूर्वमर्थं प्रकटीचकार भगवानाचार्यः पाद्मवचनेन ॥

भाष्ये **इष्टका इष्टकादेवता** इति बहुवचनं बहुरूपत्वाद् भगवतः । तदेतदाह– **इष्टकानां विष्णुर्देवतेति** । **तावत्यो विष्णुमूर्तय एव तासां देवता** इति च । **'तासां'** इष्टकानां **'सङ्ख्यानम्'** । **'या इष्टकाः'** इत्यस्य विवरणम्– **इष्टकदेवतां विष्णुम्'** इति । **'यावतीः'** इत्यस्य– **'षष्ट्युत्तरशतत्रिकम्'** इति । षष्ट्युत्तरं शतानां त्रिकम्, त्रीणि शतानि च षष्टिश्चेत्येतत्, रूपाणां यस्यासौ विष्णुः षष्ट्युत्तरशतत्रिकः । यद्वा **'इष्टकादेवतां विष्णुं विज्ञाय'** इष्टकानां सङ्ख्यानं च षष्ट्युत्तरं शतकत्रयं च विज्ञाय । **'तस्मै'** नचिकेतसे **'तं'** तेन पृष्टं **'अग्निं'** **'लोकादिं'** नारायणं **'उवाच'** । **'या इष्टकाः'** इष्टकान्तर्गतानि विष्णुरूपाणि,

---

१. 'शृङ्काम्' इति क्वचित् । स्फुटं लिपिकृत्प्रमादः ।

२. प्राचीनादर्शे 'च'कारो न पठ्यते । तेन नेदं गतिसारवचनमिति ज्ञायते ।

३. एतद्वाक्यानुगुणतया 'इष्टकादेवता विष्णुः' इत्यपि टीकासम्मतः पाठः स्यादिति सम्भाव्यते ।

ता इष्टकाः **'यावतीः'** यावत्यः, विष्णुरूपाणि वा तद्गतानि यावन्ति, **यथा वा** तदनुसन्धानादिकम्, चयनविधानं वा, तदपि **उवाच**। **'स चापि तत् प्रत्यवदद् यथोक्तम्–'** इत्यादि चोपरिष्टाद् व्याख्यास्यति। अर्थक्रमो हि बलीयान् पाठक्रमादपि। सोऽयमर्थक्रमानुसारी श्रुतिपाठः–

**लोकादिमग्निं तमुवाच तस्मै या इष्टका यावतीर्वा यथा वा। [१५.पू.]**
**त्रिनाचिकेतस्त्रिभिरेत्य सन्धिं त्रिकर्मकृत् तरति जन्ममृत्यू॥ [१७.पू.]**

**त्रिनाचिकेतस्त्रयमेतद् विदित्वा य एवं विद्वांश्चिनुते नाचिकेतम्।**
**स मृत्युपाशान् पुरतः प्रणोद्य शोकातिगो मोदते स्वर्गलोके॥ [१८]**

**ब्रह्मजज्ञं देवमीड्यं विदित्वा निचाय्येमां शान्तिमत्यन्तमेति। [१७.उ.]**
**एष तेऽग्निर्नचिकेतः स्वर्ग्यो यमवृणीथा द्वितीयेन वरेण॥ [१९.पू.]**

**स चापि तत् प्रत्यवदद् यथोक्तमथास्य मृत्युः पुनराह तुष्टः। [१५.उ.]**
**तमब्रवीत् प्रीयमाणो महात्मा वरं तवेहाद्य ददानि भूयः॥ [१६.पू.]**

**तवैव नाम्ना भविताऽयमग्निः सृङ्कां चेमामनेकरूपां गृहाण। [१६.उ.]**
**एतमग्निं तवैव प्रवक्ष्यन्ति जनासस्तृतीयं वरं नचिकेतो वृणीष्व॥[१९.उ.]**

एवं पाठे श्रुत्यन्वयः सुकरः। प्रसिद्धश्चायं पाठक्रमव्यत्ययः श्रुतिषु। तद् यथा पुरुषसूक्ते 'सप्तास्याऽसन्' इति पूर्वं पठनीयामृचमुपरिष्टात् पठन्ति बह्वृचाः। अर्थक्रमानुगुण्येनैवैते मन्त्रा व्याख्याता भाष्ये टीकायां च। अथ कुतः श्रुतौ पाठक्रमो व्यतीयते? **'त्रिनाचिकेतः–'** इत्यादि मन्त्रस्य **'तवैव नाम्ना भविताऽयमग्निः'** इति मन्त्रसापेक्षत्वादिति गृहाण॥ * ॥

**[1]त्रिनाचिकेतस्त्रिभिरेत्य सन्धिं**
**त्रिकर्म्मकृत् तरति जन्ममृत्यू।**

---

१. 'त्रिणाचिकेत–' इति शङ्कररङ्गरामानुजौ।

ब्रह्मजज्ञं देवमीड्यं विदित्वा
निचाय्येमाꣳ शान्तिमत्यन्तमेति ॥ १७ ॥

**(भा.)** **'त्रिभिरेत्य सन्धिम्' वेदैरविरुद्धम्। वेदोक्तप्रकारेण भगवत्त्वादिकं जानन्नित्यर्थः। 'त्रिकर्म्मकृत्' यज्ञदानतपःकर्त्ता।**

**'यज्ञदानतपःकर्म्म न त्याज्यं कार्यमेव तत्' इति वचनात्॥ * ॥**

**(टी.)** न केवलमिष्टकासु च कर्माङ्गत्वेन विष्णुज्ञानान्मुक्तिः। किन्तु विष्णोः सर्वज्ञत्वज्ञानादेव मुक्तिरित्यभिप्रायेणाह– **त्रिनाचिकेत** इति। त्रिःप्रश्नकर्तृत्वात्, त्रिराधेयत्वात्[1] त्रिःश्रोतृत्वाच्च अयं त्रिनाचिकेतः। **त्रिभिरेत्य सन्धिमित्यनूद्य वेदैरि**त्यादिना विवृणोति। **त्रिभिः वेदैरविरुद्ध**मर्थानुसन्धानं प्राप्य तदुक्तप्रकारेण भगवत्तत्वं **जानन्**, अन्यच्च तदधीनमित्यादिकं **जानन्नित्यर्थः**। एवं जानन्नेव जन्ममृत्यू तरति नान्यथेति भावः। **यज्ञदानतपःकर्ता त्रिकर्मकृ**दुच्यते। **'यज्ञदान–'** [१८.५] इत्यादिगीतावचनात्॥ * ॥

**(भा.चं.)** 'त्रिनाचिकेतस्त्रिभिरेत्य सन्धिम्–' इति केवला त्रिष्टुप्। त्रिनाचिकेतस्त्रिःकृत्वो नाचिकेतोऽग्निश्चितो येन स इति केचिद् व्याचक्षते। तदा 'चिनुते नाचिकेतम्' इत्यनेन पुनरुक्तं भवति। अतो व्याचष्टे– **त्रिः प्रश्नकर्तृत्वादित्यादि**। अविज्ञातप्रार्थनं प्रश्नः। अधीहि भगवन्निति त्रिः पृष्ट्वा, गुरुमुखेन त्रिः श्रुत्वा, त्रिश्चाऽधेयो नाचिकेताग्निर्येन सोऽयं त्रिनाचिकेत उच्यते। पिण्डाण्डे षष्ट्युत्तरशतत्रिकास्थिरूपेष्टकचिते हृदयकुण्डे, तावद्दिनरूपेष्टकचिते वर्षमये कालकुण्डे, तावदिष्टकामये बाह्यकुण्डे चेति त्रिषु स्थानेषु नाचिकेताग्निस्थो भगवान् ज्ञेय इति त्रिः प्रश्नस्त्रिराधानं त्रिःश्रवणं च। मुख्यतस्तु नचिकेता एव **त्रिनाचिकेतः**। स किल पितृसौमनस्यप्रदमग्निगं मोक्षदं च नारायणं त्रिः पप्रच्छ। त्रिश्च शुश्राव। **'यथा वा'** इत्यस्य विवरण-

1. त्रिःकृत्वः आधेयः नाचिकेतः नचिकेताग्निस्थो नारायणो येन स त्रिराधेयः।

मेतत् । तथाहि– **त्रिनाचिकेतः** श्रुतत्रिविधनचिकेताग्निः स्वयं नचिकेताः, अन्यो वा कश्चित् साधकः **'त्रिभिः'** वेदैरविरुद्धं **'सन्धिं'** अर्थानुसन्धानं **'एत्य'** प्राप्य, यज्ञदानतपआख्य**'त्रिकर्मकृत्'** जन्ममृत्युपरम्परारूपं संसारं **तरति** । उत्तरार्द्धस्य व्याख्यानमुपरिष्टाद् भवति ॥ ※ ॥

**[१]त्रिनाचिकेतस्त्रयमेतद् विदित्वा**
**य एवं विद्वाꣳश्चिनुते नाचिकेतम् ।**
**स मृत्युपाशान् पुरतः प्रणोद्य**
**शोकातिगो मोदते स्वर्ग्गलोके[२] ॥ १८ ॥**

**(भा.) त्रयमेतत् या इष्टका इत्यादि ॥ ※ ॥**

**'ब्रह्मेति वेद उद्दिष्टस्तस्माद् व्यक्तो यतो हरिः ।**
**'ब्रह्मजस्तेन कथितः स एव ज्ञोऽखिलज्ञतः'**
**इति नामनिरुक्ते ॥ ※ ॥**

**(टी.)** यज्ञकर्मस्वित्थम्भावोऽस्तीत्याह– **त्रिनाचिकेत** इत्युत्तरवाक्येन। **'त्रयमेतद् विदित्वा'** इत्युच्यमानं वेद्यत्रयं किमित्याकाङ्क्षायामुच्यते– **'या इष्टका** यावतीर्वा यथा वा' इति प्रागुक्तं देवतादित्रयम् । नचिकेतसे तुभ्यं मयोक्तमग्निं **य एवं** स्वर्गापवर्गदं **विद्वान्** त्रिशः **चिनुते** । 'त्रिशोऽग्निं नाचिकेतकम् । यश्चयीत' इत्यधस्तादुक्तम् । **स मृत्युपाशान्** कर्मबन्धान् **प्रणोद्य पुरतः** पूर्वतः किञ्चित्कालं **स्वर्गलोके मोदते** । पश्चाद् वैकुण्ठादौ अनन्तलोके नित्यं **मोदते** । 'स तु प्राप्य स्वर्गं तत्र भयातिगः । उष्य मन्वन्तरं कालममृतत्वं भजेत्

१. 'त्रिणाचिकेत–' इति शङ्कररङ्गरामानुजौ ।

२. इतः परं श्रुतप्रकाशिकादिरीत्या पद्यमेकमधिकं पठ्यते –

**'यो वा एतां ब्रह्मजज्ञात्मभूतां चितिं विदित्वा चिनुते नाचिकेतम् ।**
**स एव भूत्वा ब्रह्मजज्ञात्मभूतः करोति तद् येन पुनर्न जायते'** इति ।

क्रमात्' इति प्रमाणमुक्तम्। नचैतत् फलमपि पुनरुक्तम्। '**ब्रह्मजज्ञम्**' इत्यत्र कर्मपाशविनाशानुक्तेः ॥ * ॥

**ब्रह्मजज्ञमिति** विशेषणस्यार्थं तु '**ब्रह्मेति वेदः–**' इत्यादिनामनिरुक्तवाक्येन निर्वक्ति। वेदव्यक्ताखिलज्ञं विष्णुदेवं सर्वदेवेड्यं श्रवणादिना **विदित्वा निचाय्य** ध्यानादिना परमार्थतो दृष्ट्वा तत्फलभूतां **इमां शान्तिं** सुखपूर्तिं **अत्यन्तं** अनन्तकालीनां **एति** ॥ * ॥

**(भा.चं.)** 'त्रिनाचिकेतस्त्रयमेतद् विदित्वा' इति पूर्वार्धे जगती। उत्तरार्धे त्रिष्टुप्। तेन द्व्यक्षरोना जगती। द्व्यक्षराधिका वा त्रिष्टुप्। योऽप्यन्य-**स्त्रिनाचिकेतः** सन् इष्टकादेवतां विष्णुम्, इष्टकासङ्ख्यानम्, इष्टकाचयन-विधानं चेति **एतत् त्रयं विदित्वा**। 'नाचिकेतम्' इति श्रुतिपदं व्याख्याति– **नचिकेतसे तुभ्यं मयोक्तमग्निम्। कर्मपाशविनाशानुक्तेः**। पूर्वं किञ्चित्-कालं स्वर्गे **मोदते**। पश्चाद् वैकुण्ठे नित्यं **शोकातिगो मोदत** इति प्रमेय-विशेषानुक्तेश्च ॥ * ॥

**एष तेऽग्निर्नचिकेतः स्वर्ग्यो**
**यमवृणीथा द्वितीयेन वरेण।**
**एतमग्निं तवैव प्रवक्ष्यन्ति जनास-**
**स्तृतीयं वरं नचिकेतो वृणीष्व ॥ १९ ॥**

**(भा.)** अनेकरूपां सुवर्ण्णमयीम्–

'बहुरूपं च पुरटं कार्त्तस्वरमितीर्यते' इत्यभिधानम्।

'यमोऽनुवादसन्तुष्टो वह्नेस्तन्नामतामपि।
'सृङ्कां स्वर्ण्णमयीं चैव कण्ठमालामदाद् विभुः'

इति पाद्मे ॥ * ॥

**(टी.)** **'एष तेऽग्निः–'** इति स्वर्ग्याग्न्युपदेशमुपसंहरति। **स च** नचिकेता यमो[पदि]ष्टमग्नीष्टकादिस्वरूपं यथावत् प्रतिबुध्य अन्ववदत्। **अपिशब्दात्** तत्कर्मज्ञानफलमपि स्वर्गापवर्गाख्यमुत्तरवाक्योक्तं यथावदन्ववदत्। तदर्थद्वयानुवादग्राहकं **'स चापि–'** इत्येतद् वाक्यम्। अतस्तज्ज्ञापनार्थं ह्यस्य वाक्यस्याभिप्रायमन्तत एव प्रावोचत्। **अथ मृत्युः अस्य** नचिकेतसः **सन्तुष्टः पुनः** अन्यच्च किञ्चित् **आह** ॥ * ॥

**'तमब्रवीत् प्रीयमाणः–'** इति पुनरुक्तिस्तत्र तात्पर्यज्ञापनाय। **इह** लोके **तव** कीर्तिकरं अन्यदपि[1] **वरं ददानि** इत्यब्रवीत्। **'तवैव–'** इत्यादि वदन् ददौ। कथम्भूतां सृङ्काम्? **अनेकरूपाम्**। स्वर्णमयीमित्यर्थः। **'बहुरूपं च–'** इत्यभिधानात्॥ * ॥

**'अथाऽस्य मृत्युः पुनराह तुष्टः'** इत्यादेरभिप्रायं **'यमोऽनुवाद–'** इत्यादिना पाद्मवचनेन स्पष्टयति ॥ * ॥

**एतमग्निं तवैव** मया प्रोक्तं **प्रवक्ष्यन्ति, तवैव** नाम्ना च ॥ * ॥

**(भा.चं.)** 'एष तेऽग्निः–' इति दशाक्षरः प्रथमः पादः। 'सुवर्गिय' इति क्षैप्रविश्लेषेणैकादशाक्षरो वा। द्वादशाक्षरो द्वितीयः। चतुर्दशाक्षरस्तृतीयः। तुरीयः पुनर्द्वादशाक्षरः। संहत्याष्टचत्वारिंशदक्षरा जगत्येव। क्षैप्रविश्लेषे चैकाक्षराधिका जगती। **'प्रत्यवदत्'** इति श्रुतिपदं व्याख्याति– **प्रतिबुध्य अन्ववदत्**। **'पुनराह तुष्टः'** इत्युक्त्वा **'तमब्रवीत् प्रीयमाणः'** इति **पुनरुक्तिः तत्र** तुष्टिविषये **तात्पर्यज्ञापनाय**। पूर्वमेव **तुष्टः**। द्वितीयप्रश्नोत्तरस्यानुवादेन पुनरतिशयेन **प्रीयमाण** इति। तदिदमुक्तं पाद्मे **'सन्तुष्टः'** इति समित्युपसर्गेण। **'बहुरूपं च–' इत्यभिधानात्**। ज्वलन्नग्निरिव प्रकाशात्मकत्वात् सुवर्णमपि विविधरूपतया भासत इति बहुरूपमित्यनेकरूपमिति चोच्यते। कटककण्ठमालाद्यात्मना बहुरूपतामापद्यत इति च। एतद् धृत्वा

---

१. **'अन्यमपि'** इत्यपि पाठः सम्भाव्यते।

पुरेष्वटन्तीति पुरटमुच्यते। कामिनामभीष्टपूरणाच्च पुरटम्। काञ्चनमत्ताः पुरत एव रटन्तीति च तत् पुरटम्। अत एव सभादिषु ये कृतस्वरास्तेषामेवेदं कार्तस्वरं भवति। कृतस्वेषु रतानां चेदं भवति ॥ ✽ ॥

**एष तेऽग्निः स्वर्ग्योऽ**भिहितः। **यं** द्वितीयं वरम्, द्वितीयवरत्वेन वा **अवृणीथाः**। अथेदानीं तृतीयं वरं वृणीष्व। प्रेमातिशयेन **'नचिकेतः, नचिकेतः'** इति द्विः सम्बोधनम्। **जनासः**। अकाराज्जसेरसुगागमः स्याच्छन्दसि। 'आज्जसेरसुक्' [अष्टा.सू.७.१.५०] इति हि पाणिनिः स्मरति। तद्यथा– जनासः। ब्राह्मणासः। पूर्वासः। अपरासः ॥ ✽ ॥

**(भा.) लोकादिः प्रतिष्ठा ब्रह्मजज्ञोऽनन्तलोकाप्तिरित्यादिविशेषणैश्च भगवानेव ॥**

**(टी.)** ननु नायं स्वर्ग्याग्निर्भगवान् विष्णुः। अग्निशब्दस्य लोकतः प्रसिद्धेरित्यत आह– **लोकादिरित्यादि**। अत्र हि स्वर्ग्याग्नेः **'लोकादिमग्निम्'** इति जगतः स्रष्टृत्वमुच्यते। **प्रतिष्ठा**शब्देन स्थापकत्वम्। **'ब्रह्मजज्ञम्'** इति वेदैकगम्यत्वं सर्वज्ञत्वं च। **'अनन्तलोकाप्तिम्'** इति नित्यलोकप्रापकत्वम्। जन्मादि-[कारणत्वं वेदैकगम्यत्वं संसार]तारकत्वं[1] पुनः सुखैकभोजकत्वं च तस्यैव युज्यते। तस्मादेतैरनन्यसाधारण**विशेषणैर्भगवान्** विष्णुरेव स्वर्ग्याग्निः। चशब्दात् सावकाशश्रुतेः निरवकाशलिङ्गानां प्राबल्यसिद्धेश्चेत्यर्थः ॥

**(भा.चं.) लोकतः** भूतमानिन्यग्नौ **प्रसिद्धेः**। ब्रह्मणैव जायते व्यज्यत इति ब्रह्मजो वेदैकगम्यः। मुख्यतः सकलवेदगम्यः। सर्वमपि जानातीति च ज्ञः। नहि प्रमाणान्तरसिद्धो वेदज उच्यते। नाप्येकद्वाभ्यां वेदपदाभ्यां कथितः। नच यत्किञ्चिज्ज्ञानन् ज्ञानीत्युच्यते। सावधारणानि व्यावर्तकानि च हि विशेषणानि भवन्ति। 'ज्ञो ब्रह्मबुधविद्वत्सु' इति मेदिनी। 'इगुपधज्ञाप्रीकिरः कः' [अष्टा.सू.३.१.१३५] इति जानातेः कः ॥

---

१. अत्राऽदर्शे लुप्तो भागः पुनरर्थानुगुणतया संयोजितः। एवमुत्तरत्रापि।

**(भा.)** **'स्तोममहदुरुगायं प्रतिष्ठाम्' इति परामर्शाच्च । भगवतो ह्युरुगाय-नाम प्रसिद्धम् । गुहानिहितत्वं च तस्यैव विशेषतः प्रसिद्धम् ॥**

**(टी.)** अग्निप्रकरणपठितायाः प्रतिष्ठायाः **'स्तोममहत्–'** इत्यत्रोरुगाय-धर्मत्वेन परामर्शदर्शनात् स हि स्वर्ग्याग्निः । नचैतदपि नामान्यसाधारण-मित्याह– **भगवतो हीति** । अनन्यसाधारणतया **भगवतो ह्युरुगायनामेति** श्रुतिस्मृतिसिद्धम् – 'विचक्रमाणस्त्रेधोरुगायः' 'न चेत् प्रगायत्युरुगायगाथाम्' इत्यादि । नचाग्निशब्दो विष्णौ निरवकाशः । प्रत्युत तस्मिन्नेव मुख्यवृत्तिश्च । 'नामानि सर्वाणि यमाविशन्ति' इत्यादिश्रुतेः । इतश्च [विष्णुरेव] स्वर्ग्याग्नि-रित्याह– **गुहेति । गुहानिहितत्वं** च भगवतो विष्णोरेव **प्रसिद्धम्** । 'प्रसिद्धेश्च' [ब्र.सू.१.३.१७]इति सूत्रात् । पूर्वोक्तलिङ्गेभ्यः प्रधानत्वादेतत् पृथगुक्तम् ॥

**(भा.चं.)** **'स्तोममहदुरुगायं प्रतिष्ठां** दृष्ट्वा धृत्या धीरो नचिकेतोऽत्यस्राक्षीः' [१.२.११] इत्युपरिष्टात् **प्रतिष्ठाया उरुगायधर्मत्वेन परामर्शदर्शनात् सः** उरुगायो भगवानेव **हि स्वर्ग्याग्निः** । न भूताग्निः । एकयोक्त्या अनेकश्रुति-संवादसौलभ्याय **'विचक्रमाणस्त्रेधोरुगायः'** इत्युदाजहार । तथाह्ययं मन्त्र-भागः ऋग्वेदे [१.१५४.१], तैत्तिरीयसंहितायाम् [१.३.१३.३], वाजसनेय-संहितायाम् [५.१७], मैत्रायणसंहितायाम् [१.२. ९], कठसंहितायाम् [२.१०], अथर्वसंहितायाम् [७.२६.१], शतपथब्राह्मणे च [३.५.३.२१] पठ्यते । 'इदं विष्णुर्वि चक्रमे' इति श्रुतिसमाख्यया विष्णुरेव हि त्रिविक्रम उच्यते । 'शं नो विष्णुरुरुक्रमः' इति च । 'जिह्वाऽसती दर्दुरिकेव याऽसौ **न चेत् प्रगायत्युरुगायगाथाम्'** [२.३.२०] इति भागवते शौनकवचनम् । उरुभिर्ब्रह्मादिभिरपि मुक्तैरपि गीयत इत्युरुगायः । उरवो वेदा अपि गायन्तीति चोरुगायः । उरुत्वेन गीयत इति चोरुगायः । 'तत्रापि दह्रं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम्' इति विष्णोरेव हृदयगुहानिहितत्व**प्रसिद्धेश्च** इति सूत्रार्थः । सूत्रोल्लिखितत्वमेव च विशेषो नाम प्रसिद्धौ ॥

**(भा.) नचाग्निपरिज्ञानमात्रेणानन्तलोकाप्तिः, भगवज्ज्ञानं विना। 'तद् वा एतदक्षरं गार्ग्यविदित्वाऽस्मिन् लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद् भवति' इत्यादिश्रुतेः । नच मुख्ये सम्भवत्यमुख्यार्थो युज्यते ॥ * ॥**

**(टी.)** एवं लिङ्गानुकूल्यं स्वार्थस्य दर्शितम्। अथ परार्थस्य तद्वैलोम्यं दर्शयति– **नचेति। नच भगवज्ज्ञानं विना** भूताग्निपरिज्ञानमात्रेण **अनन्तलोकाप्तिः** कस्यापि युक्ता। **'तद्वा एतदक्षरम्–'** इत्यादिश्रुतिविरोधात्। अपराग्निपरिज्ञानेनापि कथञ्चिदनन्तलोकाप्तिसम्भवात् सैवानन्तलोकाप्तिरित्युपचर्यत इत्यत आह– **नचेति**। अग्निशब्दस्य मुख्यार्थो विष्णुरुक्तः। अनन्तलोकशब्दस्यापि तल्लोक एव। अतस्तन्मुख्यार्थे सम्भवति नाग्न्यादिरमुख्यार्थो युज्यते। अतो विष्णुरेव स्वर्ग्योऽग्निः, तज्ज्ञानादेव मोक्ष इति सिद्धम् ॥ १५–१९ ॥

**(भा.चं.)'तद् वा एतदक्षरम्–'** इति बृहदारण्यकसंवादि श्रुत्यन्तरं स्यात्। 'यो वा एतदक्षरम्–' इति सम्प्रत्युपलब्धा बृहदारण्यकस्याऽनुपूर्वी [५.८.१०]। बहुशाखासंवाददर्शनार्थं चैवंविधाः पाठभेदा भवन्ति। तथाहि तत्वदीपाचार्यैः [१.३.१६]– 'स सेतुरिति वक्तव्ये च्छन्दोगवाक्ये 'एष सेतुः' इति वदता भगवता समानरूपं श्रुत्यन्तरमपि विषयवाक्यमादीयत इत्यावेदितम्; सर्वत्र च सर्वेषां समानजातीयानां श्रुत्यन्तराणां सहोपलक्षणार्थम्। एतदुपक्रमे च 'अस्मिन् ब्रह्मपुरे' इत्युदाहर्तव्येऽपि 'एतस्मिन् ब्रह्मपुरे' इत्युदाहृतम्। 'गायति त्रायति च' इति श्रुत्यन्तरमेव सदृशमधस्ताच्च सूचयाम्बभूवे। उपरिष्टाच्च क्वचित्क्वचिदेवम्भूतेषु वचनभेदेष्वयमेवाऽशयो बोद्धव्यः' इति। **अक्षरं नारायणमविदित्वा,** परेषामुपकारार्थं **जुहोति,** स्वयं वा **यजते** अग्न्यादिप्रतीकेषु पूजयति, **तपस्तपति** वा बहुकालम्। **तदन्तवदेव**। अतो नारायणज्ञानादेवानन्तलोकाप्तिरिति स्थितम्। वैश्वदेवादयो होमाः ज्ञानयज्ञादयो यज्ञा इति च। **कथञ्चिदिति**। स्वर्गलोक एवानन्तलोक इत्युपचर्यते। मनुष्य-

लोकापेक्षया दीर्घकालीनत्वात्। यथा मर्त्यापेक्षया दीर्घजीविन इति देवा अमरा उच्यन्ते। अथच स्वर्गोऽप्यनन्तस्य विष्णोरेव हि लोकः। स हि सर्व-लोकाधिपतिरित्यादिना कथञ्चिदुपचारेण योजनीयमिति ॥ १८–१९ ॥

**येयं प्रेते विचिकित्सा मनुष्ये**
**अस्तीत्येके नायमस्तीति चैके।**
**एतद् विद्यामनुशिष्टस्त्वयाऽहं**
**वराणामेष वरस्तृतीयः ॥ २० ॥**

**(भा.) प्रेते मुक्ते मनुष्ये। नियामकत्वेन भगवानस्तीति ज्ञानिनो वदन्ति। नास्तीत्यज्ञाः। तस्य नियामकस्य रूपं यथावदहं विद्याम् ॥**

**(टी.)** अथ **'येयं प्रेते–'** इत्यादि नचिकेतास्तृतीयं वरं वृणीते। तद्वाक्याभिप्रायं **'प्रेते मुक्ते–'** इत्यादिभाष्येण प्रपञ्चयति। **'येयं प्रेते मनुष्ये' मुक्ते** जीवे परमात्म**विचिकित्सा** विचारणा वादिभिः क्रियते। मुक्तजीवे तन्नियामकत्वेन भगवानस्ति वा नवेति। तत्र **अस्तीत्येके** वदन्ति। **नास्तीति च** अन्ये। अनयोः कतरत् प्राज्ञमतत्वेन ग्राह्यमिति **एतत् विद्याम्**। यदि च तस्मिन् नियामकः **अस्तीति ज्ञानिनो वदन्ति नास्तीत्यज्ञाः** तर्हि **तस्य नियामकस्य** नियम-नादिशक्तिमद्रूपं **त्वयाऽनुशिष्टोऽहं यथावद् विद्याम्** ॥ * ॥

**(भा.चं.)** 'येयं प्रेते–' इति मन्त्रं मायावादिनो व्याचक्षते– 'येयं विचिकित्सा प्रेते मृते मनुष्ये– अस्ति शरीरेन्द्रियादिव्यतिरिक्तो देहान्तरसम्बन्ध्यात्मेत्येके, नायमेवंविधोऽस्तीति चैके' इति। अद्भुतमेतत्। न हि यमलोकं गतस्य, तत्र मृतजीवान् पश्यतः, स्वयं मृत्वा यमं गतस्य, गमनकाल एव 'सस्यमिव मर्त्यः पच्यते सस्यमिव जायते पुनः' इति शरीरव्यतिरिक्तं शरीरान्तरसम्बन्धिन-मात्मानं चिन्तयतः स्वस्थचित्तस्य 'मृतोऽस्ति न वा' इति विचिकित्सा युज्यते। तदेतदुपरिष्टाद् भाष्य एव स्फुटम्। अत आह– **प्रेते मुक्ते मनुष्य** इति। भिन्नमिदं वाक्यम्। विचिकित्सेति न संशयः। नापि ज्ञातुमिच्छा। किन्तु

जिज्ञासामीमांसादिपदवद् विचारवचनं पदमेतदित्याह– **परमात्मविचिकित्सा विचारणा।** 'देवैरत्रापि विचिकित्सितं पुरा' इत्युत्तरवचनसंवादश्चास्मिन्नर्थे भवति। **अस्तीत्येके,** आस्तिकाः। **नास्तीति चैके,** नास्तिकाः। एतद् अस्तीति नास्तीति च वादयोः कतरत् प्राज्ञमतमित्येतत् **विद्याम्।** वस्तुतस्तु विशेषजिज्ञासयैवायं प्रश्नः। जानात्येव हि नचिकेता अस्तीति प्राज्ञमतमिति। यमोऽप्याह– 'नचिकेतः प्रजानन्' इति। नहि भगवन्तमजानन् प्रजानन् भवति। अत आह भाष्यकारः– **'अस्तीति ज्ञानिनो वदन्ति। नास्तीत्यज्ञाः'** इति। **अस्तीत्येके।** एकशब्दो मुख्यवचनः। **एके** मुख्यवादिनो ज्ञानिनोऽ**स्तीत्याहुः।** उत्तरशब्दोऽन्यवचनः। **एके** तदन्ये अज्ञानिनो **नायमस्तीत्याहुः।** तर्हि कः प्रश्नः? विशेषविषय एवायं प्रश्नः। ज्ञातमपि विशेषतो जानीयामिति। तदाह भाष्ये– **'नियामकस्य रूपं यथावद् विद्याम्'** इति। तद् व्याख्याति– **नियमनादिशक्तिमद्रूपं त्वयाऽनुशिष्टोऽहं यथावद् विद्यामिति।** उपरिष्टाद् यमप्रतिवचनेन च प्रश्नाशयोऽवगम्यते। नह्यस्तित्वं तत्र समर्थ्यते। किन्तु सत एव महिमातिशयो ह्युपदिश्यते। यदत्र कश्चिदाह– 'यथाश्रुतेऽपि न काचनासङ्गतिः। आस्तिकानां कुले जातो नचिकेताः 'शरीरातिरिक्त आत्माऽस्ति' इत्याप्तमुखाच्छ्रुत्वा, तत्र विश्वासेन परलोकफलानि कर्माणि कुर्महे श्रद्धामात्रेण। तत्र निश्चयस्तु भवतैव वक्तव्य इति पृच्छति यमम्। यमलोकं गतोऽपि यमं पश्यन्नपि तत्र यातनामनुभवतो भुवि दुष्कृतकारिण इति ज्ञातुं न प्रभवति, सूक्ष्मशरीरिणामप्रत्यक्षत्वात्' इत्यादि। तदेतत् सर्वं बालिशमिति मुखत एव स्फुटम्। नेदं खण्डनमप्यर्हति। अहो पाण्डित्यं नामेदम्– यस्य सूक्ष्मशरीराण्यप्यप्रत्यक्षाणि, स्वयं सूक्ष्मशरीरस्य सतः, स सूक्ष्मलोकं ददर्श, सूक्ष्मलोकाधिपं यमं ददर्श। अहो यमोऽपि 'मृतजीवोऽस्ति वा न वेति वयं निश्चयेन न जानीम' इत्याह– 'देवैरत्रापि विचिकित्सितं पुरा यन्न सुज्ञेयम्' इति। किमाश्चर्यमतः परम्। ये प्रश्नस्यापि भावं नावबुध्यन्ते कथमुत्तरशरधिं ते तितीर्षन्ति? शोच्या एव ते। ननु कथं

**'प्रेते मनुष्ये'** इति । नहि मनुष्याणामेव नियामकः पृच्छ्यते । देवानामपि । सत्यम् । नात्र मनुष्य इति मनुष्यजीव उच्यते । किन्तु मननशीलो जीवसमुदाय इत्याह– **'प्रेते मनुष्ये'** **मुक्ते जीवे** । एषः त्वया दित्सितानां त्रयाणां वराणां मध्ये मया प्रतिजिघृक्षितोऽन्तिमस्तृतीयो वरः । मन्त्रेऽस्मिन् तुरीयपादे दशाक्षराणीत्येकाक्षरन्यूना त्रिष्टुप् ।। * ।।

**(भा.) 'अस्य विस्रंसमानस्य शरीरस्थस्य देहिनः । देहाद् विमुच्यमानस्य किमत्र परिशिष्यत एतद्वै तत्' इति परिहाराच्च मुक्ते स्थितो भगवान् पृच्छ्यत इति सिद्धम् । देहाद् विशेषेण मोचनं नाम मुक्तिरेव । मुक्तेरपि मरणात्मकत्वान्मरणमित्यपि भवति । स्थूलदेहपरित्यागस्तु विस्रंसमानस्येत्यनेनैवोक्तो भवति ।।**

'अग्निस्थं परमात्मानं सामान्याज्ज्ञानतोऽपि तु ।
'अजानतस्तु मुक्तौ च जीवान्तःस्थितमीश्वरम् ।।
'नियामकं च जीवानां मुक्तानामपि सर्वदा ।
'गुणान् सर्वोत्तमत्वादीनविज्ञाय हरेस्तथा ।।
'नैव मुक्तिर्भवेत् तस्मात् कृच्छ्रात् तदवदद् यमः ।
'तस्य गोप्यत्वविज्ञप्त्यै तथाऽप्यग्निस्थवेदनात् ।
'सुखाधिक्यं भवेन्मुक्तौ तस्मात् तत् पृथगीरितम्'
इति तत्वसारे ।।

'स्थाणुमन्येऽनु संयन्ति यथाकर्म्म यथाश्रुतम्' इत्युक्त्वा 'य एष सुप्तेषु जागर्त्ति कामङ्कामं पुरुषो निर्म्ममाणः' इति वचनाच्च जीवेषु स्थितो भगवान् पृच्छ्यत इति सिद्धम् । मृतजीवे स्थितो मुक्तजीवे स्थितश्चोभयात्मको भगवान् विवक्षित इत्येतस्माच्चाविरोधः–

'गुह्यं तत् परमं ब्रह्म म्रियमाणशरीरिणम् ।
'सम्प्राप्तमपि जीवेषु जागर्त्ति स्वपितेष्वपि' इति ब्रह्माण्डे ।। * ।।

**(टी.)** ननु नायं प्रश्नः परमात्मविषयः । किन्तु 'प्रेते मनुष्ये' इत्येवोक्तत्वात् मुक्तजीवविषय एवायम् । मुक्तः परमात्मव्यतिरेकेणास्ति वा नवेति प्रश्ने तस्य ब्रह्मैक्यसिद्धेस्तद्व्यतिरेकेण नास्तीति परिहारोपपत्तेरित्येतदपाकरोति– **अस्य विस्रंसमानस्येत्यादिना** । अयं भावः– न तावन्मुक्तविषयोऽयं प्रश्नः । परिहारे तदवगमात् । बन्धाद् विमुच्यमानस्य जीवस्य परिशिष्यमाणमेतत् परावरं ब्रह्मैवेति वचनात् तद्व्यतिरिक्तमेव परिहारेऽवगम्यते । व्यधिकरणमुक्तेः । अतो **मुक्ते स्थितो भगवानेव पृच्छ्यत इति सिद्धम् ।** चशब्दात् परिहारे पुनरपि 'गुहाहितं गह्वरेष्ठम्' इति भेदोपदेशाच्च । सर्वदेवहृदयस्थं विशेषतो मुक्तसंस्थं च ब्रह्मेत्यर्थः ॥

**'देहाद् विमुच्यमानस्य'** इत्यत्र देहमोक्षो नाम मरणमेव न मुक्तिरित्यत आह– **देहादिति । देहाद् विशेषेण मोचनं नाम** संसार**मुक्तिरेव** । लिङ्गशरीर-विरहात्मकत्वात् । एवमपि 'मरणं माऽनुप्राक्षीः' इत्यत्र मरणमात्रं ह्युच्यते । नहि मोक्षः । विशेषस्य सहाश्रवणादित्यत आह– **मुक्तेरपीति** । मुक्तेरपि प्राकृतदेहविरहात्मकत्वात् **मरणमित्यपि** तद्व्यवहारो **भवति** ॥

देहाद् विशेषेण मुक्तिस्तु स्थूलदेहादेव । सुषुम्नयोत्क्रमस्य तत्परित्यागस्याप्यत्रैव वक्तव्यत्वादित्यत आह– **स्थूलेति** । देहाभिमानप्रहाणरूपं ह्यात्म-विस्रंसनम् । नान्यदित्यर्थः । अतो मुक्तनियन्तृविषय एवायं प्रश्नः ॥

नन्वग्निसंस्थस्य परात्मनः परिज्ञानादेव मोक्षोपपत्तेरुक्तत्वान्न तद्विषयप्रश्ने किञ्चित् प्रयोजनमित्याशङ्क्य परिहरति– **अग्निस्थं परमात्मानमित्यादिना** तत्वसारवचनेन । अग्निसंस्थस्य हरेर्मुक्तनियामकत्वमप्यस्तीति ज्ञातव्यम् । मुक्तिसिद्धये सोऽपि द्रष्टव्य इत्यभिप्रायः । यत् पुनरन्यं वरं वृणीष्वेत्यादिवचनं तद् भगवतो मुक्तनियामकत्वादिविशेषणमत्यन्तं गोप्यमिति ज्ञापनार्थम् । नत्वन्यथा । 'अन्यच्छ्रेयः' इति यथावत् प्रतिपादनात् ॥

इतश्च मुक्तान्तर्यामिप्रश्न एवायमिति सिद्ध्यतीत्याह– **स्थाणुमिति**। अयं भावः– मुक्तजीवादन्ये संसारिणः नानायोनिषु स्थाण्वादिषु वा प्रविश्य स्वकीयकर्मवासनानुसारेण शरीरिणो जायन्त **इत्युक्त्वा य एष**[१] **सुप्तेषु** स्वेच्छया सुप्त्यादिकं नियच्छन् **जागर्ति** तदेतद् ब्रह्मैव हि त्वया प्रेतेऽस्ति वा नवेति विचिकित्सितम्– एवं तत्परिहारवचनान्मुक्तामुक्त**जीवेषु स्थितो भगवान् पृच्छ्यत इति सिद्धम्**॥

नन्वमुक्तसंस्थः कथमिह प्रोच्यत इत्यत आह–**मृतेति**। प्रेतशब्दस्य मृतमुक्तोभयार्थत्वात् **मृतजीवे स्थितो मुक्तजीवे स्थितश्च** इति **उभयात्मको भगवान्** प्रश्ने **विवक्षित इत्येतस्माच्च** परिहारोऽप्येवम्भूत इति **अविरोधः**। अत्र ब्रह्माण्डवचनं चाऽह– **गुह्यं तदिति**। तस्मात् सामान्यतः सर्वनियामकं च भगवन्तं विद्यामिति प्रश्नाभिप्रायः॥ २० ॥

**(भा.चं.) परिहारे तदवगमात्**। मुक्तजीवातिरिक्तविषयोऽयं प्रश्न इत्यवगमात्। तदपि कुतः? **व्यधिकरणमुक्तेः**। देहबन्धाद् विमुच्यमानस्येति मुक्तजीवस्य षष्ठ्या निर्देशात्। एतद् वै तदिति मुक्तनियामकस्य प्रथमया निर्देशात्। एवं व्यधिकरणनिर्देश एव भिन्नविषयत्वं स्पष्टयति। **'गुहाहितं' सर्वदेवहृदयगुहास्थं विशेषतो 'गह्वरेष्ठं' मुक्तसंस्थम्**॥

**देहाभिमानप्रहाणरूपमिति**। देहिनः सत एव देहाद् विस्रंसनं नाम वर्तमानस्थूलदेहेऽभिमानप्रहाणम्। तदनुगामी च स्थूलदेहान्तरप्रवेश इति भावः। भाष्ये **'अग्निस्थं परमात्मानम्'**। परमात्मानमग्निस्थं जानतोऽपि, तुना तस्य यान्कानपि धर्मविशेषान् जानतोऽपि, तमेवाग्निस्थं मुक्तजीवान्तःस्थं विशिष्याजानतो नैव मुक्तिर्भवेत्। अत उभयथाऽपि ज्ञात्वोपास्यः। मुक्तनियामकत्वोपासनेन मुक्तिः। अग्निस्थत्वोपासनेन मुक्तौ सुखाधिक्यमिति। **'तत्**

---

१. 'य एषु' इति च क्वचित्।

**परमं ब्रह्म'** मुक्तनियामकतया संसारिणां **'गुह्यं'** न केवलम्। किन्तु **'म्रियमाणशरीरिणमपि सम्प्राप्तम्'** । पुनःपुनर्म्रियमाणशरीरस्थं संसारिणं जीवमपि सम्यक् अवस्थात्रयेऽपि नियन्तुं प्रविष्टम् । शरीरिणमिति समुदायवचनम् । तदाह– **'जीवेषु जागर्ति स्वपितेष्वपि'** । न केवलं जाग्रद्दशायां जागर्ति। किन्तु **जीवेषु** स्वस्मिन्नपीतेष्वपि स्वापं प्रापितेष्वपि स्वयं **जागर्ति** । किमुत स्वप्ने ॥ २० ॥

**देवैरत्रापि विचिकित्सितं पुरा**
**[१]न हि सुज्ञेयमणुरेष धर्मः ।**
**अन्यं वरं नचिकेतो वृणीष्व**
**मा मोपरोत्सीरति मा सृजैनम्[२]** ॥ २१ ॥

**(भा.) धारकत्वाद् धर्म्मो भगवान् ॥ * ॥**

**(टी.)** अथ यमस्तं प्रत्याह– **देवैरत्रापीति** । **अत्र** त्वद्विचारणविषये **पुरा देवैरपि** विचारितम्। **नहि** भगवतः स्वरूपं तैरपि **सुज्ञेय**मभूत्। यतः सर्वधारकत्वात् धर्मनामको भगवान् **अणुः** अतिसूक्ष्मः । तस्मादिमं विना **अन्यं वरं वृणीष्व** । **'मा मोप रोत्सीः'** इत्यत्र प्रथमो माशब्दो निषेधवाचकः । अन्यस्तु मामिति द्वितीयैकवचनस्याऽदेशरूपम् । नहि विपर्ययेण । आदेशस्वरूपस्य 'अनुदात्तं सर्वमपादादौ'[अष्टा.सू. ८.१.१८] इति पादादौ प्रयोगनिषेधात्। इममेव वरं वृण इत्युक्त्वा मां प्रत्युपरोधं मा कृथा इत्यर्थः । अत **एनं** वरं मामुद्दिश्य त्वं देहीति शब्दयोजना। अथवा **सृज** विसृजेत्यर्थः । एनमननुरोधाख्यम् ॥ २१ ॥

**(भा.चं.) 'मामा उपरोत्सीः'** इति निषेधे वीप्सायां द्विर्वचनमित्यपि व्याचक्षते। अन्येतु 'मा मां मोपरोत्सीः उपरोधं मा कार्षीः' इति द्वितीयं माशब्दं निषेधार्थकमाचक्षते। तत्तु शब्दानुशासनविरुद्धमिति स्मारयन् विवक्षितमर्थ-

१. **'नहि सुज्ञेयोऽणु–'** इति क्वचित् पाठान्तरम्। २. **'सृजैवम्'** इति क्वचित्।

माह– **प्रथमो माशब्दो निषेधवाचकः** । माङो रूपमिदं मेति । अत उपरोत्सीः इत्यडभावः । **'अति मा सृजैनम्'** । एनं तृतीयं वरमन्यवरवरणेन **मा** मामुद्दिश्य **अतिसृज** प्रतिदेहि । अथवा, **मा** मां प्रति, एनं अयमेव ममापेक्षितः प्रश्न इत्याग्रहं **अतिसृज** विसृज त्यजेत्येतत् । 'देवैरत्रापि–' इति द्वयोरपि मन्त्रयोः प्रथमपादे द्वादशाक्षराणीत्येकाक्षराधिका त्रिष्टुप् ।। २१ ।।

**देवैरत्रापि विचिकित्सितं किल**
**त्वं च मृत्यो यन्न सुज्ञेयमात्थ ।**
**वक्ता चास्य त्वादृगन्यो न लभ्यो**
**नान्यो वरस्तुल्य एतस्य कश्चित् ।। २२ ।।**

**(टी.)** नचिकेताः **'देवैः–'** इत्यादिना यमेनोक्तमेवानूद्य देवैरपि विचिकित्सितत्वादिना सर्वतो वैशिष्ट्यं दुर्लभत्वं च प्रतिपाद्य **'नान्यो वरस्तुल्य एतस्य कश्चित्'** इत्याह ।। २२ ।।

**(भा.चं.)** **'विचिकित्सितं किल'** । किलेति वार्त्तायामनुनये च । देवैरप्यत्र विचिकित्सितमिति त्वत्त एव श्रुता वार्त्ता । ननु त्वयैवास्यापूर्वत्वमङ्गीकृतमित्यनुनयते च । 'किलशब्दस्तु वार्त्तायां सम्भाव्यानुनयार्थयोः' इति चाभिधानम् । **त्वं च** त्वमपि, यः साक्षात्कृतपरतत्वो देववरः, **न सुज्ञेयमात्थ** । का कथाऽन्येषाम्? अथच मदीयभाग्यविशेषेण त्वादृशो ब्रह्मविद् वक्ता च दुर्लभो लब्धः । अन्यथा त्वादृशो वक्ता कुत्र लभ्येत । अत एतस्यापूर्वलाभस्य परित्यागायोगात् **नान्यः** कोऽपि **वर एतस्य तुल्य** इति मन्ये । अतो नान्यं वरं वृणे ।। २२ ।।

**शतायुषः पुत्रपौत्रान् वृणीष्व**
**बहून् पशून् हस्तिहिरण्यमश्वान् ।**

**भूमेर्म्महदायतनं वृणीष्व**
**स्वयं च जीव शरदो यावदिच्छसि ॥ २३ ॥**

**(टी.)** यद्यन्य एको वरः परमात्मवरस्य तुल्यो नेति ते मतं तर्हि यावद्भिर्मिलितैस्तत्तुल्यतां त्वं मन्यसे तावतः सुबहूनप्यभीष्टवरान् वृणीष्वेति गुरुस्तमाह– **शतायुष** इत्यादिना । हस्तिनो हिरण्यानि च **हस्तिहिरण्यम्** । बहूनिति विशेषणसामर्थ्याद् बहुत्वं विवक्षितम् । द्वन्द्वे त्वेकवद्भावादविरोधश्च । भूमिष्ठं[1] **महदायतनं** नगरादिस्थानम् । **यावत्** चतुर्युगान्तं मन्वन्तरान्तं वा **त्वमिच्छसि** तावतीः **शरदो जीव** ॥ २३ ॥

**(भा.चं.)** **शतायुषः** पूर्णायुषः । 'हस्ती च हिरण्यं च हस्तिहिरण्यम्' इति मायावादभाष्यम् । अहो व्याकरणकौशलम् । **बहून् पशून् बहूनश्वान् वृणीष्वेति** वदन् यमः कथमेकं हस्तिनमेकं च हिरण्यपिण्डं वृणीष्वेति ब्रूयात्? तस्माद् बालिशमेतत् परव्याख्यानमिति सूचयन्नाह– **हस्तिनो हिरण्यानि च** । श्रुतौ **'भूमेः'** इति सम्बन्धसामान्ये षष्ठी । स चात्राऽधाराधेयभावरूपः । अतः फलितमाह– **भूमिष्ठं महदायतनम्** । **यावत्** जीवितुं **इच्छसि** तावतीः **शरदो** वत्सरान् **जीव** । मन्त्रेऽस्मिन् तुरीयपादे त्रयोदशाक्षराणीति द्व्यक्षराधिका त्रिष्टुप् । 'वृणीषुव' इति क्षैप्रविश्लेषेण जगती वा ॥ २३ ॥

**एतत् तुल्यं यदि मन्यसे वरं**
**वृणीष्व वित्तं चिरजीविकां च ।**
**महाभूमौ नचिकेतस्त्वमेधि**
**कामानां त्वा कामभाजं करोमि ॥ २४ ॥**

**(टी.)** **एतत्** मदुक्तं सर्वं सम्मिलितं **यदि** तत्तुल्यं **मन्यसे** तर्हि तं **वृणीष्व** । यद्येतदप्यतुल्यमेव मन्यसे तर्हि पुनरप्यमितं रत्नादि**वित्तं** बहुमन्वन्तरं

---

१. आदर्शे–**'भूमिष्ठमहदायतनम्'** इति पठ्यते । ऐकपद्ये **'भूमिष्ठमहायतनम्'** इति स्वरसम् ।

कल्पान्तमेव वेत्यतिचिरजीवितं **वृणीष्व**। अथापि वा समुद्रपर्यन्तायां **महाभूमौ** चक्रवर्तिपदमधिष्ठाय वर्धस्व। तद्गत**कामानां** अप्रयत्नेन स्वेच्छयैव भोक्तारं **त्वा करोमि**॥ २४॥

**(भा.चं.)** एधि एधस्व **वर्धस्व**। एधि भव चक्रवर्तीति वा। अस्तेर्लोटि मध्यमपुरुषैकवचनम्। एधधात्वर्थेऽपि प्राञ्चः प्रयुञ्जते एधि एधस्वेति, एधि एधत इति। तद् यथा नारायणोपनिषदि– 'यस्मिन्निदं सं च वि चैधि' इति। तदा तु 'एधि' इत्यव्ययम्। यथा केषाञ्चिद् वैयाकरणानां मते 'आह, आस' इत्यादि। भौमानां **'कामानां'** कामेन स्वेच्छया भजत्यनुभवतीति **'कामभाजं' अप्रयत्नेन स्वेच्छयैव भोक्तारं 'करोमि'**। एतत्तुल्यमिति केवला त्रिष्टुप्॥ २४॥

**येये कामा दुर्लभा मर्त्यलोके**
**सर्वान् कामाꣳश्छन्दतः प्रार्थयस्व।**
**इमा रामाः सरथाः सतूर्या**
**न हीदृशा[1] लम्भनीया मनुष्यैः।**
**आभिर्मत्प्रत्ताभिः परिचारयस्व**
**नचिकेतो मरणं माऽनु प्राक्षीः ॥ २५ ॥**

**(भा.) मरणे स्थितभगवन्तं माऽनुप्राक्षीः॥ * ॥**

**(टी.)** अतिमानुषानप्यनेकविधान् कामान् मत्तः सङ्ग्रहीतुमिच्छ। एवमनेकानेकभोगसम्भवं सम्भाव्य **नचिकेतो मरणं माऽनुप्राक्षीरित्याह**। अस्य वाक्यस्याभिप्रायं कथयति– **मरणे स्थितभगवन्तं माऽनुप्राक्षीरिति**। मरणावस्थायां मुक्त्यवस्थायां च जीवनियामकत्वेन स्थितं भगवन्तमेकं न पृच्छेत्यर्थः॥ २५॥

---

१. **'नहीदृशी'** इति क्वचित्।

**(भा.चं.)** यदि मिलिता भौमाः कामा न पर्याप्ताः । तदा **अतिमानुषानपि** यथेच्छं पृच्छेत्याह यमः–**येये कामा दुर्लभा** इत्यादिना । **येये** इत्येकं पदम् । सर्वत्र वीप्सायामयमेव न्यायः । सहप्रयोगनैयत्यमेव ह्यैकपद्यं नाम । नहि ये कामा य इत्युक्ते वीप्साऽवगम्यते । नापि यो धूमवान् यः स वह्निमान् स इति । समस्तपदत्वादेवोत्तरं पदं सर्वानुदात्तमिति च स्वरसम् । 'अनुदात्तं च' [अष्टा.सू.८.१.३] इति हि पाणिनिः । व्युत्पत्तिवादे यद् भिन्नपदत्ववचनं तदवैदिकमित्युपेक्ष्यम् । एतेन गदाधरभट्टपतितमेव पन्थानं पतन्तः सर्वेऽपि पण्डितम्मन्याः सम्प्रदायबाह्याः परावसुरिव परास्ता वेदितव्याः । कामाः कमनीयाः कामयितव्याः । तान् **सर्वान् छन्दतः** यथेष्टं **प्रार्थयस्व** । के ते कामाः? **इमाः** रमयन्ति भोगिन इति **रामाः** रमणीया अप्सरसः । **'ईदृशाः'** ईदृश्यः **'रामाः'**, तूर्यते गायन्तं त्वरितमनुगच्छतीति तूर्यं वाद्यवृन्दम् । 'तूरी गतित्वरणहिंसनयोः' । 'तूर' इत्यन्ये । तद् यथा– 'ऋषी गतौ' इति काशकृत्स्नादयः पठन्ति । 'ऋष ज्ञाने' इति पुरातनाः । एतेन ततमानद्धं सुषिरं घनमिति चतुर्विधमपि वाद्यमुपसङ्गृहीतम् । तूर्यत ताड्यत इति तूर्यमानद्धं मुरजादिकमिति केचिद् व्याचक्षते । तूर्याणि रामाश्च भुवं नेतुं दिव्यो रथश्च सदिव्याश्वः । रमन्तेऽत्राऽसीना इति रथः । 'हनि-कुषि-नी-रमि-काशिभ्यः क्थन्'[६.२७] इति हि दशपादिका । **ईदृशाः** कामा वा **न लम्भनीया मनुष्यैः** । इति **'हि'** तवापि विदितमेतत् । **लम्भनीयाः** लब्धुं योग्याः । डुलभष् प्राप्तौ । 'लभेश्च' [अष्टा.सू.७.१.६४] इति नुमागमे 'लम्भयति, लम्भकः, लम्भनीयः' इत्यादिरूपसिद्धिरिति पाणिनीयाः । अन्ये त्वाहुः– 'रभिलभिधातू अन्यावेव चुरादिषु पठनीयौ । लाघवमिच्छद्भिः पाणिन्यादिभिरेकमेव धातुं पठित्वा द्विप्रकृतीनां शब्दानां साधुत्वमन्वाख्यातम्' इति । प्रत्ताभिः प्रदत्ताभिः । 'अच उपसर्गात् तः' [अष्टा.सू.७.४.४७] । भाष्ये–**'मरणे स्थितभगवन्तम्'** इति । एतेन 'मरणं काकदन्तपरीक्षारूपं माऽनुप्राक्षीः' इति परकीयं व्याख्यानमपहसति । नहि भगवद्विषयां परीक्षां काकदन्तपरीक्षा-

सदृक्षां प्रेक्षावान् विवक्षति। **मुक्त्यवस्थायां चेति**। 'अत्र मरणं मोक्षः। सर्वशरीरविरहात्मकत्वात् तस्य' [१.४.७] इति तत्वप्रदीपे। येये कामा इति षट्चरणा त्रिष्टुप्। तृतीयचरणे दशाक्षरेत्येकाक्षरोना। 'सतूरिया' इति क्षैप्रविश्लेषेण केवला वा। पञ्चमपादे चैकाक्षराधिका। स्वराडष्टिर्वाऽतिच्छन्दः॥ २५॥

**श्वोभावा मर्त्यस्य यदन्तकैतत्**
**सर्वेन्द्रियाणां जरयन्ति तेजः।**
**अपि सर्वं जीवितमल्पमेव**
**तवैव वाहास्तव नृत्तगीते[1]** ॥ २६॥

**(टी.)** एवं बोधितोऽपि नचिकेता निश्चलचेताः स्वाभिप्रायमचिन्तयन् तमाह— **श्वोभावा** इत्यादि। य एते भगवताऽभिहिताः कामभोगवराः ते सर्वे सर्वथा मृतिशीलस्याद्यतनं मरणादिक्लेशं कथञ्चित् श्वो भावयन्ति। न पुनरनन्तकालाय परिहरन्ति। अतः **श्वोभावा** इति **यत्** तस्मात् तेऽद्यप्रभृति तत्तदिन्द्रियाणां **तेजः** क्रमेण **सर्वं जरयन्ति**। अथैते स्वयमपि श्वःप्रणाशादभावा एव भवन्ति। अथो यत् पुनश्चिरजीवितं मर्त्यस्योक्तं [तदपि] सावधिकत्वादनन्तकालविवक्षयाऽत्यल्पमेव भवति। अतोऽश्वादयोऽर्था अमर्त्यस्य **तवैव** तिष्ठन्तु॥ २६॥

**(भा.चं.)** **'यदन्तकैतत्'** इति मूले यदेतदिति लिङ्गमशिष्यम्। बहुवचनार्थे चैकवचनमित्याह— **'यदेतत्' य एते भगवताऽभिहिताः कामभोगवराः** इति। अथच व्याख्यानान्तरम्— यदिति हेत्वर्थे। **यद्** यस्मात् श्वोभावाः तस्मात् **एतत्** एते। **एतत्सर्वेन्द्रियाणामित्येकं** वा पदम्। एतेषां सर्वेषां **तत्तदिन्द्रियाणामिति**। एतदिति भिन्नं वा। **एतत्** तेजः **जरयन्तीत्युत्तरान्वयि**। तदेतदाह— **'अतः श्वोभावा इति यत्'** इत्यादिना। मर्त्यलोके दुर्लभा अपि कामाः **श्वोभावाः**। अद्यतनं मृत्युं श्वो भावयन्तीति। श्वः स्वयमपि न

१. 'नृत्यगीते' इति शङ्कररङ्गरामानुजौ। 'नृत्तगीतम्' इति कश्चित्।

भवन्तीति चश्वोऽभावाः। 'अपि सर्वम्' इति देहल्यां दीपः। **सर्वमपि तेजः जरयन्ति। सर्वमपि जीवितमल्पमेव**। अतो रथाश्वादयो **वाहाः** नृत्तगीत-निपुणा रामाः तत्साधनानि च तूर्यादीनि वाद्यानि **तवैव**। निरासदार्ढ्याय तवेति द्विरुक्तिः। केवला त्रिष्टुबियम्। उपरितना च ॥ २६ ॥

**न वित्तेन तर्पणीयो मनुष्यो**
**लप्स्यामहे वित्तमद्राक्ष्म चेत् त्वाम्[1] ।**
**जीविष्यामो यावदीशिष्यसि त्वं**
**वरस्तु मे वरणीयः स एव ॥ २७ ॥**

**(टी.)** न च मरणादिक्लेशमनुभवन् मनुष्यः तत्परिहारं विना **वित्तेन तर्पणीयः**। अथापि वयं यावद्रम्यं **वित्तं** तु विनाऽपि वरं त्वद्दृष्ट्यैव **लप्स्यामहे**। **यावत् त्वमीशिष्यसि तावत् जीविष्यामः**। मम **वरणीयो वरस्तु** सर्व-जीवसंस्थः **स** भगवानेव। सम्पूर्णफलत्वात् ॥ २७ ॥

**(भा.चं.) नच मरणादीति**। अपिच वित्तगृध्नुर्**मनुष्यो न वित्तेन** तर्पणीयः। त्वं यावद्यावद् ददासि ततस्ततोऽधिकं स वाञ्छत्येव। कथं नाम स तर्प्येत। तदीयवित्तलोभस्योत्तरावधिविरहात्। सान्ता हि दित्सा। अनन्ता च लिप्सा। ईशिष्यसि ईशवदाचरिष्यसि। तवेदमीशवद् वर्तनमपि भगवदधीनम्, न स्वतन्त्रमित्यर्थः। आचारार्थे हि क्विपमाहुः। तेन ईशवदाचरति ईशतीति भवति। यद्वा ईशिष्यसि ईशिष्यसे। छान्दसः परस्मैभाषः। तेषामीशनमपि केवलं परहितायेति तदर्थः। एकस्मिन् दिने त्वमपि मरिष्यसि। तदा कथमस्मान् जीवयितुमीशिष्यसे? ॥ २७ ॥

**अजीर्यताममृतानामुपेत्य**
**जीर्यन्मर्त्यः क्वधस्थः[2] प्रजानन् ।**

---

१. 'त्वा' इति शङ्करङ्गरामानुजौ।

२. अत्र व्याख्यातारः– 'क्वधःस्थः' इति, 'क्वाधःस्थः' इति 'क्व तदास्थः' इति च बहुधा पठन्ति।

अभिद्ध्यायन् वर्णरतिप्रमोदा-
नतिदीर्घे[1] जीविते को रमेत ॥ २८ ॥

**(टी.)** इतश्च हरिरेव वरणीय एष्टव्य इत्याह– **अजीर्यतामिति**। त्वादृशानां समीपमेत्य तत् सार्वज्ञ्यादिगुणजातं प्रकर्षेण जानन्नपि ततः साक्षादुत्तम-तत्वश्रवणं विहाय स्वयमेव **जीर्यन् मर्त्यः क्वधस्थो** भवति। नित्यातिक्वथनतीक्ष्णे नरके पतित्वा नित्यं तत्रैव तिष्ठति। तथाच भगवतैवान्यत्रोक्तम्– 'यदा तु ज्ञानिसद्भावे नैव गृह्णन्ति तत् परम्। असुराणां तमःप्राप्तिस्तदा नियमतो भवेत्' इति। अत्र **क्वधस्थ** इति क्वथस्थ उच्यते। 'तृतीयोऽतिशये' इति थकारस्य धकारः। 'अधा ते विष्णो विदुषा चिदर्ध्यः–'[ऋ.सं.१.१५६.१] इत्यादि-वत्। **अतिदीर्घे जीविते को रमेत** श्रेयस्काम इति शेषः॥ २८ ॥

**(भा.चं.)** त्वादृशानां **'अजीर्यताममृतानां'** जितजरामरणानां देवानां **'उपेत्य' समीपमेत्य**। कः? **जीर्यन् मर्त्यः'** जरामरणभाङ् मनुष्यः। **'अभिध्यायन्'** अभीक्ष्णं ध्यायन्। तानेव परमपुरुषार्थान् मन्वानः कथमथ प्राप्नवानीति भूयोभूयश्चिन्तयन्। अथवा तेषामसारतामभितो ध्यायन्। युवभिर्मोहवैवश्येन वरणीये कामिनीकायवर्णे या रतिः चक्षुःप्रीतिः तया चोत्तरोत्तरं परिष्वङ्ग-चुम्बनाङ्गमर्दनजा ये प्रमोदास्तान**भिध्यायन्**। स्वयं भोगासमर्थो वार्धके केवलं यौवनानुभूतं यौवतं सदा चिन्तयन्नित्येतत्। द्वितीयचरणे दशाक्ष-राणीत्येकाक्षरोना त्रिष्टुप्। 'मर्तियः' इति क्षैप्रविश्लेषेण केवला वा॥ २८ ॥

यस्मिन्निदं विचिकित्सन्ति मृत्यो
[2]साम्पराये महति ब्रूहि नस्तत्।
योऽयं वरो गूढमनुप्रविष्टो
नान्यं तस्मान्नचिकेता वृणीते ॥ २९ ॥

**इति श्रीकाठकोपनिषदि प्रथमाध्याये प्रथमा वल्ली समाप्ता**

---

१. 'अनतिदीर्घे' इति रङ्गरामानुजः। २. 'यत् साम्पराये' इति केचित्।

**(भा.) महति साम्पराये मुक्तौ ॥ * ॥**

**(टी.)** अतः श्रेयस्कामाय मह्यं तदुपासनमेव ब्रूहीति प्रार्थयन्नाह– **यस्मिन्निति** । **यस्मिन्** विष्ण्वाख्ये ब्रह्मणि **इदं** जीवनियामकत्वादिधर्मजातं **महति [साम्पराये]** मुक्त्यवस्थायां विद्यमाना देवादयो ह्यपि **विचिकित्सन्ति तद्** ब्रह्मैवास्माकं ब्रूहीति । **योऽयं** मया वरणीयत्वेन प्रार्थितो विष्ण्वाख्यो विशिष्टवरः **तस्मादन्यं** नाहं वृणे । स हि सर्वजीवहृदये गूढत्वेनानुप्रविष्टत्वात् सुदुर्ज्ञेयः । अतस्तमेव वृणे ॥ २९ ॥

**(भा.चं.) 'महति साम्पराये'** महत्यां मुक्तौ । सम्यक् परस्मिन्नयनं सम्परायः । स एवावधार्यते साम्पराय इति । 'दैर्घ्यं प्लुतं च हुङ्कारो बिन्दुरप्यवधारणे' । महागुणोपासकानां देवादीनां मुक्तिर्महामुक्तिः । तदेतदाह– **मुक्त्यवस्थायां विद्यमाना देवादय** इति । मुक्ता देवा अपि **विचिकित्सन्ति** । का कथा पुनरमुक्तानामिति भावः । यद्वा परस्मिन्नयनं सुषुप्त्यवस्थायामप्यस्ति । सम्यगयनमपि तुरीयावस्थायामस्ति । अतो **'महति साम्पराये'** इति विशिशेष । सदातनत्वमेव च महत्त्वं नाम । क्षणिकं हि तुरीयदर्शनम् । 'तुरीयं दृश्यते क्वापि प्राप्तानां षोडशीं कलाम्' इति हि स्मरन्ति । साम्परायार्थं मुक्तिनिमित्तमस्माकं ब्रूहीति वा । **'योऽयं वरो गूढमनुप्रविष्टः'** अविज्ञेयत्वरूपं गुप्तस्थानमनुप्रविश्य रहसि स्थितः इति प्रातीतिकमर्थमनुपमृद्यैवापूर्वं भगवद्गुणानुसन्धानरूपमर्थान्तरमाह– **स हि सर्वजीवहृदय** इति । **'नान्यं तस्मान्नचिकेता वृणीते'** इति श्रुतिवचनमिति मायावादिनः । मन्दतरमेतत् । अवधारणार्थं स्वस्यैव परोक्षवचनमिति स्वरसार्थत्यागे कारणाभावादिति मनसि कृत्वाऽऽह– **तस्मादन्यं** वरं **नाहं वृणे** । मन्त्रेऽस्मिन् केवला त्रिष्टुप् ॥ २९ ॥

—०—

[अथ प्रथमे द्वितीया वल्ली]

अन्यच्छ्रेयोऽन्यदुतैव[1] प्रेय-
स्ते उभे नानार्थे पुरुषꣳ सिनीतः ।
तयोः श्रेय आददानस्य साधु भवति
हीयतेऽर्थाद् य उ प्रेयो वृणीते ॥ १ ॥

**(टी.)** अथ यमो नचिकेतसो निष्ठातिशयं दृष्ट्वाऽत्यन्तं सन्तुष्टस्तमभीष्ट-वरदानयोग्यं मन्वानस्तमेवाधिकं प्रशंसति– **अन्यच्छ्रेय** इत्यादिवाक्यैः । श्रेयश्च प्रेयश्चेत्युक्ते अत्यन्तान्योन्यविरुद्धलक्षणे विरुद्धार्थप्रदे च । तस्मादेते **पुरुषं** योग्यायोग्यप्रवृत्त्योरेव **सिनीतः** बध्नीतः । षिञ् बन्धन इति धातोः । **यस्तयोर्मध्ये** योग्यप्रवृत्तिकं **श्रेय** आदत्ते तस्य **साधु भवति** प्रशस्तं मोक्षफलं भवति । अन्यस्तु साधुप्रयोजनेन **हीयते** ॥ १ ॥

**(भा.चं.)** अन्यदुतेति बाढार्थे : 'उतापी द्वौ च बाढार्थौ' इत्यभिधानम् । **श्रेयः अन्यत्** । **प्रेय उत** प्रेयश्चान्यदेवेति । **अन्यदिति** अन्योन्यविरुद्धलक्षण-मित्यर्थः । **श्रेयश्च प्रेयश्चेत्युक्ते 'ते उभे' 'नानार्थे' विरुद्धफलप्रदे च** । **ते** इति द्विवचनेनैव द्वित्वसिद्धौ, **उभे** इति पुनर्वचनमात्यन्तिकस्तयोर्विरोध इति ज्ञापयितुम् । तद्यथा– देवासुरा उभयेऽप्यनिशमावधिषत । अथच श्रेयःप्रेयसी द्विविधे भवतः । क्वचिद्धेये, क्वचिद् ग्राह्ये । **ते उभे** द्विविधे अपि **पुरुषं सिनीतः** । अतितरां प्रशस्तं हि श्रेयः । अतितरां च प्रियं प्रेयः । 'प्रशस्यस्य श्रः' [अष्टा.सू.५.३.६०] इति, 'प्रिय-स्थिर-स्फिरोरु-बहुल-गुरु-वृद्ध-तृप्र-दीर्घ-वृन्दारकाणां प्र-स्थ-स्फ-वर्-बंहि-गर्-वर्षि-त्रप्-द्राघि-वृन्दाः' [६.४.१५७] इति च पाणिनिः । **'षिञ् बन्धने'** इति । धातुरयं स्वादिगणेऽपि

---

१. **'अन्यदुतेव'** इति पाठान्तरम् ।

पठ्यते। क्र्यादिगणेऽपि। स्वादित्वे सिनुत इति रूपम्। क्र्यादित्वे तु सिनीत इति। **य उ** यस्तु। अन्यच्छ्रेय इति प्रथमचरणे 'अन्यदुत' इति विश्लेषेणैकादशाक्षराणि। द्वितीयचरणे द्वादशाक्षराणि। तृतीयचरणे चतुर्दशाक्षराणि। तुरीयचरणे 'हीयते अर्थात्' इति विश्लेषेण द्वादशैवाक्षराणि। संहत्यैकोनपञ्चाशदक्षराणीत्येकाक्षराधिका जगती, अविश्लेषेण केवला वा जगती ॥ १ ॥

**श्रेयश्च प्रेयश्च मनुष्यमेत-**
**स्तौ सम्परीत्य विविनक्ति धीरः ।**
**श्रेयो हि धीरोऽभि प्रेयसो वृणीते**
**प्रेयो मन्दो योगक्षेमान् वृणीते[1]** ॥ २ ॥

**(टी.)** नन्वप्राप्तयोः कथमादानं हानं वा शक्यमित्यत आह–**श्रेयश्चे**ति। श्रेयःप्रेयसी किं मे कृत्यमिति मनसा मन्वानं मनुष्यं युगपत् समेतः। तथाहि–इदं मयाऽनुष्ठेयमदो वेति संशयकोटित्वेन सम्प्राप्नुतः। अथ **धीरस्तावत्** स्वबुद्ध्या सम्यक् सर्वतो विचार्य **विविनक्ति** अयं हेयोऽसौ ग्राह्य इति विवेचयति। अथ मुखतः प्राप्तस्यपि **प्रेयसः** सकाशाद् विहाय **श्रेय** एव **हि** स **धीरोऽभीष्टं वृणीते**। प्रेयस इति द्वितीयार्थवाचिनी पञ्चमी वा विभक्तिः। तदा तु **प्रेयसः श्रेयो वृणीत** इत्यन्वयः। प्रेयो विहाय श्रेयो वृणीत इत्यर्थः। 'कर्मणि ल्यब्लोपे पञ्चमी वक्तव्या' इति सूत्रात्। अथ मन्दबुद्धिः श्रेयो विहाय **प्रेयो वृणीते**। ऐहिक**योगक्षेमांश्च**। अविमृश्य स्वाभीष्टकारित्वात्॥ २ ॥

**(भा.चं.) श्रेयो** हितं भवति। प्रेयः प्रियं भवति। **'सम्परीत्य' सम्यक् सर्वतो विचार्य 'विविनक्ति' विवेचयति**। 'विचिर् पृथग्भावे' इति रुधादिगणपठितो धातुः। **'अभि प्रेयसः'** अभिमुखं प्रेयो विहाय **'श्रेयोऽभि वृणीते' अभीष्टं वृणीते**। **'कर्मणि ल्यब्लोपे पञ्चमी वक्तव्या' इति सूत्रात्** सूचनाद्धेतोः।

१. **'योगक्षेमाद् वृणीते'** इति शङ्कररङ्गरामानुजौ।

वार्त्तिकवचनस्यार्थानुवादोऽयमिति भाति। तथाहि वार्त्तिकम्– 'पञ्चमीविधाने ल्यब्लोपे कर्मण्युपसङ्ख्यानम्'[२.३.२८] इति । देशभेदेन नानाविधो हि पाठभेदो वार्तिकस्य दृश्यते । **'मन्दः प्रेयो वृणीते'**, प्रेयस एव च क्षुद्रान् **'योगक्षेमान् वृणीते'** । क्षुद्रकामलाभं तद्रक्षणं चेत्येतत्। 'योगोऽपूर्वार्थसम्प्राप्तौ' इति, 'क्षेमोऽस्त्री लब्धरक्षणे' इति चाभिधानम् । तृतीयपादे द्वादशाक्षराणीत्येकाक्षराधिका त्रिष्टुप्॥ २ ॥

**स त्वं प्रियान् प्रियरूपाꣳश्च कामा-**
**नभिध्यायन् नचिकतोऽत्यस्राक्षीः[1] ।**
**नैतां सृङ्कां वित्तमयीमवाप्तो**
**यस्यां मज्जन्ति बहवो मनुष्याः ॥ ३ ॥**

**(भा.)** सृङ्कां शृङ्खलाम्॥ * ॥

**(टी.) स त्वं** बालः सन्नप्यमन्दबुद्धित्वात् पुत्रमित्रादिप्रियार्थान् [2]नृत्तगीतादिप्रियरूपकामांश्च श्वोभावादिदोषम**भिध्यायन् अत्यस्राक्षीः**। **'सृङ्काम्'** इति पदमनूद्य **'शृङ्खलाम्'** इति व्याख्याति । त्वमेतां मद्दत्तामपि शृङ्खलां न गृहीतवानसि। श्रेयोवरणैकतत्परत्वात्। वित्तमोहराहित्याच्च॥ ३ ॥

**(भा.चं.) सृङ्कां शृङ्खलाम्**। यद्यपि 'सृङ्कां स्वर्णमयीं चैव कण्ठमालाम्' इति पुरा पुराणवचनेन व्याख्यातम् । सैव हि माला वित्तमोहमयी संसारे बन्धनशृङ्खला । कण्ठमालेयं गळपाशा रज्जुरिति जानन्नेव नचिकेता नैतां जग्राहेत्यस्मान् ग्राहयति भाष्यकारः–**'सृङ्कां शृङ्खलाम्'** इति भाष्यपदाभ्याम्। स्रङ्कयति गमयति कारां बन्धनं वेति सृङ्का। श्रङ्कयतीति शृङ्खला। स्रकि श्रकि गतौ। रेफस्य ऋभावः। कस्य खलश्च। यद्वा सॄ शॄ हिंसायाम्। सृणातीति सृङ्का। शृणातीति शृङ्खला। 'सृङ् इति कायतीति सृङ्का' इत्येके। **शृङ्खलां न**

१. '–ऽन्यत् प्राक्षीः' इति क्वचित्।
२. 'नृत्तगानगीतादि–' इति च पठ्यते।

**गृहीतवानसि** । कण्ठमालायितामथापि शृङ्खलायिताम् । **यस्यां** शृङ्खलायां स्वर्णमय्यां दृष्टमात्रायां **बहवो** रजस्तमःप्रधाना मनुष्याः **मज्जन्ति** ममेदं स्यान्ममेदं स्यादिति लालां मुञ्चन्तो मुह्यन्ति । तादृशीमपि एतां मालां त्वं **नावाप्तः** । यतस्त्वं जानासि सा वित्तमयीति । ये चित्तमोहने वित्ते मज्जन्ति तेऽत्रापि मज्जन्ति मनुष्याः । न देवा देवप्रकृतयो वा । यत इयं माला संसार-मालां प्रतिनिधत्ते । स त्वं प्रियानिति केवला त्रिष्टुप् ।। ३ ।।

**दूरमेते विपरीते विषूची**
**अविद्या या च विद्येति ज्ञाता ।**
**विद्याभीप्सितं[1] नचिकेतसं मन्ये**
**न त्वा कामा बहवोऽलोलुपन्त[2]** ।। ४ ।।

**(टी.)** अतः श्रेयःप्रेयःसाधकयोः पुंसोरन्योन्यविरुद्ध[गति]मत्त्वं ह्युक्तम् । अथ तत्साधनभूतयोर्विद्याविद्ययोश्चात्यन्तं विरुद्धगतित्वं वक्ति– **दूरमिति** । येयं जीवेऽनादितस्तत्वाविद्या **या च** तद्विद्याऽत्यर्थं प्रयत्नसाध्येति **ज्ञाता** ते दूरत एव विपरीतत्वेन विष्वग्गते । तमःप्रकाशवत् सहस्थितिरहिते इत्य-भिप्रायः । अतो **विद्याभीप्सितं नचिकेतसं** त्वां ऐहिकाः **कामाः** सु**बहवो**ऽपि **नालोलुपन्त** नैवाचालयन्नित्यर्थः ।। ४ ।।

**(भा.चं.)** विष्वगञ्चत इति **विषूची** विषूच्यौ । विद्याऽभीप्सिताऽस्येति विद्याभीप्सितस्तं **विद्याभीप्सितं** त्वां **मन्ये** । विद्याभीप्सुत्वादेव **कामा** **नालोलुपन्ते**ति च **मन्ये** । नचिकेतसमिति नामनिर्देशो दार्ढ्यार्थम् । यद्यपि पाणिनिः बहुव्रीहौ निष्ठायाः पूर्वनिपातं मन्यते–'निष्ठा' [अष्टा.सू.२.२.३६] इति । अत एव व्याकरणभीताः केचित् 'विद्याभीप्सिनम्' इति श्रौतं पाठमेव

१. **'विद्याभीप्सिनम्'** इति शाङ्करः पाठः । रङ्गरामानुजमुनिस्त्वनिर्णयमेव शरणं जगाम ।

२. **'बहवो लोलुपन्तः'** इत्यपि पठन्ति ।

व्यतियन्ति। तन्नाऽद्दत्यम्। उत्सर्गोऽयं यन्निष्ठायाः पूर्वनिपात इति। सर्वोऽपि ह्युत्सर्गः सापवादो भवति। स्वयमेव चाऽहापवादम्–'वाऽहिताग्न्यादिषु' [अष्टा.सू.२.२.३७] इति। आहिताग्न्यादिराकृतिगण इति च पाणिनीयाः। योय एतत्समानाकृतिः प्रयोगः स सर्वोऽप्यत्र गणे गण्यत इति किलाऽकृतिगण उच्यते। अतोऽभीप्सितविद्यो विद्याभीप्सितोऽपि भवति। अपिच मन्त्रवर्णानुसारेण व्याकरणमुन्नेयं भवति। न व्याकरणानुसारेण मन्त्रवर्णः। नापि पूर्वतनं पाश्चात्येन बाध्यते। 'स्वयं विद्ययाऽभीप्सितं नचिकेतसं मन्ये' इत्यन्ये। **नालोलुपन्त नैवाचालयन्निति**। कामलौल्येन चपलं नाकुर्वन्नित्यर्थः। कथमलोलुपन्त? तत् करोतीति णिचि अलोलुपयन्निति भवति। तस्येदं छान्दसं रूपम्। लोलुपत इति छान्दसं धात्वन्तरं वा। वैयाकरणास्तु लुप्लृ छेदन इत्यस्माद् धात्वर्थगर्हायां यङ्प्रत्ययो भवति, तेन 'गर्हितं लुम्पति लोलुप्यते' इति रूपनिष्पत्तिरित्याहुः। तथाहि स्मरन्ति– 'लुप-सद-चर-जप-जभ-दह-दश-गॄभ्यो भावगर्हायाम्' [अष्टा.सू.३.१.२४] इति। एतां वैयाकरणप्रक्रियामनुजिगमिषन्तः केचिदाचक्षते– अलोलुप्यन्तेति वक्तव्ये यलोपेन 'अलोलुपन्त' इति च्छान्दसं रूपमिति। व्याचक्षते च 'नालोलुपन्त विच्छेदं न कृतवन्तः' इति। 'दूरमेते' इति मन्त्रेऽस्मिन् द्वितीयचरणे दशाक्षराणि, तृतीयचरणे द्वादशाक्षराणीति संहत्य केवला त्रिष्टुप्॥ ४॥

**अविद्यायामन्तरे वेष्टयमानाः**[१]
**स्वयन्धीराः पण्डितम्मन्यमानाः।**
**दन्द्रम्यमाणाः परियन्ति मूढा**
**अन्धेनैव नीयमाना यथाऽन्धाः ॥ ५ ॥**

---

१. 'वर्तमानाः' इति सर्वत्र प्रचुरः पाठः। 'वेष्टयमानाः' इत्येव प्राचीनः पाठः। तथैव तत्वदीपेऽपि पाठः [१.४.७]। अत्रापि च टीकावाक्यम्–'अनाद्यविद्यावेष्टनहीनस्य तव' इति। शाङ्करेऽपि तथा। 'वेष्टयमानाः पुत्रपश्वादिपाशशतैः' इति तद्व्याख्यानात्।

**(टी.)** अथ विद्यानभीप्सवो मन्दधियः किं कुर्वन्तीत्याकाङ्क्षायामाह- **अविद्यायामिति** । **स्वयन्धीराः** केवलं स्वबुद्ध्यैव धीराः । पण्डिता वयमिति मन्यमानाः । नतु पण्डिताः । किन्तु **मूढा** एव । **दन्द्रम्यमाणाः** सम्यग् द्रुमायमाणाः । द्रुमवन्मोघं जीवन्तः पर्यटन्तीत्यर्थः । तथाचोक्तम्- 'तरवः किं न जीवन्ति भस्त्राः किं न श्वसन्त्युत । न खादन्ति न मेहन्ति किं ग्रामपशवोऽपरे' [भाग.२.३.१८] इत्यादि । अन्यो मूढतमस्तेषां प्रेरकश्च भवति । अत एवान्ध-प्रेरितान्धवत् गम्यागम्यविभागापरिज्ञानेन तत्रतत्रार्थेषु स्खलन्ति । तस्मादनाद्य-विद्यावेष्टनहीनस्य तव श्रेयोविरुद्धः[1] विद्याभिभवो न भवतीति भावः ॥ ५ ॥

**(भा.चं.)** अविद्यायामन्तर इति केवला त्रिष्टुप् । अयमेव मन्त्र आथर्वणेऽपि पठ्यते किञ्चिद्व्यत्यासेन । 'अविद्यायामन्तरे वेष्ट्यमानाः' इति काठकपाठः । 'अविद्यायामन्तरे वर्तमानाः' इति त्वाथर्वणे । काठकेऽपि यत् सर्वत्र 'वर्तमानाः' इति पठ्यते तदाथर्वणपाठसाङ्कर्येणैव । उत्तरार्द्धेऽपि 'दन्द्रम्यमाणाः' इति काठके । 'जङ्घन्यमानाः' इत्याथर्वणे । स्वप्रज्ञाकल्पितधीरभावाः **स्वयम्-धीराः** । प्रज्ञावादिन इत्येतत् । नतूपासिततत्ववादिचरणाः, नापि विदितवेद्या इत्यर्थः । स्वयं धीरा इति मन्यमानाः, आत्मानमेव पण्डितं मन्यमाना इति भिन्नानि पदानीति केचित् । 'आत्ममाने खश्च' [अष्टा.सू.३.२.८३] इति सूत्रवित्रस्ता एवं व्याचक्षते । ऐकपद्यमेव स्वरसम् । नहि व्याकरणानु-सारेण श्रुतिवचनानि नेयानि । किन्तु श्रुत्यनुसारेण व्याकरणमेवोन्नेयं भवतीत्युक्तम् । अत्र तत्वप्रदीपाचार्यः-'अविद्यायामन्तरे वेष्ट्यमानाः स्व-यन्धीराः पण्डितम्मन्यमाना इत्यादिनाऽन्यत् सर्वं विनिन्द्य 'श्रवणायापि-' इत्यादिना परमात्मानं तद्वक्तारं श्रोतारं ज्ञातारं च पृथक्पृथक् प्रशस्य तत्स्वरूपमवर्णयत् । अत्रैव तात्पर्यप्रदिदर्शयिषयैवान्यदप्यभिधाय विनिनिन्द । निन्दनार्थमप्यन्यस्य वाच्यत्वमनुज्ञातमिति चेत् सत्यमधिकारिभेदापेक्षया । 'सर्वे वेदा यत् पदमामनन्ति' इतीहैव चान्यस्यावाच्यत्वं प्रतिज्ञायते'

---
१. कोशे **'श्रेयोर्थः'** इति पठ्यते ।

[१.४.८] इति । **दन्द्रम्यमाणाः** अतिशयेन द्रुमायन्ते द्रुमन्ति वा दन्द्रम्यन्ते। अपूर्वोऽयमर्थाविष्कारः । वैयाकरणास्तु कुटिलं द्रमति दन्द्रम्यते इति रूपं निष्पादयन्ति। द्रम गतौ। 'नित्यं कौटिल्ये गतौ' [अष्टा.सू.३.१.२३] इति। 'दन्द्रम्यमाणाः परियन्ति' इति पुनरुक्तं तु भवति । कथञ्चित् सङ्गमनाद् वरं प्राचीनं व्याख्यानम्– **'द्रुमवन्मोघं जीवन्तः पर्यटन्ति'** इति। ननु कथं तर्हि 'दन्द्रम्यते'? छान्दसत्वादुकारलोपेनेति गृहाण। अथवा द्रुम एव द्रमः। ऊर्ध्वं द्रवतीति द्रुमः । ऊर्ध्वं द्रमतीति द्रमः । विवृतं चैतन्मन्त्रद्वयं मैत्रायणोपनिषदि–'अथ ये चान्ये मिथ्यातर्कैर्दृष्टान्तैः कुहकेन्द्रजालैर्वैदिकेषु परिस्थातुमिच्छन्ति तैः सह न संवसेत्। प्राकाश्या ह्येते तस्करा अस्वर्ग्या इति ह्याह– नैरात्म्यवादकुहकैर्मिथ्यादृष्टान्तहेतुभिः। भ्राम्यन् लोको न जानाति वेदविद्यान्तरं तु यत् । बृहस्पतिर्वै शुक्रो भूत्वेन्द्रस्याभयायासुरेभ्यः क्षयायेमामविद्यामसृजत् । तया शिवमशिवमित्युद्दिशन्त्यशिवꣳ शिवमिति । वेदादिशास्त्रꣳ हिꣳसकधर्माभिध्यानमस्त्विति वदन्ति । अतो नैनामभिदधीत । अन्यथैषा वन्ध्यैवैषा रतिमात्रं फलमस्या वृत्तच्युतस्यैव नारम्भणीयैवेति ह्याह– दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता। विद्याभीप्सितं नचिकेतसं मन्ये न त्वा कामा बहवो लोलुपन्ते' [७.८-९] इति। 'अविद्यायामन्तरे वेष्ट्यमानाः स्वयन्धीराः पण्डितम्मन्यमानाः। दन्द्रम्यमाणाः परियन्ति मूढा अन्धेनैव नीयमाना यथाऽन्धा इति' [७.९] इति च ॥ ५ ॥

**न साम्परायः प्रतिभाति बालं**
**प्रमाद्यन्तं वित्तमोहेन मूढम् ।**
**अयं लोको नास्ति पर इति मानी**[१]
**पुनःपुनर्वशमापद्यते मे ॥ ६ ॥**

१. 'अयं लोको नास्ति न पर इति मानी' इति केचिद्रामानुजीयाः। 'नास्ति पर उत मानी' इत्यपरे।

**(टी.)** तेषामपि बाल्यात्यय एव बुद्धिविकासो जायत इत्यभिप्रायेणाऽऽह– **न साम्पराय** इति। **साम्परायो** मोक्षः **बालं** प्रति **न प्रतिभाति**। तद्बुद्धौ न प्रकाशत इत्यर्थः। प्रत्यक्षसिद्धार्थमपि वित्तादिदर्शने तन्**मोहेन प्रमाद्यन्तं** विस्मरन्तम्। यः पुनर्बालोऽपि **अयमेव लोको नान्योऽस्ति इति** मत्वा विहितं नानुवर्तते स पुनर्यमवशं[१] प्राप्य संयमनमनुभवति ॥ ६ ॥

**(भा.चं.)** न साम्पराय इति तृतीयचरणे द्वादशाक्षराणीत्येकाक्षराधिका त्रिष्टुप्। **बालोऽपि** परलोकोऽस्ति न वेति वेत्तुं स्वयमप्रभुरपि बालिश्यादेव मन्यते **अयमेव लोकः** सन्, अनुभूयमानत्वात्। **न** इतः **'परः' अन्यः** कोऽपि लोकोऽ**स्तीति**। **अयमेव लोकः, नास्ति पर इति मानी** लोकायतः। **अयं लोको नास्ति, नास्ति पर इति मानी** सर्वमिथ्यात्ववादी च। ननु कथमयं लोक इति पृथिवी? यमः किलैतदाह स्वलोक आसीनः। तेन चायं लोक इति यमलोकः स्यात्, स्वर्गलोको वा। न कथमपि पृथिवीलोक इति। ननु भोः नेदं यमस्य स्वं वचः। यद् भूलोकायता लोकायता एव राभस्येन रासभन्तो रेभन्ते 'अयं लोको नास्ति पर' इति, यच्च मायावादवदावदाः शाठ्येन भुवि लुठन्तो वटन्ति– 'अयं लोको नास्ति, नास्ति च परः' इति, तेषामुभयेषां दुर्भाषितस्य केवलं प्रतीकमुपादत्त यम इति न कोऽपि दोषः। एतेन यद् दृश्यं तावदेव सत्यमिति वदन्तः, यद् दृश्यं तत्सर्वमसत्यमिति वदन्तश्च निरस्ता वेदितव्याः ॥ ६ ॥

**श्रवणायापि बहुभिर्यो न लभ्यः**
**शृण्वन्तोऽपि बहवो यं न विद्युः।**
**आश्चर्यो वक्ता कुशलोऽस्य लब्धा-**
**ऽऽश्चर्यो ज्ञाता कुशलानुशिष्टः ॥ ७ ॥**

**(टी.)** यद्यपि केचित् परलोकोऽप्यस्तीति कथञ्चिदैतिह्याज्जानन्ति। तथाऽपि तन्नियामकः कश्चिदस्तीति न ते जानन्ति। तच्छ्रवणादेः सुदुर्लभत्वादित्याह–

---

१. अस्य यमवचनतया **'स पुनर्मम वशं प्राप्य'** इत्यपि पाठः स्यात्।

**श्रवणायेति** । स भगवान् श्रवणमात्रार्थमपि बहुभिर्दुर्लभः । **शृण्वन्तोऽपि बहवः** इत्थं किलासाविति तं **न विद्युः** । कथञ्चित् तथा ज्ञात्वा **वक्ता तु आश्चर्यः** । **अस्य** उक्तस्य **लब्धा** ग्रहीता **कुशलः** । इत्थम्भूत इत्यपरोक्षत एव **ज्ञाता** ततोऽप्याश्चर्यः । कुतः? कुशलो युक्तिज्ञस्तेनानुशिष्टत्वात् ॥ ७ ॥

**(भा.चं.)** **कुशलो** दक्षः, सुशिक्षितो वा, पुण्यवान् वा **लब्धा** । **वक्ता आश्चर्यः** । तादृशस्य वक्तुर्लब्धा च **कुशलो** भाग्यशाली । वक्तुर्लाभेऽपि तदुक्तस्य **ज्ञाता** पुनरतितरामाश्चर्य इति वा । तथाहि भगवद्गीतायाम्– 'आश्चर्यवत् पश्यति कश्चिदेनमाश्चर्यवद् वदति तथैव चान्यः । आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाऽप्येनं वेद नचैव कश्चित्' [२.२९] इति । श्रवणायापीति केवला त्रिष्टुप् ॥ ७ ॥

**न नरेणावरः[१] प्रोक्त एष**
**सुज्ञेयो बहुधा चिन्त्यमानः ।**
**[२]अनन्यप्रोक्ते गतिरत्र ना-**
**स्त्यणीयान् ह्यतर्क्यमणुप्रमाणात् ॥ ८ ॥**

**(भा.) अन्यो भगवानन्योऽहमित्यजानन्ननन्यः । तेन प्रोक्ते गतिर्ज्ञानं नास्ति । 'प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ' इति वाक्यशेषात् ॥ * ॥**

**(टी.)** तत्रतत्र शास्त्रकारैः शास्त्र एवेत्थम्भूत इत्युच्यमानत्वात् सुज्ञेय एवेत्यत आह– **न नरेणेति** । **एष** परमात्मा येनकेनचित् खद्योतसदृशात्यल्पज्ञानिना **नरेण** सर्वगुणपूर्णत्वादिकमनङ्गीकृत्यात्यन्तमवरत्वेन प्रोक्तः सुष्ठु **ज्ञेयो न** भवतीति । जीवाभिन्नत्वेन निर्गुणत्वेन निर्विशेषत्वेन भिन्नाभिन्नत्वेन अष्टगुणत्वेन अक्रियत्वेन अव्यापकत्वेन इत्यादिरूपेणान्यथैव बहुधा चिन्त्यमानत्वात् । एवं चेत् जीवपरयोरनन्यत्वमित्येकधैव चिन्तनात् परत्वेन प्रोक्तः सुज्ञेयः स्यादित्यत आह– **अनन्येति** । एतद् वाक्यं विवृणोति– **अन्य** इत्यादिना भाष्येण । दुःख्य-

१. **'नरेणावरेण प्रोक्त एष सुविज्ञेयो–'** इति शङ्कररङ्गरामानुजौ । **'अवरत्वेन प्रोक्तः'** इति टीकावचनं तमपि पाठं कटाक्षयतीव ।
२. **'अन्यप्रोक्ते'** इत्यपि केचित् पठन्ति ।

हमल्पज्ञोऽहमित्यनुभवसिद्धाज्जीवादन्यो भगवान्, सार्वज्ञ्यादिगुणविशिष्टाद् भगवतोऽन्योऽहमित्येतदजानता **प्रोक्ते गतिः** तत्वज्ञानं **न** सञ्जायते। तद्वचनस्य भ्रान्तिमूलत्वात्। सूक्ष्मप्रमाणवेदिभिरेव हि सूक्ष्मरूपस्य हरेरतर्क्यरूपं सुज्ञेयमित्यर्थः ॥ ८ ॥

**(भा.चं.)** न नरेणेति पूर्वार्द्धे पादद्वयमपि दशाक्षरमिति पङ्क्तित्रिष्टुभोः सङ्क्रमेण द्व्यक्षरोना त्रिष्टुप्। अथच न नरेणावरः प्रोक्तः इत्यष्टाक्षरः प्रथमः पादः। एष सुज्ञेय इत्यादिर्द्वादशाक्षरो द्वितीयः। तेनानुष्टुब्जगत्योरपूर्वः सङ्गमः। उत्तरार्द्धे तु 'नास्ति+अणीयान्' इति विश्लेषेण पादद्वयमपि त्रैष्टुभम्॥ ❋ ॥

भाष्ये– **अजानन्ननन्य** इति। अन्य इति जानन्नन्यो भवति। अजानन्ननन्यो भवति। 'यो यच्छ्रद्धः स एव सः' [१७.३] इति हि गीतासु। न ह्यविदितविद्यमानधनो धनिनमात्मानं मन्यते। विदन् हि सौवं धनं धनी भवति। एवमात्मानं भगवतोऽन्यम्, भगवन्तं चाऽत्मनोऽन्यं विदन्नन्यो भवति। अविदन्ननन्यो भवति। **गतिर्ज्ञानं नास्तीति**। सुज्ञानं नास्तीत्यर्थः। **'प्रोक्ताऽन्येनैव सुज्ञानाय'** इति श्रवणात्। अत एव **'गतिः तत्वज्ञानं न सञ्जायते'** इति व्याचख्यौ। तत्वज्ञानमेव हि ज्ञानम्। तदेव च सुज्ञानम्। अन्यत् सर्वं ज्ञानाभास इति भाष्यकृदाशयः। **'अवरः प्रोक्तः'** इत्येतद् व्याचष्टे– **अवरत्वेन प्रोक्तः**। **जीवाभिन्नत्वेन निर्गुणत्वेन निर्विशेषत्वेन** च मायावादिभिश्चिन्त्यते। **भिन्नाभिन्नत्वेन** भास्करादिभिः। द्रव्यमात्रसाधारणाः सङ्ख्यापरिमाणपृथक्त्वसंयोगविभागाख्याः पञ्च गुणाः, चेतनगुणा ज्ञानेच्छाप्रयत्नाश्चेति **अष्टगुणत्वेन** नैयायिकैः। **अक्रियत्वेन** साङ्ख्यैर्मायावादिभिश्च। **अव्यापकत्वेन** च कैश्चित् कर्मवादिभिः। मायावादिनोऽप्येवमेव व्याचक्षते। तथाहि परभाष्यम्–'अनन्येन अपृथग्दर्शिनाऽऽचार्येण प्रोक्ते गतिः अस्तिनास्तीत्यादिलक्षणा चिन्ता नास्ति' इति। तेन 'प्रोक्ताऽन्येन' इत्युत्तरमन्त्रेऽनिच्छताऽपि मायावादिनाऽङ्गीकरणीयमापतितम्–'अन्येन पृथग्दर्शिना प्रोक्तैव सुज्ञानाय भवति' इति।

गतिशब्दस्य चिन्तार्थकत्वं तु स्वप्रज्ञाविलसितमित्यगतिका गतिः । अत एव स्वोक्तार्थे स्वयमेवाप्रीयमाणः सन्दिहान इवान्यमर्थमाह–'स्वात्मभूतेऽनन्य-स्मिन्नात्मनि प्रोक्ते गतिः अन्यावगतिः नास्ति । अन्यस्याभावात्' इति । नेदमपि श्रुतिमतं प्रतिभातीति संशय्य पुनराह–'गतिः संसारगतिर्नास्ति इति वा' इति । 'अनन्येनाऽऽचार्येण प्रोक्ते अगतिः अनवगतिर्नास्ति इति वा' इति च । एवं स्वयमनिश्चयग्रहग्रस्ताः कथमन्यान् ग्राहयेयुः । स भगवान् **अणुप्रमा-णात्** जीवस्वरूपादपि **अणीयान्** । अतो हि **अतर्क्यं** तस्य रूपम् ॥ ८ ॥

**नैषा तर्केण मतिरापनेया**
**प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ ।**
**यां त्वमापः सत्यधृतिर्बतासि**
**त्वादृङ् नो भूयान्नचिकेतः प्रष्टा ॥ ९ ॥**

**(भा.) 'जीवानां चैव विष्णोश्च यो न वेत्ति भिदां पुमान् ।**
**'तदनुव्रताश्च ये केचित् तेषां ज्ञानं न जायते'**
**इति ब्रह्मवैवर्त्ते ॥ * ॥**

**(टी.)** तस्मादेषा भगवद्विषया मतिस्तर्केण न प्रापणीया । नाप्यपनेतुं शक्या । किन्तु जीवपरयोः केवलभेदज्ञानिना **प्रोक्तैव सुज्ञानाय** भवेत् । अत्र पुनः **'जीवानां चैव–'** इति ब्रह्मवैवर्त्तवचनं प्रमाणमाह ॥ ९ ॥

**(भा.चं.) नैषा तर्केण मतिरापनेया** । **आपनेया** आपनीया प्रापणीया न भवति केवलतर्केण । **आ** समन्ततात्, **अपनेया** च **न** भवतीति । 'एषा ब्रह्म-मतिः तर्केण नापनेतुं शक्या । न च तर्केण प्रापणीया । अन्येन अन्यत्वज्ञानिनैव प्रोक्ता सुज्ञानाय स्यात्' [१.१.१८] इति तत्वप्रदीपे । 'आपनीया प्रापणीया' इति च तत्वमञ्जरी । 'यां मतिं त्वमापः नैषा तर्केणाऽपनेया । आ+अप+नेया, तर्केण आनेया न भवति । नाप्यपनेया भवति' इति श्रीजयतीर्थाः । अन्येन

अन्यत्वज्ञानिना, अत एव अन्येन भगवति सदायुक्तेन भक्तिमता सुनिष्ठितेन, **अन्येन** सदागमेन **प्रोक्ता सुज्ञानाय** भवति। विष्णुतत्वनिर्णयोदाहृतब्रह्माण्ड-वचनसूचितोऽयमर्थः। तथाहि तद्वचनम्–'ज्ञेय एतैः सदायुक्तैर्भक्तिमद्भिः सु-निष्ठितैः। नच केवलतर्केण नाक्षजेन न केनचित्। केवलागमविज्ञेयो भक्तैरेव नचान्यथा' इति। 'न केनचित् अर्थापत्त्यादिना। सदायुक्तैर्भक्तिमद्भिरि-त्युक्तिरयोगव्यवच्छेदाय। भक्तैरेव नचान्यथेत्यन्ययोगव्यवच्छेदाय' इति तत्व-मञ्जरी। अत्र तु यत् केषाञ्चिद् व्याख्यानम्–'एषा आगमप्रतिपाद्याऽऽत्ममतिः तर्केण स्वबुद्ध्यभ्यूहमात्रेण न आपनेया न प्रापणीया। नापनेतव्या वा। तार्किको ह्यनुमानज्ञः स्वबुद्धिपरिकल्पितं यत्किञ्चिदेव कथयति। अत एव चेयमागमप्रभूता मतिः अन्येनैव तार्किकात्, आगमाभिज्ञेनाऽऽचार्येण प्रोक्ता सती सुज्ञानाय भवति' इत्यादि, न तेन नः काचन हानिः। पूर्वश्लोकप्रसक्तस्यान्य-शब्दार्थस्य स्मरन्नपि विस्मरन्निव नाटयन् स्थालीमत्र व्यत्यास्यत्। अस्मत्सम्मत एवायमप्यर्थः। 'तर्कनिश्चितचित्तवृत्तिभिरप्रतर्क्यमहोदयम्' इति हि भगवन्तं तुष्टाव लिकुचसूनुराचार्यः। 'नच केवलतर्केण–' इति च हि स्मरन्ति। **बत** तातेति सम्बुध्य **बत** हन्तेति जहर्ष विसिष्मिये च। 'बत हर्षे सम्बोधनेऽद्भुते' इत्यभिधानम्। सत्ये भगवति धृतिर्निश्चला मनोधारणा यस्य। सत्या अविचला वा धारणा। धृतिर्धैर्यं वा। **त्वादृक् कुशलः प्रष्टा नः** सदा **भूयात्**। उत्तमशिष्य-लाभं हि शेवधिलाभं मन्यन्ते धन्या गुरवः। अत एव तं **'प्रेष्ठ'** इति प्रीत्या सम्बोधयामास। प्रियतमो हि प्रेष्ठः। 'प्रियस्थिर–' [अष्टा.सू.६.४.१५७] इति चोक्तम्। भाष्योदाहृते प्रमाणवचने– **तेषां** ये न भिदां विदन्ति ये च तान-नुवर्तन्ते तेषामविदिततत्वानां स्वयं **ज्ञानं** कदाऽपि **न जायते**। ताम-सत्वात्। तैः प्रोक्तेऽन्येषामपि **ज्ञानं न जायत** इत्यर्थः। नैषा तर्केणेति केवला त्रिष्टुप्॥ ९॥

**जानाम्यहꣳ शेवधिरित्यनित्यं**
**नह्यध्रुवैः प्राप्यते हि ध्रुवं तत्।**

ततो मया [1]नाचिकेतश्चितोऽग्नि-
रनित्यैर्द्रव्यैः[2] प्राप्तवानस्मि नित्यम् ॥ १० ॥

**(भा.)** आख्यं विष्णवाख्यं नित्यं शेवधिरिति जानामि । नित्यं आख्य-विपर्ययैर्द्रव्यैर्म्मनआदिभिः । आख्यनित्यविपर्ययैर्विष्णवाख्यनित्यविपर्ययैर्द्रव्यैः नित्यं भगवन्तं प्राप्तवानस्मि । ध्रुवो भगवान् अध्रुवैस्तद्भक्तिवर्ज्जितैर्न्न प्राप्यते ॥ * ॥

**(टी.)** 'अन्यं वरं वृणीष्व' इत्यादिवचनं परमात्मतत्वस्य गोप्यत्वज्ञापनायैव, नतु तदुत्तमत्वापरिज्ञानादित्येतद् दृढयति– **'जानामि'** इत्यादिना । यत् **अनित्यं तत् शेवधिरित्यहं जानामि** इति श्रुत्यन्वयः । **'आख्यम्'** इत्यादिना तदर्थं व्याख्याति । 'अः इति ब्रह्म' इति श्रुतेः अकाराख्यं तु **विष्णवाख्यं नित्यं**[3] ब्रह्म अहं **शेवधिरिति जानामि** । तस्यैव मुख्योपजीव्यत्वात् । अश्चायं नित्यश्चेति अनित्यो भगवान् । [तद्विषयैः] **अनित्यैः द्रव्यैः** तं नित्यं भगवन्तं **प्राप्त-वानस्मी**त्यविरोधः । स्वस्वविषयेषु द्रवणशीलत्वान्मनआदीनां द्रव्यत्वम् । प्रकाशादिप्रकृष्टगुणवत्त्वाच्च । **'ध्रुवो भगवान्'** इत्यादिना **'नह्यध्रुवैः–'** इत्यादिवाक्यशेषं व्याख्याति । **ततो** भक्तिसाधनत्वात् **मया नाचिकेतोऽ-ग्निश्चितः** ॥ १० ॥

**(भा.चं.)** ननु शेवधिरिति यत् तदनित्यं वित्तमिति वित्तमोहेन मूढो बालोऽपि जानाति । किं तदपि यमेन नचिकेतसे वक्तव्यम्? स्यात् कथञ्चिद् वक्तव्यम् । अथापि का सङ्गतिः? नन्वस्ति सङ्गतिः– न ह्यध्रुवैर्वित्तादिभिर्ध्रुवं ब्रह्म प्राप्यत इति । तर्हि अनित्यैरेव वित्तादिभिः नित्यं प्राप्तवानिति किं पुनर्व्याहतमुच्यते? ता एताः शङ्काः परिजिहीर्षन् निगूढमेनं मन्त्रवर्णं यथावदुद्घाटयति भगवान्

---

१. **'नचिकेत–'** इति क्वचित् । २. **'–रनित्यद्रव्यैः'** इति च ।
३. **'विष्णवाख्यं ब्रह्म अहं नित्यं शेवधिरिति जानामि'** इति कोशपाठो नातिस्वरसः । प्रायो लिपिकृतः प्रामाद्यन् ।

भाष्यकारभट्टारकः–**'आख्यं विष्णवाख्यम्'** इत्यादिना। अकारवाच्यं **नित्यं ब्रह्म शेवधिर्निधिर्भक्तानाम्**। अकारवाच्यो यो नित्यो विष्णुस्तमिति वा। तथाहि भाष्यम्– **'आख्यं विष्णवाख्यं नित्यं शेवधिरिति जानामि'** इति। कुत आख्यम्? अजत्वात्। तदेवाऽऽह– **नित्यमिति**। यद्वा 'अ' इत्यविभक्तिको निर्देशः। 'अ आ अं अः पुराणर्षिर्व्यासः सत्यवतीसुतः' इति च पाद्मे विष्णुसहस्रनामसु। नित्यमिति क्रियाविशेषणम्। सदा जानामीत्यर्थः। **'नित्यं शेवधिरिति जानामि'** इति भाष्यवचनमुभयथाऽपि सावकाशम्। स किल शेवधिर्यद् वशे निधीयते गुप्तम्। शेत इति शेवः सर्पः। शेवेन धीयत इति शेवधिरित्यपि केचिद्। 'इण्-शीभ्यां वन्'[८.१२६] इति हि दशपादिका। अकारवाच्यो नित्यं निरन्तरमस्त्येषां विषयतयेति **अनित्यैर्द्रव्यैः**। तदुक्तम्– **'नित्यमाख्यविषयैर्द्रव्यैः'** इति। अकारवाच्यो नित्यो भगवानस्त्येषां विषयतयेति वाऽनित्यानि द्रव्याणि मनआदीनि। एतदप्युक्तम्– **'आख्यनित्यविषयैर्विष्णवाख्यनित्यविषयैर्द्रव्यैः'** इति। **'मनआदिभिः'** मनसा वचसा कायेन च। मनोबुद्ध्यहङ्कारचित्तैर्वा। मनसा चक्षुरादिभिरिन्द्रियैश्च वा। करचरणादिभिर्वा। तथाहि स्मरन्ति– 'कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्याऽऽत्मना वाऽनुसृतस्वभावः'[भाग.११.२.३६] इति। सत्त्वोद्रेकनिमित्तज्ञान**प्रकाशादिगुणवत्त्वाच्च** मनआदीनां द्रव्यत्वम्। 'सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते। ज्ञानं यदा तदा विद्याद् विवृद्धं सत्त्वमित्युत' इति हि गीतासु [१४.११]। गुणवन्ति हि द्रव्याणि भवन्ति। अपरे व्याचक्षते– 'शेवधिः कर्मफललक्षणो निधिः अनित्यमनित्य इति जानामि। अध्रुवैरनित्यैः ध्रुवं नित्यं परमात्माख्यं न प्राप्यत इति च जानामि। एवं जानताऽपि मया अनित्यैर्द्रव्यैः अनित्यसुखसाधनभूतो नाचिकेतश्चितोऽग्निः। तेन नित्यमित्यापेक्षिकं नित्यम्, वस्तुतोऽनित्यम्, याम्यं पदं प्राप्तवानस्मि' इति। अहो दौर्भाग्यं नचिकेतसः। देवलोकं गतस्यापि यदीदृशो गुरुर्लब्धः। यः स्वयमनित्येन कर्मणा नित्यफलं नास्तीति ज्ञात्वाऽप्यनित्ये कर्मणि लग्नः, अनित्ये याम्ये पदे

निरूढाभिमानतया निमग्नः स्वात्मानमेव प्रतारयामास। स कथं नित्यमात्मतत्वं नचिकेतस उपदिशेत्? जानामीति मन्त्रे चतुर्थचरणे द्वादशाक्षराणीत्येकाक्षराधिका त्रिष्टुप्॥ १० ॥

कामस्याऽप्तिं जगतः प्रतिष्ठां
[1]क्रतोरानन्त्यमभयस्य पारम् ।
[2]स्तोममहदुरुगायं प्रतिष्ठां
दृष्ट्वा धृत्या धीरो नचिकेतोऽत्यस्राक्षीः ॥ ११ ॥

**(भा.)** क्रतोरानन्त्यहेतुम्, स्तोमैरपि सर्वात्मना प्राप्तुमशक्यम्, स्तोमेभ्योऽपि महान्तम्, उरुगायमित्युक्तत्वाच्च न जीवविषयोऽयं प्रश्नः। 'शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते', 'शरवत् तन्मयो भवेत्', 'अभयं तितीर्षतां पारम्', 'तादृगेव भवति' इत्यादौ सर्वत्र भेदस्यैवोक्तेश्च न जीवाभेदः। 'नाचिकेतं शकेमसि' इत्युक्तत्वाच्च नाचिकेताग्निस्थो भगवानेवात्रोच्यत इति सिद्धम्। उरुगायं दृष्ट्वा कामस्याऽप्तिं अत्यस्राक्षीः। नच मृत्वा यमं प्राप्तस्य नचिकेतसो मृतोऽस्ति नास्ति वेति संशयोऽस्ति ॥ * ॥

**(टी.)** त्वमप्यैहिककामावाप्तिमतिसृज्य भगवद्भक्त्या तत्प्राप्तय एतमेवाप्राक्षीरित्याह– **कामस्येति**। ननु नायं परमात्मविषयः प्रश्नः। किन्तु प्रेतजीवविषय एव । अणीयस्त्वनित्यत्वादेस्तस्मिन्नपि सावकाशत्वादित्याशङ्क्याऽह– **क्रतोरानन्त्यहेतुमिति**। जगतः प्रतिष्ठां मूलाधारम्। **अभयस्य** मोक्षस्य प्राप्त्यर्थं पारभूतम् । **स्तोमेभ्योऽपि महान्तं** सन्तं **उरुगायं** विदित्वा **इति** परिहारे परस्यैव **उक्तत्वान्न जीवविषयोऽयं प्रश्नः**। ननु परिहारोक्तेः परविषयत्वेऽपि जीवपरयोरभेदात् प्रेतप्रश्नस्य जीवविषयत्वाविरोध इत्यत आह– **शरो हीति**। जीवब्रह्मणोः शरलक्षवत् भेदस्यैवोक्तत्वात् न जीवस्य

१. 'क्रतोरनन्त्य–' इति शाङ्करः पाठः। २. 'स्तोमं महदुरु–' इति रङ्गरामानुजः।

ब्रह्मणाऽभेदः। नहि तर्तृतारकयोः इतरेतरसंयोगिनोश्च क्वचिदभेदो दृष्टः। एवं सर्वज्ञाल्पज्ञयोश्चात्यन्तभेद एव युक्तः। नच नाचिकेताग्निस्थत्वं जीवस्योपपन्नम्। **कामस्याप्तिमि**त्यादेरन्वयं दर्शयति– **उरुगायमि**ति। **'अभयं तितीर्षतां पारम्'** इत्यत्रापि अभयं प्रति भयमेव तितीर्षतां पारमित्यर्थः। नह्यज्ञा अप्यभयं तितीर्षन्ति। प्रेतजीवास्तित्वस्य स्वानुभवसिद्धत्वाच्च न तत्प्रश्नावकाश इत्याह– **नच मृत्वे**ति॥ ११ ॥

**(भा.चं.)** कामस्याऽप्तिमिति प्रथमचरणे दशाक्षराणि। तुरीये त्रयोदश। संहृत्य पञ्चचत्वारिंशदक्षराणीत्येकाक्षराधिका त्रिष्टुप्। 'नचिकेतो अत्यस्राक्षीः' इति विश्लेषे द्व्यक्षराधिका। **क्रतोरानन्त्यमि**ति हेतुहेतुमतोरभेदेन व्यपदेश इत्याशयेन व्याख्यातम्– **'क्रतोरानन्त्यहेतुम्'** इति। यद्वा क्रतोः ज्योतिष्टोमादेः ज्ञानस्य च यद्विषयतयैवाऽनन्त्यमनन्तफलत्वं तत् ब्रह्म **क्रतोरानन्त्यम्**। स उरुगायो वा क्रतोरानन्त्यः। क्रतोरानन्त्यं येन स इति। 'विष्णोःपदम्', 'श्रियःपतिः' इत्यादिवदलुक्। **अभयस्य पारं** तत् स्तोमेभ्योऽपि **महत्**। ननु भाष्यकारः **'महान्तम्'** इति लिङ्गव्यत्ययेन किमिति व्याचख्यौ? अत्र उरुगाय इति विशेष्यमन्यानि विशेषणानीति बोधयितुम्। प्रसिद्धं ह्युरुगायनाम विष्णावित्युक्तम्। तदेतदाह– **स्तोमेभ्योऽपि महान्तं सन्तमुरुगायं विदित्वा**। उरुगायपदस्यैव व्याख्यानरूपाणि तानि विशेषणानि। अक्षरपुरुषस्यापि **प्रतिष्ठाम्**। मुक्तसमुदायस्यापि **प्रतिष्ठाम्**। क्षरजगदाश्रयत्वस्य **'जगतः प्रतिष्ठाम्'** इति पृथगुक्तत्वादेतदवगम्यते। सर्वजगतः प्रतिष्ठामात्मनोऽपि प्रतिष्ठां ध्यानयोगेन दृष्ट्वेति वा। अत एव **धीरो** ज्ञानरतिः दर्शनजनितया **धृत्या कामस्याऽप्तिम्** 'तवैव वाहास्तव नृत्तगीते' **इति अत्यस्राक्षीरि**ति। 'स त्वं प्रियान् प्रियरूपांश्च कामानभिध्यायन् नचिकेतोऽत्यस्राक्षीः'[३] इति पूर्वोक्तमेव पुनः प्रशंसन्नवधारयति। 'प्रणवो धनुः **शरो ह्यात्मा ब्रह्म तल्लक्षमुच्यते**। अप्रमत्तेन वेद्धव्यं **शरवत् तन्मयो भवेत्**'[२.१.५] इत्याथर्वण्यामुपनिषदि। **'अभयं तितीर्षतां पारं नाचिकेतं शकेमसि'**[१.३.२] इति,

'यथोदकं शुद्धे शुद्धमासिक्तं **तादृगेव भवति**' [२.१.१५] इति चात्रैवोपरिष्टात्। नन्वभयं तितीर्षतां पारमिति भयं तीर्त्वा स्वयमभयरूपतामापद्यत इत्यर्थः। तेनाभेदवाद एवायमिति भ्रान्तान् प्रत्याह– **नहि तर्तृतारकयोः क्वचिदभेदो दृष्टः**। यस्तरति स तर्ता जीवः यस्तारयति स तारको भगवान्। ननु भवानेव भ्रान्तः। न वयम्। 'शरवत् तन्मयो भवेत्' इति स्फुटमभेदश्रवणात्। तादात्म्यं हि मयडर्थः। तेन शरस्य लक्षेण तादात्म्यमेवेत्यत आह– **नहीतरेतरसंयोगिनोश्च क्वचिदभेदो दृष्टः**। अहो व्याकरणकौशलं पूर्वपक्षिणाम्। शरो हि लक्षेण संयुज्यते। नतु लक्षतामापद्यते। एवमितरेतसंयोगिनोरेकस्मिन् पात्र आसिक्तयोः शुद्धयोरुदकयोश्च नाभेदो युक्तः। **'तादृगेव भवति'** इति स्फुटं भेदवचनाच्च। भिन्नावेव परस्परं संयुज्येते। न क्वाप्यभिन्नाविति महती भ्रान्तिरियं मायावादिनाम्। भगवन्तमेव स्तुवन्तीति स्तोमानि श्रुतिवचनानि स्तोमा वा मन्त्रस्तवाः। 'अर्ति-स्तु-सु-हु-सृ-धृ-क्षि-भा-या-पदि-[पक्षि]-यक्षि-नीभ्यो मन्'[७.२६] इति हि दशपादिका। स्तोमयन्ति इति वा स्तोमाः। स्तोम श्लाघायाम्। चुरादिः। **स्तोमेभ्योऽपि महान्तम्**। तैरपि सर्वात्मना निर्वक्तुमशक्यम्। 'यतो वाचो निवर्तन्ते' इति श्रुतेः। मूले **'न च मृत्वा'** इति। तदिदं स्फुटं तैत्तिरीयब्राह्मणे– 'परेहि मृत्योर्गृहान्' इति। न हि जीवन् गतः परेतो भवति। स्फुटतरं च महाभारते– 'गतसत्त्वोऽपतद् भुवि' इति, 'तस्य दुःखपरीतस्य स्वं पुत्रमुपगूहतः' इति, 'पित्र्येणाऽस्रप्रपातेन नचिकेतः कुरूद्वह। प्रास्पन्दच्छयने शुभ्रे वृष्टया सस्यमिवाऽप्लुतम्' इति च॥ ११॥

**तं दुर्दर्शं गूढमनुप्रविष्टं**
**गुहाहितं गह्वरेष्ठं पुराणम्।**
**अध्यात्मयोगाधिगमेन देवं**
**मत्वा धीरो हर्षशोकौ जहाति ॥ १२ ॥**

**(भा.) गह्वरे मुक्तजीवे स्थितम् ।। * ।।**

**(टी.)** उरुगायस्याभयस्य पारत्वं यदुक्तं तदेव विशिनष्टि– **तं दुर्दर्शमिति**। सर्वपदार्थेषु गूढत्वेन **अनुप्रविष्टम्,** विशेषतो जीवानां हृदयगुहायां निहितम्। गह्नेषु वरत्वाद् गह्वरो मुक्तजीवः । तस्मिन्नपि मुक्तनियामकत्वेन स्थितम् । गह्वरेषु प्रेतेषु तं **मत्वा** प्राकृतहर्षं शोकं च **जहाति** ।। १२ ।।

**(भा.चं.)** 'गह्वरे विषमेऽनेकानर्थसङ्कटे तिष्ठतीति गह्वरेष्ठम्' इति परव्याख्यानमसहमान आह भाष्यकारभट्टारकः– **गह्वरे मुक्तजीवे स्थितम्**। कथमथ गह्वरो मुक्तजीवः? आह– **गह्नेषु वरत्वादिति**। **'पुराणम्'** सर्वस्मादपि पूर्वतनम्। जीवमादाय पुराणि तत्तच्छरीराणि अणतीति च पुराणः । **गह्वरेषु प्रेतेषु** । प्रकर्षं गतेषु, प्रकृष्टं वा भगवन्तं गतेषु मुक्तजीवेष्वित्यर्थः। ननु **'हर्षशोकौ जहाति'** इति मुक्तौ सुखदुःखप्रहाणमुच्यते । उपरितनमन्त्रे च पुनः **'स मोदते'** इति सुखप्राप्तिरुच्यते । कथमेतदित्यत उपनिषदाशयं प्रकाशयति– **प्राकृतहर्षं जहाति**। स्वरूपानन्दं लभते चेति। बाह्यं वैषयिकं सुखं प्राकृतम्। अध्यात्मयोगो नामाधिकात्मनि भगवति मनोयोगः। तस्याधिगमः अनायासेन लब्धिः। तं दुर्दर्शमिति केवला त्रिष्टुप् ।। १२ ।।

**एतच्छ्रुत्वा सम्परिगृह्य मर्त्यः**
**प्रवृँह्य धर्म्यमणुमेतमाप्य ।**
**स मोदते मोदनीयꣳ हि लब्ध्वा**
**विवृतꣳ सद्म नचिकेतसं मन्ये ।। १३ ।।**

**(भा.) प्रवृँह्य जीवात् पृथक्कृत्य ।**

**'मुक्तजीवे स्थितं विष्णुं विदित्वा जीवतः पृथक् ।**
**'मोदते मोदनीयं तं प्राप्य मुक्तः सदैव च'**

**इति महावराहे ।। * ।।**

**(टी.)** नन्वप्राकृतमपि हर्षं स जहातीत्याशङ्क्याऽऽह– **एतच्छ्रुत्वेति** । स **मर्त्यः** संसारगः **एतत् श्रुत्वा** सम्यक् **परिगृह्य** **एतं** सूक्ष्मरूपं सर्वधारकं विष्णुं **जीवात् पृथक्कृत्य** ज्ञात्वा तमेव भगवन्तं **मोदनीयं** सम्प्राप्य नित्यशो निरन्तरं **मोदते** च । 'बृहत् पृथग्भावे' । अत्र **'मुक्तजीवे–'** इत्यादिमहावराहवचनं चाऽऽह । तस्मादुरुगायेऽधिकभक्तं **नचिकेतसं** त्वां प्रति वैकुण्ठादिकं **तत्सद्म** विवृतद्वारं **मन्ये** ॥ १३ ॥

**(भा.चं.)** धारणया **सम्यक् परिगृह्य** । धर्माः धारकाः ब्रह्मादयः । तानपि यमयतीति धर्म्यः सर्वधारकः । **'प्रवृँह्य' पृथक्कृत्येति** सर्वेषामैककण्ठ्यम् । को धातुरित्यत्र विवदन्ते । वृहु उद्यमने इति तु प्रचलितधातुपाठमात्रपरिनिष्ठित-प्रज्ञाः । 'बृहु' इत्यन्ये । 'बृहत् वृहत् पृथग्भावे' इति तु प्राचीनाः । बृहति पृथक्करोति । तुदादिगणगतोऽयम् । भ्यादिगणगतस्य बर्हतीत्यादिरूपम् । 'तꣳ स्वाच्छरीरात् प्रवृहेत्' इति चोपरिष्टात् [२.३.१७] । मनसा **'आप्य' ज्ञात्वा** । साक्षात्कृत्येतत् । **'लब्ध्वा' सम्प्राप्य** । स्वरूपतः प्राप्येत्येतत् । एतच्छ्रुत्वेति चतुर्थचरण एकाक्षराधिका त्रिष्टुप् ॥ १३ ॥

**अन्यत्र धर्म्मादन्यत्राधर्म्मादन्यत्रास्मात् कृताकृतात् ।**
**अन्यत्र भूताच्च भव्याच्च यत्तत् पश्यसि तद् वद ॥ १४ ॥**

**(टी.)** **यत्तत्** धर्मादिभ्योऽप्यत्यन्तसूक्ष्मं भगवद्रूपं यज्ज्ञानात् तत्सद्म सुप्रवेशं त्वं मन्यसे तन्मे ब्रूहीति नचिकेता यमं प्रार्थयन्नेवाऽऽह– **अन्यत्र धर्मादि**-त्यादिना । **यत्तत्** धर्मादिभ्यो**ऽन्यत्र पश्यसि** तेभ्योऽन्यन्तविलक्षणं पश्यसि **तत्** मे **वद** । अस्मात् वर्तमानात् **कृताकृतात्** जगतः । कृताकृतरूपत्वं भूतभव्यजगतोऽपि समम् ॥ १४ ॥

**(भा.चं.)** **अन्यत्र धर्मादन्यत्राधर्मात्** । धर्माधर्माभ्यामतीतम् । पुण्य-पापाभ्यामलिप्तम् । 'न कर्मणा वर्धते नो कनीयान्' इति हि श्रुतिः । कृताकृतात्

नित्यानित्यात्मकाज्जगतश्च विलक्षणम् । **कृताकृतात् भूताच्च भव्याच्च** जगतः विलक्षणम् ॥ ❋ ॥

अत्र मन्त्रे प्रथमपादे दशाक्षरे पङ्क्तिश्छन्दः । तृतीये नवाक्षरे पादे बृहती । द्वितीयतुरीययोरनुष्टुप् । तदेवं छन्दसां त्रयी सङ्गता । समेत्य चानुष्टुबेवेयम् । पूर्वार्द्धे द्व्यक्षराधिका । उत्तरार्द्धे चैकाक्षराधिका । पश्यसीत्यत्र क्षैप्रविश्लेषेण बृहती वा । अविश्लेषे पुनरेकाक्षरोना वा बृहती ॥ १४ ॥

**सर्वे वेदा यत्पदमामनन्ति**
**तपाꣳसि सर्वाणि च यद् वदन्ति ।**
**यदिच्छन्तो ब्रह्मचर्यं चरन्ति**
**तत्ते पदꣳ सङ्ग्रहेण ब्रवीम्योमित्येतत् ॥ १५ ॥**

**(टी.) सर्वे वेदा** इत्यादिना तत्स्वरूपलक्षणमेव तस्मै स वक्ति । **पदं** स्वरूपम् । **तपांसि** युक्तयः । **ओमिति**नामकं **एतत्** ॥ १५ ॥

**(भा.चं.) तपांसि युक्तयः** । 'तप आलोचन इति धातोरालोचनरूपा युक्तयस्तपांसि' इति तत्वप्रदीपे [१.१.५] । ननु 'नैषा तर्केण मतिरापनेया' इत्युक्तम् । सत्यमुक्तं तान् प्रति ये साहसिकाः प्रत्यक्षागमावननुवर्तमानेन केवलतर्केण भगवन्तं सिषाधयिषन्ति । अत्र तु वेदादिभिरधिगतात्मस्वरूपाणां सर्वाऽपि वाचोयुक्तिर्भगवन्तमेव लक्षीकरोतीत्युच्यत इति सर्वं सुन्दरम् । ब्रह्मणि वेदे चरणं स्वाध्यायप्रवचनात्मकम् । तदर्थमिन्द्रियनिग्रहणं च । 'यदक्षरं वेदविदो वदन्ति विशन्ति यद् यतयो वीतरागाः । यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत् ते पदं सङ्ग्रहेण प्रवक्ष्ये' इति गीतासु [८.११] । 'ओमित्येकाक्षरं ब्रह्म' [८.१३] इति च । 'सर्वे वेदा' इति केवला त्रिष्टुप् । 'ओमित्येतत्' इति भिन्नं वाक्यम् ॥ १५ ॥

**एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम् ।**
**एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥ १६ ॥**

एतदालम्बनꣳ श्रेष्ठमेतदालम्बनं परम् ।
एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते ॥ १७ ॥

**(भा.)** 'एतद्ध्येवाक्षरं ब्रह्म विष्ण्वाख्यं परमव्ययम् ।
'सर्वस्याऽलम्बनं ज्ञात्वा मुच्यते नात्र संशयः' इति च ॥ * ॥

**(टी.)** **'एतद्ध्येवाक्षरम्–'** इत्यादावेतच्छब्देन जीवस्वरूपमनूद्य तस्य ब्रह्मत्वादिकमुपदिशतीति शङ्कानिवृत्त्यर्थं **'एतद्ध्येवाक्षरम्–'** इत्यादिकं महावराहवचनमुद्धरति । अत्र **'विष्ण्वाख्यम्'** इति विशेषणात् सा शङ्का दूरतोऽपास्ता ॥ १६ ॥

**आलम्बनमाधारः** । नह्याधाराधेययोरेकत्वं युक्तम् । अत्र ब्रह्मलोको विष्णुलोकः । स ज्ञानी तत्र गत्वा तमेवाप्य मोदमानः स्वावरैर्नित्यं **महीयते** ॥ १७ ॥

**(भा.चं.)** अश्नुत इत्यक्षरम् । अशू व्याप्तौ । 'अशेः सरन्' [८.५०] इति हि दशपादिका । अर्वाचीनास्तु सरन्प्रत्ययं न सहन्ते । विवदमानास्ते वदन्ते–यदि सरन्प्रत्ययः, तदा नित्स्वरेणान्तोदात्तता स्यात्– 'अ॒क्ष॒रम्' इति । मध्योदात्तता चेष्यते– 'अ॒क्षर॑म्' इति । तेन सरप्रत्यय एवायम्, न सरन्निति । पतञ्जलिभाष्ये तु 'अश्नोतेर्वा पुनरयमौणादिकः सरन्प्रत्ययः' इत्येव पठ्यते । 'सरन्प्रत्ययस्यानुबन्धलोपे कृतेऽनुकरणं सर इति' इति च कैयटः । विनोद एवायमस्माकं यद् वैयाकरणा विवदन्ते । पठ्यते च मैत्र्युपनिषदि अन्तोदात्तमक्षरपदम्– 'एत॑देवाक्ष॒रं पुण्य॒मेत॑देवाक्ष॒रं प॑रम् । एत॑देवाक्ष॒रं ज्ञा॒त्वा यो यदि॒च्छति॒ तस्य॒ तत्' [६.४] इति । निर्वचनान्तरं चावोचन्–'अक्षरं न क्षरति न क्षीयते वा' इति यास्कः । 'अक्षरं न क्षरं विद्यात् । न क्षीयते न क्षरतीति वा' इति पतञ्जलिः । अधिकं क्षरणादक्षरम् । न क्षरतीत्यक्षरम् । 'क्षर सन्ततदाने' । 'क्षर विनाशे' । अक्षेषु रमणादक्षरम् । अकारादिक्षकारान्तेषु एकपञ्चाशद्वर्णेषु वाच्यतया रमत इति चाक्षरम् । अत एव **परमक्षरम्** । प्रकृत्यादिकं त्वपर-

मक्षरम् । एतदेव मुख्यमक्षरमिति ज्ञात्वा, एतदक्षरं ज्ञात्वैव च । **यो यदिच्छति तस्य तत्** । 'यद्यत् कामयते तत्तत् सृजते', 'तेषां सर्वेषु लोकेषु कामचारो भवति'[छं.८.१.२], 'सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्' [छं.८.४.४], 'यँयमन्तमभिकामो भवति यं कामं कामयते सोऽस्य सङ्कल्पादेव समुत्तिष्ठति'[छं.८.१.६], 'सोऽश्नुते सर्वान् कामान्त्सह ब्रह्मणा' [तै.उ.२.१] इत्यादेः । सर्वशास्त्रप्रसिद्धं ज्ञानिलोकप्रसिद्धं स्वानुभवसिद्धं चैतदिति त्रिर्हिङ्करोति ॥ १६ ॥

**श्रेष्ठमालम्बनम्** । सर्वाधारत्वात् । अत एव **परं** सर्वविलक्षणं परिपूर्णं च **आलम्बनम्** । एतद्ध्येवाक्षरमिति प्रथमद्वितीयचरणयोर्विश्लेषेण केवलाऽनुष्टुप् । एतदालम्बनमिति च स्फुटम् ॥ १७ ॥

न जायते म्रियते वा विपश्चि-
न्नायं कुतश्चिन्न बभूव कश्चित् ।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे[1] ॥ १८ ॥

(भा.) 'देहोत्पत्तिविनाशाख्यौ ज्ञानिनोऽप्युद्भवाभवौ ।
'न कुतश्चिद् यतो विष्णुर्ज्जायतेऽतस्तदीक्षणात् ॥

'भावाभावौ न विदुषो यस्माज्जीवो न कश्चन ।
'जायते म्रियते वाऽपि स्वरूपेण कथञ्चन ।
'अजो नित्योऽविकारश्च जीवः पुरमणन्नपि' इति च ॥

अयं भगवान् कुतोऽपि न बभूव यस्मादतस्तद्वेत्ताऽपि विपश्चित्, 'न जायते म्रियते' च । यतः कश्चिज्जीवः स्वतो न बभूव । देहसम्बन्धाद्धि जायते । विपश्चितस्तु देहसम्बन्धाभावात् न जायते न म्रियते च ॥ * ॥

१. '–मानेऽपि देहे' इति क्वचित् ।

**(टी.)** ननूत्पत्तिनाशवतो जीवस्य कथं नित्यावस्थितियोग्यत्वमित्याशङ्क्य परिहरति– **न जायत** इत्यादिना। अस्य वाक्यस्याभिप्रायमपि **'देहोत्पत्ति–'** इत्यादिना महावराहवचनेनैव प्रकाशयति। **'न जायते म्रियते वा विपश्चित्'** इत्यत्र ब्रह्मज्ञानिनोऽप्युद्भवाभवौ निषिद्ध्येते। देहोत्पत्तिविनाशावप्येतावेव जीवस्यानादितः सम्पृक्तौ। एवं जीवस्यैवन्त्वे तत्प्रहाणे किं कारणमित्याकाङ्क्षायामाह– **नायं कुतश्चिदिति**। **अयं** विष्णुः देहतः स्वरूपतो वा **कुतश्चिदपि न जायते म्रियते** चेति। [अतः] **तदीक्षणात्** तद्विदुषोऽपि तत्प्रसादात् **भावाभावौ न** भवत इत्युक्तौ। अतद्विदस्तु स्यातामेवैतौ। परिहर्तुमशक्यत्वात्। अथ स्वरूपोत्पत्तिविनाशौ कस्यापि जीवस्य न स्यातामित्याह– **न बभूव कश्चिदित्यादिना**। **'कश्चित्'** अज्ञानी ज्ञानी वा जीवः इतः पूर्वं **स्वरूपेण 'न बभूव'** नोदपद्यत। अथाप्येष **स्वरूपेण** सर्वथा **न जायते न म्रियते** चेति यस्मात् तस्मात् तद्विवक्षया जीवस्याजत्वादिविशेषणं पठ्यते। यद्यपि जीवः पुरं देहमणतीति पुराणशब्देन जन्मभागुच्यते। अथापि स्वरूपतो जन्माभावात् **अज** इत्युच्यते। मरणाभावात् **नित्यश्चोक्तः**। परिणामाख्यविकाररहितत्वात् **शाश्वतश्च** स भवति। अथापि **न जायत** इत्यादिवाक्यस्यान्वयभेदं स्ववाक्येनापि सुव्यक्तं वक्ति– **अयं भगवानित्यादिना**। यद्यपि नित्यानित्यपदार्थानां सत्तादिधर्माः परत एव भवन्ति। तथाऽप्यस्य सत्तामात्रमपि नान्याधीनम्। कुतः पुनः पारतन्त्र्यातिरेकलक्षणं जन्मेत्यर्थः। तद्धेत्तुरपि जन्माभावोक्तेस्तस्य तदभावः कैमुत्यान्निश्चीयते। यदिवा ज्ञानिनः स्वरूपोत्पत्तिनाशयोरेवाभावोऽभिप्रेतः स्यात् तर्हि अज्ञानिनस्तद्भावो ह्यनुज्ञातः स्यात्। नहि तस्यापि सोऽस्तीत्याह– **यतः कश्चिदिति**। नह्ययं स्वरूपेण जायत इति क्वाप्युक्तम्। नच तस्य स्वरूपनाशलक्षणं मरणमपि श्रूयते ॥ १८ ॥

**(भा.चं.)** **विपश्चिद्** भगवद्वेत्ता **न जायते; न वा म्रियते**। वाकारश्चार्थे। न म्रियते चेत्यर्थः। यतस्तेन वेद्यः **अयं** भगवान् **कुतश्चित्** स्वरूपतो देहतो वा

**न जायते म्रियते च** । **अयमिति** साक्षात्कारात्मकं वेदनमाह । स्वहृदये बिम्बरूपत्वेन साक्षात्कृतोऽयम् । 'इदमः प्रत्यक्षगतम्' इति स्मरणात् । अयते सर्वत्र व्याप्नोतीति च भगवानयमित्युच्यते । स्वरूपविवक्षया पुनः **कश्चिदपि न बभूव** न जायते । विपश्चितस्त्वयं विशेषः– स भगवानिव देहसम्बन्धेनापि न जायते । तज्ज्ञानजनितानुग्रहविशेषात् । तदेतदाह श्रुतिः– 'परमं साम्यमुपैति' इति । जीवमात्रस्य स्वरूपत उत्पत्तिनाशयोरभावं स्पष्टयत्युत्तरार्द्धेन– **अजो नित्यः** । स्वरूपतो न जायत इत्य**जः** । नियमेन ध्रुवः स्वरूपनाशरहित इति **नित्यः** । 'त्यब् नेर्ध्रुवे' [४.२.१०४] इति हि वार्त्तिकम् । शश्वत् सदाऽप्येकरूप एव भवतीति **शाश्वतः** । पुरात् **'पुरमणन्नपि'** सञ्चरन्नपि देहनिमित्तमुत्पत्ति-नाशवानपि । यतः **शरीरे** विशीर्यमाणेऽपि स्वयं **न हन्यते** न विशीर्यते । तथा हि गीतायाम्– 'न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः । अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे' [२.२०] इति । न जायत इति केवला त्रिष्टुप् ॥ १८ ॥

**हन्ता चेन्मन्यते हन्तुꣳ हतश्चेन्मन्यते हतम् ।**
**उभौ तौ न विजानीतो नायꣳ हन्ति न हन्यते ॥ १९ ॥**

**(भा.) जीवस्यापि स्वतो मरणाभावात् 'उभौ तौ न विजानीतः' ॥ * ॥**

**(टी.)** नन्वेवमप्यहमहितं हनिष्यामि, अयमनेन हत इत्यादिव्यवहार-दर्शनात् स्वरूपोत्पत्तिनाशावपि तस्य स्यातामित्यत आह– **हन्ता चेदिति** । **यौ तौ** जीवस्वरूपापेक्षया तं हनिष्यामि अहं हतोऽस्मीति च मन्वानौ **तावुभावपि** तत्वं **न जानीतः** । नहि तत्स्वरूपस्य हन्यत्वं जन्यत्वं वा प्रमाण-सिद्धम् । हननादिव्यवहारस्तु देहमात्रविषय एव ॥ १९ ॥

**(भा.चं.) हतश्चेन्मन्यत** इति । यदि कश्चित् **हतः** आत्मानं **हतं मन्यते चेत्** । ननु कथं हतं मन्येत? यदि मन्यते तर्हि नाहन्यत । तेन नाहमहन्य इत्यपि मन्यते । सत्यम् । अथापि न विजानाति सः । अज्ञत्वादेव चाऽत्मानं

हतं मन्यते। देहतो हतः। लोकान्तरं वा गतः। 'हन हिंसागत्योः'। अथवैवं व्याख्येयम्– कश्चिद् देहतो **हन्ताऽस्ति** तं **चेदन्यः** कश्चित् हन्तुं हन्तारं **मन्यते**। हन्तीति हन्तुः। स्वरूपतो हन्तारं मन्यते, अयमेनमहन्निति। स्वयमेव वा स्वात्मानं हन्तारं **मन्यते,** अहमेनमहनमिति। एवं कश्चिद् देहतो **हतः,** तं **चेदन्यः** कश्चित् स्वरूपतो **हतं मन्यते**। **उभौ तौ न विजानीतः**। तथा हि गीतायाम्– 'य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम्। उभौ तौ न विजानीतो नायं हन्ति न हन्यते' [२.२९] इति। हन्ता चेदिति स्फुटमनुष्टुप्॥ १९॥

**अणोरणीयान् महतो महीया-**
**नात्माऽस्य जन्तोर्न्निहितो गुहायाम्।**
**तमक्रतुः पश्यति वीतशोको**
**धातुः [१]प्रसादान्महिमानमात्मनः　　　　॥ २०॥**

**(भा.) एवं नित्यस्य जन्तोर्ग्गुहायां निहितः। एवं विष्णौ क्रतुर्यस्य सोऽक्रतुः। तन्निश्चयः। आत्मनः सकाशान्महिमानं महामानम्।**

**'जीवाद् गुणपरीमाणं यस्माद् विष्णोर्म्महत्तरम्।**
**'तस्माज्जीवात् स महिमा विष्णुरित्युच्यते श्रुतौ' इति च॥ *॥**

**(टी.)** साक्षान्मुख्यस्य विष्णोरणोरणीयस्त्वादि विधिवाक्यं दर्शयति–[**अणोरणीयानित्यादि**।] **एवं नित्यस्येति**। **एवं** स्वरूपापेक्षया **नित्यस्य जन्तोः** हृदय**गुहायां निहितः** परमनित्यः परमात्मा। **एवं** उक्तलक्षणसाहित्येन तस्मिन्नकाराख्ये **विष्णौ** निश्चयज्ञानवान् **अक्रतुः** तं भगवन्तं **पश्यति** [तस्यैव **धातुः**] **प्रसादात्**। अथ तत्प्रसादात् **वीतशोकश्च** भवति। महीति महदुच्यते। 'महि शर्म यच्छ' इत्यादिवत्। अतः स्वस्य सकाशान्महापरिमाणमनन्तगुणपरिमाणमित्यर्थः। अत्रापि **'जीवात्–'** इत्यादिकं महावराहवचन-

---

१. 'धातुप्रसादात्' इति शङ्कररङ्गरामानुजौ।

प्रमाणमाह। अणुपरिमाणात् जीवात् विष्णोर्गुणपरिमाणं आनन्त्येन महत्त्वात् **महत्तरमित्युक्तम्। परीमाणमिति** मात्राधिक्याच्चैतदवगम्यते। 'आधिक्येऽधिकम्' इति सूत्रात्॥ २०॥

**(भा.चं.) 'अस्य जन्तोः'** स्वरूपतो नित्यस्यापि देहतो जननशीलस्य जीवस्य हृदय**'गुहायां निहितः आत्मा' परमात्मा। एवं विष्णौ क्रतुर्यस्येति** भाष्यपदानि व्याख्याति– **एवं उक्तलक्षणसाहित्येन तस्मिन्नकाराख्ये विष्णौ निश्चयज्ञानवानिति।** 'स क्रतुर्ज्ञानरूपत्वात्' इति हि याज्ञीयमन्त्रव्याख्याने। उक्तलक्षणमणोरणीयस्त्वादि। अनेन हि कर्म सम्यक् कर्तुं शक्यत इति क्रतुर्ज्ञानम्। क्रियत इति क्रतुर्यज्ञः। करोतेः कतुः प्रत्ययः। 'कृञः कतुः' [१.१३०] इति हि दशपादिका। क्रियत इति क्रं कर्म। तस्मात् तारयतीति च क्रतुर्ज्ञानम्। **धातुः** तस्यैव सर्वधारकस्य भगवतः **प्रसादात् तमेव महिमानं पश्यति।** महि महत्तरं मानं यस्य स महिमा। एके 'धातुप्रसादात्' इति पठित्वा 'शरीरस्य धारणाद् धातूनां मनआदिकरणानां प्रसादात्' इति व्याचक्षते। अपरे–'धारकस्य परमात्मनः प्रसादात्' इत्येव व्याचक्षते। मन्त्रोऽयं तैत्तिरीयारण्यके [१०.१०.१.], श्वेताश्वतरे [३.२०] च पठ्यते किञ्चित्पाठभेदेन। 'तमक्रतुं पश्यति' इति च तत्र पाठः। 'आत्मा गुहायां निहितोऽस्य जन्तोः' इति च। 'महिमानमीशम्' इति च। अणोरणीयानिति तुरीयचरणे एकाक्षराधिका त्रिष्टुप्॥ २०॥

**आसीनो दूरं व्रजति शयानो याति सर्वतः।**
**कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति ॥ २१ ॥**

**(भा.)** ऐश्वर्यादेव **'आसीनो दूरं व्रजति'** इत्यादि।
**'आसीनो दूरं व्रजति शयानो याति सर्वतः।**
**'ऐश्वर्याद् भगवान् विष्णुर्विरुद्धं घटयत्यसौ'** इति च॥ * ॥

**(टी.) 'आसीनः'** इत्यादि लोकविलक्षणानपि धर्मान् विष्णोरुपदिशति। तत्र युक्तिं भगवानाह– **ऐश्वर्यादेवेति।** नहीदं मायाशक्त्येति मथितार्थः। तदपि

**'आसीनः–'** इत्यादि महावराहवचनेन दृढयति । स्वभक्तान् मदयति स्वाभक्तान् न मदयतीति भगवान् मदामदः । **मदन्यः** प्राकृतपुरुषः ।। २१ ।।

**(भा.चं.)** मूलरूपेण वैकुण्ठादावासीन एव दूरं **व्रजति** । अथ चावतार-रूपेष्वपि षोडशस्त्रीसहस्रेशः सन् एकस्या भार्याया गृहे स्वयम**आसीन** एव दूरमितरभार्यागृहानपि **व्रजति** । श्रुतदेवगृह आसीन एव बृहदश्वमन्दिरमपि व्रजति । हृदयगुहायां **शयान** एव **सर्वतो याति** । 'एष म आत्माऽन्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः' [छं. ३.३.९] इति श्रुतेः । 'यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते' [छं.८.१.२] इति च । **मद-यति** आनन्दयति । **मदन्यः** मदवरः । तदाह– **प्राकृतपुरुष** इति । 'तं देवं मत्तः को ज्ञातुमर्हति त्वदन्यः' इत्यपि केचिद् व्याचक्षते । आसीन इति केवलाऽ-नुष्टुप् ।। २१ ।।

**अशरीरꣳ शरीरेष्वनवस्थेष्ववस्थितम् ।**
**महान्तं विभुमात्मानं मत्वा धीरो न शोचति ।। २२ ।।**

**(टी.)** अवस्थानशक्तिरहितेष्ववस्थापकत्वेनावस्थितम् ।। २२ ।।

**(भा.चं.)** **'शरीरेष्ववस्थितम्'**, अथापि **'अशरीरम्'** । शरीरेष्ववस्थितमपि **महान्तं** सर्वगतम् । **विभुं** सर्वसमर्थम् । विविधो भवतीत्यनन्तरूपं वा । **आत्मान**मन्तर्यामिणं सर्वस्वामिनं **मत्वा न** शरीरादिभिः **शोचति** । कुतः? यथार्थज्ञानजनिताद् धैर्यात् । अत्र 'शरीरेषु+अनवस्थेषु' इति प्रथमद्वितीय-चरणयोर्विश्लेषेण केवलैवानुष्टुप् ।। २२ ।।

**नायमात्मा प्रवचनेन लभ्यो**
**न मेधया न बहुना श्रुतेन ।**

**यमेवैष वृणुते तेन लभ्य-**
**स्तस्यैष आत्मा विवृणुते तनुं स्वाम्[१] ॥ २३ ॥**

**(भा.चं.)** शिष्यान् प्रति शास्त्र**प्रवचनेन** मननरूपेण स्व**प्रवचनेन** वा **न लभ्यः** परमात्मा । **न मेधया** सर्वधारकेण प्रज्ञाबलेन च । **यमेवैष** परमात्मा **वृणुते** भक्तोऽयं ममेति, तेन भक्तेन केवलं **लभ्यः** । **तस्य** भक्तस्य **एष** परमात्मा स्वरूपमपावृणोति । आथर्वणे [३.१.३]चायं मन्त्रोऽविकलं पठ्यते । चतुर्थचरणे एकाक्षराधिका त्रिष्टुप् ॥ २३ ॥

**नाविरतो दुश्चरितान्नाशान्तो नासमाहितः ।**
**नाशान्तमानसो वाऽपि प्रज्ञानेनैनमाप्नुयात् ॥ २४ ॥**

**(टी.)** दुश्चरितविरतिवर्जित **एनं न** प्राप्नुयात् । किन्तु सदाचारभगवन्निष्ठा-समाधानादिमानेव **प्रकृष्टज्ञानेन** भगवन्त**माप्नुयात्** । भक्त्यभावे प्रवचनादिनाऽपि प्रयोजनाभावात् ॥ २४ ॥

**(भा.चं.)** नाविरत इति केवलाऽनुष्टुप् । **अशान्तः** भगवन्निष्ठारहितः । 'शमो मन्निष्ठता बुद्धेः' इति भागवते । **असमाहितः** असद्वाक्यैर्विषमीकृतचेताः । 'समाधानं समस्थितिः' इति हि स्मरन्ति । **अशान्तमानसः** विषयपरवशतया प्रक्षुब्धमना विक्षिप्तमना वा । येन तत्वग्रहणाय न प्रभवति । 'न तस्य तत्वग्रहणाय साक्षाद् वरीयसीरपि वाचः समासन्' [भाग.५.१.३] इति च । सर्वेष्वपि शास्त्रेषु, सर्वैरपि पदैः भगवद्गुणग्राहि ज्ञानं प्रज्ञानम् ॥ २४ ॥

**यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः ।**
**मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥ २५ ॥**

**इति प्रथमाध्याये द्वितीया वल्ली**

—-०—

१. 'तनूं स्वाम्' इति शङ्कररङ्गरामानुजौ ।

**(टी.)** अथ मुच्यमानानामितरेषां च विष्णुरेव प्रवेश्यत्वान्महाश्रय इत्याह– **यस्येति** । हरेः ब्रह्मक्षत्रे ब्रह्मवायू प्रळयावस्थायामद्यत्वात् **ओदनो भवतः** । मुक्तामुक्तत्वविशेषणाद् द्वैविध्यज्ञापनार्थ**मुभे** इति विशेषणम्। **यस्य** ओदनस्य **मृत्यु**रह**मुपसेचन**मात्रं भवामि । **क** एवेत्थं मुक्तामुक्तनियामकं विष्णुं **वेद** । क इति काक्वाक्षेपः । अथवा ब्रह्मा वायुर्वा कशब्दितः । **यत्र सः** यस्मिन् स भगवान् विशेषेण स्थितः । एवं तावत् **ब्रह्म च क्षत्रं चेति** चशब्दात् चराचरं सर्वमप्यन्नमस्येत्युक्तं भवति ।। २५ ।।

**(भा.चं.)** अद्यत इति **ओदनः** । अकारस्य ओभावः । आ अद्यत इति वा । अस्य उः । 'तृतीयोऽतिशये' । मुख्यादनीयमित्यर्थः । 'अहमन्नम्' इति हि श्रुतिः । वैयाकरणास्तु 'उनत्तीति ओदनः' इति विगृह्णन्ति । उन्दी क्लेदने' । 'उन्देर्नलोपश्च'[५.२२] इति दशपादिका । तदपि सम्मतमेव । अत एवोक्तं खण्डार्थनिर्णये–'ओदनम्, उन्दतेः कर्म' इति । 'संश्लेषादोदनं कर्म' इति च तत्रैव व्याससंहितायाम् । भिन्नेष्वर्थेषु निर्वचनान्यपि भिन्नानि भवन्ति । मुक्तं चामुक्तं च ब्रह्मेति **उभे** ब्रह्मणी । एव**मुभे** क्षत्रे । मुक्तामुक्तौ ब्रह्मवायू । ननु वायोर्न साक्षान्मुक्तिः । तेन कथं 'उभे' इति? अनवगताशयः पृच्छसि । न वयं साक्षान्मुक्तिमब्रूम । किन्तु मुक्तामुक्तभेदेन द्वैविध्यमेव प्रत्यपीपदाम । याविदानीं पदगतौ ब्रह्मवायू तौ भगवत ओदनः । तौ यदा मोक्ष्येते तदा मुक्तावपि ब्रह्मवायू ओदन एवेति । ननु ब्रह्मपदेनैव सोऽप्युपसङ्गृहीत इति न पृथग् वक्तव्यः । स्यादवक्तव्यः । यत्र पदविवक्षा स्यात् । अत्र त्वभिमान-भेदेन पृथग् विवक्षितः । अत एव 'ब्रह्मवायू' इत्यनुक्त्वा **'ब्रह्म च क्षत्रं च'** इत्युक्तम् । ब्राह्मणवर्णमानित्वात् **ब्रह्म** । क्षत्रमानित्वात् **क्षत्रम्** । 'विष्णो-र्ब्राह्मणजातिः सन् ब्रह्मा जज्ञे चतुर्मुखः । वायुः सदाशिवोऽनन्तो गरुडः शक्र एव च । कामश्च वरुणश्चैव सोमसूर्यौ यमस्तथा । एवमाद्याः क्षत्रियास्तु देवानां ब्रह्मनिर्मिताः' इत्यादि बृहद्भाष्ये । **मृत्युः** शिवः शेषोऽपि । 'मृत्युः सङ्कर्षणः शेषः' इत्यभिधानात् । तत्समकक्षतया गरुडोऽपि । अन्ततो

यमोऽपि। उपसिच्यतेऽन्नमनेनेत्युपसेचनं व्यञ्जनम्। तेमनमित्येतत्। **क इति काकाक्षेपः**। न कोऽपीत्यर्थः। काकुस्वरेणाऽक्षेपं ध्वनयतीति। **यत्र** यस्मिन् स्वे महिम्नि **स** भगवान् प्रतिष्ठितः, तं परमात्मानं तन्महिमानं वा इदमित्थमिति **को वेद**। न कोऽपीति। अथचार्थान्तरमाह– **अथवेति**। क इति विष्णुः। क इति ब्रह्मा। क इति वायुः। क इति दक्षप्रजापतिः। तत्र विष्णोरत्तृत्वादत्रानवसरः। दक्षप्रजापतेश्चोपसेचनत्वात्। अतः साक्षादोदनभूतौ ब्रह्मवायू एवात्र कशब्देनोच्येते। **'यत्र सः' यस्मिन्** ब्रह्मणि वायौ वा **स भगवान् विशेषेण** सन्निहितः। **स** एव तमित्थम्भावेन वेदेति। अत्रापि 'क्षत्रं च + उभे' इति पूर्वार्धे चरणयोर्विश्लेषेण केवलाऽनुष्टुप्॥ २५॥

—०—

[अथ प्रथमे तृतीया वल्ली]

ऋतं पिबन्तौ सुकृतस्य लोके
गुहां प्रविष्टौ परमे परार्द्धे[1] ।
छायातपौ ब्रह्म विदो वदन्ति
पञ्चाग्नयो ये च त्रिनाचिकेताः[2] ॥ १ ॥

यः सेतुरीजानानामक्षरं ब्रह्म यत् परम् ।
अभयं तितीर्षतां पारं नाचिकेतᳬ शकेमसि[3] ॥ २ ॥

**(भा.)** 'आत्माऽन्तरात्मेति विभुरेक एव द्विधा स्थितः ।
'विष्णुः स परमे वायौ परेभ्योऽप्यूर्द्धरूपके ॥

'शुभान् पिबति भोगान् स च्छायेव विदुषां प्रभुः ।
'आतपः पापिनां नित्यं मर्यादा विष्णुयाजिनाम् ।
'संसारस्य च पारस्थः स विष्णुर्द्विस्वरूपकः ॥ * ॥

**(टी.)** अथेदानीमेतददन् किम्वन्वत्तीत्याकाङ्क्षायामाह– **ऋतं पिबन्ताविति**। अत्र **ऋतं** शुभकर्मफलरसम् । तदेवायं पिबति नान्यत् । द्विवचनमेकस्यैव विष्णोर्द्वैरूप्येण द्विधाऽवस्थानात्। अस्य खण्डस्याभिप्रायं **'आत्मा–'** इत्यादिना पुराणवचनेन व्याख्याति। उभौ पिबन्तौ जीवपरौ किं न स्यातामित्यत आह– **'एक एव द्विधा स्थितः विष्णुः सः'** इति । सुकृतानामास्पदभूतमुख्यप्राणे द्विधा स्थित्वा तत्फलरसं **पिबन्तौ ब्रह्म** इति **वदन्ति ब्रह्मविदः**। **विदुषां छायेव** आह्लादकौ, **पापिनामातप** इव तापकौ। ये च त्रिःकृत्व आधेयत्वेन नचिकेतसे

---

१. **'पराद्धर्चे'** इति रङ्गरामानुजः । २. **'त्रिणाचिकेताः'** इति शङ्कररङ्गरामानुजौ ।
३. **'शकेमहि'** इति शङ्कररङ्गरामानुजौ ।

प्रोक्ताः **पञ्चाग्नयः** तांश्च **ब्रह्मेति वदन्ति**। गार्हपत्यादयस्त्रयः प्रणीताग्निरा-ग्नीध्रश्चेति पञ्चाग्नयः । तेषु नियामकत्वेन स्थितपरमाग्नय एवात्रोदिताः । 'नाचिकेताग्निस्थो भगवानत्रोच्यते' इति प्रागेव निगमनात् ।। १ ।।

**'मर्यादा–'** इत्यादिना **'यः सेतुः–'** इत्यादेरभिप्रायमाह । अत्रैकवचनेन परब्रह्मत्वादिभिश्च विशेषणात् विष्णुरेव पिबन्ताविति भावः । संसारनदीं **तितीर्षतामभयं पारं** विष्णवाख्यं ब्रह्म। एवं सङ्क्षेपेणोक्तं नाचिकेताग्निस्थं हरिं किञ्चिद् विस्तरेण च वक्तुं वयं तथा किञ्चिच्छक्नुमः । नहि श्रोतुं शक्नोषीत्युपरम्यते ।। २ ।।

**(भा.चं.)** ऋतं पिबन्ताविति केवला त्रिष्टुप्। परेभ्यस्तत्वमानिभ्योऽपि आ समन्ताद्धः समृद्धमहिमा वायुः । अर्द्धमिति निलयनं वा । 'पितुरर्द्धमेयाय' इत्यादिश्रवणात्। परात्मनो मुख्याधिष्ठाने **परमे** सर्वजीवोत्तमे मुख्यप्राणे स्थितौ आत्मान्तरात्मानौ। **'सुकृतस्य लोके'** इति टीकायामेव व्याचख्यौ– **'सुकृतानामास्पदभूतमुख्यप्राणे'** इति । 'सुकृतस्य लोके सुकृतनिर्मित-साधनशरीरे' इत्यपि व्याख्यानान्तरम्। तथाहि तत्वप्रदीपे– 'ऋतं शास्त्र-विहितकर्मभिरागतं फलम्। सुकृतस्य लोकः सुकृतनिर्मितं शरीरम्। परमं ब्रह्मावासत्वात्। परार्द्धं परस्य स्थानम्। परस्य अन्यस्य जीवस्य। अभिमन्य-मानत्वात्' इति। 'गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्' [ब्र.सू.१.२.११] इति बादरायणसूत्रम्। ब्रह्मेति विदो वदन्तीति प्रतृण्णमङ्गीकृत्य व्याचष्टे– **ब्रह्मेति वदन्ति ब्रह्मविद** इति। **ये च पञ्चाग्नयस्**तानपि पञ्चात्मकं **ब्रह्मेति वदन्ति**। गार्हपत्य आहवनीयोऽन्वाहार्यपचनापरनामधेयो दक्षिणाग्निश्चेति **गार्हपत्या-दयस्त्रयः**। तथाचायं समग्रो मन्त्रार्थः– **परार्द्धे** परस्य अन्यस्य जीवस्य अर्द्धे वासस्थानभूते, अथापि भगवत्सन्निधानेन **परमे** उत्तमे, **सुकृतस्य** सम्बन्धिनि, पुण्यनिर्मिते **लोके** शरीरे, तत्रापि सकलजीवचीर्णस्य **सुकृतस्य लोके** आश्रयभूते **परमे** अत्युत्तमे **परार्द्धे** परस्य परमात्मनः अर्द्धे निलयभूते मुख्यवायौ, अथवा परेभ्यो रुद्रेन्द्रादिभ्योऽपि समृद्धमहिमनि, अत एव **परमे** सर्वजीवोत्तमे

वायौ सन्निधाय, जीवस्य हृदयगुहां प्रविष्टौ, **छायातपाविव** सतां शीतलावसतां तापकौ यौ **ऋतं** सुकृतफलं **पिबन्तौ** तौ द्विरूपं नारायणाख्यं **ब्रह्म** इति **विदो वदन्ति**। न केवलं द्विरूपः। पञ्चरूपश्चायम्। तथाहि– **ये त्रिनाचिकेताः** त्रिराधेयत्वेन नचिकेतसे प्रोक्ताः **पञ्चाग्नयः** ते च पञ्चात्मा नारायण एवेति **ब्रह्मविदो** विदन्ति **वदन्ति** चेति ॥ १ ॥

**यः सेतुराश्रयः ईजानानां यत्** च **अक्षरं परं ब्रह्म** तावेव गुहां प्रविष्टावात्मानौ। तदेतदाह– **अत्रैकवचनेन परब्रह्मत्वादिभिश्च विशेषणात् विष्णुरेव पिबन्तौ** इति। आदिपदेन परमाक्षरत्वेन, तितीर्षतामभयपारत्वेन, सर्वयज्ञाश्रयत्वेन च विशेषणात्। 'अथ परा यया तदक्षरमधिगम्यते' [आथ.१.१.६], 'अमृतस्यैष सेतुः' [आथ.२.१.६], 'अहं हि सर्वयज्ञानां भोक्ता' [भ.गी.९.२८] इत्यादेः। **ईजानानां** यजमानानाम्। यद्वा ईजन्त इति ईजानाः। ईज गतौ। भगवज्ज्ञानिनः। ज्ञानपूर्वं निवृत्तकर्मनिरतानामित्यर्थः। तदेतदाह भाष्योदाहृतप्रमाणे–**'विष्णुयाजिनाम्'** विष्णुं सर्वयज्ञभोक्तारं विज्ञाय विष्णावर्पणधिया यजताम्। **नाचिकेतं** नारायणं वक्तुं वयं **शकेमसि**। अथापि तव यावती श्रवणयोग्यता तावदेवोच्यत इति भावः। ननु शकिरकर्मकः। अकर्मकोऽपि सकर्मकोऽपि भवति। यदाहुर्वैयाकरणाः– 'तुमुनन्तवाच्यक्रियाविषयत्वे सकर्मको भवति' इति। उदाहरन्ति च 'शक्नोति घटं कर्तुम्' इति। अतो व्याचख्यौ– **वक्तुं वयं शक्नुम** इति। ननु कथं शकेमसि? धात्वन्तस्य मस इकार आगमो भवति। 'शक्नुमः शक्नुमसि' इति। न तु मकारात् परः सिः। तेन शकेमसीति न भवति। तथाहि स्मरन्ति च्छन्दसि 'इदन्तो मसि' [अष्टा.सू.७.१.४६] इति। ननु भोः, विपरीतं ते दर्शनम्। नहि व्याकरणमनुरुन्धाना वैदिकाः प्रयोगा भवन्ति। प्रयोगमनुरुन्धानानि व्याकरणानि भवन्ति। ततश्च प्रयोगदर्शनात् मात्परोऽपि सिरुपलक्ष्यते। अथवा तुष्यतु भवान्। लडर्थ एवात्र विवक्षित इति शक्नुमसीत्येव रूपम्। तदेव नलोपे सति उकारस्य च एकारे सति शकेमसीति भवति। यमस्य प्रवचनशक्तिरपि सीमितेति दर्शयितुं वर्णलोपो वर्ण-

विपर्ययश्च । तदेतदाह– किञ्चिच्छक्नुम इति । केचिद् व्याकरणभीताः 'शकेमहि' इति पाठमेव व्यतियन्ति । यः सेतुरिति प्रथमपादः सप्ताक्षरः । तृतीयो नवाक्षरः । तेन केवलाऽनुष्टुप् । ततः परं मन्त्रद्वयेऽपि । यस्त्वविज्ञानवानिति पञ्चमे मन्त्रे द्वितीयपादो नवाक्षर इत्येकाक्षराधिकाऽनुष्टुप् । प्रथमद्वितीय-चरणयोर्विश्लेषेण द्व्यक्षराधिका वा । षष्ठे प्रथमपादे एकाक्षराधिकाऽनुष्टुप् । सप्तमे केवलाऽनुष्टुप् । पूर्वार्धे चरणयोर्विश्लेषेण एकाक्षराधिका वा । अष्टमे प्रथमपाद एकाक्षराधिकाऽनुष्टुप् । ततः परं मन्त्रपञ्चके केवलाऽनुष्टुप् ॥ २ ॥

आत्मानꣳ रथिनं विद्धि शरीरꣳ रथमेव च[1] ।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च[2] ॥ ३ ॥

इन्द्रियाणि हयानाहुर्विषयाꣳस्तेषु गोचरान् ।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्म्मनीषिणः ॥ ४ ॥

यस्त्वविज्ञानवान् भवत्ययुक्तेन मनसा सदा[3] ।
तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः ॥ ५ ॥

यस्तु विज्ञानवान् भवति युक्तेन मनसा सदा[3] ।
तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ॥ ६ ॥

यस्त्वविज्ञानवान् भवत्यमनस्कः सदाऽशुचिः ।
न स तत् पदमाप्नोति सꣳसारं चाधिगच्छति ॥ ७ ॥

यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः ।
स तु तत् पदमाप्नोति यस्माद् भूयो न जायते ॥ ८ ॥

---

१. 'रथमेव तु' इति शाङ्करः पाठः । २. 'प्रग्रहमेव तु' इति पाठान्तरम् ।

३. 'मनसा सह' इति क्वचित् ।

**विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः ।**
**सोऽध्वनः पारमाप्नोति तद् विष्णोः परमं पदम् ॥ ९ ॥**

**(टी.)** अथ यथाश्रुतस्य ध्यानप्रकारमपि सङ्ग्रहेण वक्तुमुपक्रमते–**आत्मानमिति** । उपासकजीवो रथिवत् अध्यवसायगामी स्यादित्यर्थः ॥ ३ ॥

स्वरूपभूतैरिन्द्रियैर्मनसा च ध्यानयोगे संस्थितं नित्यसुख**भोक्तेत्याहुः** ॥ ४ ॥

तस्य च योगस्यार्थे विशिष्टज्ञानादिनेन्द्रियाणां स्वावश्येन भाव्यम्। अविज्ञानवतो नित्याशुचेर्योगाभावात् **तत्** विष्णुपदं **नाऽप्नोति** ॥ ५–७ ॥

**यस्मात्** यत्प्राप्तिनिमित्तात् **भूयो न जायते** ॥ ८ ॥

एतदेव विशिनष्टि– **विज्ञानेति** । **विज्ञानसारथिः** बुद्धिसारथिः । संसाराध्वनः **पारं** विष्णुपदम् ॥ ९ ॥

**(भा.चं.)** विष्णोः परमं पदं प्रति प्रयाणाय रथमारूढं स्वात्मानं **रथिनं विद्धि** । वस्तुतस्तु परमात्मैव रथी। तेन दत्तोऽयं तस्यैव रथः शरीरं नाम । **अध्यवसायगामी** उद्यमशील उत्साही स्यादित्यर्थः। **शरीरं च रथमेव** रथमिव विद्धि । 'एवौपम्ये' इत्यभिधानम् । अयोगव्यवच्छेदश्चायम् । अध्यात्मप्रयाणे साधनशरीरमेव रथो नान्य इति च । एवं **'प्रग्रहमेव च'** इत्येतदपि व्याख्यातव्यम्। चकारस्तु 'रथं विद्धि, प्रग्रहं विद्धि' इति क्रियायोगं समुच्चयं चाऽह । दुर्लभश्चेदृशो रथः प्रग्रहश्चेति च । 'प्रकृतेन क्रियायोगं चशब्दः क्वचिदीरयेत् । क्वचित् समुच्चयं ब्रूयात् क्वचिद् दौर्लभ्यवाचकः' इति च । प्रग्रहोऽभीषुः । अश्वसंयमनरज्जुः । अत्र शरीरमनआदिपदैः शरीरादीनि तदभिमानिनश्च विवक्ष्यन्ते। अयं मन्त्रार्थः– **आत्मानं** परमात्मानं रथस्वामिनं **विद्धि** । तदनन्तर**मात्मानं** जीवकलामानिनं ब्रह्माणं वायुं च **रथिनं विद्धि** । स्वात्मानं च प्रयाणाय भगवता प्रहितं स्वकीयं रथमारूढं **विद्धि** । **शरीरं च**

रथमिव **विद्धि**। अध्यात्मप्रयाणे **शरीरमेव च रथं विद्धि**। शरीरमानिनं मनुं च रथमिव भगवत्प्रापकं **विद्धि**। व्यवसासायत्मिकां **बुद्धिं** तन्मानिनीं सरस्वतीं भारतीं च सारथिमिव **विद्धि**। सङ्कल्पविकल्पात्मकं मनः तन्मानिनो रुद्रशेषवीन्द्रांश्च प्रग्रहमिव **विद्धि**॥ ३ ॥

**आत्मेन्द्रियमनोयुक्तमित्येकं** पदम्। तदेतदाह– **स्वरूपभूतैरिन्द्रियैः** स्वरूपभूतेन **मनसा च ध्यानयोगे संस्थितम्**। श्रोत्रादीनि **इन्द्रियाणि** तन्मानिनः सोमादींश्च देवान् **हयानाहुः**। **तेषु** तेषां हयानां कृते, **गोचरान्** सञ्चरणस्थानानि शब्दादीन् **विषयान्** तन्मानिनीः उमासुपर्णीवारुणीराहुः। इन्द्रियाभिमानिदेवानां विषयमानिदेवता गुरुत्वेनोपजीव्यतया तेषु गां चारयन्ति भगवत्प्रज्ञां गमयन्तीति ता गोचरा उच्यन्ते। स्वरूपभूतेन्द्रियमनोयुक्तं भौतिकदेहाद् विमुक्तं मुक्तं **नित्यसुख'भोक्तेत्याहुः'** ये **'मनीषिणः'**॥ ४ ॥

**स्वावश्येन** स्ववशत्वेन भाव्यम्। **अविज्ञानवान्** बुद्धिहीनः, विवेकविधुर इत्येतत्। **विज्ञानवान्** विवेकी सरस्वतीभारत्योः कृपापात्रम्॥ ५–६ ॥

**'तत्' विष्णुपदम्**। 'तद् विष्णोः परमं पदम्' इत्युत्तरवचनादेव। **तत्** श्रुत्यादिषु प्रसिद्धम्, ज्ञानिनामनुभवसिद्धम्॥ ७ ॥

मूले **समनस्कः** इत्युपलक्षणम्। स्वाधीनमनआदीन्द्रियः। मनसि स्वाधीने सर्वाणीन्द्रियाणि स्वाधीनानि भवन्तीति प्राधान्यात् समनस्क इत्युक्तम्। मनसः साहित्यं नाम स्वावश्यमेव। अस्ववशमना ह्यमनस्क उच्यते। स्फुटं चैतत् पूर्वमन्त्रयोः– 'अयुक्तेन मनसा' इति, 'युक्तेन मनसा' इति च। भक्त्या वशीकृतरुद्रादितत्वमानिदेवत इति चार्थः। **'यस्मात्' यत्प्राप्तिनिमित्तात्**। यत् प्राप्येति वा॥ ८ ॥

**विज्ञानसारथिर्यस्तु**। ननु पूर्वं 'बुद्धिं तु सारथिं विद्धि' इत्युक्तम्। शब्दत एवायं भेदो नार्थत इत्याह– **'विज्ञानसारथिः' बुद्धिसारथिः**॥ ९ ॥

इन्द्रियेभ्यः परा ह्यर्त्था अर्त्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥ १० ॥

महतः परमव्यक्तमव्यक्तात् पुरुषः परः ।
पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः ॥ ११ ॥

(भा.) 'देवेभ्य इन्द्रियात्मभ्यो ज्यायांसोऽर्त्थाभिमानिनः ।
'सोमवित्तपसूर्याप्पा[१]श्व्यग्नीन्द्रेन्द्रसूनवः ॥

'यमो दक्षश्चेन्द्रियेशाः सुपर्ण्णी वारुणी तथा ।
'उमेति चार्त्थमानिन्यस्तिस्रो द्विर्व्येकदेवताः ॥

'मनोभिमानिनो रुद्रवीन्द्रशेषास्त्रयोऽपि तु ।
'ते श्रेष्ठा अर्त्थमानिभ्यस्तेभ्यो बुद्धिः सरस्वती ॥

'तस्या ब्रह्मा महानात्मा ततोऽव्यक्ताभिधा रमा ।
'तस्यास्तु पुरुषो विष्णुः पूर्ण्णत्वान्नैव तत्समः ।
'कश्चित् कुतश्चिच्छ्रेष्ठस्तु नास्तीति किमु सा कथा ॥ * ॥

**(टी.)** अथ तत्परिवारभूतानामिन्द्रियदेवतानां ध्यानमपि तत्तारतम्यानुसारेण कार्यमित्यभिप्रायेणाऽह–**इन्द्रियेभ्य** इति। एतद्वाक्याभिप्रायं **'देवेभ्यः–'** इत्यादिना पुराणवाक्येन व्यक्तं व्याख्याति । सोमाद्याः श्रोत्राद्यभिमानिनः । इन्द्रसूनुर्यज्ञनामा जयन्त इति चोच्यते। अत्र श्रोत्रादीनां शब्दादयो वागादीनामभिजल्पादयश्चेति इन्द्रियविषया अपि दशैव भवन्ति। तेषामर्थानां **सुपर्णी वारुण्युमा चेति तिस्रोऽभिमानिन्य** उच्यन्ते। एवं चेदियतामियमिति विभागः कथमित्याकाङ्क्षायामाह– **तिस्रो द्विर्व्येकदेवता** इति। द्वयोरर्थयुग्मयोः एकार्थस्य चेति पञ्चार्थानां द्विर्भावेन दशार्थानां तिस्रो देवताः। इदमुक्तं भवति– शब्द-

१. प्राचीनादर्शे प्रथमम्, **'सोमवित्तपसूर्याप्पा अश्व्यग्नीन्देन्द्र–'** इत्येव विलिख्य पश्चात्– **'–सूर्याप्पाश्व्यग्नीन्द्रेन्द्र–'** इति परिष्कृतम्। तेन चैकाक्षरन्यूनः पादः।

स्पर्शयोः सुपर्णी। रूपरसयोर्वारुणी। गन्धस्योमेति ज्ञानेन्द्रियविषयाणाम्। अथ कर्मेन्द्रियविषयाणामप्येवमेव। तथाहि– अभिजल्पशिल्पयोः सुपर्णी। गतिविसर्गयोर्वारुणी। भोगस्योमेति। **मनोऽभिमानिनो** वीन्द्रादयस्तद्भर्तारस्ततः **श्रेष्ठाः**। **तेभ्यो** बुद्धिमानिन्यौ **सरस्वती** भारती च। ताभ्यां महदात्मानौ ब्रह्मवायू। ताभ्यामव्यक्तदेवता **रमा** श्रेष्ठा। **तस्याः पूर्णत्वात्** पुरुषाख्यो **विष्णुः**। तस्मादुत्तमः कश्चिन्नास्ति। यद्यपि पुरुषशब्देन पूर्णत्वं सकृदुक्तम्। तथाऽपि **काष्ठाशब्देन** पुनस्तद्वचनमन्ययोगव्यवच्छेदाय। अतः स एव पूर्णो नान्यस्तत्सम इत्यर्थः। एवं समाधिकराहित्याद् विष्णुरेव जीवानामुत्तम**गतिः**॥ १०–११॥

**(भा.चं.)** इन्द्रियाणि नियन्तुमाप्नुवन्ति, आददते वेतीन्द्रियात्मान इन्द्रियाभिमानिनः। अत एव देवाः। देवयन्ति प्रकाशयन्ति विषयानिति। सोमः श्रोत्रमानी। वित्तपस्त्वचः। सूर्यश्चक्षुषः। अप्प इत्यपाम्पतिर्वरुणो जिह्वायाः। अश्विनौ घ्राणस्य। अग्निर्वाचः। इन्द्रः पाण्योः। यज्ञनामा जयन्तः पादयोः। अत्र पादमानी यज्ञभ्राता शम्भुरपि गृह्येत। यमः पायोः। दक्ष उपस्थस्य॥

भार्याणां क्रमानुगुणं भर्तॄनपि निर्दिशति– **वीन्द्रादय** इति। पदतः किञ्चिदून इति पुराणवचने रुद्रः प्रथमं निर्दिष्टः– **रुद्रवीन्द्रशेषा** इति। नन्वभ्यर्हितं पूर्वं निर्देष्टव्यम्। द्विपदसमास एवायम्। यथा हरिहरौ। न बहुपदसमासे नियतमेतत्। यथा ब्रह्मेन्द्ररुद्रादयः॥

**अर्थमानिभ्यः** अर्थमानिनीभ्यः। पुंवच्छक्तिमत्य इति पुँल्लिङ्गनिर्देशः। प्राणापानादयो रुद्रपुत्रा अप्यर्थमानिनः सन्तीति तेऽप्युपसङ्गृहीता भवन्ति। तारतम्येऽनुपयोगादत्रार्थमानित्वेन मुखतोऽनुक्तिः। **'त्रयोऽपि तु'** इति तुना पतित्वरूपं विशेषमाह। अत एव **'ते श्रेष्ठाः'**॥

**सरस्वती** तत्समकक्ष्या **भारती** च। एवं ब्रह्मपदेन वायुरपि च गदितप्रायः। वक्ष्यति च मुखतः– 'ब्रह्मवाय्वोस्तु महदात्मनोः' इति। महदात्मानौ महत्तत्व-

मानिनौ चित्तमानिनौ जीवकलामानिनौ च। अत एव **'ब्रह्मा महानात्मा'** इत्याह। यदेव महत्तत्वं ब्रह्माण्डे तदेव चित्तं पिण्डाण्डे। **'तस्यास्तु'** इति तुना इदं श्रैष्ठ्यं न पूर्वेषामिवावरत्वसहचरितम्, किन्तु निरवधिकमित्याह। तथाच गीतायाम्– 'इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः। मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः' [३.४२] इति। **पूर्णत्वात् पुरुषः। पूर्णत्वादेव न कश्चित् तत्समः। कुतश्चित्** कारणान्तरादपि **सम एव नास्ति**। उत्तमो **नास्तीति तु किमु** वक्तव्यम्? यथाश्रुतमभिमन्यमानपरतयाऽप्यनुसन्धेयं भवति। शरीरादिन्द्रियाणि पराणि। रथादिवाश्वाः। रथो ह्यश्वैर्नियम्यते। नत्वश्वा रथेन। एवमिन्द्रियैः शरीरम्। न शरीरेणेन्द्रियाणि। **इन्द्रियेभ्यः परा अर्थाः**। अश्वेभ्य इव गन्तव्यो देशः। गन्तव्यं हि गन्तुमश्वा उपयुज्यन्ते। न ह्यश्वार्थं गन्तव्यम्। **अर्थेभ्यः परं मनः**। गन्तव्यात् प्रग्रह इव। अस्ति रथः। सन्त्यश्वाः। नास्ति प्रग्रहः। तर्हि गन्तव्यो न गम्यते। अश्वानां गन्तव्यं प्रति गमनं प्रग्रहाधीनमित्येतत्। एवमिन्द्रियाणां विषयगतिर्मनोऽधीना। **मनसः परा बुद्धिः**। प्रग्रहादिव सारथिः। सारथिनियम्यो हि प्रग्रहः। बुद्धिनियम्यं च मनः। **बुद्धेरात्मा परः**। सारथेरिव रथी। रथिनियम्यः सारथिः। आत्मनियम्या बुद्धिः। रथी चेन्न रथमारोहति न रथेन कृत्यम्। नाश्वैः। न प्रग्रहेण। न सारथिना। नापि गन्तव्येन। गन्तुरेवाभावात्। तस्य द्वे उपकारके अव्यक्तपुरुषशब्दिते अदृष्टं दैवं चेति। सा च रमा; स च **परः पुरुषो** विष्णुः। 'तद् विष्णोः परमं पदम्' इत्युपक्रमात्। 'अव्यक्तशब्देन प्रधानं परिपठ्यते। तस्य महतः परत्वात् पुरुषादवरत्वाच्च' इति तत्वप्रदीपे [१.४.१]। 'परमात्मन एवाव्यक्तशब्दो मुख्यः। तत्तन्त्रत्वेन तदावरकत्वेन चेतरस्याव्यक्तशब्दः' इति' च। 'अव्यक्तस्थं तद्रूपमव्यक्तस्याप्यव्यक्तत्वं महतः परत्वं चाऽपादयतीति 'महतः परमव्यक्तम्' इत्युच्यते' इति च॥ १०–११॥

**एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते।**
**दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः॥ १२॥**

**(टी.) एष आत्मा** प्रकृत्या **गूढः** । अप्राकृतबुद्ध्या गृह्यते[1] ।। १२ ।।

**(भा.चं.) गूढोत्मा** । यद्यपि तृतीयान्तस्यैवऽत्मशब्दस्याऽद्यक्षरलोपं पाणिनिराह– 'मन्त्रेष्वाङ्यादेरात्मनः' [अष्टा.सू.६.४.१४१] इति । आङिति टा । तृतीयाविभक्ताविर्त्येतत् । 'मन्त्रेषु आङि परत आत्मन आदेर्लोपो भवति । त्मना देवेभ्यः' इति वामनः । आङीति न वक्तव्यम् । तद्यथा 'मन्यतेत्मनः' इति षष्ठ्याम् । क्वचित् 'त्मनि' इति सप्तम्यामपि । अत एव 'मन्त्रेष्विति बहुवचनेन बहुविषयोऽयं विधिरिति सूचनादन्यत्रापि लोप इष्यते' इति वैयाकरणा अभ्युपयन्ति । अत एव 'आङोऽन्यत्रापि दृश्यते' इति वार्त्तिककारः । एतदप्यपर्याप्तम् । क्वचिद् आद्यः स्वरः ह्रस्वतामापद्यत इत्यभ्युपेयम् । तद्यथाऽत्र– गूढः+आत्मा=गूढोऽत्मा । 'गूढः । आत्मा' इत्येव प्रतृण्णम् । निर्वचनान्तरं चैतेन स्फोरितं भवति– आप्नोतीति आदत्त इति चाऽत्मा । अत्तीति अततीति च आत्मेति द्योतयितुं संहितायाम्– 'अत्मा' इति पठन्ति । एवम्– 'सोऽत्मानं विविधात्मना' इत्यादि च । नचात्रापि आदेराकारस्य लोप एवेति मन्तव्यम् । तर्हि 'स त्मानम्' इत्यादि रूपं स्यात् । नतु 'सोऽत्मानम्' इत्यादि । **गूढः आत्मा** परमात्मा सर्वेषु जीवजातेषु स्थितोऽपि तत्र **न प्रकाशते** स्थूलदृश्वनाम् । अङ्ग्यत इत्यग्रम् । अगि गतौ । अगतीत्यग्रमित्यन्ये । अग कुटिलायां गतौ । 'ऋज्र-इन्द्र-अग्र-वज्र-विप्र-कुब्र-चुब्र-क्षुर-खुर-भद्र-उग्र-भेर-भेल-शुक्र-शुक्ल-तीव्र-वर्ण-इरा-मालाः' [८.४६] इत्येते शब्दा निरूढा निपात्यन्त इति दशपादिका । अग्रे सर्वस्मादुपरि भवतीत्यग्र्यम् । 'अग्राद् यत्' [अष्टा.सू. ४.४.११६] इति भवार्थे यत् । 'अग्रं पुरस्तादुपरि परिमाणे पलस्य च । अधिके च प्रधाने च प्रान्ते च स्यान्नपुंसकम्' इति मेदिनी । ज्ञानस्वरूपत्वेन अग्र्यया सूक्ष्मग्रहणशक्तिमत्या स्वरूप**बुद्ध्या** गूढोऽप्यात्मा **'दृश्यते' गृह्यत** इति । **कैः? सूक्ष्मदर्शिभिः** स्वरूपदर्शिभिः । उक्तं हि– 'तुरीयं दृश्यते क्वापि

---

१. एतेन **'गृह्यते त्वग्र्यया बुद्ध्या'** इत्यपि श्रुतिपाठः स्यात् ।

प्राप्तानां षोडशीं कलाम्' इति। 'षोडशी कला जीवस्वरूपम्' इति च ॥ १२ ॥

**यच्छेद् वाङ्मनसी प्राज्ञस्तद् यच्छेद् ज्ञान आत्मनि ।**
**ज्ञानमात्मनि महति[१] तद् यच्छेच्छान्त आत्मनि ॥ १३ ॥**

**(भा.)** 'तस्माद् वागात्मिका देवीरुमाद्यास्तु शिवादिषु ।
'शिवादीन् ब्रह्मवाय्वोस्तु नियच्छेन्महदात्मनोः ॥

'तौ रमायां परानन्दे सा विष्णौ परमात्मनि ।
'तद्वशत्वेन तद्ध्यानं नियमो नाम नापरः ।
'कुतस्तु मानुषो देवान् नियच्छेद् विनियामकान्' ॥ * ॥

**(टी.)** 'यच्छेत्–' इत्युपदेशोपसंहारवाक्यं **'तस्मात्–'** इत्यादिना व्याख्याति। यद्यपि वागिन्द्रियदेवताऽग्निरिति पुरस्तादुक्तम्। तथाऽप्यत्र वागात्मकत्वमुमादीनाम्। अविरुद्धं चेदम्। शब्दविवक्षया तदुक्तेः। एताः **शिवादिषु यच्छेत्**। एतान् द्युदेवताद्वारेण **ब्रह्मवाय्वोर्यच्छेत्**। तावव्यक्तदेवताद्वारेण **शान्ते** सुखपूर्णे **परमात्मनि यच्छेत्**। नियम्यमानुषस्य नियन्तृदेवनियमनं कथमित्यत आह– **तद्वशत्वेनेति**। विष्णुपरिवारतया वर्तमानानामुमादीनां शिवादिवशत्वेन ध्यानमेव हि तैर्नियम्यत्वमिति भावः ॥ १३ ॥

**(भा.चं.)** **वाङ्मनसी** नियम्यनियामकतया **यच्छेत्** ध्यायेत्। वाङ्मानिन्यो नियम्या इति मनोमानिनस्तासां नियामका इति यच्छेत्। वाग् भार्या। मनो हि भर्ता। तथा च वाग् भार्या मनो भर्तेति वाङ्मनसी **यच्छेत्** ध्यायेत्। वाङ् नियम्या मनो नियामकमिति नियम्यनियामकभावेन ते यच्छेत्। अथ चेन्द्रादीन् वाचि यच्छेत्। वाचं च मनसि। एवं वाङ्मनसी उभे अपि नियाम-

---

१. **'महति नियच्छेच्छान्त आत्मनि'** इति क्वचित्। **'महति नियच्छेत् तद् यच्छेच्छान्त आत्मनि'** इति शङ्कररङ्गरामानुजौ ।

कत्वेन चिन्तयेदिति। अथ च **वाक्** वाचं **मनसी** मनसि **नियच्छेत्**। 'सप्तसु प्रथमा', 'आधिक्येऽधिकम्' इति सूत्रे। 'यच्छेद् वाङ्मनसी इति वाचं मनसि यच्छेदित्यर्थः। वाचोऽधिकरणान्तरादृष्टेः। तद्यच्छेज्ज्ञान आत्मनीति मनसस्तद्दृष्टेः। 'वाङ्मनसि सम्पद्यते' इत्यादेश्च' [२.३.१५] इति तत्वप्रदीपे। 'उमा वै वाक् समुद्दिष्टा मनो रुद्र उदाहृतः। तदेतन्मिथुनं ज्ञात्वा न दाम्पत्याद् विहीयते' इति च स्कान्दवचनं भाष्ये॥

ननु वागात्मकोऽग्निरुक्तः– '–अग्नीन्द्रेन्द्रसूनवः' इति। उमाद्याश्चार्थमानिन्य उक्ताः– 'सुपर्णी वारुणी तथा उमेति चार्थमानिन्यः' इति। तत् किमिदमपूर्वमुच्यते– **'वागात्मिका देवीरुमाद्याः'** इति? आह– **अत्र वागात्मकत्वमुमादीनाम्**। सत्यमुक्तं पूर्वमग्नेर्वागात्मकत्वम्। अत्र पुनरस्यामुपासनायामुमादीनां तद् विवक्षितम्। उत्तमदेवानामधमतत्वमानिताया अविरोधात्। तथाहि स्मरन्ति–' सर्वाभिमानिनो देवाः सर्वेऽपि ह्युत्तरोत्तरम्। आधिक्यं वक्तुमेवैषां पृथक् स्थानमुदीर्यते। आधिक्यक्रम एवात्र शास्त्रतात्पर्यमिष्यते' इति॥

आह च तत्वप्रदीपाचार्यः– 'वाङ्मनसि लीयते। वाचो मनोवशत्वदर्शनात्। मनसा सङ्कल्पितं हि वाचा व्याहरति। ननु कथमेतदुपपद्यते? '–वह्नीन्द्रोपेन्द्रमित्रकाः' इति हि श्रीमद्भागवते वागाद्यभिमानिन्योऽग्न्यादय उक्ताः। 'अग्निर्वाग् भूत्वा मुखं प्राविशत्' इति च श्रूयते। 'चन्द्रमा मनो भूत्वा' इति च। क्वचिच्च स्कन्देन्द्रयोर्मनोमानित्वमुक्तम्। क्वचित् स्वाहापर्जन्ययोर्वाङ्मनसाभिमानित्वमिति। उच्यते। नायं दोषः। एकत्र बहूनामभिमानाविरोधात्। अतोऽग्न्यादिभिरवरैरभिमन्यमानेष्वपि तेषूत्तमानामविरोधः। महदभिमानिनस्तदल्पाभिमानिनश्च भवन्ति। यथा विषयस्वामी ग्रामस्य' [४.२.१] इति। 'महामानी त्वल्पमानी च यस्मात् तच्छब्देनाप्युच्यते तेन सोऽपि' [४.२.१२०] इति चानुव्याख्याने। अपि च विवक्षाभेदेनार्थभेदा भवन्ति। तेन चाविरुद्धमिदम्।

का विवक्षा? आह– **शब्दविवक्षया तदुक्तेः**। यत्राग्निर्देवतोच्यते तत्र वागिति वागिन्द्रियं विवक्षितम्। यत्रोमाद्यास्तत्र वागिति शब्दोच्चारणम्। येनोच्यते तदपीन्द्रियं वाक्। उच्यत उच्चार्यत इति वाणी च वाक्। ननु तथाऽपि न विरोधनिस्तारः। सुपर्णी किल शब्दमानिनी पूर्वमुक्ता– 'शब्दस्पर्शयोः सुपर्णी' इति? अनधिगतभावो भवान्। तत्र शब्दं श्रावयन्ती श्रवणदेवतोक्ता। अत्र शब्दं व्याहरन्ती वाग्देवतोच्यते। लोकसिद्धं चैतत्। मनसा हि चिन्तितं वाचा व्याहरति। तेन युक्तं मनसः पतयो मानिनः, वाचश्च पत्न्यो मानिन्य इति। युक्ततमं च एता वाङ्मानिन्यः **शिवादिषु** मनोमानिषु **यच्छेदिति**। **शिवादीन्** सरस्वतीभारतीद्वारेण **ब्रह्मवाय्वोर्यच्छेदिति**। सरस्वतीभारत्यौ हि द्युदेवते। द्यौरिति बुद्धिश्च। बुद्धिमान् हि द्योतते। सर्वेषामपि तत्वदेवानामन्ततो विष्णुनियम्यत्वं समानमित्याह– **विष्णुपरिवारतया वर्तमानानामिति**। तारतम्यपरिज्ञप्त्या अवान्तरनियम्यत्वं च ध्येयम्। मूले **ज्ञान आत्मनीति**। ज्ञानमिति विज्ञानम्, बुद्धिः। बुद्धिमानिन्यां सरस्वत्यां भारत्यां चेत्यर्थः। **'शान्त आत्मनि'** इति **परानन्दे विष्णौ**। शान्तः आनन्दतारतम्यस्यावधिभूतः। भाष्ये **'–विनियामकान्'** इत्यतः परं प्रमाणवचनसमाप्तिसूचक इतिशब्दोऽध्याहार्यः। लुप्तं प्रायो लिपिकारैनवधानात्॥ १३॥

**उत्तिष्ठत जाग्रत प्राप्य वरान् निबोधत।**
**क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तत् कवयो वदन्ति॥**
**॥ १४॥**

**(टी.)** एवं तावन्नचिकेतसे प्रतिज्ञातं तत्वोपदेशमुपसंहृत्यान्यानपि सभ्यानुद्दिश्येदमाह– **उत्तिष्ठतेति**। अहो महाजनाः, संसारशयनात् **उत्तिष्ठत**। अविद्यानिद्राया **जाग्रत**। यूयमपि मत्तोऽभीष्ट**वरान् प्राप्य** तत्वं **निबोधत**। **क्षुरस्य धारा निशिता** पदविन्यासे **दुरत्यया**। अतः एतेन [पथा] यथा तद् गम्यं सुदुर्गममेवमेव **तद्** ब्रह्माख्यतत्वं सर्वप्रकारमार्गेणापि **सुदुर्गं वदन्ति**।

तथाहि प्रमातृशक्त्या प्रमेयशक्त्या चाज्ञेयं गन्तृशक्त्या च दुष्प्रापम्। किन्तु तत्प्रसादादेव हि तत् सुज्ञेयं सुप्रापं चेत्यर्थः ॥ १४ ॥

**(भा.चं.)** नन्वेक एव नचिकेताः श्रोता। तत् कथ**मुत्तिष्ठते**त्यादिबहुवचनम्? आह– **अन्यानपि सभ्यानुद्दिश्य**। यमसभायां येऽन्येऽपि सात्त्विकजीवा आसन् तेऽपि तत्वबुभुत्सया तत्रोपासीना अभवन्निति भावः। स्फुटमेतत् पूर्वोदाहृते भारतवचने–'–वृतं सदस्यैरभिपूज्य–' इति। जाग्रत जागृत। अकारप्रश्लेषेण जागरणमवधारयति। जागरण एव रता भवेतेति निद्रारतानुद्बोधयन् करुणयाऽऽह। **मत्तोऽभीष्टवरान् प्राप्य**। अन्यानपि श्रेष्ठान् ज्ञानिनः **प्राप्य**। **पथः दुर्गं** केनापि पथा दुर्गमम्। तृतीयार्थे पञ्चमी। पथः क्षुरधारामयत्वात्। दुर्गं पथः दुर्गमं पन्थानमिति वा। द्वितीयार्थे पञ्चमी षष्ठी वा। अत्र प्रथमपादः सप्ताक्षर इति पूर्वार्धे एकाक्षरोनाऽनुष्टुप्। उत्तरार्धे तृतीयो जागतः पादः। तुरीयस्त्रैष्टुभः। संहत्य द्व्यक्षराधिका बृहती ॥ १४ ॥

**अशब्दमस्पर्शमरूपमव्ययं**
**तथाऽरसं नित्यमगन्धवच्च यत्।**
**अनाद्यनन्तं महतः परं ध्रुवं**
**निचाय्य तं मृत्युमुखात् प्रमुच्यते ॥ १५ ॥**

**(भा.) स्वभार्यायाः परत्वं सिद्धमिति महतः परमित्येवोक्तम्** ॥ * ॥

**(टी.)** अप्राकृतरूपत्वादेव प्राकृतेन्द्रियैरगम्यं तद् भवति। तथाऽपि भक्तिपूर्वकसेवया प्रसन्नः प्रकाशते। तज्ज्ञानेन जीवस्य न किञ्चित् प्रयोजनमित्याशङ्क्याऽह– **अनाद्यनन्तमिति**। अत्र परमपुरुषस्य विष्णोरव्यक्ताभिधाया रमायाः **परत्वं** स्वतः **सिद्धमिति** महतः परमित्येतावदेवोक्तम्। नतु मुख्यतस्तदभावात् ॥ १५ ॥

**(भा.चं.)** **'निचाय्य तम्'** इत्येव श्रुतिपाठः। तथाहि गीताभाष्ये– 'तमिति पुँल्लिङ्गाच्चैतत्सिद्धिः। तथाचाऽग्निवेश्यशाखायाम्– अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यत इति। परो हि देवः पुरुहूतो महत्त इति' [१२.५] इति । **अगम्यं तद् ब्रह्मणोऽप्राकृतं रूपं भवति। तथाऽपि प्रसन्नः** 'गूढोत्मा' **प्रकाशते**। कुतोऽगम्यम्? अप्राकृतत्वादित्याह– **'अशब्दमस्पर्शम्'**। प्राकृतशब्दरहितत्वात् प्राकृतेन श्रोत्रेन्द्रियेणागम्यम्। प्राकृतस्पर्शरहितत्वात् प्राकृतेन त्वगिन्द्रियेणागम्यमित्यादि। तदेतदाह– **अप्राकृतरूपत्वादेव प्राकृतेन्द्रियैरगम्यम्**। तदपि न कदाचित्। **नित्यं 'अशब्दमस्पर्शमरूपम्'**। अत एव **'अव्ययम्'**। रूपवदेव हि व्येति विकारमेति। यत् ईदृग्गुणकमप्राकृतं तं अप्राकृतत्वादेव **'अनाद्यनन्तम्'**। **'ध्रुवं'** शाश्वतम्। **'ध्रुवं निचाय्य'** वा। **'ध्रुवं प्रमुच्यते'** वा । **'महतः परं'** चतुर्मुखजनकम्, अव्यक्ताच्च परं पुरुषं **'निचाय्य'** उपास्य दृष्ट्वा। 'चायृ पूजानिशामनयोः'। जागतोऽयं मन्त्रः ॥ १५ ॥

**नाचिकेतमुपाख्यानं मृत्युप्रोक्तꣳ सनातनम्।**
**उक्त्वा श्रुत्वा च मेधावी ब्रह्मलोके महीयते ॥ १६ ॥**

**य इमं[1] परमं गुह्यं श्रावयेद् ब्रह्मसꣳसदि।**
**प्रयतः श्राद्धकाले वा तदानन्त्याय कल्पते**
**तदानन्त्याय कल्पत इति ॥ १७ ॥**

**इति प्रथमाध्याये तृतीया वल्ली**
**इति श्रीकाठकोपनिषदि**
**प्रथमोऽध्यायः समाप्तः**

—०—

१. 'य इदम्' इति रङ्गरामानुजमुनिः।

**(टी.)** अस्य श्रवणादिकमप्यभीष्टफलप्रदमित्याह– **नाचिकेतमिति** । नाचिकेताग्निस्थभगवद्विषयं नचिकेतसा सुकृतं च । तत्वज्ञानी विरिञ्चलोके । तत्वदर्शी चेद् विष्णुलोके ।। १६ ।।

यः पुनरिमं भगवन्तं ब्राह्मणे उपदिशति तस्य पूर्वोक्तादप्यनन्तगुणं फलम् । अतो यथाशक्ति प्रयत्नेन प्रवचनध्यानाद्युपासनं कार्यमित्यभिप्रायः ।। १७ ।।

**(भा.चं.)** नाचिकेतस्याग्नेरिदं **'नाचिकेतमुपाख्यानम्'** । **'ब्रह्मसंसदि श्रावयेत्'** इत्यस्य भावमाह– **ब्राह्मणे** वेदज्ञसमुदाये **उपदिशति** । **'प्रयतः'** निगृहीतमनाः । ध्यानाद्युपलक्षणमेतत् । **'श्राद्धकाले वा'** स्वकुलोत्तारणाय **'ब्रह्मसंसदि श्रावयेत्'** तदपि महाफलमिति । ननु नाचिकेतमुपाख्यानं द्वितीयाध्यायेऽप्यनुवर्तते । तत् कथमत्र फलवादेनोपसंह्रियते? ननु भोः क एव त एवमाह यदुपसंहार एव फलकथनमिति । अथच तारतम्यान्तगतं भगवन्तं निरूप्य, एतावदेव मुमुक्षुणा जिज्ञास्यमिति ग्राहयितुमत्राप्युपसञ्जहारेति किं ते च्छिन्नम्? द्वितीयाध्यायान्तेऽप्येतौ मन्त्रावनुवर्त्य पठनीयाविति सूचयन्नत्र पपाठ । सत्वरमुवाच च ब्रह्मविद्याया महत् फलमौत्सुक्यात् । नाचिकेतमित्यादि मन्त्रद्वयमानुष्टुभम् । इतीति पृथक्पदमध्यायसमाप्तिद्योतकम्, द्विर्वचनं च ।। १६–१७ ।।

—०—

## [अथ द्वितीयोऽध्यायः]

पराञ्चि खानि व्यतृणत्[1] स्वयम्भू-
स्तस्मात् पराङ् पश्यति[2] नान्तरात्मन् ।
कश्चिद् धीरः प्रत्यगात्मानमैक्ष-
दावृत्तचक्षुरमृतत्वमिच्छन् ॥ १ ॥

**(भा.)** 'तृणु कात्करणे' इति धातुः ॥ * ॥

**(टी.)** अथैवम्भूतस्य तत्वज्ञानस्य दौर्लभ्यं सहेतुकमुपपादयति–**'पराञ्चि–'** इत्यादिना । **स्वयम्भूः पराञ्चि खानि व्यतृणत्** । **पराञ्चि** स्वरूपतो बहिष्ठानि बाह्यवृत्तीनि वा । **खानि** इन्द्रियाणि **व्यतृणत्** व्यनिन्दत् । तृणुधातोः तदर्थ-त्वोक्तेः । **तस्मात्** प्राकृतपदार्थानेव पुरुषस्तैरिन्द्रियैः **पश्यति** नतु परमात्मा-नम् । तदग्राहकत्वात् तेषाम् । बाह्यार्थेभ्य **आवृत्तचक्षुर्भूत्वा** तदन्तर्यामिणं **कश्चिदेव** पश्यति । सुदुर्लभस्तदद्रष्टेत्यर्थः ॥ १ ॥

**(भा.चं.)** स्वयमेव भवतीति **स्वयम्भूर्नारायणः** । पराक् बहिः अञ्चन्ति सञ्चरन्तीति **पराञ्चि** । तदाह– **स्वरूपतो बहिष्ठानि** । पराक्ष्वेव विषयेष्व-ञ्चन्तीति च **पराञ्चि** । 'अञ्चु गतौ' । तदेतदाह– **बाह्यवृत्तीनि वा** । परा अञ्चन्तीत्यन्ये । परान् अञ्चन्तीत्यपरे । **'खानि' इन्द्रियाणि** । खनन्ति, अव-दार्यावदार्य, विविच्य विषयानावेदयन्तीति खानि । 'खनु अवदारणे' । 'खमिन्द्रिये पुरे क्षेत्रे' इत्यभिधानम् । **व्यनिन्दत्** निन्दितान्यकरोत् । कात्करणं निन्दा । सम्प्रत्ययं धातुपारायणे न पठ्यते । 'तृणु अदने' इति तु तनादौ पठ्यते ।

---

१. 'व्यतृणात्' इति लिपिकृत्प्रमादागतः पाठः ।

२. 'पराङ् पश्यन्ति' इति रङ्गरामानुजीयः पाठः । 'पराक् पश्यति' इति च पाठान्तरम् ।

तस्य गुणाभावपक्षे तृणोतीत्यादि रूपम्। गुणपक्षे तर्णोतीत्यादि। अथ च रुधादिगणे पठितस्य 'उतृदिर् हिंसानादरयोः' इति धातोर्लङि अतृणदिति रूपं भवतीति तमेव धातुमत्र विवक्षन्ति बहवः। अर्थोऽपि सङ्गच्छते। अनादरेऽपि पाठात्। प्रायः प्राचीना धातुपारायणिकाः भ्वादिगणेऽपि 'तृणु कात्करणे' इति पेठुरिति भाति। रुधादित्वे तृणत्तीत्यादि लटि रूपम्। भ्यादित्वे तु तृणतीत्येव। उभयथा पाठेऽपि लङि 'अतृणत्' इति रूपं निराबाधम्। तेन रुधादित्वेऽपि न नो हानिः। किन्त्वपूर्वस्य विद्वद्भिरपि विस्मृतस्य धातुपाठस्य परिचिचाययिषयैव भगवत्पादः **'तृणु कात्करणे'** इति पुरातनं धातुपाठं पपाठ। **'अन्तरात्मन्'** अन्तरात्मानं **परमात्मानं न पश्यति**। **'कश्चित्' सुदुर्लभो 'धीरः'**। **'प्रत्यगात्मानं'** अन्तर्यामिणं **ऐक्षत्** ईक्षते। ईक्षतिकर्मणि चक्षुषः साक्षात् करणत्वात् तन्मुखत उक्तम्–**'आवृत्तचक्षुः'** इति। उपलक्षणमेतत्। व्यावृत्तचक्षुरादिसकलेन्द्रियः। आवृत्तमित्यन्तर्मुखतया परावृत्तं वा। **अमृतत्वमिच्छन्** मोक्षमिच्छन् प्रायेण। एकान्तभक्तस्तु अमृततत्वं नारायणाख्यमेवेच्छन् तमेव प्रत्यगात्मानमीक्षते। पराञ्चीति केवला त्रिष्टुप्। उत्तरमन्त्रे चतुर्थचरण एकाक्षराधिका त्रिष्टुप्॥ १॥

**पराचः कामाननुयन्ति बाला-**
**स्ते मृत्योर्यन्ति विततस्य पाशम्।**
**अथ धीरा अमृतत्वं विदित्वा**
**ध्रुवमध्रुवेष्विह न प्रार्थयन्ते** ॥ २॥

**(टी.)** बाह्यार्थकामिनो **बाला** मृत्युपाशेन बद्ध्यन्ते। **अथ धीरा** भगवद्दृष्टिफलं **अमृतत्वं** [ध्रुवं] विदित्वा स्वर्गादिषु अ[ध्रुव]फलेषु प्रार्थनं न कुर्वन्ति। तादर्थ्ये सप्तमी। अध्रुवफलार्थं न प्रार्थयन्तीत्यर्थः॥ २॥

**(भा.चं.) पराचः** बहिर्मुखान् काम्यन्त इति **कामान्** आपातकमनीयानर्थान् बालिशा अनुपतन्ति। तेन **विततस्य मृत्योः** विततं **पाशं ते यन्ति**। **अथ धीराः**

भगवद्दृष्टिफलं **अमृतत्वमानन्दाभिव्यक्तिं विदित्वा,** तच्चामृतत्वं **ध्रुवं** शाश्वतं च **विदित्वा**। ध्रुवं निश्चयेन विदित्वा वा। यद्वा ध्रुवमित्युत्तरान्वयि। **अध्रुवफलार्थं** ध्रुवं निश्चयेन **न प्रार्थयन्ते** ॥ २ ॥

**येन रूपꣳ रसं गन्धं शब्दान् स्पर्शाꣳश्च मैथुनान् ।**
**एतेनैव विजानाति किमत्र परिशिष्यत एतद् वै तत् ॥ ३ ॥**

**(भा.) इदं गुह्यं वक्ष्यामि। यथा मरणं प्राप्य जीवो भवति तच्च वक्ष्यामि जीवेश्वरभेदज्ञापनाय। यः कर्म्मफलभोक्ता सुप्त्यादिमान् स जीवः। यः प्रळयादिषु जीवेषु सुप्तेषु जागर्त्ति स विष्णुः परं ब्रह्मेत्यर्थः। नहि जीवस्य योन्यादिगमनं ब्रह्म। जीवाद् भेदेन ज्ञातं हि ब्रह्म यथावज्ज्ञातं भवति ॥ * ॥**

**(टी.)** अहो तर्हि ध्रुवफले प्रार्थनीयमुत्तमत्वं किं तदित्याकाङ्क्षायामाह– **येन रूपमिति**। अत्रायं विशेषः– रूपरसादिज्ञापकत्वम्, स्वप्नादिप्रदर्शकत्वम्, जीवादत्यन्तभिन्नत्वम्, सूर्यादिनियन्तृत्वम्, स्वकीयरूपगुणक्रियादिभिरभिन्नत्वम्, भूतभव्येशानत्वं चेत्याद्यनेकधर्मविशिष्टं विवक्षितफलदमिति प्रथमत उक्त्वा तदपि साक्षात् परमगुह्यं विष्ण्वाख्यं ब्रह्मैवेति धर्मिस्वरूपं पश्चादाह– **हन्त त इदं प्र वक्ष्यामी**त्यादिना। भाष्यकारभट्टारकस्तु एतद् वाक्यं पाश्चात्यमपि प्रथमतो व्याख्याय धर्मविधिवाक्यानि पश्चाद् व्याख्याति, धर्मिग्रहणपुरस्सरं धर्मग्रहणं सुखव्युत्पादनाय स्यादिति। **इदं गुह्य**मित्यादेर्भाष्यस्यार्थः– 'य इमं परमं गुह्यम्' इति पूर्वप्रस्तुतो भगवानेव **'हन्त त इदम्'** इत्यत्र इदं ब्रह्म प्रकर्षेण **वक्ष्यामी**ति प्रतिज्ञायते। **सनातनं** ध्रुवम्। तदेव ध्रुवफलदं च। अयं जीवसञ्ज्ञो **मरणम**मृतत्वं च ततः **प्राप्य** यत्प्रकारेण प्रवृत्तो **भवति** तत्प्रकारं च **वक्ष्यामि**। तदनुक्तौ जीवेश्वरभेदज्ञानासिद्धेः। तदसिद्धौ तज्ज्ञानस्य यथार्थत्वासिद्धेश्च। जीवेशयोः विरुद्धधर्मदर्शनात् स्वरूपभेदो निश्चेतव्य इत्याह– **य** इति। योऽयं पारतन्त्र्येण सुखदुःखभोक्ता सुप्तिमोहादिमांश्च **स जीवः**

ईशाद् भिन्नः । [यः प्रळये प्रत्यहं च **जीवेषु सुप्तेषु जागर्ति स विष्णुः** ।] **स** एव च **परं ब्रह्म** इति श्रुत्यभिप्रायः । नह्यत्यन्तविलक्षणयोरनयोरभेदसम्भवः । नन्वस्ति सालक्षण्यं जीवेशयोः यथाकर्मादिजननमित्यत आह– **नहीति** । **नहि जीवस्य योन्यादिगमनं ब्रह्म**धर्मः । नापि नित्यजागरणं जीवधर्मः । अतो **जीवाद् भेदेन ज्ञातमेव ब्रह्म यथावत् ज्ञातं भवति** । अपरथा तज्ज्ञानस्य जीवज्ञानत्वप्रसङ्गात् । स च भेदः सव्येतरविषाणयोरिव न पृथक्त्वमात्रम् । किन्तु नियम्यनियामकभावलक्षणत्वेन विलक्षणतयेत्याह– **येन रूपं रसं गन्धमित्यादिना** । **येन** रूपरसादिकं जीवो **विशेषेण जानाति** शब्दस्पर्शादिकमपि **एतेनैव विजानाति** । **किमत्र** महति साम्पराये **परिशिष्यत** इति त्वत्प्रश्नस्येदमुत्तरम्– **एतद्** रूपादिज्ञापकं गुह्यं ब्रह्मैव **तत्** परिशिष्यमाणं हि ॥ ३ ॥

**(भा.चं.)** **इदं गुह्यं वक्ष्यामी**त्यादि भाष्यमुत्तरखण्डे[२.२.६–८] पठ्यमानमन्त्रत्रयव्याख्यानरूपम् । कुतोऽयं क्रमव्यत्यासः? आह– **धर्मिग्रहणपुरस्सरं धर्मग्रहणं सुखव्युत्पादनाय स्यादिति** हेतोः धर्मिग्राहकाणि वाक्यानि प्रथमं व्याचख्याविति । नह्यज्ञाते धर्मिणि शक्यं तत्र चिन्तयितुं धर्माः । के ते धर्माः पूर्वमुक्ताः? आह– **रूपरसेत्यादिना** । 'येन रूपं रसं गन्धम्–'[३] इति **रूपरसादिज्ञापकत्वम्** । 'स्वप्रान्तं जागरितान्तं च–'[४] इति **स्वप्नादिप्रदर्शकत्वम्** । 'आत्मानं जीवमन्तिकात्'[५] इति **जीवादत्यन्तभिन्नत्वम्** । 'यतश्चोदेति सूर्यः' [९] इति **सूर्यादिनियन्तृत्वम्** । 'नेह नानाऽस्ति किञ्चन' [११] इति **स्वकीयरूपगुणक्रियादिभिरभिन्नत्वम्** । 'ईशानो भूतभव्यस्य' [१२–१३] इति **भूतभव्येशानत्वम्** ॥ * ॥

तथाचायमर्थक्रमानुसारी पाठक्रमः–

**पराचः कामाननुयन्ति बालास्ते मृत्योर्यन्ति विततस्य पाशम् ।**
**अथ धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयन्ते ॥** [२.१.२]

**हन्त त इदं प्र वक्ष्यामि गुह्यं ब्रह्म सनातनम् ।**
**यथा च मरणं प्राप्याऽत्मा भवति गौतम ॥** [२.२.६]

**योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ।**
**स्थाणुमन्येऽनु सँय्यन्ति यथाकर्म यथाश्रुतम् ॥** [७]

**य एष सुप्तेषु जागर्ति कामङ्कामं पुरुषो निर्ममाणः ।**
**तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते ।**
**तस्मिंल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन ॥** [८]

**येन रूपं रसं गन्धं शब्दान् स्पर्शांश्च मैथुनान् ।**
**एतेनैव विजानाति किमत्र परिशिष्यत एतद्वै तत् ॥** [२.१.३]

यदशब्दमस्पर्शमरूपम्, एतेनैव जीवो रूपादिकं विजानातीत्याह– **'येन रूपम्'** इति । तद् विवृणोति– **अहो तर्हि** । **ध्रुवफले** ध्रुवफलदे भगवति ज्ञेयत्वेन **प्रार्थनीयम्** । जिज्ञास्यं प्रत्यनुसन्धेयं चेत्येतत् । ध्रुवफलार्थं प्रार्थनीयं वा । **यथाकर्मादिजननमिति** । यथाकर्म यथाश्रुतं योनिप्रपत्त्यादिरूपं जननम् । दृश्यते हि देवक्यादिषु तस्य जननं गर्भवासश्च । अन्ते च व्याधबाणेन देहत्यागश्च । योन्यादिगमनं ब्रह्मेति भाष्यार्थं स्फुटयति– **योन्यादिगमनं ब्रह्मधर्मः** । नहि ब्रह्मधर्मा ब्रह्मणो भिद्यन्त इति ब्रह्मेत्येवाऽह भाष्यकारः । वक्ष्यति च– 'एवं धर्मान् पृथक् पश्यन्' इति । योन्यादौ गमनं यस्य तद् ब्रह्मेति वा । आदिना स्थाणुग्रहणम् ॥ * ॥

येन रूपमित्यादि केवलाऽनुष्टुप् । एतद् वै तदिति पृथग् वाक्यम् । **विशेषेण जानाति** । रूपविशेषान् रसविशेषांश्च पृथक्पृथग् जानातीत्यादि । मैथुनस्य विशिष्टस्पर्शत्वात् पृथग् ग्रहणम् । **मैथुनांश्च स्पर्शानिति** । अत एव स्पर्शान् शब्दांश्चेति वक्तव्ये विशेषग्रहणाय क्रमव्यत्यासेन **'शब्दान् स्पर्शांश्च'** इत्याह । शब्दस्यैकत्वेऽपि अर्थभेदेन प्रतिव्यक्ति उच्चारणभेदेन च बहुधा ग्रहणाद् बहुवचनम् । स्पर्शमैथुनयोश्च प्रतिव्यक्ति भिन्नत्वात् । मिथुनस्य मथनजः स्पर्शो

मैथुनः । मिथुनस्यायं सम्मदजननः स्पर्श इति । अहो लीलेयमानन्दमयस्य भगवत इति। श्रूयते हि– 'सर्वेषामानन्दानामुपस्थ एकायनम्' [४.४.११] इति बृहदारण्यके मैत्रेयिब्राह्मणे। 'तद् यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किञ्चन वेद नाऽन्तरम्' [६.३.२१] इति च तत्रैव ज्योतिर्ब्राह्मणे। 'विसर्गगत्यत्त्यभिजल्पशिल्पाः' [५.११.१०] इति भागवते । अत्तिरिति ह्यानन्दादनम् । 'अत्तिरुपस्थविषयः' इति तात्पर्यवचनम् । 'विसर्गगत्यत्त्यभिजल्पशिल्पा इत्यादौ पुत्रोत्पादनरूपवीर्यविसर्गस्यापि भोगमात्रत्वादत्तिशब्दवाच्यत्वम्' इत्यानन्दमालायाम्। **'एतद् वै'** इत्यत्र वा इत्यवधारणे। तदाह– **ब्रह्मैव तत्**। प्रसिद्धं च तस्य रूपादिज्ञापकत्वम् ॥ ३ ॥

**स्वप्नान्तं जागरितान्तं चोभौ येनानुपश्यति ।**
**महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥ ४ ॥**

**(टी.)** रूपादिज्ञापकत्वं ब्रह्मलक्षणं ह्यत्रोक्तम् । तत् त्रिविधमस्तीत्याह– **स्वप्नान्तमित्यादिना** । स्वप्नाद्यवस्थाद्वयमुक्त्वा उभाविति पृथग्वचनात् उभयात्मकावस्था च गृह्यते। इमास्तिस्रोऽपि **येनैव पश्यति**। 'बहिः शब्दादिकं जानन् पश्यन् स्वप्नं तथैव च' इति वचनात् समुच्चयपक्षोऽपि गम्यते। तं **महान्तं** विष्णुं स्वामिनं **मत्वा** जीवो **न शोचति** ॥ ४ ॥

**(भा.चं.)** स्वप्नान्तमिति च केवलाऽनुष्टुप् । पूर्वार्धे चरणयोर्विश्लेषेणैकाक्षराधिका वा। **'स्वप्नान्तं'** स्वप्नावस्थाम् । **'जागरितान्तं'** जाग्रदवस्थाम्। 'अन्तः स्वरूपे निकटे प्रान्ते' इत्यभिधानम् । **'अनुपश्यति'** अनुभवति। यदिच्छानुगुणं च पश्यति। **'बहिः शब्दादिकम्–'** इति माण्डूकभाष्य उद्धृतं ब्रह्माण्डवचनम् । 'यदा भवति साऽवस्था ह्युभयज्ञानशब्दिता' [१.२.१] इत्युत्तरार्द्धम्। गुणतः शक्तितश्च **'महान्तम्'**, सर्वगतत्वाद् **'विभुम्'**, अत एव विष्णुपदगदितम्, विष्लृ व्याप्ताविति धातोः, **'आत्मानं' स्वामिनं 'मत्वा धीरः'** सन् जीवो **'न शोचति'**॥ ४ ॥

**य इमं[1] मध्वदं वेद आत्मानं जीवमन्तिकात् ।**
**ईशानं भूतभव्यस्य न ततो विजुगुप्सत एतद् वै तत् ॥ ५ ॥**

**(भा.) जीवस्यान्तिके । नहि स्वस्य स्वयं जीवोऽन्तिके भवति । वस्त्वन्तरस्य हि दूरत्वमन्तिकत्वं वा ॥ * ॥**

**(टी.)** 'तं स्वात्मानं मत्वा' इत्यभेदार्थयोजनायां को दोष इत्याशङ्कायामाह– **य इममिति । जीवस्यान्तिक** इति **जीवमन्तिकादिति** व्याख्याति । 'षट्सु द्वितीया' इति सूत्रेण द्वितीयायाः षष्ठ्यर्थत्वात् । 'त्रिषु पञ्चमी' इति च सूत्रम् । **य इमं मध्वदं** पूर्णानन्दभुजं स्वस्वामिनं **जीवस्यान्तिके** हृदये नियामकत्वेन स्थितं **वेद** स **ततः** परं स्वात्मानं गोप्तुं नेच्छति । भगवदिच्छयैव स्वगुप्तिसम्भवात् । जीवपरयोरैक्यपक्षे जीवस्यान्तिके पर इति न युज्यते । तस्य ततो भेदाभावात् । भिन्नयोरेव हि अन्योन्य**मन्तिकत्वं दूरत्वं वा** भवति । तदभिप्रायेण प्राह– **नहीति** । तस्मात् **जीवस्यान्तिक** एव ध्येयो भगवान् नतु जीवैक्येनेति सन्मतम् ॥ ५ ॥

**(भा.चं.)** य इममिति पूर्वार्धे पादयोर्विश्लेषेणैव पाठात् केवलाऽनुष्टुप् । जीवपरयोर्भेदमवधारयितुमेव विश्लिष्य पपाठ । 'तमेवैकं जानथ आत्मानम्' इति यथा । **षट्सु द्वितीया** । द्वितीयामारभ्य **षट्सु** विभक्त्यर्थेषु **द्वितीया** भवति । पञ्चमीमारभ्य **त्रिषु पञ्चमी** भवति । तेन जीवस्येति षष्ठ्यर्थे द्वितीया । अन्तिकादिति सप्तम्यर्थे पञ्चमी । **जीवस्यान्तिके** । मधु आनन्दमेवात्ति, पूर्णं चाऽनन्दमत्तीति मध्वदः । 'मध्वित्यानन्द उद्दिष्टः' इति हि स्मरन्ति । अस्माकं पुनर्विशिष्य प्राणावतारं मध्वं ददौ । **'आत्मानं' स्वस्वामिनम्** । आदत्ते भृत्यत्वेनेत्यात्मा । 'यच्चाऽप्नोति यदादत्ते' इत्यादेः । भूतस्य **भव्यस्य** भविष्यतो वर्तमानस्य च ईशानम् । कालत्रयस्य कालत्रयभवस्य पदार्थजातस्य च । 'मध्वदं कर्मफलभुजं जीवं प्राणादिधारयितारमात्मानं अन्तिकादन्तिके

---

१. 'य इदम्' इति रङ्गरामानुजः ।

समीपे वेद विजानाति' इति मायावादभाष्यम्। तदिदमाचार्योऽपजहास–**'नहि स्वस्य स्वयं जीवोऽन्तिके भवति'** इति। तान्येतानि भाष्यपदानि विवृणोति–**जीवपरयोरैक्यपक्ष** इत्यादिना। **सन्मतं** सतां मतम्। ज्ञानिनां च ॥ ५ ॥

**यः पूर्वं तपसोऽजातमद्भ्यः पूर्वमजायत ।**
**गुहां प्रविश्य तिष्ठन्तं यो[1] भूतेभिर्व्यपश्यतैतद्[2] वै तत् ॥ ६ ॥**

**(भा.) 'अम्नामभ्यश्च भूतेभ्यस्तपोनाम्नः शिवादपि ।**
**'पूर्वं यो जनयामास पूर्वाजातं चतुर्म्मुखम् ॥**

**'स्वात्मानं च गुहासंस्थं सर्वभूतैः सहाभिभूः ।**
**'यः पश्यति सदा विष्णुः स एष हृदि संस्थितः' इति च ॥**

**यथा 'मुखादिन्द्रश्चाग्निश्च' इत्यादिना जाता एवेन्द्रादयः काश्यपात् पुनर्ज्जायन्ते न तथा भगवतो ब्रह्मा[3]। किन्त्वजातमेवाद्भ्यः पूर्वमजायत जनयामास। अजायतेति 'जज्ञे बहुज्ञम्' इतिवदन्तर्णीतणिच्च ॥ * ॥**

**(टी.)** सोऽयं भूतभव्येशो[4] देवान् ब्रह्मादीनसृजदित्यभिप्रायेणाऽह– **यः पूर्वमिति**। एतदभिप्रायं **'अम्नामभ्यश्च भूतेभ्यः–'** इत्यादिना महावराहवचनेन स्पष्टयति। 'पञ्चम्यामाहुतावापः' [छं.५.२.११] इत्यादावम्नामकत्वं भूतानां प्रसिद्धम्। 'दशकल्पं तपश्चीर्णं रुद्रेण लवणार्णवे। त्यक्त्वा सुखानि सर्वाणि क्लिष्टेन लवणाम्भसा' [अनु.३.४.३७], 'उग्रतपोनामा योग्यो रुद्रपदस्य यः' [अनु.४.१.४] इत्यादिना महातपस्तप्त्वा धर्मधर्म्यभेदाच्च तपोनामकः शिवः। विष्णुना जायमानोऽपि तत्पूर्वमन्यस्मादजातत्वादजनामकश्चतुर्मुखः। **'स्वात्मानं च–'** इत्यादिना **'गुहां प्रविश्य–'** इत्यादिवाक्यशेषं व्याख्याति।

---

१. **'यद् भूतेभि–'** इत्येके। २. **'व्यपश्यत्येतत्'** इति च पाठान्तरं खण्डार्थे।

३. **'ब्रह्म'** इति प्राचीनादर्शे पठ्यते।

४. कोशे **'भूतभव्येशान्'** इति पठ्यते। तदा तु भूतभव्येशो भगवानीशनकर्मण्यङ्गभूतान् ब्रह्मादीनसृजदित्यर्थः।

**अभिभूः** सर्वाधिकशक्तिः । पूर्वाजातजननं यथावद् व्युत्पादयति– **यथैव इन्द्रादयः** पूर्वं विष्णोर्जाता एव **काश्यपाज्जायन्ते तथैव ब्रह्माऽपि** पूर्वमन्यस्माज्जात एव विष्णोः पुनर्जायत इति **न** मन्तव्यम् । किन्त्वन्यस्मादजात एवायमस्माज्जायते । कुतः? **अजातमेव** हि भगवान् अबादिभ्यः **पूर्वमिमं जनयामास**। **'जज्ञे बहुज्ञम्'** इत्यत्र जनयामासेत्यर्थो गम्यते, तद्वदत्राप्यविरोधः ॥ ६ ॥

**(भा.चं.)** यः पूर्वमिति केवलाऽनुष्टुप् । पञ्चभूतमानिनां गणपत्यादीनां स्रष्टुरहङ्कारमानिनः शिवादपि **पूर्वं** महत्तत्वमानिनं **चतुर्मुखं पूर्वं** अग्रतः **जनयामास** । 'प्राक् पूर्वमग्रतः' इत्यभिधानम् । **तपोनामकः शिव** इति । तथाहि बृहद्भाष्ये पैङ्गिश्रुतिवचनम्– 'सदाशिवश्चोर्ध्वस्तपोऽहङ्कार एव च' इति । कीदृशम्? **'पूर्वम्'** । सर्वेभ्योऽप्यादौ भवम् । तदेवाऽह– **पूर्वाजातम्** । सर्वस्मात् पूर्वः । विष्णोरन्यस्मात् कदाऽप्यजातश्च । तत्पूर्वमन्यस्मादजातत्वात् । वस्तुतस्तु न केवलं तत्पूर्वम् । परस्तादपीत्युपस्कर्तव्यम् । पूर्वं परस्तादपि नान्यस्मात् तस्य जननमित्यजः स उच्यते । अकाराख्येन विष्णुनैव केवलं जातत्वाच्च सोऽजः । यद्यप्याख्येन विष्णुना जातमिति सर्वमप्यजम् । अथाप्यसाधारण्येन व्यपदेशा भवन्तीति प्रथमजातत्वात् तेनैव जातत्वाच्च चतुर्मुखोऽज उच्यते । विष्णुना सृष्टेः पूर्वमन्यस्मादजननं त्विन्द्रादीनामपि समानम् । तथाऽपि ब्रह्मा पूर्वाजात इत्युच्यते । नेयं काश्यपादिन्द्रादीनामिव पुनः सृष्टिः । किन्त्वादिसृष्टिरिति ज्ञापयितुम् । एतेनावैदिकानि मतान्तराणि च निरस्तानि भवन्ति । तथाहि केचिदाचक्षते– 'आदौ परशिवेन ब्रह्मविष्णुरुद्रा जायन्ते । ततः पूर्वजात एव ब्रह्मा पुनर्विष्णोर्नाभिपद्माज्जायते' इति । दुराग्रह एवायं न वस्तुतत्वमिति ज्ञापयति– **'पूर्वं यो जनयामास पूर्वाजातं चतुर्मुखम्'** इति महावराहवचनम् । व्याचख्यौ च कृपया भगवत्पादः– **'यथा जाता एवेन्द्रादयः काश्यपात् पुनर्जायन्ते न तथा भगवतो ब्रह्मा'**, तादृशश्रुतिवचनानुपलम्भात् । प्रत्युत तत्प्रतिकूलानां श्रुतिस्मृतिवचनानां बहुलमुपलम्भाच्चेति । यो भूतमानिभिर्देवैः सह हृदयगुहां

**प्रविश्य तिष्ठन्तं** स्वात्मानं भूतैः सह स्वयमेव **'व्यपश्यत'** विपश्यति। न तु ते तं पश्यन्ति। 'यं पृथिवी न वेद' इत्यादिश्रुतेः। दर्शनं केवलमात्मगतमिति दर्शयितुमेव **'व्यपश्यत'** इत्यात्मनेभाषः। 'यदा पश्यः पश्यते रुग्मवर्णम्' इति यथा। **जनयामासेत्यर्थ** इति। तथाहि पठ्यते मोक्षधर्मेषु– **'जज्ञे बहुज्ञं** परमं ह्युदारं यं द्वीपमध्ये सुतमात्मवन्तम्। पराशराद् गन्धवती महर्षिं तस्मै नमोऽज्ञानतमोनुदाय' [शां.प.३३८.४] इति। 'अत्रेः पत्न्यनसूया त्रीन् जज्ञे सुयशसः सुतान्' [४.१.१५] इति च भागवते ॥ ६ ॥

**या प्राणेन सम्भवत्यदितिर्देवतामयी ।**
**गुहां प्रविश्य तिष्ठन्तीं[1] या भूतेभिर्व्यजायतैतद् वै तत् ॥ ७ ॥**

(भा.) **'अदनाददितिर्विष्णुर्यः प्राणसहितः स्थितः ।**
**'उत्तमो देवताभ्यश्च सोऽत्मानं विविधात्मना ॥**
**'मत्स्यकूर्म्मादिरूपेण गुहासंस्थमजीजनत् ।**
**'भूतैः सह महाविष्णुः परमात्मा युगेयुगे' इति च ॥**

**देवतामयी देवतोत्तमः। प्राणेन सह स्थितो भवति। गुहां प्रविश्य तिष्ठन्तीं स्वात्मानं भूतैः सह विविधं जनयामास ॥ * ॥**

**(टी.)** एवं ब्रह्मादिसृष्टिमुक्त्वा भगवतो मत्स्यादिरूपेण स्वरूपाभिव्यक्तिं च वक्ति– **या प्राणेनेति**। [तद् व्याख्याति]– **अदनाददितिरित्यादिना**। **इति च** महावराहे। **देवतामयीत्यादिना** स्ववचनेनैव पदार्थान् विवृणोति। 'विकारप्राचुर्यप्राधान्येषु मयट्' इति सूत्रात् उत्तमार्थत्वं च मयटः प्रसिद्धम्। **'प्राणेन सम्भवति' सह स्थितो भवति**। सर्वप्राणिनां हृदयं **प्रविश्य तिष्ठन्तीं स्वात्मानं** मत्स्यादिरूपेण **विविधं** व्यक्तीचकार। 'अजायमानः' इति श्रुतेः। भूतानि तु जनयामास। 'तान्यसृजत' इति सर्वसृष्टिश्रुतेः। एषा-**मदनाददितिः** स उच्यते ॥ ७ ॥

१. **'तिष्ठन्ती'** इति रङ्गरामानुजः।

**(भा.चं.)** या प्राणेनेति पूर्वार्धे चरणयोर्विश्लेषेण केवलाऽनुष्टुप् । **एषा-मदनाददितिः** । एषां पूर्वोक्तानां ब्रह्मादीनां सकलभूतानां संहरणात् । अतती किलातिथिरुच्यते । अत्तीत्यदितिश्च । 'अतेरिथिन्' [१.४४] इति दशपादिका-कारः पठति । एवम्– 'अदेरितिन्' इत्यपि पठनीयम् । तेन अत्तीत्यदितिरिति भवति । अद्यतेऽनयेति वाऽदितिः । 'सर्वं वा अत्तीति तददितेरदितित्वम्' [बृ.उ.३.२.५] इति हि श्रुतिः । न केवलं सर्वस्रष्टृत्वम् । सर्वसंहर्तृत्वं च सहैवोपास्यमित्यर्थः । 'सम्भूतिं च विनाशं च यस्तद् वेदोभयं सह' इति हि श्रूयते । नैषाऽदितिर्देवमातेति ज्ञापयितुम्– **'देवतामयी'** इति विशेषणम् । 'प्राधान्यार्थे विकारार्थे प्राचुर्यार्थे मयट् त्रिधा' इति च सम्प्रदायविद्वचनम् । तमोमानिन्यां दुर्गायां गतमेतद् रूपमिति च स्त्रीलिङ्गत्वम् । दुर्गायाः प्राणस्य च प्रधानाङ्गत्वं संहारकर्मणीति **या प्राणेन सह भवतीत्याह** । न केवलं सृष्टिकर्मणि, संहारकर्मण्यपि **'प्राणेन'** ब्रह्मणा वायुना च **'सह स्थितो भवति'** इत्यर्थः । **युगेयुगे** कालेकाले, यदा सृष्टिर्युज्यते । 'धर्मसंस्थापनार्थाय सम्भवामि युगेयुगे' [४.७] इति भगवद्गीतासु ॥ ७ ॥

**अरण्योर्न्निहितो जातवेदा गर्भ इव सुभृतो[1] गर्भिणीभिः ।**
**दिवेदिव ईड्यो जागृवद्भिर्हविष्मद्भिर्म्मनुष्येभिरग्निरेतद् वै तत् ॥**
**॥ ८ ॥**

**(भा.)** 'सर्वज्ञो भगवान् विष्णुररण्योर्गुरुशिष्ययोः ।
'सुभृतः स्तूयते नित्यं जानद्भिः पुरुषोत्तमः' इति च ।

**आर्यत रण आभ्यामित्यरणी ॥ * ॥**

**(टी.)** सोऽयं भगवान् ब्रह्मादिभिरीड्यः पूज्यश्चेत्याह– **अरण्योरिति** । **'सर्वज्ञः–'** इत्यादिना तद् व्याख्याति । जातञ्जातं वस्तुजातं सर्वं वेत्तीति **'जात-**

---

१. 'सुधितो–' इत्येके । 'गर्भ इवेत् सुभृतो–' इति रङ्गरामानुजः ।

**वेदाः' सर्वज्ञ** उच्यते। ब्रह्माद्यङ्गनेतृत्वादग्निनामकोऽयं **भगवान् विष्णुः**। 'यथैवाग्र्यादयः शब्दाः प्रवर्तन्ते जनार्दने। तथा निरुक्तिं वक्ष्यामोऽज्ञानिनां ज्ञानसिद्धये' इति व्यासनिरुक्ते। स भगवान् अरणिशब्दितयो**र्गुरुशिष्ययोः** सूक्ष्मरूपेणाव्यक्ततया नित्यं सन्निहितो भवति। अथ जिज्ञासाख्यमथनसमये लिङ्गव्यक्ततया **सुभृतो** लक्ष्यते। यथा **गर्भिणीभिः सुभृतो गर्भ**स्तद्वदेव। अथ मथनान्ते ध्यातः प्रसूत इव प्रादुर्भविष्यति। अत्र मनुष्यशब्देन जीवा उच्यन्ते। 'ततो मनुष्या अजायन्त'[बृ.उ.३.४.३] इत्यादिवत्। नित्यं मननादिशीलत्वान्मनुष्यशब्दितैर्देवादिभिः दिवसेदिवसे निरन्तर**मीड्यः** स भगवान्। **हविष्मद्भिः** विष्णुयाजिभिः। 'यज्ञेन यज्ञमयजन्त देवाः' इत्यादिश्रुतेः। **जागृवद्भिः** तमेतं पुरुषोत्तमं **जानद्भिः**। अरणिशब्दं गुरुशिष्यविषये निर्वक्ति– **आर्यत रण आभ्यामित्यरणी** इति। **आर्यत** आ समन्तादध्यगम्यत **रणः** शब्दो वेदादि[शब्द]राशिः वेदान्तश्च **आभ्यामित्यरणी** इति गुरुशिष्यौ। ऋ गतौ, रण शब्दे इति हि धातुः। आर्यत रणः सम्भरणमन्त्रात्मकः शब्दः आभ्यामिति हि प्रसिद्धारणी अप्युक्ते। 'यो अश्वत्थः शमीगर्भः–' इत्यादिको ह्यरणीसम्भरणमन्त्रः ॥ ८ ॥

**(भा.चं.)** अरण्योरिति च त्रिष्टुप्। प्रथमचरणे 'अरणियोः' इति, तृतीयचरणे 'ईडिय' इति, चरमचरणे च 'मनुषियेभिः' इति च विश्लेषेण। प्रथमचरमयोरविश्लेषेण द्व्यक्षरोना वा त्रिष्टुप्। सर्वत्राविश्लेषेण द्वितीयपादे एकाक्षराधिका वा पङ्क्तिः ॥ * ॥

**गर्भ इव सुभृतो गर्भिणीभिः**। तथा ह्यैतरेय्यामुपनिषदि– 'पुरुषो हवा अयमादितो गर्भो भवति' [२.४.१] इति, 'तं स्त्री गर्भं बिभर्ति' [२.४.४.] इति च। अरणिकाष्ठयोर्निहितोऽग्निनारायण इव **'अरण्योः'** गुरुशिष्ययोः **'निहितः' नित्यं सन्निहितो** भगवानिति। **'दिवेदिवे' दिवसेदिवसे**। तस्यैव विवरणम्– **निरन्तरमिति**। **'ईड्यः'** स्तुत्यः ॥ * ॥

नन्वग्निरिति प्रसिद्धाग्निरेवोच्यताम्। किमित्यग्निनामको विष्णुरिति बलात्कारः? नायं बलात्कारः। किन्तु वेदव्यासेन स्वयं दर्शिता व्याख्यानपरिपाटीत्याह– **'यथैवाग्न्यादयः'** इति व्यासनिरुक्तवचनेन। **निरुक्तिं वक्ष्यामः अज्ञानिनां ज्ञानसिद्धये, ज्ञानिनां** ज्ञानवृद्धये च। सिद्धिरेव हि वृद्धिरपि। **व्यासनिरुक्ते** ऋग्भाष्योदाहृते । 'इति तेनाग्निशब्दोऽयमग्र एवाभिपूज्यताम्। अग्र्यत्वमग्रनेतृत्वमत्तिमङ्गागनेतृताम्। आह–' इति चोत्तरं वचनम्। अग्रे प्रथमं नीयते स्थाप्यते पूजार्थमित्यग्निः। अग्रे सर्वस्मादुपरि नीयतेऽनुसन्धीयत इत्यग्रभवोऽग्निः। अग्रं श्रेष्ठं वैकुण्ठादिस्थानं नयति भक्तानित्यग्निः। अत्ति हुतं हविरादिकम्, भक्त्युपहृतं पत्रपुष्पादिकम्, अन्ते चात्ति सर्वं जगदित्यग्निः। चक्षुरादीन्यङ्गानि नयतीत्यग्निः। स्वयमगं जगन्नयतीति चाग्निर्भगवान्। वैयाकरणास्तु अङ्गतेर्निप्रत्ययेन नलोपेन च शब्दनिष्पत्तिं मन्यमानाः, अगि गताविति धातोः अङ्गति ज्वालारूपेणोर्ध्वं गच्छतीति, अङ्ग्यतेऽसाविति वाऽग्निरित्याहुः। 'अङ्गेर्नलोपश्च'[१.२०] इति हि दशपादिका॥ * ॥

**मनुष्यशब्देन** योगवृत्त्या देवादिसर्व**जीवा उच्यन्ते**। न केवलं मनुष्यजीवाः। **ततो मनुष्या अजायन्तेत्यादिव**दिति। 'ततस्तस्यामुमेशादीन् देवान् सर्वमनूनपि जनयामास बोधस्य प्राधान्यं हि मनुष्यता' इति तत्र भाष्यम्। **'जागृवद्भिः'** अविद्यानिद्रातः समुत्थितैः। 'जागृ निद्राक्षये'। तदेतदाह– **पुरुषोत्तमं जानद्भिः। मनुष्येभिः**। 'बहुलं छन्दसि' [७.१.१०] भिस ऐस् बहुलं स्याच्छन्दसि विषये। एवं 'भद्रं कर्णेभिः', 'अक्षभिः', 'भूतेभिर्व्यपश्यत' इत्यादि॥ * ॥

**आर्यत रण आभ्यामिति**। निरुक्तत्वादार्यतेत्यत्राकारमात्रमवशिष्यते। रणशब्दे पुनराधिक्यार्थेऽकारस्येकारः। अरणिररणी वा। 'यो अश्वत्थः शमीगर्भ आरुरोह त्वे स चा। तं ते हरामि ब्रह्मणा यज्ञियैः केतुभिः सह' [तै.आ.१.२.१.८] इति समग्रो मन्त्रः। अत्र कल्पवचनम्– 'यो अश्वत्थः शमीगर्भ आरुरोह त्वे स चा। तं ते हरामि ब्रह्मणा यज्ञियैः केतुभिः सहेति शमीगर्भस्या-

श्वत्थस्यारणी आहरति' इति । हे अरणे, त्वे त्वन्निमित्तं शमीगर्भः योऽश्वत्थः स च वेष्टनभूतया शम्या सह आरुरोह ज्वालाभिर्ववृधे तं ते त्वदर्थं ब्रह्मणा सम्भरणमन्त्रेण हरामि यज्ञभूमिं प्रति नयामि । यज्ञार्हैः केतुभिर्लाञ्छनैः संस्कारैः सहेति मन्त्रार्थः । 'यो अश्वत्थः शमीगर्भ आरुरोह त्वय्यपि । तं ते गृह्णामि यज्ञियैः केतुभिः सह' [७.४८] इति कठसंहितायां पाठान्तरम् ।। ८ ।।

**यतश्चोदेति सूर्योऽस्तं[1] यत्र च गच्छति ।**
**तं देवाः सर्वे अर्प्पितास्तदु नात्येति कश्चनैतद् वै तत् ।। ९ ।।**

**(टी.)** ततस्तोतॄणां देवादीनां स एव ह्याश्रयश्चेत्याह– **यतश्चेति** । यदाश्रयात् सूर्यस्योदयादिस्तस्मिन्नेव **सर्वे देवाः** समाश्रिताः । नच तदाज्ञादिकं **कश्चनात्येति** भूतभव्येशानत्वात् तस्य ।। ९ ।।

**(भा.चं.)** यतश्चेत्यत्र 'सूरियो अस्तम्' इति विश्लेषेण केवलाऽनुष्टुप् । प्रतिदिनं सूर्यस्योदयास्तगमनव्यवस्था यतः । प्रतिदिनं लोकैर्दृश्यमानत्वात् सूर्यस्य मुखतो ग्रहणम् । अनेनैव न्यायेन सूर्यस्य सृष्टिसंहारौ च यतः । एवमन्येषामपि । 'नात्येति तदात्मकतामतीत्य तदन्यत्वं न गच्छति' इति परभाष्यं पूर्ववचनविरुद्धत्वादुपेक्षणीयमिति स्मारयति– **भूतभव्येशानत्वादिति** ।। ९ ।।

**यदेवेह तदमुत्र यदमुत्र तदन्विह ।**
**मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ।। १० ।।**
**मनसैवेदमाप्तव्यं नेह नानाऽस्ति किञ्चन ।**
**मृत्योः स मृत्युं गच्छति य इह नानेव पश्यति ।। ११ ।।**

**(भा.)** **'यः प्रादुर्भावगो[2] विष्णुर्देहादिषु च संस्थितः ।**
**'स एव मूलरूपश्च साक्षान्नारायणाभिधः ।**
**'मूलरूपश्च यो विष्णुः प्रादुर्भावादिकश्च सः ।।**

---

१. केचित् **'सूर्यो अस्तम्'** इति व्यस्तं पठन्ति ।

२. हृषीकेशतीर्थीयकोशे– **'यः प्रादुर्भावगतो–'** इति पठ्यते ।

'गुणतः स्वरूपतो वाऽपि विशेषं योऽत्र पश्यति ।
'अत्यल्पमपि मृत्वा स तमोऽन्धं यात्यसंशयम् ।
'भेदाभेदं चात्र तथा तमो याति न संशयः ॥

'तथैवावयवानां च गुणानां च परस्परम् ।
'क्रियाणां तेन चैतेषां भेदविच्चोभयं विदुः ।
'यान्त्येवान्धन्तमो नात्र कार्या काचिद् विचारणा' इति च ॥

'भवेदेकत्र संयोग इवशब्दो विरुद्धयोः ।
'धर्म्मयोरुपमायां वा स्वल्पत्वे वा विवक्षिते'

इति शब्दनिर्णये ॥

**अतो नानेवेतीवशब्दो भेदाभेदविषयश्च । प्रथमं 'य इह नानेव पश्यति' इति स्वरूपभेदनिषेधार्त्थम् । 'नेह नानास्ति किञ्चन' इति किञ्चनशब्दात् अवयवानां गुणानां क्रियाणां च परस्परं तद्वतां च भेदनिषेधार्त्थः । भेदाभेद एव निषिद्ध्यते नतु भेद इत्याशङ्कां निवर्तयितुं 'एवं धर्म्मान् पृथक् पश्यन्' इति भगवद्धर्म्माणामवयवगुणकर्म्मणां भेददर्शने पृथग् दोषमाह ॥ * ॥**

**(टी.)** ननु तदंशानां मत्स्यादीनां केवलतात्कालिकत्वात् भूतभव्येशानत्वं न युक्तमित्याशङ्क्याऽऽह– **यदेवेति** । अस्य वाक्यस्याभिप्रायं **'यः प्रादुर्भावगः–'** इत्यादिना महावराहवचनेन व्यक्तं वक्ति । **यदेव** अत्र प्रादुर्भावादिरूपं विष्णोः **तदेवामुत्र** क्षीरसमुद्रादिगतमूलरूपम् । यच्च तन्मूलरूपं तदेवात्राप्यनुवृत्तम् । नाणुरप्यनयोर्भेद इत्यर्थः । **'गुणतः–'** इत्यादिना **'मृत्योः स मृत्युम्–'** इत्यादेरभिप्रायमाह । **य इह** भगवतो रूपेषु गुणेषु वा **नाना पश्यति** सर्वप्रकारेण भेदं पश्यति, **इव**शब्दादत्यल्पमेव वा भेदं पश्यति । **'विशेषं योऽत्र पश्यति'** इत्यत्रापि भेदं पश्यतीत्यभिप्रेतत्वात् । **सः** उक्तभेददृक् मृत्यनन्तरं मृत्युनामक**मन्धन्तमो याति** । इवशब्दस्यार्थान्तरमप्याह– **भेदाभेदं च यः पश्यति** सोऽपि **तथा तमो याति** । एवं तावदनन्तानां भगवद्रूपाणां न कश्चिद् भेद इत्युक्तम् । अथ

तदवयववादीनामपि नैव भेदस्तस्येत्याह– **मनसैवेति** । इदं भगवद्रूपादिकं **मनसैव** वेदार्थं विचार्य ज्ञातव्यम् । अतिसूक्ष्मत्वात् । **'तथैवावयवानां च–'** इत्यादिना **'नेह नाना–'** इत्यादेरभिप्रायं स्पष्टयति । अत्रायं विशेषः– 'भेददर्श्यधरं तमः । भेदाभेदप्रदर्शी च तम एवोत्तरं व्रजेत्' इति श्रुत्यन्तरात् तमस्यपि विशेषो बोद्धव्यः । इवशब्दस्तु एवमर्थं कथं वक्तीत्याशङ्क्याऽऽह– **भवेदेकत्रेति** । **विरुद्धयोः धर्मयोः एकत्र** वस्तुनि संयोगेन स्थितौ **इवशब्दः** तद्वाचकः भवेत् । एवमुपमास्वल्पत्वयोरपि भवेत् । इवशब्दार्थं निगमयति– **अत** इति । **'य इह नानेव पश्यति'** इत्यत्र पठ्यमान **इवशब्दः भेदाभेदविषयः**, चशब्दात् अत्यल्पार्थविषयश्च भवति । **'य इह नानेव पश्यति'** इति मत्स्यादिस्वरूपभेदनिषेधः पूर्वत्र क्रियते । **'यदेवेह तदमुत्र'** इति तन्मात्रप्रस्तावात् । उत्तरत्र किञ्चनेति विशेषणात् अवयवाद्यशेषभेदनिषेध इति विषयविभागः । विधान्तरेण पुनरुक्तिमुद्भाव्य परिहरति–**भेदाभेद एवेति** । नानेवेत्युक्त्या भेदाभेदपक्ष एव निषिद्ध्यते नतु भेदपक्षोऽपीत्यतिशङ्का स्यात् । तामपि **निवर्तयितुं 'एवं धर्मान्'** इत्युत्तरवाक्ये भगवद्धर्मादीनां **भेददर्शनेऽपि** समुच्चयपक्षात् **पृथग् दोषमाह** ॥ १०–११ ॥

**(भा.चं.)** यदेवेहेति चतुर्थचरण एकाक्षराधिकाऽनुष्टुप् । मनसैवेदमिति च । **'विशेषं योऽत्र पश्यति'** इति महावराहवचने विशेष इति नाभिन्नयोर्भेदव्यवहारहेतुः, किन्तु भेद एवेत्याह– **भेदं पश्यतीत्यभिप्रेतत्वात्** । **'मृत्योः स मृत्युम्–'** इति प्रथमो मृत्युशब्दः शरीरवियोगवचनः । द्वितीयान्तो द्वितीयस्तमोवचन इत्याह– **मृत्यनन्तरं मृत्युनामकमन्धन्तमो याति । मृत्योः** अनन्तरमिति शेषः । यद्वा त्त्वाप्रत्ययार्थे पञ्चमी । मृत्वा **मृत्युं** अन्धं तम **आप्नोति** । तदेतदुक्तं महावराहे– **'मृत्वा स तमोऽन्धं यात्यसंशयम्'** इति । **भेदविद्यान्धन्तमो याति** । ये च **'उभयं'** भेदाभेदं **'विदुः'** तेऽपि **'यान्ति'** । श्रुतावाप्नोति गच्छतीति सावधारणम् । मृत्युमाप्नोत्येव, मृत्युं गच्छत्येवेति । अत एव पुराणवचनम्– **'तमोऽन्धं यात्यसंशयम्'**, **'तमो याति न संशयः'**,

**'यान्त्येवान्धन्तमो नात्र कार्या काचिद् विचारणा'** इति त्रिराह । 'ये केचाऽत्महनो जनाः' इति च श्रुत्यन्तरम्। 'नियमेन तमो यान्ति' इति पौराणं वचः। **भवेदेकत्र**। विरुद्धयोर्धर्मयोरेकत्र संयोगे यथा– सुजनसङ्गेन दुर्जनोऽपि सुजन इव भवति। न सर्वात्मना सुजनः। क्वचित् सुजनः क्वचिद् दुर्जन इत्यर्थः। उपमायां यथा– 'पण्डितास्तु कळत्रेण रमन्ते महिषा इव'। स्वल्पत्वे यथा– 'ग्रामेऽस्मिन्नयमप्येकः पण्डित इव'। क्षुद्रः पण्डित इत्यर्थः। 'स्तनयोरधस्तात् उदरमिव लक्ष्यतेऽस्याः'। कृशोदरीत्यर्थः। शब्दतत्ववचनं बृहद्भाष्ये– 'विरुद्धोभयसंयोग इवशब्दः प्रदिश्यते' इति। 'किञ्चित्त्वे चोभयत्वे च संशये सदृशे तथा। इवशब्दः प्रयुज्येत न्यक्कारेऽपि च पण्डितैः' इति स्थानान्तरगतं शब्दनिर्णयवचनं खण्डार्थनिर्णये। **स्वरूपभेदनिषेधार्थ**मिति। एतदप्युक्तं बृहद्भाष्ये–'स्वगतभेदाविवक्षायाम् 'इह' इति विशेषणं व्यर्थं स्यात्' इति। 'इहेति परमेश्वररूपेषु अवयवेषु धर्मेषु च किञ्चन नाना नास्तीत्यर्थः' इति च। 'अन्धं तमः प्रविशन्ति ये देहं परमात्मनः। भिन्नं विजानते विष्णोर्भिन्नाभिन्नविदोऽपि वा। अन्धं तमः प्रविशन्ति प्रादुर्भावांस्तु येऽपि वा। सर्वभूतस्थितान् वाऽपि भिन्नान् जानन्ति येऽखिलान्। भिन्नाभिन्नविदो वाऽपि शिरःपाण्यादिकं तथा। भिन्नं मिथो विजानीयुर्भिन्नाभिन्नविदोऽपि वा। तेऽपि यान्ति तमो घोरं यतो नैवोत्थितिः क्वचित्। प्रादुर्भावतया ये च तदन्यान् जानते विभोः। तेऽपि यान्ति तमो घोरं तस्मान्नैवं विदो विदुः' इति च। **किञ्चन नाना नास्ति** किमपि भिन्नं नास्ति। 'मनसैवानुद्रष्टव्यं नेह नानाऽस्ति किञ्चन। मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' [६.४.१९] इति बृहदारण्यकपाठः ॥ १०–११ ॥

**अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ।**
**ईशानो भूतभव्यस्य न ततो विजुगुप्सत एतद् वै तत् ॥ १२ ॥**

**अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः ।**
**ईशानो भूतभव्यस्य स एवाद्य स उ श्व एतद् वै तत् ॥ १३ ॥**

**(टी.)** एवं निर्भेदानन्तगुणक्रियादिस्वरूपो भगवानङ्गुष्ठमात्रतया जीवात्मनि **हृदयमध्ये तिष्ठति । अधूमक** इति ज्योतिर्मयस्य हरेः सर्वदोषहीनत्वोपलक्षणम् । भूतभव्येशानत्वं तु **'स एवाऽद्य स उ श्व'** इति मुख्यत एव अनाद्यनन्तनित्यत्वाद् युज्यते । अङ्गुष्ठमात्रः सर्वेशानश्चेति पूर्वोक्तविशेषणमनूद्य उत्तरत्र ज्योतिर्मयत्वं नित्यत्वं चास्य विधीयत इत्यपुनरुक्तिः ॥ १२–१३ ॥

**(भा.चं.)** अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनीति केवलाऽनुष्टुप् । अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवेति द्वितीयपादे तुरीयपादे चैकाक्षरोनेति द्व्यक्षरोनाऽनुष्टुप् । 'श्शु+वः' इति क्षैप्रविश्लेष एकाक्षरोना । द्वितीयचरणेऽपि 'ज्योतिरिव अधूमकः' इति विश्लेषे केवलैवानुष्टुप् । **अङ्गुष्ठमात्रतया हृदयमध्ये तिष्ठति** । देहमध्यगतं देहाङ्गुष्ठमितं चेदं रूपम् । जीवस्वरूपगतं जीवाङ्गुष्ठमितमुपरिष्टाद् वक्ष्यते– 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा' इति । सः **अङ्गुष्ठामात्रः** परमपुरुषः भूतस्य च भव्यस्य च सर्वस्य **ईशानो** यतः, ततः तद्विज्ञानात् **न विजुगुप्सते** नाऽत्मानं गोप्तुमिच्छतीति ॥ १२ ॥

अधूमकं **ज्योतिरिव** अयमपि अधूमकः निर्मलज्ञानानन्दमयप्रकाशः । सर्वदोषदूरश्च । धूनोति कम्पयतीति दोषोऽपि धूमः । 'धूञो मक्' [७.३१] इति दशपादिकाकारः ॥ १३ ॥

**यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति ।**
**एवं धर्म्मान् पृथक् पश्यꣳस्तानेवानु विधावति ॥ १४ ॥**

**(भा.) पर्वतेषु दुर्गे शिखरे वृष्टमधो विधावति । एवं विष्णोर्धर्म्मान् पृथक् पश्यन्नधोऽन्धं तमो विधावति ॥ * ॥**

**(टी.)** यथोदकमित्येतद् व्याख्याति– **पर्वतेष्विति** । अत्युच्चतया दुरारोहतया दुर्गमिति विवक्षितम् । **तानेवानु** विष्णुधर्मान् पृथगदृष्टानन्वेव । तथा दृष्ट्यनन्तरमेवेत्यर्थः ॥ १४ ॥

**(भा.चं.)** यथोदकं दुर्गे वृष्टमिति तु केवलाऽनुष्टुप् । **'तान् अन्वेव'** पृथग्दर्शनानन्तरमेव । **'विधावति'** विष्वग् धावति । यथाकथाच धावतु । अन्ततोऽध एव विधावति । जलस्वाभाव्यात् । एवमधो विधावनमेव तामसानां स्वभाव इति । अधोगमनेऽपि विविधा तमोगतिरिति विधावतीत्याह । व्याख्या-तोऽयं मन्त्रो भगवत्पादेन बृहद्भाष्येऽपि– 'पर्वतेषु दुर्गे पर्वताग्रे वृष्टं यथाऽधो विधावति एवं पृथग्दृष्टान् धर्मानन्वेव तदनन्तरमेव अधोऽन्धे तमसि विधावति' इति । उदाहृतं च ब्रह्माण्डवचनम्– 'भेदेन दर्शनाद् वाऽपि भेदाभेदेन दर्श-नात् । विष्णोर्गुणानां रूपाणां तदङ्गानां मुखादिनाम् । तथा दर्शनकालात्तु क्षिप्रमेव तमो व्रजेत्' इति । **विधावति** विशेषतस्त्वरमाणो धावति, विष्णुलोकं विहाय विपरीतं चाधोधो धावति, विनाशाय च विविधं धावति ॥ १४ ॥

**यथोदकꣳ शुद्धे शुद्धमासिक्तं तादृगेव भवति ।**
**एवं मुनेर्विजानत आत्मा भवति गौतम ॥ १५ ॥**

**इति द्वितीये प्रथमा वल्ली**

—०—

**(भा.)** विजानतो मुनेरात्मा वायुरपि तादृगेव भवति । नतु स एव भवति । किम्वन्ये जीवाः ।

'सर्वेषां ज्ञानिनामात्मा देवानां च विशेषतः ।
'मुक्तो वायुश्च सादृश्यमेव विष्णोस्तु गच्छति ॥

'नतु तद्रूपतां याति किम्वन्ये देवमानुषाः ।
'आभासाभासरूपास्तु वायोर्देवस्य सर्वशः'

इति भविष्यत्पर्वणि ॥ * ॥

—०—

**(टी.)** मुक्तजीवस्यापि परमात्मन्येकीभावोक्तेः पृथङ् न स द्रष्टव्य इत्यत आह– **यथोदकमिति** । **'तादृगेव भवति'** तत्सदृशमेव भवति । एवं मुक्तसङ्घोऽपि

निर्दोषत्वादिधर्मैः विष्णुसदृश एव भवति । नतु तदभिन्नो भवति । एकीभावोक्तिः स्थानैक्यादिविवक्षयैव । 'ब्रह्म प्रधानमुपयान्त्यगताभिमानाः' [भाग. ३.३३.१०] इति वचनात् । 'उपसङ्क्रामति', 'साम्यमुपैति' इत्यादिभिश्च । एतमर्थं **'सर्वेषाम्–'** इत्यादिना [भविष्यत्पर्ववचनेन] दृढयति ॥ १५ ॥

**(भा.चं.)** यथोदकं शुद्धे शुद्धमिति द्वितीयचरणे द्व्यक्षराधिकाऽनुष्टुप् । द्व्यक्षरोना बृहती वा । **मुनेर्विजानत आत्मा** स्वरूपमिति यथाश्रुतोऽप्यर्थो विवक्षित एव । अर्थविशेषं च सप्रमाणोपन्यासमाह– **विजानतो मुनेरात्मा वायुरपि । आत्मा** स्वामी, अन्तर्नियामको वा । जीवकलामानित्वात् । **मुनेः** मननशीलस्य ज्ञानिगणस्य । **विशेषतश्च 'विजानतो'** देवगणस्य **आत्मा** । 'देवादीनां तु यज्ज्ञानं विज्ञानमिति कीर्तितम्' इति हि स्मरन्ति । तदेतदाह– **'सर्वेषां ज्ञानिनामात्मा देवानां च विशेषतः' । मुक्तो वायुः** ब्रह्मा । **आभासाभासरूपाः** वायोराभासा रुद्रादयः । तदाभासा इन्द्रादयः । तदाभासा मनुष्यजीवा इति । 'एवं परेत्य भगवन्तमनुप्रविष्टा ये योगिनो जितमरुन्मनसो विरागाः । तेनैव साकममृतं पुरुषं पुराणं ब्रह्म प्रधानमुपयान्त्यगताभिमानाः' इति कापिलेये । 'कालं परं स्वमनुभूय परः स्वयम्भूः' इति पूर्वश्लोकप्रस्तुतं 'भगवन्तं' 'स्वयम्भुवं' अनुप्रपन्नाः **'प्रधानं'** नारायणाख्यं **'ब्रह्मोपयान्ति' । 'अगताभिमानाः'** अविनष्टाहम्प्रत्ययाः । परमात्मना स्वस्य भेदमनुभवन्तः, स आश्रयः, वयं तमाश्रिता इति । गौतमगोत्रजत्वाद् गौतम इत्युक्तम्– 'वीतमन्युर्गौतमः–'[१.१.१०] इत्यत्र । **तादृगेव भवति** इति मुखत एव भेदवादिनीं श्रुतिमपलपन्तः, 'तदेव भवति' इति विपरीतं व्याचक्षाणा दूरादेवोपेक्षणीयाः । तद्वद् दृश्यत इति तत्सदृशं तादृगुच्यते । नहि तदेव तादृगित्यनुन्मत्तो वक्तुमर्हति ॥ १५ ॥

—०—

[अथ द्वितीये द्वितीया वल्ली]

पुरमेकादशद्वारमजस्यावक्रचेतसः ।
अनुष्ठाय न शोचति विमुक्तश्च विमुच्यत एतद् वै तत् ॥
॥ १ ॥

**(भा.)** इदं पुरं भगवदधीनमित्यनुष्ठाय। अजस्येदं पुरं स्थितमिति स्थितिं कृत्वा ।

'विमुक्तो निरभीमानात् पूर्वमेवापरोक्षवित् ।
'मुख्यतो मुच्यते पश्चात् दुःखाद्याभासहानतः' इति च ॥ * ॥

**(टी.)** हृदिस्थस्य विष्णोरित्थम्भावान्तरमप्याह– **पुरमित्यादिना** । एतद् वाक्यं व्याख्याति– **इदं पुरमिति**। अभिप्रायं वक्ति– **अजस्येति**। **अजस्य** हरेः निवासार्थं इदं शरीरं **स्थितमिति** मानसस्थितिं **कृत्वा**, मनसा निश्चित्य, उपास्येत्यर्थः। **न शोचतीत्यन्वयशेषः**। सुषुम्नानाडीसहित**मेकादशद्वारम्**। पूर्वं विमुक्तस्य पश्चाद् विमुक्तिः कथं स्यादित्यत आह–**विमुक्त** इति। अपरोक्ष-विवक्षया मुक्तेः पूर्वमेव भगवदधीनत्वेन निर्णीते देहादौ निरभिमानत्वात् अनिष्टकर्मापक्षयाच्च जीवन्मुक्त्यपेक्षया विमुक्तो भवति। **पश्चात्** लिङ्गशरीरभङ्गे दुःखाद्याभासहानेन **मुख्यत** एव **मुच्यते**। **इति च** भविष्यत्पर्वणि ॥ १ ॥

**(भा.चं.)** पुरमिति केवलाऽनुष्टुप्। श्रोत्रे चक्षुषी नासापुटे वदनं पायुरुपस्थं चेति नव द्वाराणि। नाभिर्दशमद्वारम्। शिरसि सीमन्ते सुषुम्नाद्वारमेका-दशम्। भूमौ जननपर्यन्तं विवृतं नाभिद्वारम्। चरमजन्मनि ऊर्ध्वगमनाय विव-

रिष्यमाणं सुषुम्नाद्वारम्। 'तासां मूर्धानमभिनिःसृतैका। तयोर्ध्वमायन्नमृतत्वमेति' [२.३.१६] इति चोपरिष्टात्। भाष्ये– **अजस्येदं पुरमिति**। यः पुरेण जायते न तस्येदं पुरम्। यः पुरमधिष्ठायापि न जायते तस्य **अजस्येदं पुरमिति** भावः। **अवक्रचेतसः** यथार्थज्ञानस्वरूपस्य। तद्धि वक्रं चेतः, यत् सदा कुटिलं विपरीतं च चिन्तयति। एतेनाविप्रलम्भकत्वं भगवत उक्तम्। 'न मोहशास्त्रवक्ता विष्णुराशङ्कनीयः। 'अजस्यावक्रचेतसः' इति हि श्रुतिः' इति तत्वप्रदीपे [१.१.१]। 'नच बुद्धरूपे विप्रलम्भकत्वं विष्णोः शङ्क्यम्। तत्र श्रोतॄणामसुराणामयोग्यत्वादन्यथामतिर्जाता, नान्यथावचननिमित्ता। इतरेषां रागादिमत्त्वादन्यथोक्तिर्युक्ता। विष्णोस्तु तदभावश्रुतेर्न वक्तृदोषकृतो मोहः। स एव हि तानि सूत्राणि तत्वविषयाणि प्रशान्तसंहितायामञ्जसा देवेभ्यो व्याचख्यौ। नच पुराणादिष्वन्यथोक्तिः। यतः सूत्रकर्ता भगवान् व्यास एव पुराणादिकर्ताऽपि। नच तद्वाक्यं क्वचिदप्रमाणमाशङ्क्यम्। आप्तिसाम्यात्। 'सर्वत्र भगवत्प्रमाणाद् भगवद्वचनप्रामाण्यम्' इति मूलश्रुतिः। पूर्वपक्षसिद्धान्तविभागापरिज्ञानकृतश्च तत्र मोहः स्यात्। तच्च भाषारीतिविशेषाज्ञानाद् भवति। तथाच ब्राह्मे– 'भाषात्रयं न जानाति रीतीनां शतमेव च। पुराणार्थं वदन् याति नरकं नात्र संशयः' इति। न पुराणानां स्वतोऽन्योन्यं वा विरोधः। शैवादिपुराणेषु दर्शनभाषाप्राचुर्याद् वेदाननुसारित्वमिव प्रतीयते। नतु तदस्ति। तत्रापि विष्णोः सर्वोत्तमत्वमेव सिद्धान्तसारः। तत्रतत्र तदुक्तेः। पूर्वपक्षाधिक्यं दुर्जन मोहनार्थमिति दर्शनरहस्यम्' इति च। एतत् पुरस्थितं ब्रह्मैव हि तत् त्वया पृष्टं मुक्तनियामकम्। भाष्ये– **निरभीमानात्** सर्वात्मनाऽभिमानत्यागात्। 'आढ्योऽभिजनवानस्मि' [भ.गी.१६.१५] इत्यादिरूपो दर्पोऽभिमानः। ममेदमिति प्रणयश्च। तदतिरेकोऽभीमानः। 'आधिक्येऽधिकम्' इति सूत्रात्॥ १॥

**हꣳसः शुचिषद् वसुरन्तरिक्षस-**
**द्धोता वेदिषदतिथिर्दुरोणसत्।**

नृषद् वरसदृतसद् व्योमस-
दब्जा गोजा अद्रिजा ऋतजा [1]ऋतं बृहत् ॥ २ ॥

(भा.) 'नित्यं हीनोऽखिलैर्दोषैः साररूपो यतो हरिः ।
'हंस इत्युच्यते तस्माद् वायुस्थः शुचिषन्मतः ॥
'वरसुर्वसुरित्युक्तः स एवाप्यन्तरिक्षगः ।
'होता [2]संश्चेन्द्रियादिस्थो वेद्यां पूज्यश्च वेदिषत् ॥
'अत्यन्नश्चातिथिः प्रोक्तो यस्मादन्नं थमुच्यते ।
'स द्रोणकलशे सोमे स्थित उक्तो दुरोणसत् ॥
'नृषु स्थितश्च देवेषु वरेष्वपि स एव तु ।
'ऋतरूपे तथा वेदे व्योमाख्यप्रकृतावपि ॥
'व्योतं जगदिदं यस्यां सा व्योम श्रीरुदाहृता ।
'अब्जगोजादिकेष्वेवमास्ते[3] अब्जादिकस्ततः ॥
'तथैवर्त्तेषु मुक्तेषु गतास्ते विष्णुमित्यृताः ।
'वेदैर्म्मुख्यतया प्रोक्त ऋतमित्येव चोच्यते ।
'बृहत् पूर्णगुणत्वाच्च स एव पुरुषोत्तमः ॥ ॐ ॥

(टी.) अथापि हंस इत्यादिना विशेषोपास्तये विष्णुविशेषणं यदुक्तं तच्च 'नित्यं हीनः–' इत्यादिना महाकौर्मवचनेन व्याख्याति । हीनश्चायं दोषैः सारश्चेति हंसः । पाप्मभिरविद्धत्वान्मुख्यवायुः शुचिः । तस्मिन् निषीदतीति शुचिषत् । वरं सुखमस्येति वरसुः वसुनामा । ऋत्विजामिन्द्रियादिषु स्थित्वा होतृत्वात् होता । उत्तरवेद्यां पूज्यत्वेन स्थितत्वात् वेदिषत् । 'चतुर्भिश्च चतुर्भिश्च

---

१. भाष्यटीकानुगुणतयाऽयमेव पाठः स्यादिति भाति । '–गोजा ऋतजा अद्रिजा ऋतं–' इति प्रचलितः सर्वव्याख्यानसम्मतश्च पाठः ।

२. 'होता सश्चेन्द्रियादिस्थः' इति प्राचीनादर्शे पठ्यते । स्खलनं सम्भाव्यते ।

३. 'अब्जगोजाद्रिजेष्वेव आस्ते' इति प्राचीनादर्शे पठ्यते । '–ष्वेवमास्ते' इति स्यात् ।

द्वाभ्यां पञ्चभिरेव च । हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु' इति वचनात् स एव हि उत्तरवेद्यां यज्ञैः पूज्यः । अत्यन्नवा**नतिथिः** । थकारस्यान्नवाचकत्वात् । 'अन्नं थम्' इति छान्दोग्ये[1] [१ १.३.२] । द्रोणकलशस्थे सोमे स्थितत्वात् **दुरोणसत्** । हंसादिनामकः शुच्यादिषु स्थित इत्यर्थः । [मर्त्येषु स्थितत्वात् **नृषत्**] । मर्त्योत्तमेषु देवेषु स्थितत्वाद् **वरसत्** । ऋतव्योमाख्ययोर्वेदप्रकृत्योरपि [स्थितत्वा**दृतसद् व्योमसत्**।] विशेषादोतं हि जङ्गमादिकं जगत् प्रकृतिदेव्याम् । 'अद्भ्यः सम्भूतो हिरण्यगर्भः' इति श्रुतेरब्जो ब्रह्मा तस्मिन्नास्त इति **अब्जाः** । सरस्वत्यां जातत्वाद् गोजो गरुडादिः । तत्स्थत्वाद् **गोजाः** । आदिशब्दाददद्रिजाश्च । आदरणीयत्वाददद्रिरिति रुद्रो गद्यते । तज्ज इन्द्रः । तत्स्थः **अद्रिजाः** भगवान् । ऋतशब्दितेषु **मुक्तेष्वास्त** इति **ऋतजाश्च** स उक्तः । **ते** मुक्ता **विष्णुं गता**स्तिष्ठन्तीति हि ऋतशब्दिता भवन्ति । मुख्यत एव वेदा गच्छन्ति वाचकत्वेनेति भगवान् मुख्यतः **ऋतम्** । उक्तानुक्तगुणैः पूर्णत्वात् **बृहदिति** च **स एवोच्यते** ।। २ ।।

**(भा.चं.)** हंसः शुचिषदिति हंसगायत्री । द्वाभ्यां गायत्रीभ्याम् । पूर्वार्धे स्फुटं जगतीद्वयम् । उत्तरार्धे प्रथमचरण एकादशाक्षरः । द्वितीयश्चतुर्दशाक्षर इत्येकाक्षराधिका जगती । 'वियोमसत्' इति क्षैप्रविश्लेषे द्व्यक्षराधिका जगती । सैव द्व्यक्षराधिका गायत्री च भवति । ऋक्संहितायां 'बृहत्' इति न पठ्यते [ऋ.सं.४.४०.५] । अनेकासु संहितासु ब्राह्मणेष्वारण्यकेषूपनिषत्सु चायं मन्त्रः पठ्यते । तेनाष्टचत्वारिंशदक्षरा जगती गायत्रीद्वयं च ।। * ।।

जहाति दोषानिति **हः** । सरन्ति सर्वे गुणा एनमिति सारत्वात् **सः** । 'हं' इति बिन्दुरवधारणे । तेन हश्चासौ सश्चेति **हंसः** । 'हन्त्यध्वानमिति हंसः' इति वैयाकरणाः । नायं हंसस्यासाधारणधर्मः । नापि भगवत इति प्रमाणप्रमितमुपासनोपयोगि निर्वचनान्तरमाह भगवत्पादः । 'हंसस्त्वंहो हिनस्ति वा' इति षड्गुरुशिष्यः । हंसनामकः सन् **शुचिषत्** शुचौ वायौ सीदतीति । अत एव

---

१. लिखितादर्शे **'बृहदारण्यके'** इति पठ्यते । नूनं लिपिकृतः प्रामाद्यन् ।

वायुरपि जीवेषु हंसो बभूव। 'शुचिरित्यादित्य उच्यते' इति परेषां व्याख्यानमपि भाष्योदाहृतकौर्मवचनविरोधादेव परास्तम्। महाफलत्वाच्च वायावुपासनस्य। दोषहानात् गुणसारत्वाच्च य एव हंसनामा शुचिषत् **स एव** वसुनामा सन् **अन्तरिक्षगोऽपि** भवति। अन्तरिक्षे तद्देवतायां च। अतो वसन्त्यत्र सर्वलोका इत्यन्तरिक्षमपि वसुनामकम्। **होता सन् वेदिषत्**। होत्रुपलक्षितानामृत्विजामिन्द्रियादिषु **स्थित्वा** होमकर्मनिर्वर्तकत्वात् **होता**। स एव हूयमानश्च यज्ञवेद्यां गतः। विशेषतश्चोत्तरवेद्यां पञ्चधा हूयते पञ्चभिर्मन्त्रैः पञ्चात्मा भगवान्। 'ओ श्रावय' इति **चतुर्भिरक्षरैः**। 'अस्तु श्रौषट्' इति **च चतुर्भिः**। 'यज' इति **द्वाभ्याम्**। 'ये यजामहे' इति **पञ्चभिः**। 'वषट्' इति **पुनर्द्वाभ्याम्**। कर्मवादिनो वदन्ति– ओ भगवन् अस्मत्स्तुतिं श्रावय शृणु, अथवा अध्वर्युर्होतारमाह– ओश्रावय, अस्माकं आह्वमन्त्रानाश्रावय, वर्णव्यत्यासेन आकारस्य ओकारः। एवमाद्यां वाचं व्याहरन्त ऋत्विजो जुह्वतीति। स्थूलमिदं दर्शनम्। तत्ववादिनो वदन्ति– पञ्चभिरेभिर्मन्त्रैः पञ्चात्मा विष्णुराहूयते हूयते चेति। कानि पञ्च रूपाणि? यज्ञः, यज्ञपुरुषः, यज्ञेश्वरः, यज्ञभावनः, यज्ञभोक्ता चेति। 'यज्ञो यज्ञपुमान्नाम यज्ञेशो यज्ञभावनः। यज्ञभुक् चेति पञ्चात्मा यज्ञैरिज्यो हरिः स्वयम्' इति हि स्मरन्ति। तथा चायं मन्त्रार्थः–ओ अधिकोच्च। श्रयन्तीति श्रा भक्ताः। तानवति यमयति चेति श्रावयः। श्रावकान् याति रक्षकत्वेनेति वा। अधिकं सदुच्चं च ब्रह्म अस्तुनामकम्। श्रौ सर्वाश्रये वायौ गतं षड्गुणात्मकं श्रौषट्। श्रौ सीदतीति वा। श्रौ वायौ गतः सन् सस्ति शेते हृदयगुहायामिति वा। श्रौ वायौ शेते वा। श्रौ श्रियां शेते वा। श्रौ श्रुतौ शेते सीदति वा प्रतिपाद्यतयेति वा। सर्वाश्रयः सन्नधिकोच्चः सीदति वा। इज्यत इति यजः। याति सर्वत्र बहुधा जायते चेति वा। येन वायुना सह जायते वा। ये वायौ गतः यजताममं अज्ञानं हिनस्तीति च यजामहिः। यजद्भिरा महीयते वा। वकारो बलवचनः। बलरूपः षड्गुणात्मकश्चेति वषट्। वं जलम्। तत्र शेते वा। एवमुत्तरवेद्यां स्थितः पञ्चात्मा नारायणः स्तुतः–**'होता वेदिषत्'**

इति। 'होता दाता सर्वस्य वृष्ट्यादेः' इति षड्गुरुशिष्यः। अतिथिनामा **द्रोणकलशे सोमे स्थितः**। पेये च गतः। पाता च स एवेति। द्रवति द्रूयते वा द्रोणः। द्रु गतौ। द्रोणाख्यः कलशः। मानभाण्डमित्येतत्। द्रोण एव दुरोणः। उकारेणोत्कर्षमाह। सोमाधिष्ठानत्वात्। नहि द्रोणमात्रमिह विवक्षितम्। किन्तु सोमपूर्णो द्रोणः। किञ्च यत्र द्रूयते स द्रोणः। यच्च द्रूयते स सोम इत्युभयमप्यत्र विवक्षितम्। तदेतदाह– **'स द्रोणकलशे सोमे स्थितः'** इति। 'अतिथिस्तिथिहीनत्वाद् दुरोणं यज्ञियं गृहम्' इति षड्गुरुशिष्यः। 'अततीत्यतिथिः' इति वैयाकरणाः। अत सातत्यगमने। 'अतेरिथिन्' [१.४४] इति दशपादिका। कौर्मवचनं त्वपूर्वमर्थान्तरमाह– अतिशयितं थमन्नमस्येति। ननु तर्ह्यतिथमिति भवति। अथापि पुनराधिक्येन विलक्षणतया चातिथोऽतिथिर्भवति। अतिशये हि तृतीयाक्षरमतिदिशन्ति। सर्वात्तेत्यर्थः। **व्योतं जगदिति**। **व्योतमनुस्यूतम्**। विधाने चाऽधाने च ऊयते जगदस्मिन्निति व्योम प्रधानम्। श्रीतत्वमित्येतत्। मनिन्प्रत्यये निरूढोऽयं शब्दो निपात्यत इति वैयाकरणाः [दशपा. ६.७९]। **'सा व्योम श्रीरुदाहृता'** इति प्रमाणवचनसूचितम्, **'अब्जा गोजाः'** इत्यादिपदानामपूर्वमर्थविशेषं स्वयं मुखत आह– **अब्जो ब्रह्मा तस्मिन्नास्त** इत्यादिना। **'ऋतसद् व्योमसत्'** इति चेतनाचेतनप्रकृत्यतीतत्वमुक्तम्। अथ **'वरसत्'** इत्युक्तं ब्रह्मादिसर्वदेवतोत्तमत्वं स्फुटमुच्यते– **'अब्जा गोजा अद्रिजाः'** इति। एतदेव मङ्गलपद्ये भाष्यकारेणाऽविष्कृतम्– ब्रह्मरुद्रादि'सर्वप्राणिहृदिस्थाय वामनाय नमोनमः' इति। ते हि मुख्यतः प्राणिपदगदिताः प्राणाख्यं नारायणं सदा हृदि दधतः। गौः सरस्वती। तज्जेषु गरुडशेषरुद्रेष्वास्त इति **गोजाः**। आद्रियत इन्द्रादिभिरिति **अद्री रुद्रः**। 'अद्रिरादरणीयत्वात्' इति हि निर्वदन्ति। तज्ज इन्द्रोऽद्रिजः। इन्द्र इत्युपलक्षणम्। सर्वोऽपीन्द्रियमानिदेवगणो ह्यद्रिजः। विशिष्य चेन्द्रसमकक्षो मनोमानी स्कन्दः। आकाशमानी विनायकश्च। तस्मिन्नास्त **इत्यद्रिजाः**। न केवलममुक्तेषु, मुक्तेष्वपि नियामकतयाऽस्त इत्याह– **ऋतजा** इति। ऋताः

मुक्ताः। ऋता ये जातास्त ऋतजा अपि मुक्ताः। तत्राऽस्त इत्यृतजाः। यद्यपि मुक्ता अप्यृताः। अथापि मुख्यत ऋतपदगदितो भगवानेव। अत एव त ऋतजा इत्युक्ताः। पूर्वमनृताः सन्तो मुक्त्यनन्तरमृता जाता इति। ऋतेषु मुक्तेषु जातः नित्याभिव्यक्तः सन्नास्त इति वा। वैयाकरणास्तु 'अप्सु जायते' इत्यादि विगृह्य विट्प्रत्ययेन अब्जाः, गोजाः, इत्यादिरूपं निष्पिपादयिषन्ति। तथाहि स्मरन्ति–'जन-सन-स्वन-क्रम-गमो विट्' [अष्टा.सू.३.२.६७] इति। 'जनादिभ्यो धातुभ्यः सुबन्त उपपदे, छन्दसि विषये, विट्प्रत्ययो भवति' इति जयादित्यः। तदपि विवक्षितमर्थान्तरमेवेति न विरोधः। तथाहि श्रुत्यन्तरम्– 'अब्जा इत्येष वा अब्जाः। अद्भ्यो ह्येष प्रातरुदेत्यपः सायं प्रविशति। गोजा इत्येष वै गोजाः। ऋतजा इत्येष वै सत्यजाः। अद्रिजा इत्येष वा अद्रिजाः' [ऐ.ब्रा.१८.६] इति। व्याचख्यौ च षड्गुरुशिष्यः– 'गोभिः सहस्रसङ्ख्यैस्तु रश्मिभिः सह जायते। ऋतं सत्यं सत्सु साधु सतां ह्येषोऽभिरक्षकः। उदयाख्यान्महाद्रेस्तु प्रातरेष विजायते' इति। एवं रमाब्रह्मादिसर्वजगन्नियामकत्वात्, **उक्तानुक्तसर्वगुणैः पूर्णत्वाच्च मुख्यतया सर्ववेदैः प्रोक्तश्च स एव क्षराक्षर-पुरुषोत्तम** इत्याह– **ऋतमिति**। ऋच्छन्ति **गच्छन्ति वाचकत्वेन** सर्वे वेदा एनमिति **ऋतम्**। 'तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनाम्', 'ऋतं सत्यं परं ब्रह्म' इत्यादिश्रुतिसमाख्यानाय नपुंसकप्रयोगः। **'बृहत्'** इति च तस्यैव परब्रह्मत्वं स्फोरयति ॥ २ ॥

**ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति।**
**मध्ये वामनमासीनं विश्वे देवा उपासते ॥ ३ ॥**

**(भा.) 'न केवलं प्राण एव चेतनानां विधारकः।**
**'किन्तु विष्णुं समाश्रित्य प्राणो जीवान् बिभर्त्त्ययम्।**
**'अतो मुख्याश्रयो विष्णुश्चेतनानां स्वतन्त्रतः ॥ * ॥**

**(टी.) 'न केवलम्–'** इत्यादिना **'ऊर्ध्वं प्राणम्–'** इत्यस्याभिप्रायं दर्शयति । पूर्वोक्ताशेषविशेषं **वामनं** मुख्यप्राणस्यापि प्रेरकत्वेन सर्वप्राणिहृदि स्थितं ब्रह्मादयो **देवाः** सर्वे हि **उपासते** ॥ ३ ॥

**(भा.चं.)** ऊर्ध्वं प्राणमिति प्रथमद्वितीयचरणयोर्विश्लेषेण केवलाऽनुष्टुप् । **'मध्ये'** देहमध्ये हृदि । प्राणोऽपान इति मुख्यप्राणस्यैव रूपद्वयम् । अत एव–**'प्राणो जीवान् बिभर्त्ययम्'** इति प्रमाणवचनमेकीकृत्याऽह । 'प्राणापानरूपी मुख्यप्राणः' इति चोपरि टीकावाक्यम् । 'मुख्यस्यैव स्वरूपाणि प्राणाद्याः पञ्च वायवः' इति हि श्रुतिः । 'यद् वै प्राणिति स प्राणः यदपानिति सोऽपानः' इति च । 'प्राणापानविडायां च पिङ्गलायां च वर्ततः' इति च स्मरन्ति । 'प्राणः प्रवृत्तिहेतुः स्यादपानस्तु निवर्तने' इति च । बहुधा प्राणाद्याः पठ्यन्ते । क्वचित् प्रधानवायुरेव पञ्चात्मा । क्वचिद् वायुपुत्राः पञ्च । क्वचित् प्राणादिनामा पञ्चात्मा गरुडः । क्वचित् प्राणापानाविति शेषगरुडौ । उदानसमानौ रुद्रेन्द्रौ । व्यानो मुख्यप्राण इति । सर्वेऽप्यर्था अत्र यथासम्भवं मुख्यामुख्यवृत्त्या ग्राह्याः । उपलक्षणमेतत् । मुख्यप्राणम्, प्राणादीन् दशावान्तरप्राणान्, अपरांश्च तत्वाभिमानिनो देवान् परित उपासीनान् तत्तत्कार्येषु **'ऊर्ध्वं प्रत्यक्** अधश्चेति सर्वतः **अस्यति** प्रेरयति । एवं सर्वप्रेरकतया **मध्य आसीनं वामनं' सर्वे 'देवा उपासते'** । 'योऽयं देहे देहिनामूर्ध्वं प्राणमुन्नयति, अपानमभिमुखमस्यति, तं मध्य आसीनं देवा उपासते' इति तत्वप्रदीपे । 'शब्दादेव प्रमितः' [१.३.२४] इति सूत्रम् । 'वामनशब्दादेव विष्णुरिति प्रमितः' इति च भाष्यम् । ननु वामनशब्दादेव प्रमित इति सूत्रकार एव कण्ठरवेण किमिति नाऽह? विश्वतोमुखत्वादेव । एकयोक्त्या बहूनि श्रुतिवचनानि निर्णीतार्थानि यथा भवेयुः । यदि वामनशब्दादेव इत्यसूत्रयिष्यत्, तदा 'मध्ये वामनमासीनम्' इत्येकस्यैव मन्त्रस्य निर्णयाय सूत्रमिदं प्रवृत्तमित्यभावयिष्यन्नेष्यन्तोऽध्येतारः । मा स्म तद् भवदित्येवमाह । तेन समग्रस्य काठकस्य विष्णुपरतां चाऽह । तद् यथा– 'तद् विष्णोः परमं पदम्' इति विष्णुशब्दादेव समग्रकाठकप्रतिपाद्यो विष्णुरिति प्रमित इत्यादि ॥ ३ ॥

**अस्य विस्रꣳसमानस्य शरीरस्थस्य देहिनः ।**
**देहाद् विमुच्यमानस्य किमत्र परिशिष्यत एतद् वै तत् ॥ ४ ॥**

**(टी.)** एवमुपासकस्य मुक्तिः फलमिति दर्शयति– **अस्येति** । अस्य वाक्यस्याभिप्रायः प्रागेव प्रसङ्गात् प्रकटितः । 'देहाद् विशेषेण मोचनं नाम मुक्तिः' इत्यादौ । विस्रंसनं स्थूलदेहपरित्यागः । देहाद् विमुक्तिः लिङ्गमोक्ष इति हि तत्राभिप्रायः ॥ ४ ॥

**(भा.चं.)** 'देहिनः' लिङ्गदेहबद्धस्य । संसारिण इत्येतत् । **'देहाद् विमुक्तिर्लिङ्गमोक्षः'** इति हि व्याख्यातम् । चरम**'शरीरस्थस्य'** जीवस्य प्रारब्धकर्मप्रहाणेन **विस्रंसमानस्य** स्थूलदेहं परित्यजतः, **लिङ्गदेहाद्** अपि **विमुच्यमानस्य** यत् सह **परिशिष्यते तद् वै** मुक्तनियामकं ब्रह्म नारायणाख्यम् ॥ ४ ॥

**न प्राणेन नापानेन मर्त्यो जीवति कश्चन ।**
**इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ ॥ ५ ॥**

**(टी.)** प्राणापानरूपी मुख्यप्राणो हि जीवं जीवयति । अतः स एव मुख्यत उपास्य इत्यत आह– **न प्राणेनेति** । अस्यार्थः **'न केवलम्'** इत्यादिना पूर्वतनवाक्येन मुख्यत एव विवृतः । अतो न पृथग् व्याख्यातः ॥ ५ ॥

**(भा.चं.)** अस्य विस्रंसमानस्येति, न प्राणेनेति च केवलाऽनुष्टुप् । ये जीवन्ति तेभ्यः, यौ जीवयतस्ताभ्यां च **इतरेण** भिन्नेन विष्णुना सर्वेऽपि **जीवन्ति** । तुना सर्ववैलक्षण्यमाह– असमाधिकेन **इतरेणेति** ॥ ५ ॥

**हन्त त इदं प्र वक्ष्यामि गुह्यं ब्रह्म सनातनम् ।**
**यथा च मरणं प्राप्याऽत्मा[1] भवति गौतम ॥ ६ ॥**

---

१. 'प्राप्य आत्मा' इति विश्लिष्यैव पठन्ति केचित् ।

**(टी.)** **'येन रूपं रसं गन्धम्'** इत्यारभ्य एतत्पर्यन्तं यदीयधर्मा उपदिष्टास्तदेवात्र **'हन्त त इदं प्र वक्ष्यामि गुह्यं ब्रह्म'** इत्याह। एषां वाक्यानामभिप्रायः प्रागेव न्यगद्यत प्रथमत एव धर्मिज्ञानसिद्ध्यर्थम् ॥ ६ ॥

**(भा.चं.)** हन्त त इदमिति प्रथमपादे नवाक्षराणि। उत्तरार्धे 'प्राप्य आत्मा' इति पादयोर्विश्लेषेण षोडशाक्षराणि। तेनैकाक्षराधिकाऽनुष्टुप्। प्रतिजन्मभावि **मरणं** चरम**मरणं** च **प्राप्य आत्मा** जीवो **यथा**यथा **भवति** तदपि **वक्ष्यामि। धर्मिज्ञानसिद्ध्यर्थम्, 'वक्ष्यामि'** इति भविष्यदर्थकलकारसामञ्जस्यार्थं च। पाठक्रमाद्धि बलीयानर्थक्रमः। **प्र वक्ष्यामि** प्रकृष्टं ब्रह्म वक्ष्यामि, तदपि प्रकर्षेण वक्ष्यामि, प्रकटं वक्ष्यामि, प्रतनमेव च वक्ष्यामि, पूर्वैः पूर्वतरं प्रोक्तमेव वक्ष्यामि, न स्वोपज्ञं नूतनं किञ्चिदित्युपसर्गार्थः। प्रतनं हि वचनं प्रवचनमाचक्षते ॥ ६ ॥

**योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः।**
**स्थाणुमन्येऽनु सँय्यन्ति यथाकर्म्म यथाश्रुतम् ॥ ७ ॥**

**(भा.चं.)** योनिमन्य इति केवलाऽनुष्टुप्। **शरीरत्वाय** शरीरवत्त्वाय। मत्वर्थीयोऽच्। शीर्यमाणत्वाय वा। नृतिर्यगादि**शरीरत्वाय योनिं** पितृद्वारा **प्रपद्यन्ते**। स्थावरजन्मने **स्थाणुं** स्वकर्मश्रुतानुगुणं साक्षात् **संयन्ति** विना योनिप्रपदनम्। यद्वा **यथा कर्म** तदनुगुण**मन्ये स्थाणुं** संयन्ति, **अन्ये** च **योनिं प्रपद्यन्ते**। ननु के योनिं प्रपद्यन्ते? के स्थाणुम्? आह– **यथा श्रुतमिति**। यस्ययस्य कर्मणः यद्यत् फलम्, याया च योनिः, यद्यच्च जन्मेति यथा शास्त्रेषु श्रुतं तदनुगुणं योनिं वर्च्छन्ति स्थाणुं वेति। केचित् कौतुकं दमयितुमक्षमा एवं व्याचक्षते–'अन्ये चिन्तकाः योनिं जगत्स्रष्टारं चतुर्मुखं ब्रह्मेति मन्यन्ते। अन्ये स्थाणुं शिवम्। वस्तुतस्तु य एष सुप्तेषु जागर्ति स भगवान् वासुदेव एव परं ब्रह्म' इति। कुतूहलिनामयमप्यर्थो मनागक्षिनिक्षेपमर्हति ॥ ७ ॥

[१]य एष सुप्तेषु जागर्त्ति कामङ्कामं पुरुषो निर्म्ममाणः[२] ।
तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते ।
तस्मिन् लोकाः श्रिताः सर्वे तदु नात्येति कश्चनैतद् वै तत्॥
॥ ८ ॥

**(भा.चं.)** य एष सुप्तेष्विति षट्चरणमतिच्छन्दोऽतिजगती नाम । तथाहि प्रथमपादो नवाक्षरो बार्हतः । द्वितीय एकादशाक्षरस्त्रैष्टुभः । ततश्चत्वार आनुष्टुभाः । संहत्य द्विपञ्चाशदक्षराऽतिजगती । **'कामङ्कामं'** स्वेन सङ्कल्पितं-सङ्कल्पितम् । सङ्कल्प्यसङ्कल्प्य वा । **'निर्ममाणः'** अतिशयेन निर्मिमाणः स्वाप्नान् पदार्थान् । जीवेषु **'सुप्तेषु जागर्ति पुरुषो'** हवै नारायणः । **'शुक्रं'** शोकरहितं शुद्धं च । **अमृत**ममरणमानन्दरूपं च । तदिच्छां **कश्चन नात्येति** ॥ ८ ॥

अग्निर्यथैको भुवनं प्रविष्टो रूपंरूपं प्रतिरूपो बभूव ।
एकस्तथा सर्वभूतान्तरात्मा रूपंरूपं प्रतिरूपो बहिश्च ॥ ९ ॥

वायुर्यथैको भुवनं प्रविष्टो रूपंरूपं प्रतिरूपो बभूव ।
एकस्तथा सर्वभूतान्तरात्मा रूपंरूपं प्रतिरूपो बहिश्च ॥ १० ॥

सूर्यो यथा सर्वलोकस्य चक्षु-
र्न लिप्यते चाक्षुषैर्बाह्यदोषैः ।
एकस्तथा सर्वभूतान्तरात्मा
न लिप्यते लोकदुःखेन बाह्यः ॥ ११ ॥

**(भा.)** 'अग्निर्यथैको लोकेषु प्रविष्टोऽन्यो न विद्यते ।
'पाकादिकर्त्ताऽथाप्यस्य देवस्य प्रतिरूपकाः ।
'रूपंरूपं प्रति ह्येते सन्त्यचेतनवह्नयः ॥

---

१. 'य एषु सुप्तेषु' इत्येके पठन्ति । २. 'निर्मिमाणः' इति शङ्कररङ्गरामानुजौ ।

‘एवं देवो वायुरपि धारकोऽन्यो न विद्यते ।
‘रूपंरूपं तथाऽप्यस्य प्रत्यभूत् पररूपकः ।
‘अचेतनः स्पर्शगम्यो योऽयमेवं जनार्दनः ॥

‘एकः स्वतन्त्रो नान्योऽस्ति सर्वजीवान्तरस्थितः ।
‘रूपंरूपं प्रति ह्यस्य प्रतिबिम्बाख्यचेतनाः ॥

‘बाह्याश्च ते ततो नास्य स्वरूपं ते कथञ्चन ।
‘अनादिप्रतिबिम्बाश्च बभूवुस्ते ह्यनन्तकाः ॥

‘सूर्यो यथाऽऽन्तरश्चक्षुः प्रतिबिम्बोऽस्य बाह्यकः ।
‘बाह्यचक्षुर्गतैर्दोषैरन्तश्चक्षुर्न लिप्यते ।
‘अन्तश्चक्षुर्देवता तु बाह्यचक्षुरचेतनम् ॥

‘एवं बाह्यः स्वतन्त्रत्वाज्जीवेभ्यः पुरुषोत्तमः ।
‘अस्वतन्त्रस्य जीवस्य दुःखैर्नैव हि लिप्यते ॥

‘चेतनाभासको जीवः परमश्चेतनो हरिः ।
‘स्वतन्त्रत्वात् स्वतन्त्रो हि नैव दोषेण लिप्यते’

इति महाकौर्म्मे ॥

**स एक एव सर्वभूतान्तरात्मा । तस्य रूपंरूपं प्रति प्रतिरूपाख्यो जीवो बभूव । बहिश्चासौ परमात्मनः, नितरां भिन्नः । परतन्त्रत्वात् । ‘आत्मैवेदमग्र आसीत्’ इत्यादिवदनादित्वापेक्षया ॥ ॐ ॥**

**(टी.)** अथापि अस्य ब्रह्मणः परमज्योतिष्ट्वात् अग्न्यादिदृष्टान्तेन जीवभेदं सर्वोत्कर्षं च दृढयति– **‘अग्निर्यथैकः–’** इत्यादिवाक्यैः । यथाऽग्निदेवस्त्वेक एव लोकेषु पचनादिकर्ता, यथा वायुदेव एक एव सर्वधारको भवति, तयोः प्रतिबिम्बभूता अचेतना वह्निवायवः तद्भिन्नाः तन्नियताश्च गम्यन्ते । तथा भगवानेक एव स्वतन्त्रः सर्वजीवान्तर्यामी भवति । ते च ततः केवलभिन्ना अनुभूयन्ते तत्प्रतिबिम्बत्वात् । नहि बिम्बप्रतिबिम्बयोरैक्यं सम्भवति । नच तावताऽग्न्यादि-

प्रतिबिम्बवत् अनित्यत्वं जीवानां शङ्क्यम्। यावदात्मभावित्वोक्तेः। तदाह– **अनादिप्रतिबिम्बाश्चेति** ॥ ❊ ॥

[जीवानां परमात्मनो] भेद उक्तः। तथाऽपि तेभ्यस्तस्य न कश्चिद् भेद [इति न शङ्क्यम्।]। तस्यापि तेभ्यो **बाह्य** इति विस्पष्टं भेदोक्तेः। नच जीवजडत्वादयः प्रतिबिम्बधर्माः बिम्बे जायन्ते। प्रत्युत बिम्बधर्मा एव यथायोगं प्रतिबिम्बेषु भवन्ति। अतो ब्रह्मणि दुःखादिदोषा न भवेयुः। जीवेषु च ज्ञानादिगुणा युज्येरन्। जीवेशयोः बिम्बप्रतिबिम्बभावः कीदृश इत्याकाङ्क्षायामाह– **चेतनाभासक** इति। स्वतन्त्रत्वं तु 'एको वशी' इति पठ्यते। **एकस्तथे**त्यादेः शब्दयोजनां करोति– **स एक एवे**त्यादिना ॥ ९–११ ॥

**(भा.चं.)** अग्निर्यथैक इति वायुर्यथैक इति सूर्यो यथेति च केवला त्रिष्टुप्। एको वशीति च। अथ त्रिषु स्थानेषु भगवतस्त्रीण्यधिष्ठानानि – अग्निर्वायुरादित्य इति। भगवदुपासकानां मुख्यप्रतीकानि चैतानि। अतस्तद्दृष्टान्तेनैव भगवतः सर्वविलक्षणत्वं मनस्यारोहयति श्रुतिः– **'अग्निर्यथैको भुवनं प्रविष्टः–'** इत्यादिभिस्त्रिभिर्मन्त्रैः। बिम्बस्य **'रूपंरूपं'** प्रति। रूपंरूपमिति वीप्सया एकस्याप्यग्नेर्वायोश्च बहुरूपत्वं दर्शयति। **प्रतिरूपः** प्रतिबिम्बः। आह च तत्वप्रदीपाचार्यः–'प्रतिरूपो बभूव प्रतिबिम्बो बभूवेत्यर्थः'[२.३.५०] इति। 'परमेश्वरस्य रूपंरूपं प्रति प्रतिबिम्बाख्यो जीवो बभूव' [३.२.१८] इति च। भाष्योदाहृतवचने **पररूपक** इति च प्रतिबिम्बमाचष्टे। परः वस्तुतो भिन्नः, अथापि बिम्बवदात्मानं रूपयतीति रूपकः प्रतिबिम्बः। 'रूप रूप-क्रियायाम्'। 'रूपक्रिया रूपस्य करणं दर्शनं वा' इति हि क्षीरस्वामी। रोपयतीति वा रूपकः। 'रुप विमोहने'। 'रूपारोपात्तु रूपकम्' इति ह्यालङ्कारिकाः। अत्र केनचिदुक्तम्– 'जीवस्य ब्रह्मप्रतिबिम्बत्वे बिम्बप्रति-बिम्बयोरभेदात् जीवब्रह्मैक्यरूपेऽद्वैते पर्यवसानम्' इति, अविदितशास्त्र-प्रक्रिय इति क्षन्तव्योऽयम्। न क्वापि बिम्बप्रतिबिम्बयोरैक्यम्। नहि जले प्रतिफलितं सूर्यकं सूर्यमाचक्षते मतिमन्तः ॥ ❊ ॥

ननु **'प्रतिरूपो बभूव'** । नेदानीं भवति । न भविष्यति च । नेत्याह भाष्यकार-भट्टारकः– **आत्मैवेदमग्र आसीदित्यादिवत्** प्रतिरूपो बभूवेत्यपि **अनादित्वापेक्षया**, न भूतकालमात्रापेक्षयेति । तथाहि मन्त्रार्थः– **यथा अग्निः** जडाग्नीनामभिमानी अग्निनामा देवः **एक** एव **भुवनं प्रविष्टः** सन् पाकादिकर्ता भवति । तस्य चैकैकं बिम्बरूपं प्रति प्रतिबिम्बाख्यो जडवह्निर्भवति । **तथा सर्वभूतानामन्तरात्मा** भगवानपि **एक** एव सर्वं करोति । तस्य च **रूपंरूपं** प्रति **प्रतिरूपः** प्रतिबिम्बरूपः जीवो भवति । प्रतिबिम्बत्वादेव चासौ जडवह्निर्जीवश्च बिम्बभूतादग्निदेवाद् विष्णोश्च **'बहिश्च' नितरां भिन्नश्च** भवति । एवं वायुदेव इव भगवान् । जडवायव इव जीवाः । एवं चक्षुरभिमानी **सूर्यः** सर्वजीवाना**मान्तरश्चक्षुः** । तत्प्रतिरूपाणि जडानि बाह्यचक्षूंषि । **यथा** प्रतिरूपाणां बाह्यजडचक्षुषां **दोषैः** बिम्बरूपः **सूर्यो न लिप्यते** एवं भगवानपि न जीवानां **दुःखैः** दुःखी भवति । **नहि प्रतिबिम्बधर्माः** क्वापि **बिम्बे** भवन्ति । किन्तु **बिम्बधर्मा** एव **प्रतिबिम्बेषु** । तस्मात् प्रतिबिम्बेभ्यो बिम्बोऽपि **'बाह्यः' नितरां भिन्न** एव ॥ ९–११ ॥

**एको वशी सर्वभूतान्तरात्मा**
**एकꣳ रूपं[1] बहुधा यः करोति ।**
**तमात्मस्थं येऽनुपश्यन्ति धीरा-**
**स्तेषां सुखꣳ शाश्वतं नेतरेषाम् ॥ १२ ॥**

**(भा.)** **'आत्मनिस्थं हरिं जानन् मुच्यते नात्र संशयः ।**
**'जीवैक्येन तु तं जानंस्तमस्यन्धे पतेद् ध्रुवम्' इति च ॥ * ॥**

**(टी.)** योऽयमित्थं स्वातन्त्र्याद् दुःखलेशवर्जित इत्युक्तः, तद्दर्शनं मोक्षसाधनमित्यभिप्रायेणाऽह– **एको वशीति** । **यस्तु** स्वावश्यातिरेकात् **एक**मेव स्वकीयमूलरूपं मत्स्यादिरूपेण **बहुधा करोति तमात्मस्थमनु-**

---

१. **'एकं बीजं बहुधा'** इति रङ्गरामानुजीयपाठः ।

पश्यतां **शाश्वतं सुखं नेतरेषामात्माभेदज्ञानिनाम्**। तदेवाऽह– **'आत्मनिस्थम्–'** इत्यादिना कौर्मवचनेन। **शाश्वतं सुखं** मोक्षगं हि ॥ १२ ॥

**(भा.चं.)** एकः सर्वोत्तमः, एष एव करोतीति सर्वकर्ता च। अतोऽन्यत् सर्वं तदधीनमिति स **वशी** कथ्यते। वशयति स्वाधीनं करोति सर्वमिति। वशीकृत्य प्रेरयितुमेव सर्वभूतानामन्तर्व्याप्नोति। अन्तरपि नैकरूपः। किन्तु लीलया **एकमेव रूपं** अनेकधा **करोति**। न केवलमन्तः। किन्तु बहिरपि मत्स्यादिरूपैर्बहुधा **भवति**। तदुक्तम्– 'परमात्मने सततमेकरूपिणे दशरूपिणे शतसहस्ररूपिणे। अविकारिणे स्फुटमनन्तरूपिणे सुखचित्समस्ततनवे नमोनमः' [म.वि.८.४१] इति। **तं आत्मनिस्थं** शास्त्रानुसारेण **ये पश्यन्ति**, नत्वात्मभूतम्, **तेषां** मोक्षरूपं **शाश्वतं सुखं** भवति। **इतरेषां** तु सर्वथा **न** भवति। केषामितरेषाम्? आत्मनिस्थं नानुपश्यताम्। तदेव स्फुटमाह टीकायाम्–**'आत्माभेदज्ञानिनाम्'**। आत्मनः परमात्मना, आत्मनां च परस्परमभेदं ये जानन्ति तेषाम्। न केवलं सुखाभावः। किन्तु **'जीवैक्येन तु तं जानंस्तमस्यन्धे पतेद् ध्रुवम्'**। ध्रुवमिति तमसि पतनं निश्चितं निरवधिकं चेत्यर्थः। 'एको वशी निष्क्रियाणां बहूनामेकं बीजं बहुधा यः करोति। तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्'[६.१२] इति श्वेताश्वतरोपनिषदि ॥ १२ ॥

**नित्यो नित्यानां चेतनश्चेतनाना-**
**मेको बहूनां यो विदधाति कामान्।**
**तमात्मस्थं येऽनुपश्यन्ति धीरा-**
**स्तेषाꣳ शान्तिः शाश्वती नेतरेषाम्** ॥ १३ ॥

**(टी.)** एवं बहुरूपत्वोपासनमुक्तम्। अथ सर्वकामप्रदत्वोपासनमाह–**नित्यो नित्यानामिति**। **एको नित्यश्चेतनः बहूनां नित्यानां चेतनानां कामान् विदधाति**। तद्दर्शिनां शाश्वती सुखपरिपूर्तिर्भवति ॥ १३ ॥

**(भा.चं.)** नित्यो नित्यानामिति पूर्वार्धं जागतम्। उत्तरार्धं त्रैष्टुभम्। तेन द्व्यक्षरोना जगती। **नित्यानामपि नित्यो** नित्यताप्रदः। **चेतनानामपि चेतनः** परमचेतन इति च। 'अनित्यानां विनाशिनां नित्योऽविनाशी' इति परेषां व्याख्यानं न विदुषां चित्तमावर्जयति। चेतनश्चेतनानामित्युत्तरवचनेनानानुगुण्याच्च। शं सुखम्। तस्यान्तिमा काष्ठा **'शान्तिः'** सुखपरिपूर्तिः। अस्य मन्त्रस्य पूर्वार्द्धमविकलं श्वेताश्वतरेऽपि [६.१३] पठ्यते॥ १३॥

**तदेतदिति मन्यन्तेऽनिर्देश्यं[1] परमꣳ सुखम्।**
**कथं नु तद् विजानीयां किमु भाति न भाति वा[2]॥ १४॥**

**(भा.)** एतदेव भगवद्रूपं परमं सुखम्। ज्ञानिसुखं तु तद्विप्रुण्मात्रम्।

'ब्रह्मादीनां च मुक्तानां सुखं विष्णुसुखस्य तु।
'प्रतिबिम्बस्तु विप्रुट्को विष्णोरेव परं सुखम्॥
'सम्यग् भाति न भातीति जानीयां तत् कथं न्वहम्।
'तत्प्रसादमृते दिव्यमनिर्देश्यं परं सुखम्'

इति महावराहे॥ ❋॥

**(टी.)** यदेकं ज्ञानिनां शाश्वतसुखप्रदं परमात्माख्यं ब्रह्म तत् स्वयं कीदृशमित्याकाङ्क्षायामाह– **तदेतदिति**। चेतनादिभिरत्यन्तविलक्षणत्वात् **एतद्** रूपं भगवतः **परमं सुखम्**। अत एव **अनिर्देश्यं** च। ज्ञानिसुखं तु तत्सुखापेक्षया **विप्रुण्मात्रम्**। **भगवद्रूपं परमं सुखमिति** भाष्योक्त्या गुणगुण्यभेदाभिप्रायोऽपि प्रकटितः। अत्र **'ब्रह्मादीनां च–'** इत्यादिकं महावराहवचनं चाऽह॥ १४॥

**(भा.चं.)** **तदेतद्** **भगवद्रूपमेव** परमसुखात्मकमिति विद्वांसो **मन्यन्ते**। **'अनिर्देश्यं'** इयदिति इत्थमिति च निर्देष्टुमशक्यम्। **परमं** दुःखासम्भिन्नमनन्तं च। ममापि ध्यानकाले **तद् भाति** वा **न वा** न जाने। का कथाऽन्येषाम्। **किं**

---

१. **'मन्यन्ते निर्देश्यम्'** इत्येके प्रतृण्णं पठन्ति।

२. **'किमु भाति विभाति वा'** इति शाङ्करः पाठः। रङ्गरामानुजीयेऽपि तथा।

उ उच्चैः **भाति** इति च। तदेतदाह– **'सम्यग् भाति'** इति। तदेतदिति केवलाऽनुष्टुप् ॥ १४ ॥

**न तत्र सूर्यो भाति न चन्द्रतारकं**
**नेमा विद्युतो भान्ति कुतोऽयमग्निः ।**
**तमेव भान्तमनुभाति सर्वं**
**तस्य भासा सर्वमिदं वि भाति ॥ १५ ॥**

**इति द्वितीये द्वितीया वल्ली**

—०—

**(टी.)** न केवलं परमसुखमेव भगवद्रूपम्। किन्तु परञ्ज्योतिश्चेत्याह–**न तत्रेति**। यथैवात्र प्रद्योतने खद्योतो न द्योतते तथा परमज्योतिषि विष्णौ सूर्यादयो न भासन्ते। तथाऽपि तद्भासा जगद् भातीत्याह–**तमेवेति**। **तस्य** विष्णोर्**भासैव सर्वं भातीत्यर्थः**। चन्द्रश्च तारकाश्चेति **चन्द्रतारकम्** ॥ १५ ॥

**(भा.चं.)** 'अनुभानं नाम तदिच्छानुरोधेन भानम्। न काचिदपि कृतिर्हरीच्छानुरोधनमन्तरेण भवति। भानश्रुत्याऽपि कृतिरुपसङ्गृहीता। भानपूर्वकत्वात् कृतेः' इति तत्वप्रदीपे [१.३.२२]। 'न तद् भासयते सूर्यो न शशाङ्को न पावकः। यद् गत्वा न निवर्तन्ते तद् धाम परमं मम' [१५.६] इति हि गीतायम्। 'यदादित्यगतं तेजो जगद् भासयतेऽखिलम्। यच्चन्द्रमसि यच्चाग्नौ तत् तेजो विद्धि मामकम्' [१५.१२] इति च। 'मामकं मदधीनम्। मत्तेज एवादित्यादिस्थितं तत्तेजःप्रेरकत्वेनाखिलं भासयतीत्यर्थः' इति च तत्वप्रदीपे [१.३.२३]। न केवलं **तमनुसृत्य भाति**। किन्तु **तस्य भासैव भाति**। मन्त्रोऽयमाथर्वणे [२.२.११], श्वेताश्वतरे [६.१४] च पठ्यते। न तत्र सूर्य इति प्रथमचरणे त्रयोदशाक्षराणि, द्वितीये द्वादश, तृतीयतुरीययोरेकादशेत्येकाक्षरोना जगती ॥ १५ ॥

—०—

ऊर्ध्वमूलोऽवाक्शाख[1] एषोऽश्वत्थः सनातनः ।
तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते ।
तस्मिन् लोकाः श्रिताः सर्वे तदु नात्येति कश्चनैतद् वै तत्॥
॥ १ ॥

(भा.) 'सर्वोच्चो भगवान् विष्णुर्म्मूलं भूमिवदस्य तु ।
'जगदाख्यस्य वृक्षस्य शाखा देवास्ततोऽधमाः ॥

'वृक्षमूलं रमादेवी सोऽश्व आशुगतो हरिः ।
'तद्व्याप्तत्वात् तदन्नत्वादश्वत्थोऽयं प्रकीर्त्तितः ॥

'प्रवाहतश्चाऽदितश्च मुख्यतस्त्वमृतो हरिः ।
'मुख्यामृतः स एवैको जगन्नित्यं प्रवाहतः ॥ * ॥

**(टी.)** अथ **'सर्वोच्चः–'** इत्यादिना महावराहवचनेन **'ऊर्ध्वमूलः–'** इत्यादेरभिप्रायमाह । अत्र तु भगवान् विष्णुः सर्वोत्तमः सर्वजगतो मूलकारणं मूलाधारश्चेत्यादिकमुपास्यमित्यभिप्रेयते । ऊर्ध्वशब्देन सर्वोत्तमो विष्णुः प्रमदोत्तमा रमा च क्रमादुच्येते। ते एव च मूलकारणं मुख्यममुख्यं चेति **ऊर्ध्वमूलो** जगद्वृक्षः । अत्रायं विशेषः– भूमिवदचिरेणोत्पत्तिस्थानं हि मुख्यकारणम् । तद् भगवानेव । तद्बीजवत् परिणामि प्रधानम् । तदभिमानिनी रमैवामुख्यकारणमिति । अतो नात्र प्रकृतिविकारभावो देवदेव्योराशङ्कनीयः । अवाञ्चः ताभ्यामधमाः ब्रह्मादिदेवाः शाखा अस्येति **अवाक्शाख**श्चायम्। ब्रह्मा तु महदहङ्कारात्मा शाखासन्निकृष्टत्वात् तदाश्रयत्वाच्च शाखाशब्देन लक्ष्यते। रुद्रादयस्तूच्यन्ते। देवास्तु उपशाखा इति स्वतः सिद्धम्। आशु

१. **'ऊर्ध्वमूलो अवाक्शाखः'** इति व्यस्तं पठन्ति केचित् ।

[1]यातीत्यश्वनामको भगवांस्तत्र ततश्चायं तस्यान्नभूतश्चेति अश्वत्थनामाऽयं वृक्षः। थकारस्यान्नवाचकत्वात्। 'अन्नं थम्' इति हि श्रुतिः। **सनातन** इत्येतत् पदं **'प्रवाहतश्चाऽदितश्च'**[2] इति वाक्येन व्याख्याति । आदिकालादारभ्य वर्तमानोऽपि उत्पत्तिनाशवत्त्वात् प्रवाहतो नित्य इत्यर्थः। **शुक्रं** शुद्धम्। तदेव मुख्यामृतमुच्यते। **'मुख्यतस्त्वमृतो हरिः'** इति विवरणात्। **'मुख्यामृतः स एवैकः'** इत्यन्ययोगव्यवच्छेदाय। **'जगन्नित्यं प्रवाहतः'** इत्युत्तरकालापेक्षया। तस्मान्नात्र पुनरुक्तिः ।। १ ।।

**(भा.चं.)** 'ऊर्ध्वमूलः अवाक्शाखः' इति विश्लेषेण प्रथमपादेऽष्टाक्षराणि। षडनुष्टुप्पादाः सङ्गत्य जगतीं सम्पादयन्ति। **'विष्णुस्तु भूमिवत् अस्य मूलम्'**, तुना सर्वमूलत्वमाह। सर्वाधिकं च मूलत्वम्। **'विष्णुः'** जगदाधारत्वेन **'भूमिवत्तु'** भूमिवदेव **'मूलं'** न बीजवदिति च । **'अस्य तु'** जगद्वृक्षस्य मूलमिति तुना अनाद्यनन्तकालीनत्वं विशेषं चाऽह। अनाद्यनन्तकालीनस्य जगतः **'मूलं तु'** अनाद्यनन्तकालीनं शाश्वतं मूलम्, **'विष्णुस्तु'** विष्णुरेवेति। अहङ्कारस्यापि महत्तत्वेऽन्तर्भावापेक्षया ब्रह्मा **महदहङ्कारात्मा**। अत एव मनसः शिवाद्या अभिमानिनः, बुद्धेः सरस्वतीभारत्यौ। साहङ्कारस्य महतो ब्रह्मवायू मानिनाविति पूर्वमुक्तम् । अहङ्कारस्यापि विज्ञानमयकोशात्मकत्वात्। 'मनो बुद्धिरेव च। अहङ्कार इतीयं मे भिन्ना प्रकृतिः' [७.४] इति च गीतायाम्। 'महतोऽहङ्कार एवान्तर्भावः' इति भाष्यम्। यत्र त्वहङ्कारस्य पृथग् विवक्षा तत्र बुद्धिरित्युमोच्यते । अहङ्कार इति शिवः । अत्र ब्रह्मा काण्डस्थानीयः। वायुश्च। रुद्रादयस्तत्वदेवाः शाखा इव। तदन्ये देवा उपशाखा इवेति विशेषः ।। ॐ ।।

**आशु याति** आशु वातीत्यर्थः । वा गतौ । अश्वपदानन्तरं श्रूयमाणयोस्तथयोरर्थमाह– **भगवांस्तत्र ततश्चायं तस्यान्नभूतश्चेति** । तत्र जगद्वृक्षे ततश्चायं भगवान्। तस्य भगवतोऽन्नभूतश्चायं वृक्ष इति। 'यस्य ब्रह्म च क्षत्रं

---

१. 'वातीत्यश्व–' इत्यपि पाठः स्यात्। २. 'प्रवाहतस्त्वनादिश्च' इति क्वचित्।

चोभे भवत ओदनः' इति ह्युक्तम्। अश्वेन ततः, अश्वस्य थं चेति **अश्वत्थः एष** जगद्वृक्षः। यद्वा **तत्र** अश्वनामनि भगवति **अयं** जगद्वृक्षः ततः आश्रित इत्येतत्। 'तस्मिन् लोकाः श्रिताः सर्वे' इति हि वक्ष्यति। तथाच अश्वे ततः, अश्वस्य थं चेत्यश्वत्थः। अश्वो भगवान् तत्वा स्थितोऽत्रेति वाऽश्वत्थः। 'तथौ प्राणात्मकौ प्रोक्तौ व्याप्तिस्थितिविधायकौ' इति हि स्मरन्ति। 'अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः' इति च श्रुतिः। एतदपि सूचितम्– **'तद्व्याप्तत्वात्'** अन्तर्बहिः तेन व्याप्तत्वादिति। तस्मिन् जगतः व्याप्तत्वादोतप्रोतत्वादिति चार्थान्तरम्। 'अन्नं थमन्ने हीदं सर्वं स्थितम्' [१.३.२] इति च्छन्दोगोपनिषदि। अन्नमाश्रित्यैव सर्वं तिष्ठतीत्यन्नं थमुच्यते। येन यदद्यते तस्य तदन्नम्॥ * ॥

**आदिकालादारभ्य वर्तमानः**। सर्वोऽपि कालः सादिरित्यनादित इत्येव पर्यवसितोऽर्थः। **आदितः** वर्तमानोऽपि **आदितः** आदिमत्त्वात्, उत्पत्ति-नाशवत्त्वादित्येतत्, **प्रवाहतश्च** प्रवाहत एवाऽदितोऽपि वर्तमानः। अतः **'सनातनः'** सदातन इति। उक्तं च गीतायाम्– 'ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम्' [१५.१] इति। अन्त्यकालापेक्षयाऽपि 'जगन्नित्यं प्रवाहतः' इति हि वक्ष्यति। **'तदेव'** ऊर्ध्वपदगदितं जगन्मूलं ब्रह्मैव **'शुक्रं'** शुद्धं शोकरहितं च। **'तदेव' मुख्यतः 'अमृतम्'** उत्पत्तिनाशरहितं पूर्णानन्दं च। **मुख्यत-स्त्वमृतो हरिः**। हरिर्मुख्यामृत एव। हरिरेव मुख्यामृत इति च भावनीयमित्याह– **मुख्यामृतः स एवैकः**। तदुक्तं टीकायाम्– **मुख्यामृतः स एवैक इत्यन्य-योगव्यवच्छेदायेति**। ननु जगदपि नित्यमित्युक्तम्– **'एषोऽश्वत्थः सनातनः'** इति। तत् कथं मुख्यामृतः स एवैक इत्युच्यत इत्येतामाशङ्कां परिहरन् पूर्वोक्तं स्मारयति– **'जगन्नित्यं प्रवाहतः'** इति। प्रवाहत एव हि जगतो नित्यत्वमुक्तम्। नतूत्पत्तिनाशराहित्यरूपममृतत्वम्। प्रवाहस्यानादित्वा-न्नित्यत्वं पूर्वमुक्तम्– **'प्रवाहतश्चाऽदितश्च'** इति। अनन्तत्वाच्च तन्नित्यमिति च स्मारयन् पुनराह– **'जगन्नित्यं प्रवाहतः'** इति। भगवान् लोकेषु तत

इत्युक्तमश्वत्थ इति। लोकाश्च भगवति गता इतीदानीमाह– **'तस्मिन् लोकाः श्रिताः सर्वे'** ॥ १ ॥

**यदिदं किञ्च जगत् सर्वं प्राण एजति निःसृतम् ।**
**महद् भयं वज्रमुद्यतं य एतद् विदुरमृतास्ते भवन्ति ॥ २ ॥**

**(भा.)** **'प्राणाख्ये तु गतौ सर्वमेजत्यस्माच्च निःसृतम् ।**
**'वज्रवद् भयदं चैव स्वधर्म्मस्यातिलङ्घने** ॥ * ॥

**(टी.)** **'प्राणाख्ये तु–'** इत्यादिना **'यदिदम्–'** इत्येतद् व्याख्याति। **यदिद**-मुक्तलक्षणं **जगत् सर्वं प्राण एजति**। प्रकृष्टचेष्टकत्वात् **प्राणाख्ये गतौ** आश्रयभूते विष्णौ स्थित्वा कम्पते चेष्टत इत्यर्थः। एजृ कम्पने। **अस्मात्** ऊर्ध्वतो मूलात् **निःसृतम्**। **य एतत्** प्राणाख्यं **महद् भयं वज्रं विदुस्ते** मुक्ता **भवन्ति**। वज्रवन्महाभयङ्करं ब्रह्मेत्यभिप्रायः ॥ २ ॥

**(भा.चं.)** यदिदं किञ्चेति प्रथमः पादो बार्हतः। तृतीयश्च। द्वितीय आनुष्टुभः। तुरीयो जागत इति द्व्यक्षराधिका बृहत्येवेयम्। **प्राणाख्ये गता**-**विति**। 'अण गतौ' इति हि धातुपाठं पठन्ति प्रतनाः। यद्वा अन चेष्टायामिति धातोः प्राणयतीति प्राणः। **'प्राणे'** इति कः सप्तम्यर्थः? आश्रयत्वमित्याह– **'प्राणाख्ये तु गतौ' आश्रयभूते विष्णा**विति। अन्यथा **'प्राणादेजति'** इति स्यात्। तुना सर्वाश्रयत्वं नाम विशेषमाह। तदेव स्फुटयति– **'निःसृतम्'** इति। यतः प्राणाधीनं प्राणे स्थितमतः प्राणादेव **निःसृतम्**। तदेतदाह– **अस्माच्च निःसृतम्**। न केवलमस्मिन् **प्राणे** स्थित**मेजति**। **अस्मादेव निःसृतं** च। 'व्रजति सर्वत्रेति वज्रम्' इति वैयाकरणाः। वजतीत्यन्ये। वज गतौ। रन्प्रत्ययः [दशपा.८. ४६]। **'महद् भयं वज्रम्'** इव **स्वधर्मस्यातिलङ्घने**। 'छायातपौ ब्रह्म' इति ह्युक्तम्। 'यदिदं जगद् दृष्टं श्रुतं च तत् सर्वं प्राण

एजति प्राणधारं कम्पते। एजृ कम्पन इति धातोः। प्राणान्निःसृतं च। तदेतद् वज्रं ये विदुस्तेऽमृता भवन्ति। भाययतीति भयम्। नह्यन्यस्य सर्वचेष्टकत्वं युक्तम्। नापि सदोद्यतत्वम्' इति तत्वप्रदीपे [१.३.३९]। 'चक्रं चङ्क्रमणादेष वर्जनाद् वज्र उच्यते। खण्डनात् खड्ग एवैष हेतिनामा स्वयं हरिः' इति ब्रह्मवैवर्तवचनं भाष्ये। चङ्क्रम्यते कुटिलं क्रामतीति चक्रम्। 'नित्यं कौटिल्ये गतौ' [अष्टा.सू.३.१.२३]। 'गतिवचनाद् धातोः कौटिल्ये गम्यमाने नित्यं यङ्प्रत्ययो भवति। कुटिलं क्रामति चङ्क्रम्यते' इति जयादित्यः। दोषवर्जनाद् वज्रो वज्रंवा वर्णविपर्ययेण। वजति रमते चेति वा वज्रम्। वज गतौ। ज्ञानानन्दमय इत्येतत्। दुर्जनखण्डनात् खड्गः। खण्डयन् गच्छतीति वा ॥ २ ॥

**भयादस्याग्निस्तपति भयात् तपति सूर्यः ।**
**भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः ॥ ३ ॥**

**(टी.)** एतदेव विशिनष्टि– **भयादस्येति** ॥ ३ ॥

**(भा.चं.)** भयादस्येति मन्त्रे द्वितीयचरणे 'सूरियः' इति क्षैप्रविश्लेषेण केवलाऽनुष्टुप्। पञ्चरूपस्यास्य भयात् पञ्च देवताः प्रवर्तन्त इति सर्वदेवतोपलक्षणम्। 'तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च। अमृतं चैव मृत्युश्च'[९.१९] इति गीतायाम्। अग्निसूर्यगतस्तपति। सूर्येन्द्रगतो वर्षं निगृह्णात्युत्सृजति च। वायुगतो जीवनद इत्यमृतम्। मारणान्मृत्युरिति स्फुटम्। 'भीषाऽस्माद् वातः पवते' इत्यादि च श्रुत्यन्तरम्। अग्निः प्रवहवायुरादित्य इति पृथिव्यन्तरिक्षद्युस्थानास्त्रयो देवा उच्यन्ते। अथचाग्निः सूर्य इति चक्षुर्गोचरावुदितौ। इदानीमगोचरशक्तीराह– **'भयादिन्द्रश्च'**। इन्द्र इति गरुडश्च। इष्टं द्रवतीति। 'इन्द्रः सुपर्णो गरुडः' इत्यभिधानम्। वायुरिति ब्रह्मवायू। मृत्युरिति शेषरुद्रौ। 'मृत्युः सङ्कर्षणः शेषः' इति चाभिधानम्। पतिग्रहणेनैव पत्न्योऽपि गृह्यन्ते। मृत्युरिति दुर्गा च। अग्निः सूर्य इति तन्मध्यगा अपि सङ्गृह्यन्ते। सूर्य

इन्द्र इति तन्मध्यगा अपीति सर्वसङ्ग्रहः। भयमिति नियतिबद्धतैव। न वस्तुतो भयं तेषाम्। भगवद्वेदनात् प्रीत्यैव हि ते स्वकर्म कुर्वन्ति ॥ ३ ॥

**इह चेदशकद् बोद्धुं प्राक् शरीरस्य विस्रसः।**
**ततः सर्ग्गेषु[1] लोकेषु शरीरत्वाय कल्पते ॥ ४ ॥**

**(टी.)** भयादपि स्वधर्मानुष्ठाने कथञ्चिद् ब्रह्मवेत्तुः अमृतभावप्रकारमाह– **इह चेदिति**। इह जन्मनि अचिच्छरीरविरहात् पूर्वं कथञ्चिद् ब्रह्म **बोद्धुमशकच्चेत्** तद्विरहानन्तरं चिदात्मा स्वयमेव स्व**शरीरत्वाय** कल्पते। कदा तदिति चेत् सर्वलोकेषु तत्तत्पदार्थसर्गेषु क्रियमाणेषु सत्सु ॥ ४ ॥

**(भा.चं.)** तमेतमर्थं प्रत्याययन्नेवोत्तरमन्त्रमवतारयति– **भयादपि स्वधर्मानुष्ठान** इति। स्थूल**'शरीरस्य विस्रसः' विरहात् पूर्वम्**। विस्रवति विस्रंसतीति वा धातोः विस्र इति सान्तं पदम्। तस्माद् **विस्रसः** विभ्रंशनादिति यावत्। केवलाऽनुष्टुप् ॥ ४ ॥

**यथाऽऽदर्शे तथाऽऽत्मनि**
**यथा स्वप्ने तथा पितृलोके।**
**यथाऽप्सु परीव ददृशे[2] तथा गन्धर्वलोके**
**छायातपयोरिव ब्रह्मलोके ॥ ५ ॥**

**(भा.)** 'जीवे स्थितस्तु भगवान् दृश्यते ज्ञानदृष्टिभिः।
'आदर्शे मुखवत् सम्यङ् न तथा पितृलोकगः ॥

'ततः किञ्चित् स्पष्टतया गान्धर्वे दृश्यते हरिः।
'नात्यातपे न च्छायायां यथैवाहनि दृश्यते।
'स्पष्टं तथा ब्रह्मलोके दृश्यते पुरुषोत्तमः' इति च ॥ * ॥

---

१. 'स्वर्गेषु' इति क्वचित्। २. 'परीव दृश्यते' इति पाठान्तरम्।

**(टी.)** अथ **'जीवे स्थितः–'** इत्यादिना **'यथाऽऽदर्शे–'** इत्यादेरभिप्रायमाह । अत्र तावदमृतत्वसाधने ब्रह्मदर्शने स्थानविशेषाद् विशेष उच्यते । तथाहि– आत्मशब्दिते **जीवे स्थितो भगवानादर्शे मुखवद्** विस्पष्टं **दृश्यते** । **'पितृलोके'** तु **'स्वप्ने'** घटादिवदल्पाभिव्यक्त्यैव दृश्यते । **'गन्धर्वलोके'** तु स्वप्ने दृश्यमानात् **किञ्चित् स्पष्टतया दृश्यते** । **यथाऽप्सु परिवृतः** पाषाणादिस्तथैव । अथ **ब्रह्मलोके** स्वप्नजलादर्शगतेभ्योऽपि स्पष्टतया दृश्यते । **'छायातपयोरिव'** इत्युक्तत्वात् । सर्वत्रापि ज्ञानदृष्ट्यैव **भगवान् दृश्यते** न प्राकृतदृष्ट्या ॥ ५ ॥

**(भा.चं.) गान्धर्वे** लोके **दृश्यते हरिः** । गानं धारयन् वर्तत इति गन्धर्व इति गन्धर्वगतो **हरि**रुच्यते । **'ददृशे'** दृश्यते । ब्रह्मा तु सर्वक्षरपुरुषोत्तम इति तत्रगो भगवानपि **पुरुषोत्तम** इत्युच्यते । **यथैवाहनि दृश्यते** । **'छायातपयोरिव'** इत्यनेनैव लब्धोऽयमर्थः । अहन्येव हि छायातपौ सह भवतः । **नात्यातपे न** अतिच्छायायाम् । किन्तु स्फुटदर्शनयोग्ययोः **छायातपयोः** सतोः । **'ज्ञानदृष्टिभिः'** इति प्रमाणवचनं स्मारयन्, तत्सूचितमर्थविशेषमाह– **सर्वत्रापि ज्ञानदृष्ट्यैव भगवान् दृश्यते** । यथाऽऽदर्श इति पञ्चपादाऽपूर्वा त्रिष्टुबियम् । तथाहि– 'यथाऽऽदर्शे तथाऽऽत्मनि' इति प्रथमः पाद आनुष्टुभः । 'यथा स्वप्ने तथा पितृलोके' इति द्वितीयो वैराजः पादः । 'यथाऽप्सु परीव ददृशे' इति नवाक्षरस्तृतीयो बार्हतः । 'तथा गन्धर्वलोके' इति चतुर्थ औष्णिहः । संहत्य पादद्वयमानुष्टुभम् । 'छायातपयोरिव ब्रह्मलोके' इति पञ्चमस्त्रैष्टुभः पादः । संहत्य पञ्चचत्वारिंशदक्षराणीत्येकाक्षराधिका त्रिष्टुप् ॥ ५ ॥

**इन्द्रियाणां पृथग्भावमुदयास्तमयौ च यत् ।**
**पृथगुत्पद्यमानानां मत्वा धीरो न शोचति ॥ ६ ॥**

**(टी.)** ब्रह्मदर्शनस्याङ्गदेवतापरिज्ञानेनापि भाव्यमित्याह । स्वयोग्यतातारतम्येन पृथक्पृथगुत्पद्यमाना हि इन्द्रियदेवताः । तासां भगवतः **पृथग्भावं** तत एव उदयादिप्रवृत्तिं च ज्ञात्वा **धीरो** ब्रह्मदृङ् **न शोचति** ॥ ६ ॥

**(भा.चं.)** इन्द्रियाणामिति, इन्द्रियेभ्य इति च केवलाऽनुष्टुप्। धिया रमत इति 'धीरो' ब्रह्मदृक्। भगवान् रक्षत्येवेति विश्वासेन विगतभीश्च ॥ ६ ॥

इन्द्रियेभ्यः परं मनो मनसः सत्त्वमुत्तमम् ।
सत्त्वादधि महानात्मा महतोऽव्यक्तमुत्तमम् ॥ ७ ॥

अव्यक्तात्तु परः पुरुषो[ऽ]व्यापकोऽलिङ्ग एव च ।
यं[1] ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति ॥ ८ ॥

**(भा.)** पुनरिन्द्रियेभ्यः परं मन इत्यादि देवतानां तारतम्यज्ञानपूर्वकं भगवतः सर्वोत्तमत्वज्ञान एव सर्ववाक्यानां महातात्पर्यमिति ज्ञापयितुम् ।

'तारतम्यपरिज्ञानपूर्वकं सर्वतो हरेः ।
'आधिक्ये सर्ववाक्यानां तात्पर्यं महदिष्यते' इति च ॥ * ॥

**(टी.)** नचोक्तदेवतानां तारतम्य[मात्र]मिहाभिप्रेतम् । किन्तु तारतम्यज्ञानमेवेत्याह– **इन्द्रियेभ्य** इति। ननु 'इन्द्रियेभ्यः परा ह्यर्थाः' इत्यादौ सविस्तरमेव ह्येतदुक्तम्। अतः कुतः पुनरिहोच्यत इत्याशङ्क्य परिहरति–**पुनरित्या**दिभाष्येण। **अत्र पुनरिन्द्रियेभ्यः परं मन इत्यादि**वचनं सप्रयोजनमेव। देवानां **तारतम्यज्ञानपूर्वकमेव** भगवतः सर्वोत्तमत्वज्ञानं कार्यमित्यत्रैव **सर्ववेदवाक्यानां महातात्पर्यमिति** ज्ञापनार्थत्वात्। तस्मान्नैष दोषः। अत्रापि **'तारतम्य–'** इत्यादिकं महावराहवचनं प्रमाणमाह। **इन्द्रियेभ्यः** सहार्थेभ्यः **परं मनः**। तस्मात् सत्त्वात्मिका बुद्धिः। अतः परं सिद्धम्॥ ७ ॥

देशतः कालतो गुणतः शक्तितश्च सर्वं व्याप्नोतीति **व्यापकः** परमपुरुषः। अस्य व्यापकोऽन्यो नास्तीति **अव्यापको** वा । अनुमापकराहित्यात् **अलिङ्गश्च** ॥ ८ ॥

---

१. 'यज्ज्ञात्वा' इत्येके। 'तं ज्ञात्वा' इति क्वचित्।

**(भा.चं.)** अव्यक्तात्तु पर इत्यादि च प्रथमपादे एकाक्षराधिकाऽनुष्टुप् । 'इन्द्रियाणि पराण्याहुः' [३.४२] इत्यादि च गीतायामित्युक्तम् । **अतः परं सिद्धम्**। 'सत्त्वादधि महानात्मा महतोऽव्यक्तमुत्तमम् । अव्यक्तात्तु परः पुरुषः' इत्येतत् स्फुटार्थमित्यर्थः। **सत्त्वात्** बुद्धितत्त्वात् सरस्वतीभारतीरूपात् **अधिकः** महत्तत्त्वमानी आत्मकलामानी च । ब्रह्मा च वायुश्च ॥ ७–८ ॥

**न सन्दृशे तिष्ठति रूपमस्य**
**न चक्षुषा पश्यति कश्चनैनम्**[१] **।**
**हृदा मनीषा मनसाऽभिक्लृप्तो**
[२]**य एवं विदुरमृतास्ते भवन्ति** ॥ ९ ॥

**(भा.)** **'प्रादुर्भावेष्वृते विष्णुमिन्द्रियैर्नैव पश्यति ।**
**'प्रादुर्भावानपि यदा ज्ञानदृष्ट्यैव पश्यति ।**
**'तदैव मुच्यते जीवो न दुष्टैरिन्द्रियैः क्वचित्'** इति च ॥ ※ ॥

**(टी.)** अलिङ्गत्वादननुमेयश्चेत् प्रत्यक्षगम्यः स्यादित्यत आह– **न सन्दृश** इति । **अस्य रूपं** सम्यग् दृष्टिविषयत्वेन **न तिष्ठति** । तस्मात् तं **न [कश्चन] पश्यति** । तर्ह्यज्ञेय एवास्त्वित्यत आह– हृदेति । प्राकृतेन्द्रियैरदृश्योऽपि **हृदा** सात्विकबुद्ध्या मनीषया जिज्ञासया **[मनसा]** मननेन च सम्यग् दृष्टि-विषयत्वेन **अभिक्लृप्तः** तिष्ठति । एवं च ज्ञानदृष्ट्या तद्दर्शनादमृता **भवन्ति** । अत्र पुनः **'प्रादुर्भावेषु–'** इत्यादिना महावराहवचनेन किञ्चिद् दर्शयति । प्रादुर्भावेषु दुष्टेन्द्रियैरपि कथञ्चिद् विष्णुं पश्यन्ति । नच तावता मुक्तिः स्यात्। दृष्टेरपि सदोषत्वादिति भावः। निर्दोषदृष्ट्यर्थं **'मनीषा मनसा'** इत्यत्र ध्यानयोगोऽप्यभिप्रेतः ॥ ९ ॥

**(भा.चं.)** न सन्दृश इति चतुर्थचरण एकाक्षराधिका त्रिष्टुप् । **सन्दृशे** सन्दर्शनाय। फलितमाह– **सम्यग् दृष्टिविषयत्वेन**। न तुमुनोऽर्थे 'दृशे विख्ये

---

१. **'कश्चिदेनम्'** इति क्वचित् । २. **'य एतद्–'** इति पाठान्तरम् । **'य एनम्–'** इति च ।

च'[३.४.११] इति निपातितस्यायं विष इत्येतत्। **हृदा** स्नेहेन वा। भक्त्येत्येतत्। **मनीषा** मनीषया शास्त्रार्थवि रेण **मनसा** मननेन ध्यानेन च **अभिक्लृप्तः**। 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यादेः। तथाहि महाभारते सनत्सुजातीये–'न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चिदेनम्। मनीषयाऽथो मनसाऽभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति' [उद्यो.प.४५.१०] इति। 'न दर्शने तिष्ठति रूपमस्य' [४५.२३] इति च। 'न चक्षुषा पश्यति कश्चनैनं हृदा मनीषा पश्यति रूपमस्य' [शां.प.२०५.४०] इति मोक्षधर्मेषु। मन्त्रोऽयं तैत्तिरीयेऽपि पठ्यते। 'य एनं विदुः–' इति च तत्र पाठः। श्वेताश्वतरे च उत्तरार्द्धे किञ्चिद् व्यत्यासेन–'न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्। हृदा हृदिस्थं मनसा य एनमेवं विदुरमृतास्ते भवन्ति'[४.२०] इति। पुनस्तत्रैव–'हृदा मनीषा मनसाऽभिक्लृप्तो य एतद् विदुरमृतास्ते भवन्ति' [४.१७] इति च। भाष्योदाहृते प्रमाणवचने **प्रादुर्भावेष्वृत** इति। ऋतेयोगे पञ्चमी प्रयोक्तव्येति वैयाकरणाः। उत्सर्गोऽयम्। अन्यथाऽपि विरळतया भवति–' कः सर्वज्ञः सर्वकर्ता तमृते विष्णुमव्ययम्'। 'ऋते रामेण वीरेण केन हन्येत रावणः'। 'ऋते नारायणाद् देवान्नान्यतः किञ्चिदिष्यते'। 'ऋते सर्वाश्रये विष्णौ कस्मिन्निद-मधिष्ठितम्'॥ ९॥

**यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह।**
**बुद्धिश्च न विचेष्टति तामाहुः परमां गतिम् ॥ १० ॥**

**तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम्।**
**अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ ॥ ११ ॥**

**(भा.) प्रभवाप्ययौ प्रति योगः। भगवतः सकाशात् प्रभवाप्ययौ ॥ * ॥**

**(टी.)** तस्य लक्षणमाह– **यदा पञ्चेति**। **यदा पञ्चे**न्द्रियाणि श्रोत्रादीनि **मनसा** बुद्ध्या च **सह** निश्चलम**वतिष्ठन्ते**। बाह्यार्थेषु न गच्छन्ति। सैवेन्द्रियधारणा

भगवद्दृष्टिसाधनी। 'दर्शनं तु चिराय न' इत्यन्यत्र वचनात्। अतस्तां योगाख्यां परमगतिमाहुः, मोक्षपर्यवसायित्वात्। **तदा** योगमवस्थाय **अप्रमत्तो भवति**। कृतकृत्यत्वात्। योगाभ्यासस्याप्रमादहेतुत्वे कारणमाह– **योगो हि प्रभवाप्ययाविति**। अस्यान्वयमाह– **प्रभवाप्ययौ प्रति योगः**। प्रभवः सुखाभिव्यक्तिः। अप्ययो दुःखनाशः। तावुद्दिश्य वर्तमानो ह्ययं योगः। तत्फलभूतौ **प्रभवाप्ययौ भगवतः सकाशादेव** भवतः॥ १०–११॥

**(भा.चं.)** यदा पञ्चेति केवलाऽनुष्टुप्। तां योगमितीति तृतीयचरण एकाक्षराधिकाऽनुष्टुप्। **'पञ्च'** श्रोत्रादीनि **'ज्ञानानि'** जानन्ति शब्दादीनेभिरिति ज्ञानेन्द्रियाणि। मैत्रोपनिषदप्याह–'अत्र हि सर्वे कामाः समाहिता इत्यत्रोदाहरन्ति –यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह। बुद्धिस्तु न विचेष्टते तामाहुः परमां गतिमिति' [६.३०] इति। **भगवतः सकाशात्** जगतः **प्रभवाप्ययौ** प्रति मनोयोगो **योग** इति प्रातीतिकमर्थं विवक्षित्वैवापूर्वमर्थान्तरमाह– **प्रभवः सुखाभिव्यक्तिः। अप्ययो दुःखनाशः**॥ १०–११॥

**नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा।**
**अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते ॥ १२॥**

**(भा.)** **'अधिकः सतोऽयं भगवान् सर्वस्मादेव केशवः।**
**'अस्तीतिनामकस्तस्माज्ज्ञातव्यः स तथैव च।**
**'अनाधिक्यं जानतां तु कथं स उपलभ्यते ॥ * ॥**

**(टी.)** एवं चेत् सर्वोत्तमत्वेन ध्यानयोगमन्तरेणापि वागादिभिर्भगवन्तं प्राप्य तत् फलद्वयं लभेतेत्यत आह–**नैव वाचेति**। वागादिप्रयत्नेनापि वस्त्वन्तरवत् **प्राप्तुं शक्यो न** भवति। किन्तु तस्य सर्वाधिक्यज्ञानेन तत्प्रसादत एव तत्प्राप्तिः शक्येत्यभिप्रायः। अस्तीत्यनेन न विष्णोः सत्तामात्रज्ञानं विवक्षितम्। किन्तु सर्वाधिक्यज्ञानमेव। **'अधिकः सतः–'** इति

महावराहवचनेन तथा व्याख्यानात् । **अधिकः सत** इति ज्ञेयत्वाद**स्तीति-नामकः** । इकारस्य ज्ञानवाचकत्वात् ॥ १२ ॥

**(भा.चं.)** नैव वाचेति केवलाऽनुष्टुप् । अस्तीत्येवेति च । तदुत्तरौ च मन्त्रौ । **इकारस्य ज्ञानवाचकत्वात्** । इण् गताविति धातोः । अधिक इत्यतोऽकारः, सतः सर्वस्मादित्यतः सकारतकारौ, ईयत इति इण्धातोरिकारश्च संहत्य [अ+स्त्+इ] अस्तीति पदं निष्पन्नमित्युक्तं भवति । **'तदुपलभ्यते'** । **तत्** अवाङ्मनसगोचरं तत्वम् ॥ १२ ॥

**अस्तीत्येवोपलब्धव्यस्तत्वभावेन चोभयोः ।**
**अस्तीत्येवोपलब्धस्य तत्वभावः प्रसीदति ॥ १३ ॥**

**(भा.)** **'प्रकृतेः पुरुषाणां च तत्वं भावयति स्फुटम् ।**
**'तत्वभावस्ततो विष्णुस्तत्प्रसादात्तु तस्य हि ।**
**'आधिक्यं ज्ञायते सत् तत्प्रसादश्च तथाविदः ॥**

**'अनादिकालादाधिक्यं सर्वस्माज्ज्ञानतो हरेः ।**
**'पुनःपुनर्वृद्धिमेति तज्ज्ञानं हि भवेभवे ॥**

**'येषामाधिक्यविज्ञानं नैव पूर्वं हरेर्भवेत् ।**
**'तेपां पश्चाच्च नैव स्यादभिभूतं तु तत् पुनः ।**
**'व्यञ्जकाद् व्यक्तिमभ्येति तस्मात् तज्ज्ञानमुत्तमम्'**
**इति च ॥ * ॥**

**(टी.)** प्रकृतिपुरुषयोस्तत्वं सृष्ट्यादिना **भावयतीति उभयोस्तत्वभावः** । अनेन च विशेषणेन सह ज्ञातव्यः परमात्मा । **उपलब्धस्य** ज्ञानवत इत्यर्थः ॥ १३ ॥

**(भा.चं.)** **'उभयोः'** प्रकृतिपुरुषयोः **'तत्त्वं'** स्वरूपं **'भावयति' सृष्ट्यादिना** सम्पादयतीति **उभयोस्तत्त्वभावः** । भगवान् उभयोस्तत्त्वभावकत्वेन सह **सतः** विद्यमानात् **सर्वस्मादधिक** इतीयते ज्ञायते सर्वशास्त्रेषु । तस्मात् **अस्ति**नामकः **'इत्येव उपलब्धव्यः'** उपासितव्यः, उपास्य ज्ञातव्यः, ज्ञात्वा च द्रष्टव्यः । तदपि

न स्वसामर्थ्येन। किन्तु **'उभयोः तत्वभावेन'** तत्प्रसादेनेत्येतत्। उपासकस्यैव च प्रसन्नो भवति। प्रसन्न एव च ज्ञानं वर्द्धयत्यन्ते दर्शनं च ददाति। तदेवं प्रसादेन ज्ञानम्, ज्ञानेन पुनरधिकः प्रसादस्तेन च पुनरधिकं ज्ञानमित्यामुक्ति वर्धमानेयं ज्ञानप्रसादपरम्परेत्याह– **'तत्प्रसादादित्यादिना**। **'तस्य'** विष्णोः **'आधिक्यं'** साधकस्यान्तर्मनसि **'सत्'** निलीनतया विद्यमानं सदपि **'तत्प्रसादात्तु'** तत्प्रसादादेव **'ज्ञायते'** व्यक्ततया प्रतीयते। **'प्रसादश्च तथा'** तत्वभावकत्वेन अस्तित्वेन च **'विदः'** ज्ञानिन एव भवति। स्थितमेव हि व्यज्यते। नाविद्यमानमेव जायत इत्येतद् विवृणोति– **'येषामाधिक्य-विज्ञानम्–'** इत्यादिना। **सृष्ट्यादिना भावयति**। 'सृष्टिः स्थितिश्च संहारो भावनेत्यभिधीयते' इत्यन्यत्र। **'उपलब्धस्य'**। उपलब्धिर्ज्ञानमस्यास्तीति उप-लब्धः। तस्य **ज्ञानवत इत्यर्थः**। मत्वर्थीयोऽच्। यद्वा उपलब्धमुपलब्धिः। भावे क्तः। तद्वानित्यर्थः। अथोपलब्ध इत्युपलब्धिमानुच्यते। तद् यथा– तृप्तिमान् तृप्त उच्यते। सुप्तिमान् सुप्त उच्यते। अत्रापि कश्चिद् वृथा प्रळलाप– 'तत्वं भावयतीति तत्वभावः विष्णुः प्रसीदतीति व्याख्यानमशब्दार्थ-त्वाच्चिन्त्यम्' इति। किन्ते विनिगमकम्– अयं शब्दस्यार्थो नायमिति? यदि प्राचां निर्वचनादिकं निर्णायकमित्यूरीकरोषि तर्हि भाष्योदाहृतं महा-वराहवचनं कथं निराकरोषि। नह्यन्धश्रद्धामयानि स्वप्रज्ञाविलसितानि शास्त्रार्थनिर्णयाय भवन्ति। पुराणवचनमपि चिन्त्यं वदन् मूढोऽयं गूढतत्वद्वेषी दूरादुपेक्ष्यः॥ १३॥

**यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः।**
**अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥ १४॥**

**यदा सर्वे प्रभिद्यन्ते[1] हृदयस्येह[2] ग्रन्थयः।**
**अथ मर्त्योऽमृतो भवत्येतावदनुशासनम्[3] ॥ १५॥**

---

१. 'प्रमुच्यन्ते' इति पाठान्तरम्। २. 'हृदयस्यैव' इत्येके।
३. '–त्येतावद्ध्यनुशासनम्' इति शाङ्करः पाठः।

**(भा.)** 'अन्तःकरणकामानां त्यागो व्यक्तिश्चिदात्मनाम् ।
'कामानां तु तदा मुक्तो मृतिं नैवाथ यास्यति ॥
'मिथ्याज्ञानग्रन्थिभिस्तु नितरां मुच्यते यदा ।
'तदाऽमृतत्वमेवैति तदर्थं चानुशासनम् ॥ * ॥

**(टी.)** एवं सर्वोत्तमत्वज्ञानेन प्रसन्नात् परमात्मनः संसारमोक्षो जीवस्य स्यादित्याह– **यदेति** । इमां सर्वकाममोक्षश्रुतिं सर्वकामाप्तिश्रुत्यविरोधेन योजयति– **'अन्तःकरण–'** इत्यादिना महावराहवचनेन । **अमृतो** भूत्वा स्वयोग्यतानुसारेण परिपूर्णं सुख**मश्नुते** ॥ १४ ॥

हृदयग्रन्थयः मिथ्याज्ञानग्रन्थयः । अमृतत्वार्थमेव वेदानुशासनम् । नामृतस्य विधिबन्धः ॥ १५ ॥

**(भा.चं.)** **'अन्तःकरण'**गतानां **'कामानां त्यागः, चिदात्मनां कामानां व्यक्तिः'** च यदा भवति **'तदा तु'** तदैव **'मुक्तः'** इत्युच्यते । यतः **'अथ'** तदनन्तरं **'मृतिं नैव यास्यति'** नापि जनिम् । ततः जनिमृतिरूपात् संसाराद्मुच्यतेति **मुक्त** उच्यते । तस्यैव विवरणम्– **'मिथ्याज्ञानग्रन्थिभिस्तु'** इति । **'तदैव अमृतत्वमेति'** । **'अनुशासनं'** च **'एतावत्'** मुक्तिपर्यन्तमेव केवलम् । यतो **नामृतस्य विधिबन्धः** । **'हृदि'** अन्तःकरणे **'श्रिताः कामाः'** । **'अमृतो'** मुक्तो **'भवति'** । **'अत्र'** मुक्तौ **'ब्रह्म'** परिपूर्णं सुखं **'समश्नुते'** । **'इह'** संसारदशायां विद्यमानाः **'हृदयस्य ग्रन्थयः'** । 'हृदयग्रन्थिरज्ञानम्' इत्यहिर्बुध्न्यसंहितायाम् । बृहदारण्यके समुद्धृतोऽयं श्लोकः– 'तदेष श्लोको भवति । यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत इति'[६.४.७] इति । भाषितं च भगवत्पादेन तत्र– 'अथ मर्त्योऽमृतो भवति । अथ मुक्त्यनन्तरं न कदाचिन्मृतिरस्य भविष्यतीत्यर्थः । मुक्त एव परे ब्रह्मणि इच्छया प्रविशति

निःसरति च। दर्शनादीन् ब्रह्मणो भोगांश्च करोति। स्वरूपभूताः कामा मुक्तानां भवन्तीत्यतो 'हृदि श्रिताः' इति विशेषणम्। हृदयस्यैव मोचनात् तत्स्थाः कामा मुक्तानामपगच्छन्तीति युक्तमेव। नह्यमुक्तस्य कदाचित् सर्वे कामा मुच्यन्ते। सुप्त्यादावप्यभिभव एव। वासनाया विद्यमानत्वात्। वासनया हि पुनरुद्भवः। 'यावद् विमुच्येत् पुरुषस्तावत् कामा हृदि श्रिताः। चित्ताभावाद् विमुक्तस्य स्युः कामास्तद्गताः कुतः। स्वरूपभूतचित्तेन कामाद्याः स्युः सुखात्मकाः। दुःखात्मकाः प्राकृता वा न मुक्तानां कथञ्चन' इति ब्रह्मतर्के' इति॥ १४–१५॥

**शतं चैका च हृदयस्य नाड्य-**
**स्तासां मूर्द्धानमभिनिःसृतैका।**
**तयोर्ध्वमायन्नमृतत्वमेति**
**विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥ १६॥**

**(टी.)** एवं तावद् देवादीनां लिङ्गशरीरभङ्गात्मको मोक्ष उक्तः। अथ मानुषदेहिनां तद्देहादुत्क्रमणप्रकारमाह– **शतं** चेति। **तया** शताधिकया नाड्या। भगवदनुग्रहेण स्थूलदेहादुत्क्रम्य अर्चिरादिमार्गेण **ऊर्ध्वं** गच्छन् उक्तप्रकारेण लिङ्गभङ्गादमृतत्वमेति॥ १६॥

**(भा.चं.)** **शताधिकया नाड्या 'अमृतत्वमेति'**। ततोऽन्याः सशाखोपशाखाः **शतं नाड्यः** विष्वग् **उत्क्रमणे भवन्ति**। त्रिदिवनिरयभूस्थानेषु यथाकर्म यथाश्रुतं परिभ्रमणाय भवन्ति। शतं चैका चेति केवला त्रिष्टुप्॥ १६॥

**अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानाँ हृदये सन्निविष्टः।**
**तँ स्वाच्छरीरात् प्रवृहेन्मुञ्जादिवेषीकां धैर्येण।**
**तं विद्याच्छुक्रममृतं तं विद्याच्छुक्रममृतमिति ॥ १७॥**

(भा.) 'शरीरभूतो विष्णोस्तु जीवस्तद्वशगो यतः ।
'अधिष्ठितश्च तेनैव विजानीयात् पृथक् ततः ।
'स्वाख्याच्छरीराज्जीवात्तु प्रवृहेद् विष्णुमव्ययम्' इति च ॥

'यस्याऽत्मा शरीरम् । य आत्मानमन्तरो यमयति' इति च । 'जनानां हृदये' इत्युक्तत्वाच्च जीवात् पृथग्घरिरिति सिद्धम् ॥

'देहाङ्गुष्ठमितो देहे जीवाङ्गुष्ठमितो हृदि ।
'जीवस्य स तु विज्ञेयो जीवाद् भेदेन मुक्तये' इति च ॥

संसारिशरीरेणाभेदो वादिनाऽपि केनचिन्नाङ्गीकृतः । नच लोकसिद्धः[1] । जनानामिति भेदात् न जीवोऽङ्गुष्ठमात्रः । अतो जीवाद् भेद उक्तः । अतः सर्वोत्तमो विष्णुरिति सिद्धम् ॥ * ॥

(टी.) योऽसौ अङ्गुष्ठमात्रः पुरुषः पुरस्तादुक्तः स इहानूद्यते । तं स्वाच्छरीरात् प्रवृहेदिति विधीयते । तद्वाक्यं विवृणोति– 'शरीरभूत–' इत्यादिना । अयं जीवः विष्णुवशगत्वात् तेनाधिष्ठितत्वाच्च तस्य शरीरमिति उच्यते । अतः स्वात् जीवाख्यात् शरीरात् तं भगवन्तं प्रवृहेत् भिन्न इति जानीयात् । जीवस्य भगवच्छरीरत्वे तन्नियम्यत्वे च 'यस्याऽत्मा–' इति श्रुतिमाह । तदधिष्ठितत्वे 'सदा जनानाम्–' इति । एवं तन्नियम्यत्वादिना तच्छरीरभूतः स इत्युक्तत्वाच्च जीवात् पृथगेव भगवान् हरिरिति सिद्धम् । पूर्वत्राङ्गुष्ठमात्रः पुरुषो देहमध्ये तिष्ठतीत्युक्तः । अत्र जीवस्य [हृदि] जीवाङ्गुष्ठमितः । स द्विरूपोऽपि जीवाद् भेदेनैव ज्ञेयः । 'स्वाच्छरीरात्' इत्यत्र जडशरीरादित्यर्थाङ्गीकारो न युक्त इत्याह– संसारीति । संसारिणो जीवस्य जडशरीरेण परस्याभेदः केनापि वादिना नाङ्गीक्रियते । नचायं लौकिकव्यवहारसिद्धः । अतो न तन्निषेधार्थत्वेन श्रुतिवाक्यं योजनीयम् । नचाङ्गुष्ठमात्रपरिमाणो जीव

१. प्राचीनादर्शे–'केनचिन्नाङ्गीकृतम् । नच लोकसिद्धा' इति पठ्यते । अर्थस्तु न स्फुटः ।

इति शङ्क्यम्। **'जनानां हृदये'** इति जीवसंस्थस्य परस्यैव तदुक्तेः। नच तावता तस्य परिच्छिन्नत्वम्। 'हृद्यपेक्षया–' [ब्र.सू.१.३.२५] इत्युक्तत्वात्। **तं** भिन्नं भगवन्तं विष्णुं **शुक्रममृतं** च **विद्यात्**। [शुक्रः] शोकादिरहितः शुद्धो वा। अमृतः स्वत एव नित्यमुक्तः। शाखोक्तार्थावधारणार्थं द्विरुक्तिमनुसरन् तमर्थं निगमयति– **'अतः सर्वोत्तमो विष्णुरिति सिद्धम्'** इति। श्रौत इतिशब्दस्तु मृत्योस्तत्वोपदेशोपसंहारवाचकः ॥ १७ ॥

**(भा.चं.)** अङ्गुष्ठमात्र इति पञ्चपदाऽपूर्वा जगती। एकादशाक्षरः प्रथमपादः। द्वितीयो द्वादशाक्षरः। अष्टाक्षरस्तृतीयः पञ्चमश्च। नवाक्षरश्चतुर्थः। संहत्याष्टचत्वारिंशदक्षराणि। उपदेशसमाप्तिसूचनार्थमवधारणार्थं चान्तिमपादस्य द्विरुक्तिः। इतिशब्दश्च यमनचिकेतःसंवादसमाप्तिवचनः। 'अङ्गुष्ठमात्रः–' इति पूर्वार्द्धं श्वेताश्वतरीयेऽपि पठ्यते [३.१३]। 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा' [उद्यो.प.४५.२५] इति, 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा न दृश्यतेऽसौ हृदये निविष्टः' [४५.३६] इति च सनत्सुजातीये। मुञ्जो दर्भजातीयस्तृणविशेषः। येन वटूनां मौञ्जी विरच्यते। इषीका कण्टकमयस्तृणविशेषः। मुञ्जवदेव भासते दूरतः। अतो मुञ्जमध्यगतामिषीकां यथा मुञ्जात् पृथक्करणेन जानीयात् एवं जीवहृदयगतं परमपुरुषमपि प्रवृह्य जानीयात्। यद्यपि **अङ्गुष्ठमात्रः पुरुषः पुरस्तादुक्तः**। अत्रापि पुनरुक्तः। तेन कश्चनार्थविशेषोऽपि सूचित इत्याह– **पूर्वत्रेति**। तदेतत् स्फुटं भाष्योदाहृते महावराहवचने– **'देहाङ्गुष्ठमितो देहे जीवाङ्गुष्ठमितो हृदि'** इति। **जीवस्य हृदि जीवाङ्गुष्ठमितः**। अयमेव द्विरूपो भगवान् 'ऋतं पिबन्तौ' इत्युक्तः ॥ १७ ॥

**मृत्युप्रोक्तां नचिकेतोऽथ लब्ध्वा**
**विद्यामेतां योगविधिं च कृत्स्नम्।**
**ब्रह्म प्राप्तो विरजोऽभूद् विमृत्यु-**
**रन्योऽप्येवं यो विदध्यात्ममेव ॥ १८ ॥**

**(टी.)** अथ नचिकेतसस्तत्वश्रवणफलमुच्यते–**मृत्युप्रोक्तामिति**। योगविधिः योगानुष्ठानम् । **विरजो** विगतरागादिर्भूत्वा विष्णवाख्यं **ब्रह्म प्राप्तो विमृत्युरभूत्**। अमृतोऽभवदित्यर्थः । **अन्योऽप्येवमध्यात्मवित्** तत्प्रसादान्मुक्तो भवेत् ॥ १८ ॥

**(भा.चं.)** मृत्युप्रोक्तामिति केवला त्रिष्टुप्। **नचिकेतो** नचिकेताः। अयमदन्तोऽप्यस्तीति पुरस्तादेवोक्तम्। एवं **विरजो** विरजा इति च। अथशब्दः कार्त्स्न्यवचनः। **अथ लब्ध्वा** मृत्युप्रोक्तां विद्यां कृत्स्नां विज्ञाय, **योगविधिं** तत्साधनविधानं च **कृत्स्नं** विज्ञाय। अथेति मङ्गलवचनश्च। अकारवाच्यो भगवानत्र स्थित इति **अथ विद्यां** परममङ्गलभगवद्विषयां विद्यामित्यर्थः। **'यो विदध्यात्ममेव'**। **योऽन्योपि एवमध्यात्मं** विदन् भवति स **एव एवं** नचिकेतोवत् भगवत्प्रसादमासाद्य **विरजो** भूत्वा **ब्रह्म प्राप्तो विमृत्युर्भूयात्**। अध्यात्ममिति आत्मानमधिकृत्य प्रवृत्ता विद्या। देहजीवमनांसि चाऽत्मानः। परमात्मा च। सर्वाधिकमात्मानमावेदयद् वा शास्त्रमध्यात्मम्॥ १८ ॥

**सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै ।**
**तेजस्वि नावधीतमस्तु मा वि द्विषावहै ॥**
**ॐ शान्तिः शान्तिः शान्तिः ॥**

**इति द्वितीये तृतीया वल्ली**
**इति श्रीकाठकोपनिषत् समाप्ता**

—o—

**(टी.)** अथ नैरन्तर्येण ध्यानादिप्रवृत्तिसिद्ध्यर्थं गुरुशिष्यविषये गुरुणा क्रियमाण आशीर्वादः **'सह नाववतु–'** इत्यादिकः। यत् पूर्वं प्रस्तुतं ब्रह्म तत् **नौ सहैवावतु**। **सहैव** भोजयतु च। सहैव वीर्यवच्छुभाचरणाय आवयोरधीतं **तेजस्वि अस्तु**। तेजोमयब्रह्मविषयमस्तु। अद्वेष्यान् **मा विद्विषावहै**

ब्रह्मप्रसत्तये। कीदृग्भूतं तद् ब्रह्मेति चेत् **शान्तिरि**त्युच्यते। 'एतच्छान्तमजरम्' इत्यादिश्रुतेः शान्तं सुखपूर्णम् । इकारस्तु गतिधातुजत्वेन ज्ञानवाचकः । अतः ज्ञानादिगुणगणपरिपूर्णं ब्रह्मेत्यर्थः । अत्रैव महातात्पर्यं सर्ववेदानामिति ज्ञापनार्थमसकृदुक्तिः ॥ १९ ॥

**(भा.चं.)** सह नाववत्विति षट्त्रिंशदक्षरो बृहतीगर्भो मन्त्रः । प्राण इव नारायण इव पञ्चपादश्च । षडक्षरैस्त्रिभिर्गायत्रैः पादैः प्रथमद्वितीयपञ्चमैः संहत्याष्टादशाक्षराणि। मध्यगताभ्यां नवाक्षराभ्यां बार्हताभ्यां द्वाभ्यां पादाभ्यां तृतीयचतुर्थाभ्यां पुनरष्टादशाक्षराणीति। **सहैव अवतु** प्रविशतु वा। अव प्रवेशे। **भुनक्तु** पालयतु वा। भुज पालनाभ्यवहारयोः। 'भुजोऽनवने' [अष्टा. सू. १.३.६६] इति अनवनार्थं भुजधातुमात्मनेभाषं पठन्ति। अत्र 'सः। ह' इति केचित् प्रतृण्णं पठन्ति । वेदसम्प्रदायज्ञाः प्रतनास्तन्नानुमन्यन्ते । यदि 'सः' इति तच्छब्दस्य रूपं तदा 'सः' इत्युदात्तस्वरः स्यात्। 'ह' इत्यनुदात्तः स्यात्। तथाच 'स ह' इति संहितापाठः स्यात्। नतु 'सह' इति। तस्मादेकं पदमिति पूर्वाचार्याः। त्रयीगम्यत्वस्मरणार्थं च **शान्तिरिति** त्रिरुक्तिः ॥ १९ ॥

**(भा.)** **नमो भगवते तस्मै विष्णवे प्रभविष्णवे ।**
**यस्याहमाप्त आप्तेभ्यो यो म आप्ततमः सदा ॥ * ॥**

**इति श्रीमदानन्दतीर्थभगवत्पादविरचितं**
**श्रीकाठकोपनिषद्भाष्यं समाप्तम्**

—o—

**(टी.)** अथेदानीं ग्रन्थावसानेऽपि गुरूणां गुरुतमः श्रीमदानन्दतीर्थाचार्यो विष्ण्वाख्याया इष्टदेवतायै नमस्करोति–**नमो भगवत** इति ॥

**नमस्तस्मै भगवते विष्णवे प्रभविष्णवे ।**
**मध्वो यस्याऽप्त आप्तेभ्यो यस्तस्याऽप्ततमः सदा ॥ * ॥**

यस्य त्रिरूपाण्युदितानि वायोर्वेदे बलज्ञानवतो बळादौ ।
दशप्रमत्याख्यतृतीयरूपी चक्रे हरौ काठकभाष्यमेतत् ॥ * ॥

भाष्यस्यास्यामितार्थस्य टीकां कृत्वाऽऽत्मशक्तितः ।
श्रीमध्वदासदासानां दासो विष्णौ समार्पयत् ॥ * ॥

श्रीप्राणनाथ पुरुषोत्तम लोकनाथ
श्रीमध्वनाथ सुमतिप्रद वेदनाथ ।
त्वत्पादसञ्ज्ञसुरपादपमूलमाशु
मां भाजयाभयमभीष्टदमिष्टदेव ॥ * ॥

नमोनमस्ते सत्स्वामिन् विष्णवे सच्चिदात्मने ।
नमोनमस्ते श्रीमध्व गुरवो वो नमोनमः ॥ * ॥

**इति श्रीमदानन्दतीर्थभगवत्पादविरचितश्रीकाठकोपनिषद्भाष्यटीका त्रैविक्रमार्यदासविरचिता समाप्ता**

—०—

**(भा.चं.)** आचार्यवचनं विवृण्वन्नेव स्वयमप्यन्ते नमस्करोति– **नमस्तस्मै भगवते** ॥ * ॥ अथ भाष्यकारं प्रणमति– **यस्येत्यादिना** । हरिप्रीत्यर्थं हरावर्पितं चक्रे ॥ * ॥ स्वयमपि स्वकृतिं हरावर्पयति– **भाष्यस्येति** । श्रीमध्वदासास्त्रिविक्रमार्याः । तेषां दासा नारायणार्याः । तेषां दासस्त्वयं ग्रन्थकारस्त्रैविक्रमार्यदासः ॥ * ॥ अनेन ग्रन्थकरणेन भगवत्प्रीतिमाशास्ते– **श्रीप्राणनाथेति** ॥ * ॥ हरिं मूलगुरुं स्वगरूंश्च प्रणम्योपसंहरति– **नमोनमस्त** इति ॥ * ॥

उपनिषदमनन्तार्थानुसन्धानरम्या-
ममितमतिकृतं तद्भाष्यमप्यद्भुतार्थम् ।
प्रमितमपि मितं तट्टिप्पणं वामनीयं
समगमयदरिक्तैष्टिप्पणीयं वचोभिः ॥ * ॥

भूमन् भवाब्धिभयभङ्गद मध्वनामन्
धीमन् हरेर्वसतिवासितचित्तधामन् ।
श्रीमन् निरस्तदुरिताखिलजीवसीमन्
स्वामिन् नमोऽस्तु भवते पवमान सोमिन् ॥ * ॥

प्रीयतां वामनोऽनेन सर्वभूतहृदि स्थितः ।
सर्वज्ञः प्रीयतां मध्वः प्रीयन्तां पूर्वसूरयः ॥ * ॥

तेषामुपनिषत् सेयं ये कठन्ति पठन्ति च ।
नैव तेषां ये शठन्ति ये वठन्ति मठन्ति च[१] ॥ * ॥

इमामाचार्यगोविन्दः प्रमृष्टां शब्दतोऽर्थतः ।
वितेने विमलां टीकां विदुषामेव तोषणीम् ॥ * ॥

**इत्याचार्यगोविन्दस्य कृतिषु श्रीकाठकोपनिषद्भाष्यटीकापञ्चिका**
**उपनिषद्भावचन्द्रिका सम्पूर्णा**



१. 'कठ कृच्छ्रजीवने', 'शठ कैतवे', 'वठ स्थौल्ये', 'मठ मदनिवासयोः' ।




श्रीवामनपण्डिताचार्यविरचितया श्रीमद्भाष्य-
टीकया, आचार्यगोविन्दकृतया उपनिषद्-
भावचन्द्रिकाख्यया तत्पञ्चिकया च समेता



॥ हरिः ओ३म् ॥

आप्यायन्तु ममाङ्गानि वाक् प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि । सर्वं ब्रह्मौपनिषदम् । माऽहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोत् । अनिराकरणमस्त्वनिराकरणं मेऽस्तु । तदात्मनि निरते य उपनिषत्सु धर्म्मास्ते मयि सन्तु ते मयि सन्तु ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

## भाष्यम्

ओ३म् ॥ अनन्तगुणपूर्णत्वादगम्याय सुरैरपि ।
सर्वेष्टदात्रे देवानां नमो नारायणाय ते ॥ * ॥

## टीका

वन्दे विष्णुं रमानाथमगण्यगुणवारिधिम् ।
निर्दोषं सर्वकर्तारं सर्वाभीष्टप्रदं सदा ॥ * ॥

श्रीमन्मध्वमहाचार्यं तच्छिष्यान् परमान् गुरून् ।
तच्छिष्यान् स्वगुरूंश्चापि वन्देऽथो[1] सर्वसज्जनान् ॥ * ॥

माध्वं तलवकारोपनिषद्भाष्यं महार्थवत् ।
व्याख्यास्यामो यथाबोधं [2]विष्णुदेवप्रसत्तये ॥ * ॥

---

१. 'वन्देऽहम्' ख.

२. 'विष्णुदैव–' क.

**'अनन्तगुणपूर्णत्वात्'** इत्यादिश्लोकेन श्रीमध्वाचार्यो भगवान् तद्भाष्यमारभमाणः स्वेष्टदेवतायै नारायणाय नमस्करोति शिष्टाचाररक्षणार्थम्। अत्र सम्बोधनाभावात् **'ते नमः'** इत्युक्तं कथमिति चेत्, अनभिमुखस्य प्रतियोगिनो[1]ऽभिमुखीकरणं हि सम्बोधनं नाम। इह तु नित्याभिमुखत्वाद् विष्णोस्तात्कालिकसम्बोधनमन्तरेणापि तुभ्यमित्यादिव्यवहारो युज्यते। अस्य भगवतो नारायण एव गुरुरिति तन्नमस्कारोऽप्यत्रैव कृतो भवति।अत्र पुनः 'केनेषितम्–' इत्याद्युपनिषदभिप्रेतार्थसूचनात् तद्भाष्यमिदं क्रियत इति वस्तुनिर्देशोऽप्यर्थतः कृत एव स्यात्। अधिकार्यादयश्चात्र सूचिता[2] भवन्ति। नन्तृनम्यावधिकारिविषयौ। सर्वेष्टस्वीकारः फलम्। एवं चेदिदं **'देवानाम्'** इत्येवोक्तत्वात् मनुष्याणां न किञ्चित् फलमनुज्ञातमिति चेत्, मैवम्, देवानां सर्वेष्टद इत्युक्त्या तदवराणां मनुष्याणामल्पेष्टदः, तद्विरुद्धानामसुराणां सर्वानिष्टद इत्युपलक्षितः। **'सुरैरप्यगम्याय'** इति प्रत्यक्षादिविवक्षयैवोक्तत्वात्[3] तैरपि जिज्ञास्यो भगवानागमैरिति गम्यते[4]। 'अथ नु मीमांस्यमेव ते मन्ये' इति वचनाच्च। अतो जिज्ञास्यजिज्ञासुभावः सम्बन्धः॥ ✽॥

## भावचन्द्रिका

**यक्षं सज्जनपक्षं दुर्जनकक्षं दिधक्षन्तम्।**
**सुरगणरक्षादीक्षं किमपि त्र्यक्षं महो वन्दे ॥ ✽ ॥**

**नत्वा नारायणं देवं कृष्णद्वैपायनं प्रभुम्।**
**तत्ववादमहाचार्यं पूर्णप्रज्ञं यतीश्वरम् ॥ ✽ ॥**

**लिकुचान्वयसम्भूतान् सर्वान् पूर्वगुरूनपि।**
**तलवकारोपनिषदो भाष्यटीका वितन्यते ॥ ✽ ॥**

**आनन्दतीर्थ भगवन् पूर्णप्रज्ञ जगद्गुरो।**
**प्रणम्य याचे भव मे निगमाध्वनिदर्शकः ॥ ✽ ॥**

---

१. 'प्रतियोगिन आभिमुख्य–' ख. २. '–दयश्च सूचिता–' ख.
३. '–विवक्षयोक्तत्वात्' ख. ४. '–गमैरवगम्यते' क. '–गमैरुपगम्यते' इति क्वचित्।

नमो नारायणायेति मङ्गलपद्यं विवृणोति– **वन्दे विष्णुं रमानाथम्**। नराणां समुदायो नारम्। तस्यायमयनः। तच्चायनमस्येति। 'अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः' इति हि श्रुतिः। विष्णुशब्दश्च तमेवार्थमाह– अन्तर्विशति बहिश्च वेवेष्टि सर्वमिति। नारा निर्दोषा रमा। तस्या अयमयन इति रमानाथो नारायणः। सर्वेष्टदात्रे देवानामिति मूलपदं व्याख्याति– **सर्वाभीष्टप्रदम्**। देवानां सर्वाभीष्टप्रदः। न केवलं देवानाम्, सर्वेषां च यथायोग्यमभीष्टप्रदः ॥ ॥

**तच्छिष्यान् स्वस्य परमान् गुरून्** त्रिविक्रमपण्डितान्। **तच्छिष्यान् स्वगुरूंश्च** नारायणपण्डितान्। **अथो सर्वसज्जनानपि** ॥ ॥ तलवकाराणामियमुपनिषद् भवति। क्वचिद् देवतानाम्ना मन्त्रनाम भवति। यथा– याज्ञीयमन्त्रोपनिषदिति। यथा वा– अग्निसूक्तं पुरुषसूक्तमित्यादि। क्वचिदृषिनाम्ना मन्त्रनाम भवति। यथा– तलवकारोपनिषदिति, काठकोपनिषदिति, आथर्वणोपनिषदिति, माण्डूकोपनिषदिति, तैत्तिरीयोपनिषदिति। यथा वा– वामदेवसूक्तमित्यादि। क्वचिच्छन्दोनाम्ना। तद् यथा– गायत्रीमन्त्र इति, प्रगाथमण्डलमित्यादि। तलवकारा नाम सामगानज्ञा ऋषयः। अपूर्वं च तेषां गानम्, यत् ताळवाद्येन सह ते सामागायन्। तलवाद्यकारान् हि तलवकारानाचक्षते परोक्षप्रियाः। तैः प्रवृत्ता शाखा तलवकारशाखेति च। अथचाऽम्नायज्ञा एवमैतिह्यमामनन्ति– भगवान् बादरायणश्चतुर्धा वेदं विबभाज। तत्रर्ग्वेदं पैलायोपदिदेश। यजुर्वेदं वैशम्पायनाय। सामवेदं जैमिनये। सुमन्तवे चाथर्ववेदम्। ततः शिष्यप्रशिष्येषु प्रततः सहस्रधा गीयमानः सामवेदः प्रववृधे। अनध्यायेष्वधीयमानास्ताः सहस्रं शाखास्तिरोहिता अभूवन्निति चरणव्यूहकार आह। केवलं तिस्रः शाखाः सम्प्रत्युर्वरिताः– जैमिनीयशाखा, राणायनीयशाखा, कौथुमशाखा चेति। तत्र जैमिनेः शिष्यस्तलवकार इति सम्प्रदायविदः। तदनुयायिनस्तलवकारा इत्याख्यायन्ते। सम्प्रति तु ततेन साम गायन्ति। नत्वानद्धेन। सर्वात्मना विस्मृतेयं गानपद्धतिः। तेषां चतुरध्यायं ब्राह्मणं भवति, यत्र प्राणनारायणयोर्महिमातिशयः समस्तूयत। तदिदं तलवकारब्राह्मणं जैमिनीयब्राह्मण-

मित्यपि निगद्यते। तस्य चरमेऽध्याये द्वादशानुवाकाः। तत्र दशमोऽनुवाकस्तलवकारोपनिषत्। यां जैमिनीयोपनिषदित्यप्याहुः। इतः पूर्वमार्षेयब्राह्मणं पञ्चाध्यायं भवति। तदपि सहैव परिसङ्ख्याय, नवलक्षणं ब्राह्मणमिति विवक्षित्वा, ब्राह्मणस्य नवमाध्यायगतेयमुपनिषदित्यपि केचित्। तलवकाराणामुपनिषद इदं भाष्यं भवति **महार्थवत्**। महाफलत्वान्महच्च तदर्थवच्च। महान्तश्चार्था अस्य। यतः **महार्थवत्** अतः **व्याख्यास्यामः** ॥ * ॥

**शिष्टाचाररक्षणार्थमिति**। नित्यं नारायणं वन्दमानस्य श्रीमध्वस्य न केवलं ग्रथनम्, ग्रन्थादौ वन्दनमपि शिष्टाचाररक्षणार्थमिति भावः। अत एवात्र सम्बोधनाभाव इति स्फुटमाह। **नारायण एव गुरुरिति**। नराणां जीवानामभिमानी नारो वायुः। तस्याप्ययनं ज्ञानमनेनेति निर्वचनमप्येतमेवार्थं गमयति। **उपनिषदभिप्रेतार्थसूचनादिति**। **'न विद्म न विजानीमः'** इति चतुर्मुखवचनेन सूचितम्– **'अगम्याय सुरैरपि'** इति। समग्रा चाऽख्यायिका स्फुटं सुरैरप्यगम्यतामाह। 'विद्यया विन्दतेऽमृतम्', 'ब्रह्म ह देवेभ्यो विजिग्ये' इत्यादि **'सर्वेष्टदात्रे देवानाम्'** इत्याह। दीव्यन्ति जानन्तीति व्युत्पत्त्या ज्ञानाधिकारिणः सर्वेऽपि यथायोग्यं देवा इत्युच्यन्ते। **प्रत्यक्षादिविवक्षया** सामस्त्येनागम्यत्वविवक्षया च ॥ * ॥

'ॐ आप्यायन्तु–' इत्यादिश्छन्दोगानां शान्तिमन्त्रः। आप्यायन्तु आप्यायन्तां प्रवर्द्धन्ताम्। ओप्यायी वृद्धौ। प्यैङ् वृद्धौ वा। आप्याययन्तु वर्द्धयन्तु वा भगवत्प्रवणतां ममाङ्गानि। कान्यङ्गानि? वाक् प्राणश्चक्षुः श्रोत्रमथो बलम्। इतराणीन्द्रियाणि स्वयं बलयतीति बलं मनः। वागित्यग्निः। प्राणः नासिक्यवायुः प्रवहः। यावत्र यक्षपरीक्षार्थं प्रेषितौ। चक्षुरिति सूर्यः। श्रोत्रं चन्द्रः। बलमिति मनोमानी इन्द्रः शिवो वा। बलदेवता मुख्यप्राणो वा बलम्। अवशिष्टानि चेन्द्रियाणि सर्वाणि। उपनिषद्वेद्यं ब्रह्म सर्वं पूर्णम्। तस्मान्माऽहं ब्रह्म निराकुर्याम्। मा च ब्रह्म मां निराकरोतु। भक्त्या परमात्मनि रते ये सद्धर्मा उपनिषत्सूच्यन्ते ते मयि सर्वदा सन्तु इति शान्तिमन्त्रार्थः ॥ * ॥

ओ३म् ॥ केनेषितं पतति प्रेषितं मनः
केन प्राणः प्रथमः प्रैति युक्तः ।
केनेषितां वाचमिमां वदन्ति
चक्षुः श्रोत्रं[१] क उ देवो युनक्ति ॥ १ ॥

(भा.) 'वैजयन्ते समासीनमेकान्ते चतुराननम् ।
'विष्णोर्विविदिषुस्तत्वं पर्यपृच्छत् सदाशिवः ॥

'यदि सत्पुरुषावश्यं तत्रतत्र पतेन्मनः ।
'केन तत् प्रेरितं याति प्राणः सर्वोत्तमस्तथा ॥

'चक्षुः श्रोत्रं तथा वाचं को देवो विनियोजयेत् ।
'इति पृष्टस्तदा ब्रह्मा प्राह देवमुमापतिम् ॥

'ध्यात्वा नारायणं देवं सर्वाधारमनूपमम् ।
'सर्वज्ञं सर्वशक्तिं च सर्वदोषविवर्ज्जितम् ॥ * ॥

(टी.) एवं चेन्मीमांसकेषु देवेषु कतमः '**केनेषितम्**' इति प्रष्टा? परिहर्ता च गुरुः कतमः? किं चेदं विचार्यमाणं विलक्षणं वस्तु? इत्याकाङ्क्षायामुच्यते । सदाशिवः प्रष्टा । परिहर्ता चतुर्मुखः । विचार्यमाणं विष्ण्वाख्यं ब्रह्म । तदेतत् सर्वं भगवान् भाष्यकारो ब्रह्मपारवचनेन सुव्यक्तं वक्ति– '**वैजयन्ते समासीनम्–**' इत्यादिना । वैजयन्ताख्ये पर्वते । **सत्पुरुष** [२]निर्दोषपुरुष, सर्वज्ञपुरुष । 'सन्मनीषी' इत्यभिधानात् । सतां जन्मादिकृदधिपते गुरो । '**इषितं**' वाञ्छितम् । इषु इच्छायामिति[३] धातोः । '**प्रेषितं**' **प्रेरितम्** । स्वेच्छया प्रेरितमित्यर्थः । '**युक्तः**' नियुक्तः । **विनियोजयेत्** विषयेषु प्रवर्तयेत्[४] ॥

---

१. 'चक्षुःश्रोत्रे' इति केचित् पठन्ति । 'चक्षुःश्रोत्रम्' इति समस्तं पदमित्येके ।

२. 'सन्निर्दोषपुरुष' ख. ३. 'ईहायामिति' ख. ४. 'विनियोजयेत् प्रयोजयेत्' ख.

**नारायणं ध्यात्वेति** वचनं शयनासनाद्युपकार्येऽपि[1] तद्ध्यानपूर्वकत्वेन भाव्यमित्युपलक्षयति। 'स्मृत्वा हरिं समुत्थाय' इति सदाचारस्मृतेः[2]। **अनूपमं** अत्यन्तानुपमम्। 'आधिक्येऽधिकम्' इति सूत्रात्॥ १॥

**(भा.चं.) सदाशिवः प्रष्टा। परिहर्ता चतुर्मुख** इत्यादि। तेन चतुर्मुखसदाशिवावृषी। विष्णुर्देवता। यथायोग्यं छन्द इति। एतेनैतदपि निरस्तम्, यत् कश्चिदाह निगूढतत्ववादद्वेषः प्रगाढमायावादमोहः– 'माध्वास्तु शिवः प्रष्टा विष्णुरुपदेष्टेति कल्पयन्ति। तन्न। शिवस्य विष्णोर्वा पूर्वप्रकरणेषु अत्र वाऽप्रकृतत्वात्। वस्तुतस्तु 'सा ब्रह्मेति होवाच' इत्युमाया ब्रह्मोपदेशात् तत्सहचारी शिव एवोपदेष्टेति निर्णेतुं शक्यते' इति। ननु भोः परेषां खण्डनात् पूर्वं परैरुक्तमवगन्तव्यम्। अवगत्य च खण्डयितव्यम्। यदि चायमध्येति जानात्येव तदा विष्णुरुपदेष्टेति न केनापि माध्वेनोच्यत इति। 'सदाशिवः प्रष्टा। परिहर्ता चतुर्मुखः' इति हि तत्ववादिनां सम्मतम्। यदपि कल्पयन्तीत्युक्तम्। तदपि दुराशामात्रम्। नहि स्वकपोलेन कल्पयन्ति। किन्तु ब्रह्मपारवचनेन समर्थयन्ते। परेषां पुनः स्वकल्पनामात्रमिति तद्भाष्य एव स्फुटमुदघुष्यत–'कश्चिद् गुरुं विधिवदुपेत्य पप्रच्छेति कल्प्यते' इति। नहि ऋष्यादीनां पूर्वप्रसक्तिः काप्यपेक्षिता। नह्यग्निसूक्तस्य माधुच्छन्दसत्वं पूर्वप्रकृतम्। वैदिकसम्प्रदायानभिज्ञा दुराग्रहमुषितविवेकप्रज्ञा एवैवं प्रळपेयुः। वचनप्रमाणं हि ऋष्यादिकम्। अतश्च ब्रह्मपारवचनविरोधादेव 'शिव एवोपदेष्टेति निर्णेतुं शक्यते' इति तद्वचनं हास्यास्पदमपहस्तितं भवति। प्रथममन्त्रे तावत्, प्रथमपादे एकाक्षराधिका त्रिष्टुप्। एकादशाक्षरा हि त्रिष्टुबेकादशात्मनः शिवस्य स्वं छन्दः। रुद्रदैवत्यमाध्यन्दिनसवनसम्बन्धिनी च सा। अतः सूक्तं त्रिष्टुभा शिवः पृच्छतीति। प्रथमपादे चैकाक्षराधिक्येन द्वादशेन्द्रियगणयन्तारं केशवादिद्वादशात्मानं नारायणं स्मरन्नेव प्रश्नमुपस्थापयतीव ॥ * ॥

१. '–सनाद्यपराधेष्वपि' ख. २. 'स्मृत्वा विष्णुं समुत्थायेति सदाचारव्यासस्मृतेः' ख.

**'वैजयन्ते' पर्वते** महामेरुस्थब्रह्मसदने। चत्वार्याननानि तस्येति चतुराननः। अथ प्रवचनचतुरं च तस्याऽननमिति। अभिमन्यमानं मनः शिवमशिवं च भवति। अभिमन्ता तु पुनः **सदाशिव** एवेति। विदितमपि पुनर्विशेषतो **विविदिषुः**। सन्निति निर्दोष उच्यते। तेन **'सत्पुरुष' निर्दोषपुरुष**। सन्निति मनीषी चोच्यते। तेन **'सत्पुरुष' सर्वज्ञपुरुष**। 'सूरिः प्राज्ञः पण्डितः **सन्मनीषी'** इत्यभिधानरत्नमाला। अविद्यो ह्यविद्यमान इव। तेन सन् विद्यावान्। अथचार्थान्तरं ध्वनयति– **सतां गुरविति**। सतां पुरुषः पतिः सत्पुरुषः। 'तत्पुरुषो मानवः' इति प्रयोगात्। तदेव विवृणोति– **जन्मादिकृदधिपते गुरविति**। जन्मदत्वात् पिता। ज्ञानदत्वाद् गुरुः। **अवश्यमिति**। अवश्यं तावन्मनआदीनां केनचित् प्रेरकेण भाव्यम्। स्वतः प्रवृत्तावशक्तत्वात्। न तावत् स्वयमेव प्रेरकः। यतः **स्वस्याप्यवश्यम्**। स्वतो मनोमानी रुद्रः स्वानुभवमेवमाह। अतो यस्य वशे मनआदयो भवन्ति यस्य च मनआदिनियमनं क्रीडामात्रम्, स **देवः क** इति। दिवु क्रीडायामिति हि धातुपाठः ॥ * ॥

**'प्रथमः प्राणः' सर्वोत्तमः प्राणः**। यद्यपि सर्वजीवोत्तमः। अथापि केनचिन्नियतः। **स देवः कः?** एतेन नायमिन्द्रियविषयः प्रश्नः। किन्त्विन्द्रियमानिदेवताविषय इति स्फुटम्। तमपि देवं नारायणं जानात्येव शिवः। महिमातिशयज्ञानार्थः प्रश्नः– **को देवः** कीदृशो देव इति। तद्यथाऽर्जुनः कृष्णमाह– 'भासस्तवोग्राः प्रतपन्ति विष्णो। आख्याहि मे को भवानुग्ररूपः' [भ.गी. ११.३०–३]१ इति। तदेवम्–'ता वा एताः शीर्षन् श्रियः श्रिताश्चक्षुः श्रोत्रं मनो वाक् प्राणः' [महैत.उ.२.१.१२]इति श्रुत्यन्तरगदितानि शीर्षण्यानि पञ्च ज्ञानसाधनानीन्द्रियाणि गृहीतानि भवन्ति पञ्चात्मनोः प्राणनारायणयोरुपासनार्थम्। सर्वेन्द्रियोपलक्षणं चेदम्। **'इषितं प्रेषितं' स्वेच्छया प्रेरितमिति**। अवान्तरप्रेरकाः सिद्धा एव। 'भीषाऽस्माद् वातः पवते' इत्यादेः। न तत्र जिज्ञासा। स्वतन्त्रप्रेरकस्य महिमातिशय एवेह जिज्ञास्यत इति ॥

**चक्षुः श्रोत्रं तथा वाचमिति** । चक्षुषी च श्रोत्रे च चक्षुःश्रोत्रमित्येकं वा पदम् । चक्षुःश्रोत्रयोः सूर्यचन्द्रौ मानिनौ । वाचस्तदवरोऽग्निरिति पश्चादुल्लेखः । मूले तु स्वानुभवक्षेत्रं मनः प्रथममाह शिवः । ततः स्वतोऽप्युत्तमं प्राणम् । उत्तरार्द्धेऽप्येवम् । प्रथमं वाग्देवताऽग्निः । ततस्ततोऽप्युत्तमौ चक्षुःश्रोत्रमानिनौ सूर्याचन्द्रमसाविति क्रमः । आदौ मनः प्रेरयति । ततो नाभिगतः प्राण ऊर्ध्वं स्पन्दते । ततो वाचमुच्चारयतीति च । **केन इषितं** अभिलषितं सत् **प्रेषितम्**, स्वेच्छया प्रेरितं **मनः इषितं** इष्टं विषयं प्रति **पतति** अधोऽधः पतदिव गच्छति । **'प्रथमः' सर्वोत्तमः 'प्राणः'** अपि **'केन नियुक्तः'** सन्निमं जीवं प्राप्य जीवयति । केन प्रेषितां **इषितामिष्टां च वाचं वदन्ति** । एवं **चक्षुः श्रोत्रं** च साभिमानिदेवमिन्द्रियं **क उ नु देवदेवो युनक्ति?** **देवमुमापतिमि**ति । देवमितीन्द्रियम् । स्वयं मनोमानी देवः । अथापि मानदं देवं पप्रच्छ । उमा उत्कृष्टज्ञानम् । ज्ञानदेवताया उमाया अप्ययं पतिः । अथापि विशेषज्ञानाय पप्रच्छ । **'ध्यात्वा नारायणम्'** । न केवलं प्रधानकर्मस्वेव । किन्तु **उपकार्येऽपि** अवान्तरकर्मण्यपि ।। १ ।।

**श्रोत्रस्य श्रोत्रं मनसो मनो यद्**
**वाचो ह वाचं स उ प्राणस्य प्राणः ।**
**चक्षुषश्चक्षुरतिमुच्य धीराः**
**प्रेत्यास्माल्लोकादमृता भवन्ति ।। २ ।।**

**(भा.)** 'यः प्राणस्य प्रणेता च चक्षुरादेश्च सर्वशः ।
[1]'अगम्यः सर्वदेवैश्च परिपूर्णत्वहेतुतः ।।

'प्राणादीनां प्रणेता च सर्ववेत्ता च सर्वशः ।
'सर्वोत्तमश्च सर्वत्र स विष्णुरिति धार्यताम् ।। * ।।

१. 'अगम्यं–' इति प्राचीनादर्शे पठ्यते । स्खलितं स्यात् । यः प्राणस्य प्रणेता तमगम्यमिति पूर्वान्वयेन वा व्याख्येयम् । यच्चागम्यं ब्रह्मतत्वं स विष्णुरिति धार्यतामिति वा ।

**(टी.) यः प्राणस्य प्रणेता चे**त्यादिना **'श्रोत्रस्य श्रोत्रम्'** इत्यादि परिहारवाक्यं[१] विवृणोति। **यः प्राणादीनां प्रणेता [स] सर्वदेवैरप्यगम्यः**, अनन्तगुणत्वात्। एवंलक्षणको लोकविलक्षणः पुरुषः क इत्याकाङ्क्षायामाह[२]– **प्राणादीना-मिति**। योऽसौ प्राणादि**प्रणेता**, अत्यन्तविलक्षणः **सः सर्वत्र** सर्वदेशकालेषु सर्ववेदशास्त्रेषु च **विष्णुरिति धार्यताम्** निर्धार्यताम्[३]। 'विष्णुरेव हि तच्छ्रुतेः' इति सूत्रात्[४]। तन्निर्धारणफलमाह– **'अतिमुच्य'** इति। एवं सर्वाधिको[५] विष्णुरिति या बुद्धिः सैव[६] धीरित्युच्यते। तत्र रताः **धीराः**। ते पापकृतीः **अतिमुच्य**[७] **अस्माल्लोकात् प्रेत्य अमृता भवन्ति** ॥ २ ॥

**(भा.चं.) 'यः प्राणस्य प्रणेता च'** इत्यनेन, **'प्राणादीनां प्रणेता च'** इत्युत्तर-श्लोकस्य पुनरुक्ततापरिहाराय गमनिकान्तरमाह– **यः प्राणादीनां प्रणेता सर्वदेवैरप्यगम्य** इत्यादिना। **सर्वशः** सर्वेषां **प्रणेता**। सर्वशः सर्वात्मना च **अगम्यः**। **यः प्राणस्य** **चक्षुरादेश्च प्रणेता, त्वया पृष्टः यः सर्वदेवैर-प्यगम्यः स देवो विनियोजयेदिति** पूर्वश्लोकार्थः। कः स देव इति पुनरा-शङ्कायामाह– यः **प्राणादीनां प्रणेता** देव उक्तः **स विष्णुरिति धार्यता-मिति**। **प्राणादीनां सर्वशः** सर्वप्रकारेण प्रणेता। **सर्वशः** सर्वत्रापि सर्वं वेत्तीति **सर्ववेत्ता च**। 'स विष्णुराह हि' इत्यनुव्याख्यानेऽर्थतोऽनूदितस्य देव-मीमांसासूत्रस्य मूलपाठमाह– **'विष्णुरेव हि तच्छ्रुतेः'** इति ॥ ॥

द्वितीयेऽपि मन्त्रे त्रिष्टुबेव। द्वितीयपादे चैकाक्षराधिकेयम्। अयमत्रानु-सन्धानक्रमः। प्रथमं गुरुमुखात् श्रवणम्। ततो मनसा मननम्। ततः शिष्येभ्यः प्रवचनम्। ततः प्राणानायम्य ध्यानाय प्रयतनम्। अन्ते च स्वरूपचक्षुषा साक्षात्कार इत्यत्र विवक्षाक्रमः। चतुर्मुखोऽपि शिवाभिमतेन च्छन्दसा त्रिष्टुभाऽऽरभ्य द्वितीयं पादं जागतेनाऽह। **स प्राणस्य प्राणः**। स एव

---

१. **'इत्याद्युपरितनवाक्यानि'** ख. २ **'इत्यपेक्षायामाह'** ख. ३. **'निर्धारणीयम्'** ख.
४. देवमीमांसाया उपान्त्यसूत्रेमेतदिति प्राचीनाचार्यवचनम्। आनन्दमालायां च।
५. **'सर्वाधारो–'** ख. ६. **'सैव धीरुच्यते'** क. ७. **'प्रकृतिमतिमुच्य'** ख.

पञ्चात्मा । स एकादशात्मा । स एव द्वादशेन्द्रियमानी द्वादशात्मा चेति । 'पञ्चपादं पितरं द्वादशाकृतिम्' इति हि श्रुतिः । ततश्चायं मन्त्रार्थः– **यत्** परतत्वं **श्रोत्रस्य श्रोत्रं** श्रवणशक्तिं युनक्ति, **मनसो** मननशक्तिम्, वाचश्च वक्तृत्वशक्तिम्, **स उ** स एव स इति । नारायणाख्यं ब्रह्मेत्यर्थः । मनसि उपस्थितः परामृश्यते । अत एवोक्तम्– **ध्यात्वा नारायणं देवमिति** । न केवलं ब्रह्मा । शिवोऽपि दध्यौ । तेन सुकरमासीद् ब्रह्मणः प्रतिवचनम्– यः प्रश्नावसरे भवता भव, भवतापहरश्चिन्त्यमान आसीत् स एव स इति । **'सः'** इति स्फुटं च विष्णुरित्याह– 'अकयप्रसविसम्भूमसखहा विष्णुवाचकाः' इत्यभिधानात् । स एव हि मुख्यप्राणस्यापि प्राणनकृत् । लोकचक्षुषः सूर्यस्यापि चक्षुरिति । अथवा यत् श्रोत्रस्य श्रवणशक्तिप्रदम्, मनसो मननशक्तिपप्रदम्, वाचमिति द्वितीया प्रथमार्थे । वागिन्द्रियस्य वचनशक्तिप्रदम्, स एव प्राणस्य प्राण इत्यादि । एवं श्रोत्रादिदेवतानामपि तत्तन्नियमनादिशक्तिप्रदम् । एवं **धीरा** ईदृशज्ञाने रताः । 'अतिमुच्य ज्ञात्वा' इत्येके । नैतद् युक्तम् । अशब्दार्थत्वात् । 'धीराः' इत्यनेन गतार्थत्वाच्च । अत आह– **पापकृतीः** प्रकृतिबन्धं वा **अतिमुच्य** अतीत्येति । 'अतिमुच्य लिङ्गशरीरं परित्यज्य' इति रामानन्दीयम् । 'अतिमुच्य स्वातन्त्र्यभ्रमं त्यक्त्वा, स एव हृषीकेशः सर्वं कारयतीत्यनुसन्दधानाः' इति सुबोधिनीकारः । सर्वमेतच्छास्त्रानुगुणमिति ग्राह्यमेव । **अस्मात् लोकात्** कर्मभूमेः, शरीराच्च **प्रेत्य** उद्धृत्य, वैकुण्ठादिनित्यलोकं च गत्वा **अमृता भवन्तीति** । अत्र **'अस्माल्लोकात् प्रेत्य'** इति वैकुण्ठादिलोकान्तरगमनम्, **'भवन्ति'** इति मोक्षेऽपि नानात्वं स्फुटं प्रतीयते । तेन विस्मृतकण्ठमणेस्तद्दर्शनमिव, ऐक्यानुभव एव मोक्ष इति रटन्तः परास्ता वेदितव्याः ॥ २ ॥

**न तत्र चक्षुर्गच्छति न वाग् गच्छति नो मनः ।**
**न विद्म[1] न विजानीमो यथैतदनुशिष्यात् ॥ ३ ॥**

---

१. **'न विद्मो–'** इति शाङ्करः पाठः । रङ्गरामानुजीयेऽपि तथा ।

**(भा.) 'यं सम्यङ् नैव जानाति कश्चिन्निरवशेषतः ॥ ※ ॥**

**(टी.)** एवं चेद् वेदान् लक्षणं च विनाऽपि प्रत्यक्षादिना तत्स्वरूपनिर्धारणेन मोक्षः स्यादित्यत आह– **न तत्रेत्यादि । तत्र** हरौ अस्मच्चक्षुरादीनि न गच्छन्ति । तस्मात् प्रत्यक्षादिना वयं सर्वेऽपि सर्वथा **न** तद् **विद्म** । आगमप्रमाणेनापि तदनुशिष्टप्रकारेण सुसूक्ष्माशेषविशेषैः सह [[1]**न जानीमः** ।] 'सुसूक्ष्मैरप्यशेषैश्च विशेषैः सह पश्यति । स्वात्मानं भगवान् विष्णुः' [अनु. ३. ४.६९] इति श्रुतेः । न हि प्रकृतिस्तावतो विशेषान् तस्मिन् पश्यति । 'नतु सर्वैर्विशेषैस्तम्' [३.४.७१] इति प्रतिषेधात् । 'अत्रोपसृष्टमिति चास्मृतमिन्दिरायाः' [३.१६ .४२] इति भागवते । किं पुनरस्मदादयः? तदेतदाह– **यं सम्यङ् नैव जानाति कश्चिन्निरवशेषत** इति ॥ ३ ॥

**(भा.चं.)** यश्चक्षुषश्चक्षुः **न तत्र चक्षुर्गच्छति** । यो वा वाचो ह्यपि वाचं वाचयति **न तत्र वाग् गच्छति** । यो मनसो मनो **नो तत्र मनो गच्छती**त्यहो महद् विस्मयावहं तन्नारायणाख्यं परं ब्रह्म । चक्षुरादिमानिनः सूर्यादयोऽपि तत्र न गच्छन्ति; न तस्य सम्यग्ज्ञाने प्रभवन्तीति च । तदेतत् स्फुटं भाष्योदाहृतप्रमाणवचने– **'य सम्यङ् नैव जानाति कश्चिन्निरवशेषतः'** इति । **'न तत्र चक्षुर्गच्छति'** इति प्रत्यक्षावेद्यत्वमाह । **'नो मनः'** इत्यनुमानागोचरत्वम् । **'न वाग् गच्छति'** इति शब्दागोचरत्वम् । तदेतदाह– **तस्मात् प्रत्यक्षादिना न तद् विद्मे**ति । 'विद ज्ञाने' इति धातोः लडादेशानां स्थाने लिडादेशानां णलादीनां विकल्पेनाऽदेशे, उत्तमपुरुषे 'वेद, विद्व, विद्म' इति रूपम् । अन्यथा 'वेद्मि, विद्वः, विद्मः' इति सविसर्गं रूपम् । तथाहि स्मरन्ति–'विदो लटो वा' [अष्टा.सू.३.४.८३] इति । केचित् सविसर्गमेव श्रुतिपाठं पठन्ति–'न विद्मो न विजानीमः' इति । ननु मा भूत् पौरुषेयः शब्दः । अपौरुषेयेणाऽगमप्रमाणेन

---

१. इयान् भागः कोशेषु लुप्तः ।

जानीयादेव तमित्यत आह– **न विजानीमः**। **एतद्** आगमप्रमाणं अनन्तगुणत्वेन **यथाऽनुशिष्यात्** तथा **अशेषविशेषैः** सह वयमपि **न जानीमः**। तद् **यथा एतत्** श्रुतिवचनं स्वयमनुशास्ति– **भगवान् विष्णुरेव स्वात्मानं अशेषविशेषैः सह पश्यति** नान्यः कोऽपीति। अपिच **यथा एतत्** नारायणाख्यं ब्रह्म, **एतत्** विश्वं वा, सृष्ट्यादिना **अनुशिष्यात्** तामपि भगवतोऽनन्तलीलां **न** केऽपि वयं विशिष्य **जानीमः**। अपिचेदमनन्तं तत्वं यथामतिविभवं विदन्नपि गुरुः यथा शिष्याय **अनुशिष्यात्** यथावत् तदपि सामस्त्येन **न जानीम** इत्याद्यूह्यम्। **अत्र** भगवदङ्गेषु गुणेषु वा इद**मुपसृष्टं** इत्थम्भूतमिति निश्चितमितीन्दिरयाऽ**प्यस्मृतम्**। 'एतत् दृश्यमानं वस्तु घटादिकं यथा कम्बुग्रीवादिमत्त्वादिनाऽनुशिष्यात् तादृशं कमपि प्रकारं परमपुरुषे न विद्मः। अतो विशेषेण न जानीम इति कथं विशेषेणोपदिशामः' इति रामानन्दीयम्। स्यादपि। न नो हानिः। तुरीयपादे एकाक्षरोनाऽनुष्टुबियम् ॥ ३ ॥

**अन्यदेव तद् विदितादथो अविदितादधि ।**
**इति शुश्रुम पूर्वेषां ये नस्तद् व्याचचक्षिरे ॥ ४ ॥**

**(टी.)** ननु **'न तत्र चक्षुर्गच्छति'**, वयं **'न विद्म'** इत्याद्युक्तेः [१]कर्तृकरणदोषादेवाज्ञेयत्वं तस्य, सर्वतो न वैलक्षण्यादित्यत आह– **अन्यदेवे**ति। यदिदं प्रत्यक्षादिना विदितं पृथिव्यादि तस्मात् **अन्यत्** विलक्षणं **एव तद्** भगवत्स्वरूपम्। आकाशादिवत् स्वत एव सूक्ष्मत्वात्। नच तावता तत्समम्। किन्तु? **अविदितात्** आकाशादेश्च **अधि**कमेव। अपि च **अथो** अत्यन्ताविदितात् अव्यक्ताच्च अत्यन्ताधिकमेव। ततोऽप्यतिसूक्ष्मत्वात्। नच तदाधिक्यमेतावदिति परिच्छेद्यम्। अत एवकारस्तदनवसायं [निवर्तयति][२]। नतु समास्या लुप्यते।

---

१. **'करणदोषादेव देवाज्ञेयत्वं तस्य न सर्वतो वैलक्षण्या–'** क.

२. अयं सम्भावितः पाठः। आदर्शे तु **'न्यवर्तत'** इति क्वचित्, **'न्यवर्तयत'** इति क्वचित्। सर्वोऽपि लिपिकृतां प्रमाद इति भाति।

महतोऽपि महीयस्त्वोक्तेः । **पूर्वेषां** नारायणहयग्रीवहंसादीनां सकाशात् **तत्** तत्वं **शुश्रुम** ॥ ४ ॥

**(भा.चं.)** विदिताविदिते सदसती स्थूलसूक्ष्मे वा । **अथो** अविदितादप्यनन्तरं निर्देश्यमत्यन्ताविदितम् । **अधि** अधिकम् । **अनवसायं** आधिक्येयत्ताविषयेऽनिश्चितताम् । षो अन्तकर्मणि । एवकारोऽनन्तत्वं स्फुटयतीत्यर्थः । न क्वापि भगवन्महिम्नः समास्या विलोपः श्रूयते । 'न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप' [ऋ.सं.७.९९.२] इति हि श्रुतिः । 'सर्वात्मना विदितादन्यत्, सर्वात्मना अविदिताच्चान्यत्' इत्यपि व्याचक्षते । 'विदितादविदिताच्चान्यदिति जडजीवविलक्षणमुच्यते' इत्यन्ये । ननु ब्रह्मा किलाऽदिजीवः । ततोऽपि पूर्वे के? येन **'इति शुश्रुम पूर्वेषाम्'** इति तद्वचनं सङ्गच्छेत । ननु भगवांस्ततोऽपि पूर्वः । तर्हि 'पूर्वस्य' इति वक्तव्यम् । न 'पूर्वेषाम्' इति । अत आह– **पूर्वेषां नारायणहयग्रीवहंसादीनामिति** । यद्यप्येक एव भगवान् । अथापि बहुरूपत्वाद् बहुवचनमिति । आदिना विष्णुव्यासौ मुख्यतः । अन्ये च यथासम्भवम् । ये भगवदवताराः नस्तत् व्याचचक्षिरे उपदिदिशुः । अनुष्टुप् छन्दः ॥ ४ ॥

**यद् वाचाऽनभ्युदितं येन वागभ्युद्यते ।**
**तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ५ ॥**

**यन्मनसा न मनुते येनाऽहुर्म्मनो मतम् ।**
**तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ६ ॥**

**यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति[१] ।**
**तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ७ ॥**

---

१. 'पश्यन्ति' इति केचित् ।

यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदं श्रुतम् ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ८ ॥

यत् प्राणेन न प्राणिति येन प्राणः प्रणीयते ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ९ ॥

**इति प्रथमः खण्डः**

—०—

**(टी.)** **'न वाग् गच्छति'**, **'यद् वाचो ह वाचम्'** इत्यादावुक्तलक्षणं **'यद् वाचाऽनभ्युदितम्'** इत्यादिनाऽनूद्य **'तदेव ब्रह्म त्वं विद्धि'** इत्युपदिशति । **यदिदं** प्रत्यक्षादिसिद्धं अस्वतन्त्रं जीवस्वरूपं जडं वा केचिदज्ञा ब्रह्मेति **उपासते नेदं ब्रह्म विद्धि** । अत्यन्तविरुद्धत्वात् । [1]तस्मात् सर्वज्ञत्वसर्वनियामकत्वादिलक्षणश्रवणात् सत्यज्ञानानन्तं[2] ब्रह्मेति सिद्धम् ॥ ५-९ ॥

—०—

**(भा.चं.)** **'वाचा'** वचनेन, वागिन्द्रियेण, वेदवाचा, वाग्देवतया च **'अनभ्युदितम्'** अप्रकटीकृतम्, साकल्येनाप्रकाशितम् । यद् वदति, यत्किञ्चिदेव वदति । तेनानभ्युदितमित्याह । यदभिप्रेत्य वदति, यदभीष्टं वदति, यच्चाभितः साम्रग्येण वदति सा ह्यभ्युदितिर्नाम । **येन** च पुरुषैर्वागिन्द्रियेण वागभितो लोकेषु उच्चार्यते । वद व्यक्तायां वाचि । यस्य चाभ्युदितमभिवदनमस्माकमिव न वागिन्द्रियसापेक्षम् । नापि वाग्देवतासापेक्षमित्यादि । **'यत्'** लोको **'मनसा न मनुते'**, यच्च स्वयं मननाय मनआख्यमिन्द्रियमिन्द्रियमानिनं वा नापेक्षते । **'येन'** च **मनः मतम्** मननशक्तियुक्तम् आहुः । **'यत्'** **'चक्षुषा'** कोऽपि **'न पश्यति'** । यच्च स्वयं **चक्षुषा न पश्यति** । **'यत्'** कोऽपि **'श्रोत्रेण न शृणोति'**; यच्च **'श्रोत्रेण न शृणोति'** । **'यत्'** कोऽपि **'प्राणेन'** स्वचेष्टया न प्राणयति । यच्च स्वयं प्राणाधीनं न चेष्टते । **'येन चक्षूंषि पश्यति'** इत्यभिमानि-

---

१. 'तस्मात् सर्वनियामकत्वसर्वज्ञत्वादि-' ख. २. '-ज्ञानानन्दं' क.

विवक्षयैकवचनम् । चक्षुषामभिमानी विवस्वानपि येन पश्यतीति । यथोपरिष्टात्– 'ते ह्येनत् प्रथमो विदाञ्चकार' इति। **येन** च **चक्षूंषि पश्यति** पश्यन्ति दर्शनशक्तिमन्तो भवन्ति। **येन** वा ख्यायन्त इति **चक्षूंषि** चक्षुर्ग्राह्याणि पदार्थजातानि लोकः **पश्यति**। यदनुग्रहेण च **चक्षूंषि,** तृतीयार्थे प्रथमा, चक्षुषा, अयं लोकः **पश्यति**। तदेवं लिङ्गानां वचनानां च व्यत्ययः शास्त्रेषु बह्वर्थत्वाय भवति। यदाह कात्यायनः– 'सुपां सुपो भवन्ति, तिङां तिङो भवन्ति' [७.१.३९] इति। 'येन चक्षूंषि पश्यन्ति' इत्यपि श्रुतिपाठं पठन्ति। **'येन श्रोत्रमिदं श्रुतम्'** श्रवणशक्तिमत्। **'येन प्राणः प्रणीयते'** प्राणनाय प्रवर्त्यते। प्रकर्षेण नीयते तत्तत् क्रियासु प्रवर्त्यते वा। अत्र द्वेधा प्रतृण्णं भवति– यत्, इदम्, उप+आसते इति। यत्, इदम्, उप, आस, ते इति च। **अत्यन्तविरुद्धत्वादिति**। न केवलं **'नेदं' जीवस्वरूपं जडं वा ब्रह्म**। यदिदं ध्यानकाले चित्ते प्रदृश्यते **नेदमपि ब्रह्म विद्धि**। तस्य वासनामयत्वात्। तथाहि बादरायणसूत्रम्– 'तथाऽन्यत् प्रतिषेधात्' [३.२.३७] इति। 'उपास्तिस्फुरितादप्याकारादन्यद् ब्रह्म' इति तत्वप्रदीपे। अथच **नेदं** जीवस्वरूपं **ब्रह्म**। किन्तु **'यत् ते उप'** समीपे नियामकं सत् **'आस'**। यच्च त्वत्त **उप** उपरिगतमुत्कृष्टं **तदेव ब्रह्म त्वं विद्धीति** चार्थान्तरम्॥

अत्राऽह कश्चित्– 'नेदं जीवस्वरूपं ब्रह्म। यत् तव उप समीपे आस्ते नियामकतया वर्तते तदेव ब्रह्मेति व्याख्याने उपासनाशब्दरूढित्यागः, जीवब्रह्मैक्यशास्त्रविरोधः, अप्रसक्तप्रतिषेधश्च दोषः' इति। अद्भुतमस्य बालिश्यम्। नात्रोपासनापदं श्रूयते। किन्तूपासतेपदम्। तस्य च स्वीकृता रूढ्यर्थता– 'यदिदं प्रत्यक्षादिसिद्धं अस्वतन्त्रं जीवस्वरूपं जडं वा केचिदज्ञा ब्रह्मेति उपासते नेदं ब्रह्म विद्धि' इत्यस्माभिर्व्याख्यातत्वात्। तदुक्तं तु व्याख्यानान्तरम्। तदपि 'किन्तु यत् ते समीपस्थमास ते विनियामकम्' इति प्रमाणप्रमितमित्यङ्गीकृतम्। किञ्च रूढित्याग इति का रूढिः? नहि

भवादृशस्याज्ञस्य रूढिर्वेदेषूपयुज्यते। विद्वद्रूढिस्त्वर्थद्वयेऽप्यस्ति। भवादृशान् प्रत्येव यास्क आह– 'नैष स्थाणोरपराधो यदेनमन्धो न पश्यति' इति। नापि लोकसिद्धार्थ एव वेदेषु वक्तव्य इति काऽपि राज्ञामाज्ञाऽस्ति। यदपि जीव-ब्रह्मैक्यशास्त्रविरोध इति। नहीदं शास्त्रम्। किन्तु स्वकपोलकल्पितो वादः। तद्विरोधो गुण एव न दोषः। अव्युत्पन्नानां शास्त्रतत्वमविजानतामीदृशाः कुवादा भवन्ति। तथाचोक्तं भारते– 'ऐकात्म्यं नाम यदिदं केचिद् ब्रूयुर-नैपुणाः। शास्त्रतत्वमविज्ञाय' इति। अत एव चाप्रसक्तप्रतिषेध इति च परास्तम्। ननु भवादृशैः प्रसक्तो दुर्वादः श्रुत्यपार्थजनितो भगवत्या श्रुत्या कृपया प्रतिषिध्यत इति सर्वं सुन्दरम्॥ * ॥

अयमत्र क्रमः। वाग्देवता स्वाहा प्रथममुक्ता। ततो मनोदेवः पर्जन्यः। अग्निर्वा। ततश्चक्षुःश्रोत्रमानिनौ सूर्याचन्द्रमसावन्ते च मुख्यप्राण इति देवतातारतम्यानुगुणोऽयं निर्देशः। अथच वाङ्मनसी पार्वतीपरमेश्वरौ। 'यच्छेद् वाङ्मनसी' इति हि श्रुतिः। शिवं प्रति तदीयदाम्पत्यानुभवमेव प्रथम-मुदाजहार। ततश्च सूर्यचन्द्रावन्ते प्राण इति॥ * ॥

अत्र पञ्चमो मन्त्रः प्रथमपादे सप्ताक्षरस्तुरीयपादे नवाक्षर इति संहत्य द्वात्रिंशदक्षराऽनुष्टुबेव। षष्ठो मन्त्रो द्वितीयपादे सप्ताक्षरस्तुरीये नवाक्षर इत्यनुष्टुबेव। सप्तमस्तुरीये नवाक्षर इत्येकाक्षराधिकाऽनुष्टुबेव। एवमष्टमो नवमश्च॥ ५–९॥

—०—

[अथ द्वितीयः खण्डः]

यदि मन्यसे सुवेदेति दह्रमेवापि[1] नूनं त्वं
न वेत्थ ब्रह्मणो रूपम् ।
यदस्य त्वं यदस्य देवेष्वथनु
मीमांस्यमेव ते मन्ये[ऽ]विदितम्[2] ॥ १ ॥

[3]नाह मन्ये सुवेदेति नो न वेदेति वेद च ।
यो नस्तद् वेद तद् वेद नो न वेदेति वेद च ॥ २ ॥

**(टी.)** अथापि **'विद्धि'** इत्यभ्याससामर्थ्यात् केनचित्[4] सुविदितं भवितुमर्हति ब्रह्मेति श्रोतुर्मनःशङ्कां[5] स्वयमेवाऽशङ्क्य [6]परिहरति– **यदि मन्यस** इति। **यदि** कश्चित् [7]सुतरां **वेद** ब्रह्म इति **मन्यसे**, अहं **सुवेदेति** वा, तर्हि **त्वं दह्रं** स्वहृदयस्थमेव **ब्रह्मणो रूपं नूनं न वेत्थ । यदस्य त्वं यदस्य देवेषु,** यदस्य ब्रह्मणः त्वंशब्दितं रूपं प्रतियोगित्वात्, त्वद्गतत्वाद् वा, यच्चास्य देवेषु नियामकत्वेन स्थितं रूपं [8]तदुभयमपि **न वेत्थ**, किंपुनः सर्वगं रूपम्? एतेष्वेकमपि रूपं न वेत्थ चेत् सुवेद्यं[9] सुवेदेति कथमेव मन्येथाः? **अथ** तस्मादज्ञस्य तव **मीमांस्यमेव** ब्रह्मेति अहं **मन्ये**। अथनुशब्दात् अथवा

---

१. **'दभ्रमेवापि नूनं त्वं वेत्थ'** इति, **'दहरमेवापि नूनं त्वं वेत्थ'** इति च प्रचुरः पाठः। सर्वत्र नञ्विरहित एव प्रचलितः पाठः। **'न वेत्थ'** इति तु व्याख्यानानुगुणः पाठः।

२. **'ते मन्ये विदितम्'** इति प्रचलितः पाठः। सर्वव्याख्यानसम्मतश्च। **'अविदितं च न मन्ये'** इति व्याख्यानस्वारस्याद् द्वेधाऽपि पदपाठः पूर्वाचार्यसम्मत इति विज्ञायते।

३. **'नाहं मन्ये'** इति च पाठान्तरम्।

४. **'केन सुविदितं भवति'** ख.

५. **'श्रोतृमनःशङ्काम्'** ख.

६. **'परिहरति परिहर्ता'** ख.

७. **'सुतरां चेद् ब्रह्म वेदेति'** ख.

८. **'स्थितम्, एतदुभयमपि'** ख.

९. **'चेत् असुवेद्यम्'** ख.

नैवं[1] त्वं मन्यस इति पक्षान्तरं च सूचितम्। अत्र पुनः **'ते मीमांस्यम्'** इति कर्तृविशेषोक्तेः[2] आत्मनो मीमांसितमेवेति [3]च सूचयति ॥ * ॥

पक्षान्तरे तु ज्ञानानुदयदोषस्य सर्वसम्मतत्वात् [4]मीमांसापक्षमेवाऽश्रित्याऽह– **विदितमित्यादि** । अयमर्थः– मीमांसयाऽपि सर्वजन्तुभिः **विदितं** भवतीति **न मन्ये** । 'असार्वत्रिकी' [ब्र.सू.३.४.१०] इति सर्वाधिकारस्य[5] निषेधात् । तर्हि **अविदितं** केनापीति च **न मन्ये**[6] । तद्भक्तैर्यथाधिकारं विदितत्वात् । [7]भक्ताग्रणीरेकस्तु तदनुग्रहात् **सुवेद**। स च वायुरहं च । छन्दसां योगार्थवित्त्वात् । इतिशब्दादितोऽधिकोऽधिकारी नास्तीति सूचयति[8] । समाप्तिवाचकत्वात्। **'नाह मन्ये'** इत्युभयत्राप्यहशब्दस्तु [9]एवमहो महदाश्चर्यं ब्रह्मेति वक्ति। एवं स्वमतमुपन्यस्तम्। अथ[10] परमतं दूषयति– **नो** इति । यदिदं सच्चित्सुखाद्वयं ब्रह्म तत् सर्वथा कश्चित् न वेद, वेत्तुरेवासम्भवात्, नहि स्वयमेव स्वात्मानं वेद, कर्मणः कर्तृत्वासम्भवात्, नच परो वेद, परस्य स्वरूपासिद्धेः, नच तस्य वेद्यत्वमस्ति, अविषयत्वात्, मिथ्यात्वप्रसक्तेश्च, तस्मात् कोऽपि[11] ब्रह्म **न वेदेति** यदिदमासुरमतं तदप्यहं ग्राह्यमिति **नो वेद**[12] । चशब्दोऽवधारणे। न मम मतमन्यथा भवति[13]। **'व्याचचक्षिरे'**, **'शुश्रुम'** इति श्रोतृत्वनिश्चयात् । 'न कर्हिचिन्मे मनसो मृषागतिः' [२.६.३३] इति भागवतवचनाच्च। यत् पुनरिह परोत्प्रेक्षितं[14] युक्तिजातं [15]तदनुभवादिविरुद्धत्वादमानम्। अहं मामिति स्वग्रहणात्, तद् ब्रह्मेति विषयीकरणात्,

१. 'नैवेति त्वम्' ख. २. 'कर्तुर्विशेषो–' क. ३. '–मेवेति सूचयति' ख.

४. 'मीमांस्यपक्ष–' इति ख. ५. '–धिकारनिषेधात्' ख.

६. '–षेधात्। अविदितं केनापीति न मन्येत। भक्तै–' क. ७. 'तद्भक्ता–' क.

८. 'इति शब्दस्त्वितोऽधिकारी नास्तीति वक्ति।' ख.

९. 'एवं महामहदाश्चर्यम्' क. १०. 'अपरमतं' क. ११. 'कश्चित्' क.

१२. 'तदप्यसङ्ग्राह्यमिति नो न वेदेति वेद चेत्याह' ख. १३. 'न तत्वमन्यथा भवति' क.

१४. 'पुनरपरोत्प्रेक्षितम्' ख. १५. 'तदनुमादिविरुद्ध–' क.

स्वतोऽभेदाभावात्, बाधकाभावाच्च । तस्माद् यथायोग्यं वेद्यमेव ब्रह्मेत्येष्टव्यम् । तदेतदाह– **'नातिवेद्यो नचावेद्यः'** इति । इहातिवेद्यत्वोत्प्रेक्षणमवेद्यत्वोत्प्रेक्षणं चाब्रह्मविल्लक्षणं ह्युक्तम् । अथ ब्रह्मविदः किं लक्षणमित्याकाङ्क्षायामाह– **यो न** इति । **यो** मीमांसकानामस्माकं **तद्** यथाधिकारवेद्यत्वं ब्रह्मणो **वेद** स एव **तद् ब्रह्म वेद** । यः पुनः कोऽपि **न वेदेति** दुर्मतं सुमतमिति **च नो वेद** । वेद्यत्वमात्रस्य च दृश्यमानत्वात् । एवं च सुवेद्यत्वावेद्यत्वाभावज्ञानं ब्रह्मविल्लक्षणमिति सिद्ध्यति । तस्मादेव[1] ब्रह्मरूपं दह्रमेव वेद्यं नादह्रमित्युक्तं स्यात् ।। १–२ ।।

**(भा.चं.) 'दह्रमेव' स्वहृदयस्थमेव** । 'तत्रापि दह्रं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम्' इति हि श्रुतिः । 'दह्रमेवापि नूनं त्वं वेत्थ' इति नञ्विरहितः प्रचलितः श्रुतिपाठः । **'स्वहृदयस्थमेव ब्रह्मणो रूपं नूनं न वेत्थ'** इति स्फुटं व्याख्यानात् नञ्गर्भ एव प्रतनः पाठ इति निश्चीयते । **यदस्य त्वम्** । इमं मन्त्रभागं केचित् क्लेशेन योजयन्ति– 'यत् इह लोके विद्यमानं अस्य ब्रह्मणो रामकृष्णादिरूपं वेत्थ, यदस्य ब्रह्मणो देवेषु ब्रह्मरुद्रादिमध्यस्थं त्वं वेत्थ तदपि दभ्रमल्पम्' इति । अत्रेदं पुनरस्फुटम्– इहेति पदं केवलं स्वार्थसामीचीन्याय किं वृथाऽध्याहृतम्, आहोस्वित् 'यदस्येह त्वम्' इति तत्सम्मतः श्रुतिपाठ इति । 'त्वमिति सप्तम्यर्थे । त्वयि शिष्ये यदन्तर्यमनकर्तृ ब्रह्मणो रूपम्, देवेष्वथ देवेष्वपि यद्रूपम्' इति रामानन्दीयम् । **यदि मन्यस** इति मन्त्रोऽयं हंसमन्त्रवद् गायत्रीद्वयात्मकः । पूर्वार्द्धे चैकाक्षराधिका गायत्री । तेन चैकाक्षराधिका जगती च । उत्तरार्द्धे 'देवेषु अथनु' इति विश्लेषेण चतुर्विंशतिरक्षराणि । अविश्लेषे पुनरष्टचत्वारिंशदक्षरा [२५+२३] केवला जगतीत्यपूर्वा च्छन्दोविच्छित्तिः ।। ※ ।।

**'मीमांस्यमेव ते मन्ये[ऽ]विदितम्'** इति पूर्वमन्त्रान्ते 'विदितम्' इति, 'अविदितम्' इति द्वेधा प्रतृण्णमङ्गीकृत्य तस्योत्तरमन्त्रवाक्येनान्वयमाह–

---

१. **'तस्मादत्र'** क.

**'विदितं भवतीति न मन्ये'** इति, **'अविदितं केनापीति च न मन्ये'** इति च। तेन **'मन्येऽविदितम्'** इति ब्राह्मणे पठ्यमानः सावग्रहपाठोऽप्यनुमतो भवति। तद् यथा 'आत्मा तत् त्वमसि' इति, 'आत्मा अतत् त्वमसि' इति द्वेधाऽपि पाठोऽभ्युपगतः। यथा वा 'ज्ञाते द्वैतं न विद्यते' इति, 'ज्ञाते अद्वैतं न विद्यते' इति च। एवमेकयोक्त्याऽर्थद्वयावगमनसौकर्यायैव चोत्तर-मन्त्रान्वितं पदं ततो विच्छिद्य पूर्वमन्त्रान्ते निवेशितम्– **'मन्ये[ऽ]विदितम्'** इति। उत्तरमन्त्रे च महती पाठे विचिकित्सा–**'नाहं मन्ये'** इत्येके। **'नाहमन्ये'** इत्यन्ये। तत्रापि 'न। अहम्। अन्ये' इति प्रतृण्णं केचिन्मन्यन्ते। 'न। अह। मन्ये' इत्येके। तदिदमर्थतः पाठतश्च वैयाकुल्यं सम्प्रदायविच्छेद-फलम्। 'न। अह। मन्ये' इति पदपाठ इति चापूर्वं प्रमेयं प्रतनसम्प्रदाया-गतं विस्मृतं स्मारयन्नाविश्चकार प्राचीनटीकाकारः। परभाष्येऽप्ययमेव श्रुति-पाठः–'नाह मन्ये' इति। एवमेव च प्रतृण्णम् – 'न। अह। मन्ये' इति। तथाहि परकीयं पदभाष्यम्– 'नाह नैव अहं मन्ये सुवेद ब्रह्मेति' इति। यदधुनातनाः शाङ्कराः पठन्ति–'नाहं नैवाहं मन्ये' इति, तदज्ञानमूलम्। स्फुटमेतत् तदीयवाक्यभाष्ये–'अहेत्यवधारणार्थो निपातः। नैव मन्य इत्येतत्' इति। **छन्दसां योगार्थवित्त्वादिति।** 'कश्छन्दसां योगमा वेद धीरः' इति हि श्रुतिः। **समाप्तिवाचकत्वादिति।** तथाहि सूत्रम्– 'इयदामननात्' [ब्र.सू. ३.३.३५] इति। **उभयत्राप्यहशब्द** इति। **'नाह मन्ये'** इत्यत्र श्रूयमाणं **'अह'** इति पदम्, **अह विदितं न मन्ये, अह अविदितं च न मन्ये** इत्युभयत्रा-प्यन्वीयते। तेन चोभयान्वयेन **अहो महदाश्चर्यं ब्रह्मेति वक्ति।** केनाप्य-विदितमाश्चर्यभूतं तत्। अथापि तदनुग्रहशालिभिर्भवति किञ्चिदिव विदित-मिति तदप्याश्चर्यम्। 'आश्चर्यवत् पश्यति कश्चिदेनम्' इति च गीतासु। 'अहो' इति 'अह' इति च समानोऽर्थः। तद् यथा–'अथो अथ' ॥ ❋ ॥

**अहं मामिति स्वग्रहणात्,** कर्मणोऽपि कर्तृत्वसम्भवात्। **तद् ब्रह्मेति विषयीकरणात्,** तेन चाविषयत्वस्याप्रामाणिकत्वात्, वेद्यत्वाच्च। **स्वतो-**

**ऽभेदाभावात्**। जीवपरमात्मनोः स्वरूपतोऽभेदाभावात् भेदेन चानुभवगोचरत्वादहमज्ञ इति न स्वरूपासिद्धिप्रसङ्ग इति। **'बाधकाभावात्'** तेन मिथ्यात्वप्रसक्त्यभावाच्च । **ब्रह्मरूपं दह्रमेव** स्वहृदयस्थमेव, तत्रापि **दह्रमेव** किञ्चिदेव। अत्रापि च्छन्दोऽनुष्टुप्। उपरितनमन्त्रेऽपि ॥ १–२ ॥

**यस्यामतं तस्य मतं मतं यस्य न वेद सः ।**
**अविज्ञातं विजानतां विज्ञातमविजानताम् ॥ ३ ॥**

**(भा.)** **'सर्वात्मना विजानामीति[1] यस्य मतं भवेत् ॥**
**'तस्याज्ञातः स भगवान् यो नैवं मन्यते सदा ।**
**'ज्ञातस्तस्य तथाऽस्यैव निःशेषमननं कृतम् ॥**

**'इति यो मन्यते नास्य मतः स पुरुषोत्तमः ।**
**'नातिवेद्यो नचावेद्यस्तस्मात् स परमेश्वरः ॥ ※ ॥**

**(टी.)** अथ दह्रमपि गुणक्रियाद्यशेषविशेषैः सह नैव ज्ञातं भवतीत्याह– **अविज्ञातमिति**। अशेषविशेषैः सह जानीम इति वदतामविज्ञातमेव ब्रह्म अन्येषां **विज्ञातं** भवति । अपरिच्छिन्नमेतदिति सम्यग्ज्ञातत्वात् । अत्र प्रमाणमाह– **सर्वात्मनेति**। **अस्यैव निःशेषमननं कृतमित्यादिना 'यस्यामतं तस्य मतम्'** इत्यादेरभिप्रायं कथयति । क्रमविपर्यासस्तु व्युत्पादनसौकर्यापेक्षया युज्यते। **'नूनं न वेत्थ'** इति ब्रह्मवाय्वोरेव ह्यज्ञत्वापवादः । **'सुवेद'** इति देवाद्यनन्तरूपब्रह्मज्ञानविधानात्। 'ब्रह्मा तु सर्वगं पश्येत्' [ अनु. ३.४. ७२] इति वचनाच्च । 'न विद्म न विजानीमः' इति वचनं तु[2], 'न रमावद् विशेषाणां दर्शनं शक्नुयात् क्वचित्' [अनु. ३.४.७३] इत्युक्तत्वात् तादृशानन्तविशेषविवक्षयेत्यविरोधः[3] । एतदेव हि भाष्ये पुरस्तादुक्तम्– 'यं सम्यङ्

१. **'विजानामीति तु यस्य'** इति प्र. पाठः। प्राचीनपाठे **'विजानामि इति'** पादयोर्विश्लेषेण छन्दःपूर्तिः। विदितचरा चेयं परिपाटी छन्दःशास्त्राभिज्ञानाम्।

२. **'वचनं च'** क.

३. **'विवक्षयेत्यदोषः'** क.

नैव जानाति कश्चिन्निरवशेषतः' इति । अत्र तु भगवद्व्यतिरिक्तानां यथा-योग्यपरिज्ञानाभ्यनुज्ञानं हि कृतम् । इदमेव पुनः– **नातिवेद्यो नचावेद्य** इति निगमयाञ्चकार । अनन्तत्वात् **नातिवेद्यः** । शास्त्रयोनित्वात् **नचावेद्यः** । किन्तु यथाशक्ति वेद्य एव ।। ३ ।।

**(भा.चं.)** नन्वविज्ञातं विजानतामिति किमिदं व्याहतं व्याह्रियत इत्यतो मन्त्रा-शयमाह– **'विजानताम्' अशेषविशेषैः सह जानीम इति वदताम् 'अविज्ञातम्'** इति । **यस्य मतं** अभिमतम्, **तस्य अज्ञातः** । 'मतिबुद्धिपूजार्थेभ्यश्च' [अष्टा.सू.३.२.१८८] । इति वर्तमाने क्तः । ततश्च वर्तमानकालविहितस्य क्तस्य प्रयोगे 'क्तस्य च वर्तमाने'[अष्टा.सू.२.३.६७] इति षष्ठी । **यो नैवं मन्यते सदा** तेन **सदा ज्ञातः । तथैव, अस्य** भगवतः **निःशेषतया मननं** मया **कृतमिति यो मन्यते न** तस्य **मतः** । अथच **यो मन्यते न तथा अस्य मतः स पुरुषोत्तमः** । क्षराक्षराभ्यां पुरुषाभ्यां विशिष्य ज्ञातुमशक्यत्वादेव हि तं पुरुषोत्तममाहुः । अत एव च परमेश्वरः । परविषया परा मा येषां ते ब्रह्मादयः परमाः । तेषामपीशाना रमा । तस्या अपि वरोऽयमिति कथमेनं सर्वात्मना विजानीयात्? मननं कारणम्, विज्ञानं कार्यमिति मन्त्रे मननस्य पूर्व-ग्रहणेऽपि विज्ञानार्थमेव मननम्, विज्ञानमेव परमसाध्यमिति **व्युत्पादन-सौकर्यापेक्षया** प्राधान्यजिग्राहयिषया क्रमविपर्ययः ।। ३ ।।

**प्रतिबोध[1] विदितं मतममृतत्वं हि विन्दते ।**
**आत्मना विन्दते वीर्यं विद्यया विन्दतेऽमृतम् ।। ४ ।।**

**(टी.)** उपदेशमुपसंहरति–**प्रतिबोध विदितं मतमिति** । एतत् **मतं** एवं मया भगवत्याः श्रुतितः[2] श्रुत्वा युक्तितो मत्वा विचार्य निर्णयेन **विदितम्** । त्वमपि मदुपदेशेन इत्थमेव प्रतिबोध[3] । अस्य प्रतिबोधस्य फलमप्युपदिशति–**अमृतत्वं**

१. **'प्रतिबोधविदितम्'** इति समस्तं पदमिति च व्याचक्षते । **'प्रतिबोधविदितममृतममृतत्वम्'** इति रङ्गरामानुजीयः पाठः ।
२. **'श्रुतितः श्रुतम्, युक्तितोऽपि विचार्य–'** ख.
३. आदर्शे **'मदुपदेशेन वेत्थ । इत्थमेव प्रतिबोधः'** इति पठ्यते । लिपिकृत्प्रमादः सम्भाव्यते ।

**हि विन्दते**। अतस्त्वमपि तद्बोद्धा चेत् तद् विन्दस इति भावः । ज्ञानमन्तरेणापि स्वशक्त्या महोत्साहेनामृतत्वं विन्दत इत्यत आह– **आत्मनेति**। आत्मशक्त्या उत्साहपरिपूर्तिमेव **विन्दते** । **विद्ययैव** अमृतत्वं **विन्दते** पुरुषः ।। ४ ।।

**(भा.चं.) प्रतिबोध** प्रतिबुद्धयस्व। भ्वादेर्बोधते रूपमेतत् । बुध अवगमने । बुध बोधने वा । बुधिर् बोधने इति काशकृत्स्नः । प्रथमः परस्मैभाषोऽनिट् । द्वितीयस्तूभयतोभाषः सेट् । अयमेव हि प्रतिबोधः– यद् गुरुमुखतः श्रुत्वा, युक्तितो मत्वा, विचार्य ध्यानयोगे भगवद्वेदनम् । अथ प्रतिबिम्बे स्वस्मिन् बिम्बस्य भगवतः बोधः साक्षात्कारः प्रतिबोधः । प्रतिनियतो हि बोधः प्रतिबोधः। प्रतिपन्नो बोधः प्रतिबोधः। श्रुत्या युक्त्या च प्रतीत्य बोधः प्रतिबोधः । सर्वतः सारं प्रतिगृह्य च बोधः प्रतिबोधः । **'प्रतिबोधविदितम्'** इति समस्तं पदमिति बह्वः। **आत्मशक्त्येत्यादि**। **'आत्मना' आत्मशक्त्या 'वीर्यं'** उत्साहपरिपूर्तिं **'विन्दते'** इति । **आत्मना** परमात्मना वा प्रसन्नेन **विन्दते वीर्यमवबोधसामर्थ्यम्** । **आत्मना** निरन्तरचिन्तनेन वा विद्यासामर्थ्यं **विन्दते** । 'आत्मा मनश्चिन्तनं च शेमुषी बुद्धिरित्यपि। एकार्थवाचकाः' इति किल शब्दतत्ववचनं बृहद्भाष्ये।'आत्मना धृत्या वीर्यं विद्यानिष्पत्तिजनकं बलम्' इति च व्याचक्षते। अपरोक्षज्ञानरूपया **विद्यया** च **अमृतं** स्वरूपानन्दं परमात्मानं वा **विन्दते** । अमृतत्वं वा । प्रथमपादे एकाक्षराधिकाऽनुष्टुप् ।। ४ ।।

**इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः ।**
**भूतेषुभूतेषु विचित्य[१] धीराः प्रेत्यास्माल्लोकादमृता भवन्ति ।।**
**।। ५ ।।**

**इति द्वितीयः खण्डः**

—०—

१. **'विचिन्त्य'** इति केचित्।

**(भा.)** 'नेदं जीवस्वरूपं तद् ब्रह्म विष्ण्वाख्यमव्ययम् ।
'किन्तु यत् ते समीपस्थमास ते विनियामकम् ॥
'तदेव ब्रह्म विद्धि त्वं विष्ण्वाख्यं परमव्ययम् ।
'नियामकं तद् देवानां मर्त्यानां किमुतोत्तमम् ॥

'तत्प्रसादं विना जीवे मन्तव्या न प्रवृत्तयः ।
'किमु जीवस्य तद्भावो न मन्तव्य इतीर्यते ॥ ※ ॥

—o—

**(टी.)** तथाऽपि सा [१]विद्या पारलौकिकफलत्वात् परत एवोत्पादनीया। तस्मादिह नहि मीमांस्यमित्यत आह– **इह चेदिति** । इह जन्मनि लोके वा, ब्रह्मस्वरूपं **अवेदीच्चेत् अथ** प्रेत्य परलोके **सत्यं** नित्यफलममृतत्वमस्य **अस्ति**। इह ज्ञानिसद्भावेऽपि **नावेदीच्चेत्, महती विनष्टिर्भवति**। तथाहि– परतत्वद्वेषेण[२] **नावेदीच्चेत्** नित्यनिरयप्राप्तिर्भवति। औदासीन्येन चेन्नित्यसंसारो नियतः। यथाशक्ति प्रवृत्तिराहित्येन चेत् भक्तानां मुक्तिविळम्बः। मुक्तिराहित्येनासुरादीनामेषा विशिष्टनष्टिः स्वस्वयोग्यतानुसारेण महत्येव भवति । तस्माद् यथाशक्तीहैव ब्रह्म वेदितव्यम्। 'इहैव दृष्टिं परमस्य विन्देत्' इति श्रुत्यन्तरे। तदेतद् विद्वांसो **धीराः** सर्वभूतेषु नियामकत्वेन स्थितं विष्ण्वाख्यं ब्रह्म **विचित्य** विज्ञायोपास्य **अस्माल्लोकात् प्रेत्य अमृता भवन्ति** ॥ ※ ॥

अत्राऽहुः– नैवं[३] ब्रह्मोपास्तिर्भेदेन कर्तव्या[४] । किन्तु सर्वजीवेषु ब्रह्मस्वरूपमेकीकृत्य 'अहमेतदस्मि' इत्यभेदेनैव सा कार्या । जीवानां ब्रह्मभावापरोक्षस्यैव मोक्षत्वादिति । तदेतदनाद्यज्ञानविजृम्भितम् । नह्येकीभाववाचकं वचनमिह श्रूयते[५] । चिनुधातोः संयोगार्थतया साक्षाद् भेदपरत्वात्। नच जीवस्य ब्रह्मभावो मोक्षः कल्प्यः। सहभावस्यैव मोक्षत्वश्रवणात् । तस्मादुपास्तिरपि

१. 'सद्विद्या' ख. २. 'तथाहि द्वेषेण' ख. ३. 'नेत्थम्' ख.
४. 'कार्या' ख. ५.'दृश्यते' क.

भेदेनैव युक्ता । एवमेव हि [१]पूर्वत्राप्युपास्तिर्विस्पष्टमुपदिष्टा– 'यद् वाचाऽनभ्युदितम्' इत्यादौ । तत्र हि तत्तन्नियामाकत्वादिविशेषलक्षणमुक्त्वा 'तदेव ब्रह्म विद्धि' इति सावधारणमुपदिष्टम् । नहि जीवस्वरूपं ब्रह्म विद्धीत्युपदिष्टम् । प्रत्युत यदिदं जीवस्वरूपं केचिदज्ञा ब्रह्मेति उपासते त्वं तु नैवं ब्रह्मेति[२] विद्धीति निषिद्धं च । नहि नियम्यनियामकयोरेकीभावो युज्यते । अत्यन्तविरुद्धलक्षणत्वात् । तदेतदाह– **'नेदं जीवस्वरूपं तत्'** इत्यादिना । तस्मात् सर्वभूतनियामकं [३]पुरुषमुपास्यैवामृता भवन्तीति सिद्धम्[४] । तथाच श्रुत्यन्तरम्– 'सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते' [महैत.उ.२.८.३.७] इत्यादि ॥ ५ ॥



**(भा.चं.) नहि मीमांस्यमिति** । तेन च महोत्साहेनैव प्रयतमानोऽमृतत्वं च विन्दते । किं ज्ञानेन? इत्यतो वाऽह– **इह चेदवेदीत्** । नित्यनिरयप्राप्तिरेव हि **महती विनष्टिः** । अन्यादृश्यश्च विशिष्टनष्टयो भवन्तीत्याह– **औदासीन्येन चेदित्यादि** । **विचित्य,** चिञ् चयने । वक्ष्यति हि स्वयमेव– 'चिनुधातोः संयोगार्थतया साक्षाद् भेदपरत्वात्' इति । तत्रतत्रोक्तस्य भगवद्गुणजातस्य मनसि सञ्चयनं हि चयनं नाम । तदेवोपासनं च । अत आह– **विचित्य विज्ञायोपास्येति** । **अस्माल्लोकात् प्रेत्य,** लोकान्तरं प्राप्य, **अमृता** मुक्ताः स्वरूपानन्दभुजो **भवन्ति** । **सहभावस्यैव मोक्षत्वश्रवणात्** । 'सोऽश्नुते सर्वान् कामान्त्सह ब्रह्मणा विपश्चिता' इति । नियम्यनियामकभावेन जीव-परयोर्भेदवादिनीमैतरेयीमुपनिषदमत्र संवादयति– **सर्वेषु भूतेष्वेतमेवेत्यादि** । अत्र पूर्वार्द्धं जागतम्, उत्तरार्द्धं त्रैष्टुभमित्यपूर्वः छन्दःसमावेशः । संहत्य द्व्यक्षरोना जगती, द्व्यक्षराधिका वा त्रिष्टुप् ॥ ❋ ॥

१. **'पूर्वत्रोपास्ति–'** ख.
२. **'नैवं विद्धीति'** क.
३. **'परमुपास्यैवा–'** ख.
४. **'सिद्धमेव'** ख.

**'यत् ते'** **'उप'** समीपे स्थितं सत् **'ते'** **विनियामकम्** **'आस'** । **अव्ययम्** नाशरहितम् । नेदमव्ययत्वम् 'अश्वत्थं प्राहुरव्ययम्' इत्यादिवत् प्रवाह-नित्यत्वेनौपचारिकम्, किन्तु स्वरूपनित्यत्वमेवेत्यवधारयितुं पुनराह– **विष्ण्वाख्यं परमव्ययम्** । नापि जीववद् देहोत्पत्तिनाशवत्त्वेऽपि स्वरूपतो नित्यत्वादव्ययम् । किन्तु **परमव्ययम्** । देहतोऽपि नाशरहितम् । चतुर्विध-नाशरहितमित्येतत् । 'अनित्यत्वं देहहानिर्दुःखप्राप्तिरपूर्णता । नाशश्चतुर्विधः प्रोक्तः' इति ह्युक्तम् । तदेव सर्वोत्तममिति **देवानामपि** **नियामकम्** । **किमुत मर्त्यानाम्** । तात्पर्यपूर्वकमवधारणार्थं **'विष्ण्वाख्यम्'** इति द्विरुक्तिः । विशति वेवेष्टीति, अन्तर्यामित्वेन, सर्वगतत्वेन चेति द्विविधमपि विष्णुत्वं तस्मिन्न-नुसन्धेयमिति द्योतयितुं च । **यत् ते विनियामकम्,** तन्नान्यत् किमपि दैव-तान्तरम् । किन्तु **विष्ण्वाख्यमे**वेत्यवधारयितुं चेति ॥ ५ ॥



[अथ तृतीयः खण्डः]

ब्रह्म ह देवेभ्यो विजिग्ये । तस्य ह ब्रह्मणो विजये देवा अमहीयन्त । त ऐक्षन्तास्माकमेवायं विजयोऽस्माकमेवायं महिमेति ॥ १ ॥ तद्धैषां विजज्ञौ । तेभ्यो ह प्रादुर्बभूव । तन्न व्यजानत[१] किमिदं यक्षमिति ॥ २ ॥

(भा.) 'इत्यत्राऽख्यायिकां वच्मि शृणु तां त्वं महेश्वर ।
'स्थित्वा देवेषु तद् ब्रह्म व्यजयद् दैत्यदानवान् ॥

'देवेभ्योऽत्थाय विजयं तं देवा मेनिरे स्वकम्[२] ।
'आविष्टा असुरैस्तेषां प्रबोधाय जनार्दनः ॥

'यक्षरूपः प्रादुरभूदुमाशिवसमन्वितः ।
'ब्रह्मणा चापि सहित एतेभ्योऽपि परो ह्यहम् ॥

'एतेऽपि मे भृत्यभूताः परिवार्य व्यवस्थिताः ।
'इति ज्ञापयितुं विष्णुः सह तैरप्युपागतः ।
'यूयमेतानपि ज्ञातुमशक्ताः किमु मामिति ॥ ❋ ॥

(टी.) देवानामपि पारतन्त्र्यातिरेकाद् ब्रह्मत्वं दूरतो निवारितमिति[३] यदुक्तं तत्रेदमुपाख्यानं वक्ति– 'ब्रह्म ह देवेभ्यो विजिग्ये' इत्यादि । [४]अस्याभिप्रायं कथयति– इत्यत्राख्यायिकां वच्मीत्यादिना । स्थित्वा देवेषु तद् ब्रह्म यत्

१. 'व्यजानन्त' इति पाठान्तरम् ।

२. 'मेनिरे स्वयम्' इति प्राचीनादर्शे । अनवधानपतितं स्यात् । स्वयमित्येतत् स्वकीयमित्यर्थे वा व्याख्येयम् ।

३. 'दूरतो वारितमिति' ख.

४. 'तस्याभिप्रायं' ख.

सर्वभूतसंस्थं पुरस्तादुक्तं तद् ब्रह्म **देवेषु** नियन्तृत्वेन **स्थित्वा देवेभ्यः**[1] प्रयोजनाय असुरान् **विजिग्ये** । तं जयं **देवाः** परकृतमपि स्वकृतं **मेनिरे** । **'तद्धैषां विजज्ञौ'**। तेषां **तत्** अन्यथामननं[2] **तद्** ब्रह्म **विजज्ञौ** व्यजानात् ॥ १–२ ॥

**(भा.चं.)** इतः परमुपनिषद् गद्यमयीति न च्छन्दश्चिन्ता । अथ ब्रह्मा काञ्चिदाख्यायिकामारभते । किमनया ज्ञीप्सतीति जिज्ञासायामाह– **देवानामपि पारतन्त्र्यातिरेकात्** । कदाचित् प्रवृत्ते देवानामसुराणां च युद्धे, **देवेभ्यः** देवानां कृते, देवा जीयासुरिति कृपया तेषु सन्निधाय परं **ब्रह्मैव** हि असुरान् **विजिग्ये**। **तस्य विजये देवा अमहीयन्त** स्वसामर्थ्येनैव वयमह व्यजयामहीति विभ्रम्य गर्विणोऽभवन् । **ह** आश्चर्यमेतद् यद् देवा अप्येवं बभ्रमुरिति, अगर्वयन्तेति । भ्रमगर्वितत्वादेव च **ते** देवा एवं **ऐक्षन्त** अमन्यन्त । किमिति? अस्मत्सामर्थ्यमहिम्नैव **अयं विजय** इति । **'अस्माकमेव'** इति द्विरुक्तिर्गर्वातिशयमभिनीय दर्शयतीव । **'तत्'** तेषां दुरीक्षणं **ब्रह्म** व्यजानात् । ननु सदा जानात्येव? सत्यम् । सदाऽपि **'विजज्ञौ'** । अथापि विजज्ञाविति देवानामपि स्फुटं ज्ञापयामासेति विशिष्य विजज्ञौ इत्युच्यते । **'तेभ्यः' तेषां प्रबोधाय 'प्रादुर्बभूव'** । अत एव **जनार्दनः** । जायतेऽनेनेति जनमज्ञानमर्दयतीति हि जनार्दन उच्यते । **'देवेभ्योऽर्थाय' देवेभ्यः** देवानां **प्रयोजनाय**। देवानां प्रियकाम्यया। पूर्वकल्पीयां शिवकथामेव साम्प्रतं शिवं बोधयन्नाह ब्रह्मा – **उमाशिवसमन्वित** इति । देवास्तु **तद् यक्षं** ब्रह्मेति **न** ज्ञातवन्तः । सहागतांश्च ब्रह्मादीन् ब्रह्मादय इति । तेन **किमिदं यक्षमिति** जिज्ञासवो बभूवुः । किमप्यगम्यं तथाऽप्यादरणीयतया दृश्यमानं वस्तु यक्षमित्युच्यते । दृष्टिपथं याति, अथाप्यज्ञायमानं मनः क्षपयतीति । 'यक्ष पूजायाम्' इति च धातुपाठं पठन्ति ॥ १–२ ॥

---

१. **'स्थित्वा तेभ्यः'** क. २. **'अन्यथाज्ञानं'** क.

तेऽग्निमब्रुवन् । जातवेद एतद् विजानीहि किमेतद् यक्षमिति । तथेति ॥ ३ ॥ तदभ्यद्रवत् । तमभ्यवदत् कोऽसीति । अग्निर्वा अहमस्मीत्यब्रवीज्जातवेदा वा अहमस्मीति ॥ ४ ॥ तस्मिंस्त्वयि किं वीर्यमिति[१] । अपीदं सर्वं दहेयं यदिदं पृथिव्यामिति ॥ ५ ॥ तस्मै तृणं निदधावेतद् दहेति। तदुपप्रेयाय सर्वजवेन । तन्न शशाक दग्धुम् । स तत एव निववृते। नैतदशकं[२] विज्ञातुं यदेतद् यक्षमिति॥ ६ ॥ अथ वायुमब्रुवन् । वायवेतद् विजानीहि किमेतद् यक्षमिति। तथेति॥ ७॥ तदभ्यद्रवत्। तमभ्यवदत् कोऽसीति । वायुर्वा अहमस्मीत्यब्रवीन्मातरिश्वा वा अहमस्मीति ॥ ८ ॥ तस्मिंस्त्वयि किं वीर्यमिति[१] । अपीदं सर्वमाददीय[३] यदिदं पृथिव्यामिति ॥ ९ ॥ तस्मै तृणं निदधावेतदादत्स्वेति । तदुपप्रेयाय सर्वजवेन । तन्न शशाकाऽदातुम् । स तत एव निववृते नैतदशकं[२] विज्ञातुं यदेतद् यक्षमिति ॥ १०॥ अथेन्द्रमब्रुवन् । मघवन्नेतद् विजानीहि किमेतद् यक्षमिति । तथेति तदभ्यद्रवत् । तस्मात् तिरोदधे ॥ ११ ॥ स तस्मिन्नेवाऽकाशे[४] स्त्रियमाजगाम बहुशोभमानामुमां हैमवतीम् । तां होवाच किमेतद् यक्षमिति ॥ १२ ॥

**इति तृतीयः खण्डः**

—०—

१. 'वीर्यमित्यपि । इदं' इति कचित् पाठः । २. 'नैनदशकम्' इति कचित् ।

३. 'सर्वमाददीयम्' इति च कचित् ।

४. 'तस्मिन्नेवाऽकाशे' इतीयानेव तच्छब्दविरहितः पाठो रङ्गरामानुजीयः ।

**(भा.)** **‘तज्ज्ञानार्थं हुताशश्च नासिक्यो वायुरेव च ।**
**‘इन्द्रश्च क्रमशो जग्मुस्तं ज्ञातुं नैव चाशकन् ॥**

**‘तत्रेन्द्रोऽधिकबुद्धित्वात् पृच्छतीति जनार्दनः ।**
**‘मत्तः शिवाद् ब्रह्मणश्च श्रोतुं नैवापि शक्तिमान् ॥**

**‘इति ज्ञापयितुं तत्र नादृश्यत स केशवः ।**
**‘एषैव ज्ञानदाने ते योग्योमेति व्यदर्शयत् ॥ * ॥**

**(टी.)** तथेति तद् यक्षं **अभ्यद्रवत्** अग्निः । तं अग्निं **अभ्यवदत्** तद् यक्षं त्वं **कोऽसीति । अग्निरस्म्यहं** नाम्ना । जन्मना **जातवेदाः** । जातमात्र एव सर्वं वेदेति ॥ ३–६ ॥

वायावप्येवमेव योजनान्यायः । स्वनिर्मातरि आकाशे श्वयति वर्धत इति[1] वायुः **मातरिश्वा** ॥ ७–१० ॥

**सः** विष्णुः **स्त्रियमाजगाम** आगमयामास । **योग्योमेति व्यदर्शयत्** । उमैवेन्द्रस्य **ज्ञानदाने योग्येति** तां **व्यदर्शयत् ॥ ११–१२ ॥**

**(भा.चं.)** अग्निरिति पञ्चदश्यां कक्ष्यायां गतो हुताशः । देवास्त**मब्रुवन्**, त्वं किल जातमात्र एव सर्वं वेद । अत एव जातवेदा इति ख्यातः । अतस्त्वं गच्छ, अवगच्छ च **किमेतत्** अस्मन्निकट एव निगूढतया परिदृश्यमानं **यक्ष-मिति । तथेति** । ‘तथाऽस्तु’ इत्युक्त्वा । स्वयं ‘कोऽसि’ इति प्रष्टुमागतः, वक्तुमप्रभवन् मूकविस्मितस्तस्थाविति तमेव **तद्** यक्षं पप्रच्छ– **‘कोऽसि’ इति** । स तु सगर्वमाह– **अग्निर्वै** । सर्वमत्तीति अग्निरित्यन्वर्थनामाऽस्मि । सर्वेषामग्रणीत्वाच्च **वै** किल **अग्निरस्मि** । सर्वज्ञत्वाच्चाहं जातवेदा इति **वै** लोकेषु प्रथितः । **जातमात्र एव सर्वं वेदेति,** जातञ्जातं वस्तुजातं वेदेति । एवमेतादृशं, लोकप्रथितयशसमपि मां न जानीषे! तदा यक्षमग्निं प्रत्याह

१. ‘आकाशे स्वयं वर्धत इति’ ख.

प्रहसदिव **तस्मिन्** एवं विश्वविख्याते त्वयि **किं** सामर्थ्यमस्ति **इति**। अथाप्यक्षीणगर्वक्षीबोऽग्निराह– **यत्** किञ्च **इदं पृथिव्यां** दिवि भुवि वा पदार्थजातं **सर्वमपीदं दहेयमिति**। **तस्मै** तस्याग्नेः स्ववीर्यप्रकाशनार्थम्। **उपप्रेयाय** समाचक्राम सर्वसामर्थ्येन। **तत एव** भृशमवमानित इव, कोऽसीत्यपृष्ट्वैव प्रतिनिवृत्तः। प्रत्यागत्य च देवानाह– **नैतदशकं विज्ञातुम्**॥ ३–६॥

**अथ** अग्नावकृतकार्ये प्रतिनिवृत्ते, **वायुं** देवा **अब्रुवन्**। कोऽयं वायुः? आह– **नासिक्यो वायुरेव च**। अयमर्थः– अयं वायुस्तावदग्नेरुत्तमः, इन्द्रादवर इति मूल एव स्फुटम्। तेन गतस्तृतीयकक्ष्यागतो मुख्यप्राणः। वक्ष्यति च– 'ब्रह्मा च वायुश्च शेषवीन्द्रौ शिवस्तथा। सभार्या गर्विणो नाऽसन्' इति। गताश्च हुताशनादप्यवरा अष्टादशकक्ष्यागता सप्तचत्वारिंशन्मरुतः, मरीच्यादयोऽवान्तरमरुतश्च। द्वावेव चेन्द्राग्न्योर्मद्ध्यपतितौ। नवमकक्ष्यागतोऽहंप्राणः, एकादशकक्ष्यागतः प्रवहश्च। तयोरेकोऽत्र विवक्षित इति तु निश्चितम्। कतरः स एक इति जिज्ञासायां **'नासिक्य एव वायुः'** इति समाधत्त। एकादशकक्ष्यागतः प्रवह इत्यर्थः। क्वचित् प्रवहो भूतवायुरित्युच्यते। मरीचिरपि भूतवायुरित्यव्यावर्तकं तत्। विशिष्य कोणवायुरिति, स्पर्शवायुरिति, नासिक्यवायुरिति च प्रवहस्य व्याहरणानि भवन्ति। नासिक्यवायुरिति न क्वापि प्रवह उच्यते, किन्त्वहम्प्राण एव स इति केचिद् व्याचक्षते। तेषां 'दक्षाद्याः सूर्यवाय्वादिभ्योऽधिकाः' इति टीकावचनविरोधः स्फुटः। अहम्प्राणो हि दक्षादिभ्योऽप्यधिकः। तत् तन्नाऽऽदृत्यम्। प्रथमं वाग्देवता मुखगतोऽग्निर्गत्वा निवृत्तः। इदानीं नासिकागतः श्वासनियन्ता वायुः प्रेष्यते। एवं भूस्थानस्याग्नेर्वैफल्ये सम्प्रत्यन्तरिक्षस्थानो वायुः प्रेष्यते, भूस्थानेनाशक्यदर्शनमप्ययमुपरिगतो द्रष्टुं प्रभवेदिति। अतस्ते **वायुमब्रुवन्**॥ ७॥

वाति गच्छति सर्वत्रेति, अवगच्छति सर्वमिति च **वायुर्वै**, अन्वर्थनामा। **मातरि आकाशे श्वयति** चरति **वर्द्धते** च **इति**, अन्तरिक्षस्थानत्वात्

**'मातरिश्वा'** इति ख्यातो **'वै'** । **मातरि** वेदवाचि नित्यं श्वयति सञ्चरतीति च **मातरिश्वा** न केवलम्। किन्तु जगन्निर्मातरि सदा सञ्चरणाच्च **मातरिश्वा वा** इति सगर्वमाह। **आददीय** आदाय च स्वस्थानात् प्रच्यावयेयम्, प्रच्याव्य चान्तरिक्ष उड्डाययेयम् । **आदत्स्व** प्रच्यावय, उड्डायय च ।। ८–१० ।।

भूस्थानवदन्तरिक्षस्थानोऽपि विफलयत्नो निवृत्तः । **अथ** अष्टमकक्ष्यागतं भूर्भुवःस्वःपतिं सर्वेन्द्रियात्मानं **इन्द्रमब्रुवन्** दक्षादयो देवाः। **मघवन्,** मखपते, वित्तपते, अपि च सर्वकार्येषु यशस्विन्। 'धनं वा व मघम्' । 'यशो वाव मघम्' । यदा इन्द्र एवाऽजगाम, तदा तद् यक्षं **तस्मात्** इन्द्रस्य दृष्टिपथात् **तिरोदधे** नायं मत्तः साक्षादुपदेशमर्हतीति ।। ११ ।।

यो यक्षतया प्रादुर्बभूव, ततश्च तिरोबभूव **'स' विष्णुः** यत्र पूर्वं स्वयं यक्षरूपः सन्नास **तस्मिन्नेवाऽकाशे** इन्द्रस्य गुरुस्थानीयां **'स्त्रियं' आगमयामास** । काम्? **हैमवतीम्** । हिमवतः पुत्रीम्, हेमालङ्कारभूषिता**मुमाम्** । विनाऽप्याभरणजालेन स्वत एव **बहुशोभमानाम्,** सर्वतो विततप्रकाशाम् । स्वेन सहाऽगतानन्यान् सर्वान् तिरोधाप्य केवलमुमामेकां तत्राऽगमयामास विष्णुरिति। अथ चेन्द्र**स्तामाजगाम**। आगत्य च **तामुवाच– किमेतत्** मदागमनपर्यन्तं त्वया सहात्र स्थितम्, मदागमनमात्रेण तिरोहितं च **यक्षमिति** । भाष्ये– ब्रह्मणा शिवेन च सह **'नादृश्यत स केशवः'** । केशाभ्यां ब्रह्मरुद्राभ्यां सह वर्तत इति हि केशवः । **'योग्योमेति',** साक्षाद् गुरुत्वात् । केचित्तु स्वकीयमतिवैष्णवत्वं विख्यापयन्तो व्याचिख्यासन्–'हैमवतीं हिरण्यविकारभूषणवतीम्, अत एव बहुशोभमानाम्, मां लक्ष्मीरूपां स्त्रियं उ आजगाम आगतवान् । 'तदु चन्द्रमाः' इतिवत् उकार एवकारार्थकः' इति । प्रमाणवचनविरोधादेव नेदं सध्रीचीनम् । नूनमिदमङ्गचकरिष्यत यदि प्रमाणेन समवदिष्यत । स्वादिष्ठमप्यधिकमास्वादितमनास्वादाय भवति ।। १२ ।।

—०—

[अथ चतुर्थः खण्डः]

ब्रह्मेति होवाच[1]। ब्रह्मणो वा एतद्विजयेऽमहीयध्वमिति[2]। ततो हैव विदाञ्चकार ब्रह्मेति ॥ १ ॥ तस्माद् वा एते देवा अतितरामिवान्यान् देवान् यदग्निर्वायुरिन्द्रस्ते ह्येनन्नेदिष्ठं पस्पृशुस्ते[3] ह्येनत् प्रथमो विदाञ्चकार ब्रह्मेति ॥ २ ॥ तस्माद्वा इन्द्रोऽतितरामिवान्यान् देवान् स ह्येनन्नेदिष्ठं पस्पर्श स ह्येनत् प्रथमो विदाञ्चकार ब्रह्मेति ॥ ३ ॥

(भा.) 'उमा सा सम्यगाचष्ट तस्मै विष्णुं परं पदम् ।
'यस्माद् ब्रह्मा च वायुश्च शेषवीन्द्रौ शिवस्तथा ।
'सभार्या गर्विणो नाऽसन् सुरेभ्यस्तेऽधिकास्ततः ॥

'इन्द्रस्तु प्रथमं ब्रह्म व्यजानात् तेन तूत्तमः ।
'दक्षादिभ्यस्तथा कामः स ज्ञातुं पूर्वमुक्तवान् ॥

'दक्षो बृहस्पतिश्चैव मनुः कामात्मजस्तथा ।
'सूर्याचन्द्रमसौ धर्म्मो वरुणश्च पुरोमिति ॥

'नासिक्यवायुरग्निश्च प्रथमं तदपश्यताम् ।
'सर्वदेवाधिकास्तस्मादेते देवाः प्रकीर्त्तिताः ।
'एतेभ्यश्चेन्द्रकामौ तु ताभ्यां ब्रह्मादयोऽधिकाः ॥

---

१. 'सा ब्रह्मेति होवाच' इति शाङ्करः पाठः ।

२. 'एतद्विजये महीयध्वे' इति जैमिनीयब्राह्मणे प्रचलितः पाठः ।

३. 'पस्पृशुः स ह्येनत्' इति च कचित् ।

'एतेषामवमो वह्निः परमो विष्णुरुच्यते ।
'अन्तराळे स्थितास्त्वन्ये ब्रह्माद्याः पूर्वमीरिताः[1] ॥

'अग्निः पश्चाद् व्यजानात् तदिन्द्रवाक्यात् ततोऽवमः ।
'तस्माद् विष्णवभिसम्वन्धात् पारावर्यं सुरेष्विदम् ॥ * ॥

**(टी.)** **'ब्रह्मेति होवाच'** इत्युत्तरखण्डार्थमाह– **उमा सा सम्यगाचष्टे**त्यादिना । **ब्रह्मणो वा एतद्विजये** । युष्मत्स्थस्य **ब्रह्मणः** प्रसादादेव ह्येतेषां दैत्यादीनां विजये युष्माभिः कृते[2] । अतस्तस्यैवैतद्विजयित्वम्[3] । तस्मिन् सति हि यूयं लोकेषु **अमहीयध्वम्** । नहि युष्मच्छक्त्या ॥ १ ॥

**एते देवाः** अग्निवाय्विन्द्राः । **अन्यान्** तत्रानादिष्टदेवान् प्रति **अतितरामिव** भवन्ति । गुणाधिका भवन्ति । इवशब्दस्तु [4]ब्रह्मव्यतिरिक्तानाममितगुणाधिक्यनिवारणार्थः । सर्वेऽप्येते यथाश्रुतगुणाधिका भवन्तीत्यर्थः । तत्र हेतुमाह– **'ते हि'** इति । **ते ह्येनत्** यक्षं अतिसमीपस्थं **पस्पृशुः** चक्षुरादिना विषयीचक्रुः । किञ्च **त** एव **ह्येनत्** यक्षं ब्रह्मेति प्रथमतो विदाञ्चक्रुः । नच तेऽपि युगपदेव[5] विदाञ्चक्रुः । किन्तु एकैक एवैकस्मात् प्रथमतो **विदाञ्चकार** इत्येकवचनार्थः ॥ २ ॥

वाय्वादिभ्यो दक्षादिभ्यश्चेन्द्रोऽधिकः । तेभ्यः प्रथमवेत्तृत्वात् । तद्वत् कामोऽपि तेभ्योऽधिकः । ज्ञातव्यं यक्षमिति पूर्ववक्तृत्वात् । तस्मादिन्द्रकामौ प्रायः समानौ । अथ दक्षाद्याः सूर्यवाय्वादिभ्यः । वाय्वग्नी तु प्रथमद्रष्टारावप्येतेषां वचनमन्तरेण[6] ज्ञानशक्तिविहीनत्वादेव तेभ्यः स्वयमवमौ । इतरेभ्यस्तूत्तमौ । एवं च ज्ञानजिज्ञासयोराधिक्यमेवोत्तमत्वकारणमिति भावः । उक्तार्थं निगमयति– **सर्वदेवाधिकास्तस्मा**दिति । उक्तहेतोः **एते** दक्षाद्या अग्निपर्यन्ता

---

१ प्राचीनादर्शे **'सर्वदेवाधिकास्तस्माद्'** इत्यतः परं **'ब्रह्माद्याः पूर्वमीरिताः'** इति पठ्यते । **'एते देवाः प्रकीर्तिताः'** इत्यारभ्य **'अन्तराळे स्थितास्त्वन्ये'** इत्यन्तो भागो न पठ्यते । नूनं पङ्क्तिपातः ।

२. **'विजयो युष्माभिः कृतः'** ख. ३. **'अतस्तस्यैव तद्विजयित्वम्'** क.

४. **'ब्रह्मातिरिक्ता–'** क. ५. **'तेऽपि तदैव'** ख. ६. **'प्रथमवचनमन्तरेण'** क.

**देवाः** मित्राश्विपर्जन्यादिभ्यो नवकोटिदेवेभ्यश्चाधिकाः[1] **प्रकीर्तिताः** । **एतेभ्यश्चेन्द्रकामौ** अधिकौ । **ताभ्यां** विशेषतश्च **ब्रह्मादय** उत्तमाः । 'गर्विणो नाऽसन्' इत्युक्तत्वात् । अथाप्येतत् तारतम्यं श्रुत्यन्तरेऽपि[2] सुश्रुतमिति दर्शयति– **'एतेषामवमः–'** इत्यादिना । 'अग्निर्वै देवानामवमो विष्णुः परमस्तदन्तरेणान्या देवताः'[3] [ऐ.ब्रा.१.१.] इति हि श्रुत्यन्तरम् ॥ ❋ ॥

अग्नेस्तु पूर्वद्रष्टुरपीन्द्रादिवाय्वन्तेभ्योऽवरत्वे कारणमाह– **अग्निः पश्चादिति** । अग्निः दक्षादीनां तत्परिज्ञानतः **पश्चाद्** एव **इन्द्रवाक्यात् तद्** यक्षं ब्रह्मेति **व्यजानात्** । तस्मादग्निः तेभ्यः **अवमः** । एतेषां[4] पारावर्यकारणं निगमयति– **तस्मादिति** । विष्ण्वभिसम्बन्धस्य बहुत्वाल्पत्वादिविशेषादेव[5] ब्रह्मादिष्वेतत् **पारावर्यं** सिद्धं भवति ॥ ३ ॥

**(भा.चं.)** सा पुनरुमा तमिन्द्र**मुवाच** त्वय्यागते यत् तिरोदधे तत् विष्ण्वाख्यं **ब्रह्मेति** । **'अमहीयध्वम्'** महिता अभवत । केचित्तु लोडर्थमिच्छन्तः 'महीयध्वम्' इति पदं पठन्ति । 'महिमानं पूजां प्राप्नुत' इति व्याचक्षते । **'इन्द्रस्तु प्रथमम्–'** इत्यादिप्रमाणवचनार्थं विवृणोति– **वाय्वादिभ्य** इति । अत्र दक्षपदेन तैजसप्राणोऽप्युपलक्षणीयः । **'तथा'** **तद्वत्** इन्द्रवत् **'कामः'** । किञ्चिदवमत्वेऽपि समकक्ष्यः । अत आह– **तस्मादिन्द्रकामौ प्रायः समानौ** । **दक्षाद्याः सूर्यवाय्वादिभ्यः** अधिकाः । के दक्षादयः? **'दक्षो बृहस्पतिश्चैव मनुः कामात्मजस्तथा'** शची रतिश्च । दशमकक्ष्यागताः । कामात्मजोऽनिरुद्धः । तेभ्योऽवमः प्रवहनामा वायुः । ततः सूर्यादयः । अग्निस्तु सूर्यादिभ्योऽप्यवमः । के सूर्यादयः? **'सूर्याचन्द्रमसौ धर्मः'** स्वायम्भुवमनुभार्या शतरूपा च द्वादशकक्ष्यागताः, **'वरुणश्च'** त्रयोदशकक्ष्यागतः । नारदश्च चतुर्दशकक्ष्यागतः । **पुरोमिति** । 'ओमाङोश्च'[अष्टा.सू.६.१.९५] इति पररूपम् । 'ते हि **'ओम्'** **सत्यं ज्ञातव्यं यक्षम्** **'इति पुरा'** उक्तवन्तः । अतोऽग्नेरुत्तमाः सूर्याद्या

---

१. '–भ्योऽधिकाः' क. २. 'श्रुत्यन्तरे श्रुतमिति वक्ति' ख.
३. 'तदन्तरेणान्ये देवाः' क. ४. 'तेषां' क. ५. 'बहुत्वाल्पत्वविशेषाभ्यामेव' ख.

वरुणान्ताः। दक्षात् पूर्वस्याहम्प्रणस्य वरुणादनन्तरस्य नारदस्य च साक्षाद् यक्षविवादेऽप्रवेशात् मुखतोऽनुक्तिरिति भाति। **तेभ्यः स्वयमवमौ**। तेभ्य इति यथायोगम्। वायुर्दक्षादिभ्योऽवमः सूर्यादिभ्य उत्तमः। अग्निः सूर्यादिभ्यश्चावम इति। एकादशकक्ष्यागतो हि नासिक्यवायुः। अग्निस्तु पञ्चदश्यामिति ॥ १–३ ॥

**तस्यैष आदेशः। यदेतद् विद्युतो व्यद्युतदा३ इति[1] न्यमीमिषदा३ इत्यधिदैवतम् ॥ ४ ॥ अथाध्यात्मम्। [2]यदेतद् गच्छतीव च मनोऽनेन चैनदुपस्मरत्यभीक्ष्णं सङ्कल्पः ॥ ५ ॥**

**(भा.)** ‘व्यद्योतयद् विद्युदादीन् कपिलाख्यस्तु यो हरिः।
‘अक्ष्णोर्न्निमीलनं कृत्वा यः शेते क्षीरसागरे ॥

‘स एवैकः परं ब्रह्मेत्येव तस्योपदेशनम्।
‘अधिदैवे तथाऽध्यात्मे यं मनो गच्छतीव च ॥

‘सम्यङ् न गच्छति क्वापि मनो येन स्मरत्यपि।
‘सोऽनिरुद्धाख्य ईशेशः परं ब्रह्मेति कीर्त्यते ॥ ✲ ॥

**(टी.)** यदेतत् प्रादुर्भूतं यक्षं तत् सामान्यत एव हि पूर्वोपदिष्टमथ[3] वस्त्वन्तरव्यावृत्तये विशेषधर्मैः सहोपदिशति सा देवी– **‘तस्यैषः–’** इत्यादिना। अथ भगवांस्तदभिप्रायं द्योतयति–**‘व्यद्योतयत्–’** इत्यादिना। इत्येव **तस्योपदेशनम्** इत्येतद् वचनं **‘तस्यैष आदेशः’** इत्यस्य व्याख्यानम् । **तस्य ब्रह्मणः एष आदेशः** विशेषधर्मोपदेश इत्यर्थः ॥ ४–५ ॥

---

१. **‘इतीन्न्यमीमिषदा’** इति शाङ्करः पाठः। **‘इतीन्न्यमिषदा’** इत्येके पठन्ति। ब्राह्मणे तु– **‘इति न्यमिषदा’** इति प्रचलितः पाठः। सम्प्रदायवादिनोऽपि भ्रमन्ति।

२. **‘यदेनद् गच्छतीव च मनो न चैनदुप–’** इति रङ्गरामानुजीयः पाठः। **‘मनोऽनेन चैतदुपस्मरति’** इति शाङ्करः पाठः।

३. **‘सामान्यत एवोपदिष्टमथ’** ख.

**(भा.चं.)** **‘यदेतत्’** कपिलाख्यं भगवद्रूपं **‘विद्युतो व्यद्युतत्’** **विद्युदादीन् व्यद्योतयत्** तदेव पद्मनाभाख्येन रूपेण **‘न्यमीमिषत्’ अक्ष्णोर्निमीलनं कृत्वा क्षीरसागरे शेते** प्रळयकाले । पुनश्चक्षरुन्मीलने विद्युदादयः प्रकाशाः । निमिलने च तमोमयः प्रळय इति । **विशेषधर्मोपेश इत्यर्थ** इति । एतेन ‘आदेश उपमोपदेशः। निरुपमानस्य ब्रह्मणो येनोपमानेनोपदेशः सोऽयमादेश इत्युच्यते’ इति मायावादभाष्यं दत्तोत्तरम् ! अशब्दार्थत्वात्, निराधारत्वात्, प्रमाणविरुद्धत्वाच्चेति । **मनः** विषयान् प्रति **गच्छतीव** । भगवन्तं प्रति **च गच्छतीव** । अथापि न सम्यगवगच्छति । अवशिष्टमुपरिष्टाद् व्याख्यातम् ॥ ४–५ ॥

**तद्ध तद् वनं नाम । तद् वनमित्युपासितव्यम् । स य एतदेवं वेदाभि हैनं सर्वाणि भूतानि सं वाञ्छन्ति ॥ ६ ॥**

**(भा.)** **‘स विष्णुस्तद्वनं नाम ततत्वाद् वननीयतः ।**
**‘एवमेनं तु यो वेद भवेत् सर्वैरपेक्षितः ॥ * ॥**

**(टी.)** **‘स य एतदेवं वेद–’** इत्यस्यार्थमाह– **एवमेनं तु यो वेदेति** ॥ ६ ॥

**(भा.चं.)** भाष्ये **‘ततत्वाद् वननीयतः’** इति । गुणैः देशकालाभ्यां च **ततत्वात् तत्** । **वननीयतः** वननीयत्वात् भजनीयत्वात्, स्मरणीयत्वात्, याचनीयत्वाद्वा, वन्यत इति **वनं नाम** । ‘वन शब्दे’ । ‘वन भक्तौ’ । ‘भक्तिर्भजनम्’ इति क्षीरस्वामी । ‘वनु स्मरणे’ इति काशकृत्स्नः । ‘वनु च नोच्यते’ इत्यन्ये । ‘अस्यायमर्थ इति नोच्यतेऽनेकार्थत्वात्’ इति, ‘क्रियासामान्यवाचित्वात्’ इति च क्षीरतरङ्गिणी । भ्वादिगणपठिता एते । ‘वनु याचने’ इति तनादौ । एवमाभ्यां द्वाभ्यां नामभ्याम्– ‘तत् सवितुर्वरेण्यम्’ इति गायत्रीप्रतिपाद्यं नारायणमनुसन्धत्ते । वननीयं वनम् । वरणीयं हि वरेण्यमिति । यदत्र मायावादपदभाष्यम्– ‘तस्य प्राणिजातस्य वनं वननीयं सम्भजनीयम् । अतः तद्वनं नाम’ इति; यच्च वाक्यभाष्यम्– ‘तच्च तद्वनं

च। तत् परोक्षं वनं सम्भजनीयम्' इति तदुभयमप्यसङ्गतं निराकृतं वेदितव्यम्। ब्रह्मपारवचनविरोधादेव। द्वाभ्यामपि पदाभ्यां विशेषधर्मोपासनासौलभ्येऽपि तत्पदस्याप्रस्तुतप्राणिजातपरत्ववर्णने किमन्यत् कारणं स्यादृते दुराग्रहग्रहग्रसनात्। अतोऽप्रीयमाण इव स्वयमेवार्थान्तरमाह वाक्यभाष्ये। तत्रापि तत्पदस्य निरूढमर्थं वर्णयन् गुणविशेषविद्वेषादिव पुनरस्वारस्यपङ्किले सरसि न्यमीमज्जदेव। **स यः** एतत् पूर्वप्रस्तुतं नारायणाख्यं ब्रह्म **एवं** तद्वनमिति **वेद** विदित्वोपास्ते **एनं** उपासकं **सर्वाणि भूतानि** भूतिमन्ति सात्त्विकानि जीवजातानि **अभिलषन्ति,** अभिलष्य च तेन सङ्गच्छन्ते। सङ्गच्छमानानि च तमेव वरणीयं वाञ्छन्ति। 'वाछि इच्छायाम्'। ह इति ज्ञानस्य महिमातिशयं स्मारंस्मारं विस्मयते॥ ६॥

**उपनिषदं भो ब्रूहीति। उक्ता त उपनिषत्। ब्राह्मीं वाव त उपनिषदमब्रूमेति॥ ७॥ तस्यै तपो दमः कर्मेति प्रतिष्ठा। वेदाः सर्वाङ्गानि सत्यमायतनम्॥ ८॥ यो वा एतामेवं वेदापहत्य पाप्मानमनन्ते स्वर्गे लोके[ऽ]ज्येये प्रतितिष्ठति प्रतितिष्ठति॥ ९॥**

**इति चतुर्थः खण्डः**

**इति श्रीतलवकारोपनिषत् समाप्ता**

**ॐ॥ आप्यायन्तु ममाङ्गानि वाक् प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि। सर्वं ब्रह्मौपनिषदम्। माऽहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोत्। अनिराकरणमस्त्वनिराकरणं मेऽस्तु। तदात्मनि निरते य उपनिषत्सु धर्म्मास्ते मयि सन्तु ते मयि सन्तु॥ ॐ शान्तिः शान्तिः शान्तिः॥**

(भा.) 'एतच्छ्रुत्वा हरोऽपृच्छद् ब्रह्माणं पुनरेव तु ।
'विद्याकारं मम ब्रूहीत्युक्तो ब्रह्माऽऽह तं पुनः ।।

'विद्यावेद्यं तव प्रोक्तमास्थानं ते वदाम्यहम् ।
'तपोदमस्वधर्म्मेषु ये स्थिरास्तेषु तिष्ठति ।।

'विद्या स्थानानि तस्यास्तु वेदा अङ्गानि निर्ण्णयः ।
'वेदैतामेवमखिलां यो विष्णौ प्रतितिष्ठति'

इत्यादि ब्रह्मपारे ।। ॐ ।।

(टी.) आस्थानं मन्दिरादि मूलाधारम् । स्थानानि भाण्डादिवत् तत्रत्य-ग्रहणपात्राणि ।। ७–९ ।।

(भा.चं.) 'प्रतिष्ठा' मूलाधारः । तदेव च आस्थानम् । 'आयतनम्' ग्रहणपात्रम् । तदेव च स्थानम् ।। ९ ।।

(भा.) विद्युत्सूर्यादिप्रकाशान् आ समन्ताद् व्यद्युतत् प्राकाशयत्[1]–

'यदादित्यगतं तेजो जगद् भासयतेऽखिलम् ।
'यच्चन्द्रमसि यच्चाग्नौ तत् तेजो विद्धि मामकम्'

इति वचनात् ।।

'तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभाति' इति च ।।

न्यमीमिषदा । आ समन्तान्निमीलिताक्षमभवत्–

'स वै किलायं पुरुषः पुरातनो
'य एक आसीदविशेष आत्मनि ।
'अग्रे गुणेभ्यो जगदात्मनीश्वरे
'निमीलितात्मा निशि सुप्तशक्तिषु' इति वचनात् ।।

---

१. 'प्रकाशयत्' इति प्राचीनादर्शे । स्खलनं स्यात् ।

**(टी.)** अथापि **'यदेतत्–'** इत्यादिवाक्यानि विस्पष्टं व्याख्याति– **'विद्युत्-सूर्य–'** इत्यादिभाष्येण। **'व्यद्युतदा३'**, **'न्यमीमिषदा३'** इत्युभयत्रापि प्लुताकारभावात् विद्युदादिप्रकाशद्योतनमक्ष्णोर्निमीलनं चात्यन्तं विलक्षणमेवेति गम्यते। स्वयमदृश्यतया तत्प्रकाशकत्वात्। अनिद्रतया वर्तमानत्वाच्च। **आ समन्तात्** इति तद्भाष्येऽप्याकारद्वयं वर्तते– **आऽऽ समन्तात्** इति । विद्युत्-सूर्यादिप्रकाशनं विष्णुधर्म एवेत्यत्र स्मृत्यन्तरमप्याह– **'यदादित्यगतम्–'** इत्यादि । **'तमेव भान्तम्–'** इत्यादिश्रुत्यन्तरं च । निमीलनं च विष्णुधर्मः प्रसिद्धः । **'स वै किल–'** इति भागवतवचनात् । **अयं** कृष्णः **स पुरातनः पुरुषो वै किल**। **यः** त्रिगुणात्मनो जगतः **अग्रे एक** एव स्वतन्त्रो **निमीलितात्माऽऽसीत्** । स **आत्मन्यविशेषः** स्वगतभेदवर्जितः । 'नेह नानाऽस्ति किञ्चन' इत्यादिश्रुतेः। 'गुणक्रियादयो विष्णोः स्वरूपं नान्यदिष्यते' इत्यादेश्च। जगत आदानादिकर्तरि स्वस्मिन् **ईश्वरे** सुप्तासु **शक्तिषु**। तात्त्विकदेवा ह्यत्र शक्यत्वाच्छक्तय उच्यन्ते। तासु विष्णौ सुप्तासु। **इत्यधिदैवतं आदेशः** विशेषधर्मोपदेशनम् ॥ ※ ॥

**(भा.चं.)** न केवलं सौदामिनी विद्युत्। किन्तु या विद्योतन्ते ताः सर्वा अपि विद्युत इत्याह– **'विद्युत्सूर्यादिप्रकाशान्'** इति। 'द्युत दीप्तौ' । 'व्यद्युतत्' व्यद्योतयत् । 'द्युद्भ्यो लुङि' [१.३.९१] इति परस्मैपदम् । स्वातन्त्र्येण स्वयमेव प्रकाशत इति द्योतयितुं णिचो लोपः । **स्मृत्यन्तरमिति** भगवद्गीता [१५.६]। ननु गीतायां सूर्यादिप्रकाशा एवोच्यन्ते। न विद्युत्प्रकाशः स्फुटमुच्यते? तर्हि निशामय श्रुतिम्– **'तमेव भान्तम्'** । **श्रुत्यन्तरमिति** काठकोपनिषत् [२.२.१५]। एतेन श्रुतिस्मृतिविरोधादेव परभाष्यं नाऽदरणीयमिति जिज्ञासून् जिज्ञापयिषति। तथाहि मायावादभाष्यम्–'विद्युतो व्यद्युतदिति विद्युतो विद्योतनमिति कल्प्यते । आ३ इत्युपमार्थः । विद्युतो विद्योतनमिवेत्यर्थः । विद्युदिव सकृदात्मानं दर्शयित्वा तिरोभूतं ब्रह्म' इति, 'अथवा 'तेजः' इत्य-

ध्याहार्यम्। व्यद्युतत् विद्योतितवत्। आ इव। विद्युतस्तेजः सकृद्विद्योतितवदिवेत्यभिप्रायः' इति च। विद्युत इति षष्ठीभ्रान्त्या व्यर्थोऽयमर्थविपर्यासः, अध्याहारप्रयासश्च। 'तमेव भान्तम्–' इति सर्वमपि प्रकाशजातमत्रोपसङ्गृहीतम्। स्फुटमुल्लिलेख च पूर्वार्द्धे– 'नेमा विद्युतो भान्ति' इति। **न्यमीमिषदिति** चर्करीतम्। मिष स्पर्धायाम्। **'स वै किलायम्–'** [भाग.१.१०.२२] इति कुरूणां पुराद् द्वारकां जिगमिषोः कृष्णस्य दिदृक्षया प्रासादशिखरमारूढानां, पथि वा सङ्गतानां कुरुनारीणामन्योन्यसञ्जल्पः ॥ ⁕ ॥

**(भा.) अभीक्ष्णं सङ्कल्प इति मनसो विशेषणम्। सङ्कल्पात्मकमित्यर्थः**[१] ॥

**(टी.)** अथाध्यात्मं स क्रियते– **'यदेतत्–'** इत्यादिना। अयमर्थः– **यदेतत्** प्राकृतं **मनः** ब्रह्म प्रति **गच्छतीव** प्रतीयते, नहि सम्यग् गच्छति येन, **अनेन** ब्रह्मणैव मन **एतत्** ब्रह्म किञ्चित् **उपस्मरति च**। **अभीक्ष्णं सङ्कल्प इति मनसो विशेषणम्**। तदात्मकत्वात् तस्य। अधिदैवं विद्युदादिप्रेरकं ब्रह्म अध्यात्मं मनआदिप्रेरकमिति यावत्॥ ⁕ ॥

अथाप्यस्य व्याप्त्यादिविशेषानाह– **'तद्ध'** इति। सर्वदेशवस्तुषु ततत्वात् वननीयत्वाच्च **तद्वनं नाम तद्** ब्रह्मेत्युक्तम्। **एवं** तदुपासकः सर्वभूतैरपेक्षितो भवति। **एतद्** ब्रह्म॥ ⁕ ॥

**(भा.चं.) उपस्मरति** उपरि गतं भगवन्तं स्मरति। क्वचिदुपयुक्तं स्मरति। क्वचिदुपपन्नं स्मरति। क्वचिदुपस्थितं स्मरति। क्वचिन्न स्मरत्येव। **तदात्मकत्वात् तस्य**। **'सङ्कल्पकमित्यर्थः'** इति प्रचलितः प्रचुरो भाष्यपाठः। **'सङ्कल्पमित्यर्थः'** इति मूलादर्शपाठः। **तदात्मकत्वादिति** टीकापर्यालोचनया **'सङ्कल्पात्मकमित्यर्थः'** इति भाष्यपाठः स्यादिति भाति। **अध्यात्मं मनआदीति**। मन एव ह्यध्यात्मं विद्योतते॥ ⁕ ॥

---

१. **'सङ्कल्पमित्यर्थः'** इति प्राचीनादर्शे। अयं सम्भावितः पाठः।

**(भा.)** सप्रतिष्ठां सायतनामुपनिषदं ब्रूहीत्युक्ते । सम्यगेव मयोपनिषत्स्वरूपमुक्तम् । तत्र वक्तव्यं नास्ति । तपो दमः कर्म्म च विद्यायाः प्रतिष्ठा । तद्वत्सु विद्या प्रतितिष्ठतीत्यर्थः । सत्यमिति मीमांसा–

'निर्णीयते यतः सम्यगिदं सत्यमिति स्फुटम् ।
'श्रुतिस्मृत्युदितं सर्वं व्यक्तं मीमांसयैतया ।
'सत्यमित्युच्यते तस्मान्मीमांसा ब्रह्मनिश्चया'
इति शब्दनिर्ण्णये ॥

'ऋग्यजुःसामाथर्वाख्याः पञ्चरात्रं च भारतम् ।
'मूलरामायणं चैव पुराणं भगवत्परम् ॥

'वेदा इत्युच्यते सद्भिः शीक्षाद्यं स्मृतयस्तथा ।
'अङ्गानि सत्यं मीमांसा तद् विद्यायतनं त्रयम्'
इति विद्यानिर्ण्णये ॥ ॐ ॥

**(टी.)** एतैर्विशेषणैस्तदर्थं **श्रुत्वा हरः पुनः** अपि **ब्रह्माणमपृच्छत्** । **सप्रतिष्ठां सायतनां 'उपनिषदं भो ब्रूहीति'** । एवं सम्प्रार्थयदित्यर्थः । अविज्ञातप्रार्थनस्यापि प्रश्नत्वाविरोधात् । एवं प्रार्थितो ब्रह्मा पुनस्तमाह– **'उक्ता त उपनिषत्'** इति । तदेव विशिनष्टि– **'ब्राह्मीम्'** इत्युत्तरवाक्येन । तद्वाक्यस्याभिप्रायमाह– **सम्यगेवे**त्यादिभाष्येण ॥ ॐ ॥

उपरि निषादयतीति उपनिषत् रहस्यविद्या । उक्ता ते रहस्यविद्या । सम्प्रति तु विद्यारहस्यं वक्ष्यामीत्यर्थः । अथास्या ब्रह्मविद्यायास्तपआदीनि **प्रतिष्ठा** मूलाधारः । वेदादीनि **आयतनम्** पात्रम् । **'निर्णीयते'** इत्यादेः शब्दनिर्णयवाक्यस्यायमर्थः– यदिदं **श्रुतिस्मृत्युदितं** अर्थजातं तत् **सर्वं** अप्यनया **सत्यमिदमिति सम्यग्** यथावस्त्वेव **सुव्यक्तं निर्णीयते यतः तस्मात् मीमांसा**शास्त्रं **सत्यमित्युच्यते** ॥ ॐ ॥

**'ऋग्यजुः–'** इत्यादिना विद्यानिर्णयवाक्येन वेदादिविशेषमाह। ऋगादयोऽष्टौ **वेदाः** । शीक्षादिषट्कं व्यासादिस्मृतयश्च वेदाङ्गानि । अथ **मीमांसा-शास्त्रं सत्यं** इत्युच्यते । **तद्** वेदादि **त्रयं विद्यायतनं** ब्रह्मज्ञानस्य निवास-स्थानम् ।। ※ ।।

एवम्भूताया विद्यायाः फलमाह– **'यो वा एताम्–'** इत्यादिना । **य** एव **एतां** ब्रह्मविद्यां **एवं** सप्रतिष्ठां सायतनां **वेद स पाप्मानं** अनादिमनन्तानन्त-परम्परमपि निःशेषतः **अपहत्य अनन्ते** सदातने **स्वर्गे** सुखैकायतने **लोके** वैकुण्ठादौ परैरत्यन्तज्येये विष्णावेव **प्रतितिष्ठति** अनन्तकालमपुन-रावृत्त्या। शाखान्ते द्विरुक्तिस्तत्रोक्तस्यार्थस्य सर्वस्यावधारणार्था ।। ७–९ ।।

**(भा.चं.) 'उपनिषदं भो ब्रूहि'** इति श्रुतोपनिषदः कः प्रश्नः? प्रतिवचनं चान्यादृशमिति प्रश्नप्रतिवचनयोः साङ्गत्याय प्रश्नवाक्ये किञ्चित् पूरणीय-मित्याह भाष्ये– **'सप्रतिष्ठां सायतनामुपनिषदं ब्रूहीत्युक्ते'** इति। इति पृष्टे सति ब्रह्मा प्रत्युवाचेत्यर्थः । उक्तं हि भगवताऽऽचार्येणैव ब्रह्मसूत्रभाष्ये– 'यत्रा-नवसरोऽन्यत्र पदं तत्र प्रतिष्ठितम् । वाक्यं वेति सतां नीतिः' इति ।। ※ ।।

भाष्ये **'मूलरामायणं चैव'** इति। एवकारेण चैतदाह– यान्यन्यानि रामायणानि तानि मूलरामायणाविरोधत एव प्रमाणानि नान्यथेति । उत्तरार्द्धेनाप्यन्वय-वानयम् । **'भगवत्परमेव च पुराणं'** वेदेषु गण्यते 'इतिहासपुराणः पञ्चमो वेदानां वेदः' इति। ननु कान्यभगवत्पराणि पुराणानि? कानि भगवत्-पराणि? आह– सर्वं **च पुराणं भगवत्परमेव** सात्त्विकानाम्। राजस-तामसानां तान्यपरविद्यात्वेनापि प्रतीयन्त इति तद्व्यावर्तनाय **'भगवत्परं'** इति विशिशेष। ऋगादयश्चत्वारोऽपौरुषेयवेदाः, पञ्चरात्रं भारतं मूलरामायणं पुराणसमुच्चयश्चेति चत्वारः पौरुषेयवेदाः । तदेतत् समुदितमष्टकं **वेदा इत्युच्यते**। अतिशयिता शिक्षा शीक्षा। 'शीक्षां व्याख्यास्यामः' इति हि श्रुतिः। शीक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्यौतिषमिति **शीक्षादिषट्कम्,**

**तथा स्मृतयश्चेति** सप्त अङ्गानि। **कर्ममीमांसा देवमीमांसा ब्रह्ममीमांसेति** त्रीणि मीमांसाशास्त्राणीति संहत्याष्टादश विद्यास्थानानि। विशिष्य च **ब्रह्म-मीमांसा सत्यमित्युच्यते**। ननु सत्योऽर्थोऽस्त्यस्या निर्णेयतयेति मीमांसा सत्या स्यात्। कथं सत्यम्? मीमांसाशास्त्रमिति गृहाण। तेन नपुंसकत्वमिति न काऽपि क्षतिः ॥ * ॥

**ज्येये** सर्वज्येष्ठे विष्णौ। 'लोकेऽज्येये' इति ब्राह्मणे प्रचलितं प्रतृण्णम्। तदपि मनसि निधायाऽह– **अत्यन्तज्येय** इति। अत्यन्तं ज्येयोऽज्येयः। तद् यथा– अधिकं क्षरतीत्यक्षरम्। नास्ति परं ज्येयोऽस्मादिति वा। **'प्रति-तिष्ठति प्रतितिष्ठति'** इति **द्विरुक्तिः सर्वस्यावधारणार्था** समाप्तिसूचनार्था च ॥ ७–९ ॥

**(भा.) यश्चिदानन्दसच्छक्तिसम्पूर्णो भगवान् परः।**
**नमोऽस्तु विष्णवे तस्मै प्रेयसे मे परात्मने ॥ * ॥**

**इति श्रीमदानन्दतीर्थभगवत्पादविरचितं**
**श्रीतलवकारोपनिषद्भाष्यं समाप्तम्**

—o—

**(टी.)** अथेदानीमेतद्भाष्यकारभट्टारको भगवान् गुरूणामपि गुरुतमः सुरवर-पुरःसरसज्जननिकरनिरन्तराराधितचरणसरोरुहो ग्रन्थावसाने स्वस्वामिने विष्णवे स्वकृतसमर्पणबुद्ध्या नमस्करोति–

**'यश्चिदानन्दसच्छक्तिसम्पूर्णो भगवान् परः।**
**नमोऽस्तु विष्णवे तस्मै [1]प्रेयसे मे परात्मने' ॥ * ॥**

**सृष्टिसंहारसच्छक्तिसुखज्ञानादिसद्गुणैः।**
**पूर्णात्मने मध्वदेवप्रेयसे विष्णवे नमः ॥ * ॥**

---

१. 'प्रेयसे परमाय ते' इति क्वचित्।

यस्य त्रिरूपाण्युदितानि वायोर्वेदे बलज्ञानवतो बळादौ ।
दशप्रमत्याख्यतृतीयरूपी भाष्यं चकारेदमचिन्त्यशक्तौ ॥ * ॥

टीकां तलवकारोपनिषद्भाष्यस्य लेशतः ।
त्रैविक्रमार्यानुचरः कृत्वेमां प्रार्पयद्धरौ ॥ * ॥

नमस्ते श्रीशास्तु प्रियतम समस्तादपि सदा
नमस्ते प्राणेश प्रणतसुरसङ्घेष्टसुखद ।
नमो वस्तद्दासाः परमगुरवस्तत्वमतिदा
नमो वस्तद्दासाः पुनरपि गुरुभ्यो मुहुरपि ॥ * ॥

**इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य श्रीतलवकारोपनिषद्भाष्यस्य टीका त्रैविक्रमार्यदासविरचिता समाप्ता**

—०—

**(भा.चं.)** मूलमङ्गलपद्यं विवृण्वद्भिरेव पदैः स्वयमपि मङ्गलमाचरति– **सृष्टीत्यादि** ॥ * ॥ **बळादौ वेदे** प्राणाग्निसूक्ते ॥ * ॥ तत्वप्रदीपेन **तत्वमतिदाः**, मध्वदासाः, नः **परमगुरवः** । अथ **तद्दासाः** परमगुरुदासा अस्मद्गुरवो नारायणार्याः, **गुरुभ्यो वो** युष्मभ्यं च **नमः** । **पुनरपि** नमः । **मुहुरपि** नमोनमः ॥ * ॥

उपनिषदमनन्तार्थानुसन्धानरम्या-
ममितमतिकृतं तद्भाष्यमप्यद्भुतार्थम् ।
प्रमितमपि मितं तट्टिप्पणं वामनीयं
समगमयदरिक्तैष्टिप्पणीयं वचोभिः ॥ * ॥

मतये शरनिधिगतये दुर्जनपृक्षाय साधुरक्षाय ।
दशमतयेऽमितमतये मम भवतु नमो मरुत्पतये ॥ * ॥

इमामाचार्यगोविन्दः प्रमृष्टां शब्दतोऽर्थतः ।
वितेने विमलां टीकां विदुषामेव तोषणीम् ॥ * ॥

**इत्याचार्यगोविन्दस्य कृतिषु श्रीतलवकारोपनिषद्भाष्यटीकापञ्चिका**
**उपनिषद्भावचन्द्रिका सम्पूर्णा**



ब्रह्मा देवानां प्रथमः सम्बभूव विश्वस्य कर्ता भुवनस्य गोप्ता ।
स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह ।




श्रीवामनपण्डिताचार्यविरचितया श्रीमद्भाष्य-
टीकया, आचार्यगोविन्दकृतया उपनिषद्-
भावचन्द्रिकाख्यया तत्पञ्चिकया च समेता



॥ हरिः ओ३म् ॥

भ॒द्रं कर्णे॑भिः शृणुयाम देवा भ॒द्रं प॑श्येमा॒क्षभि॑र्यजत्राः ।
स्थि॒रैरङ्गै॑स्तुष्टु॒वांस॑स्त॒नूभि॒र्व्य॑शेम दे॒वहि॑तं॒ यदायुः॑ ॥

स्व॒स्ति न॒ इन्द्रो॑ वृ॒द्धश्र॑वाः स्व॒स्ति नः॑ पू॒षा वि॒श्ववे॑दाः ।
स्व॒स्ति न॒स्तार्क्ष्यो॒ अरि॑ष्टनेमिः स्व॒स्ति नो॒ बृह॒स्पति॑र्दधातु ॥

ॐ शान्तिः॒ शान्तिः॒ शान्तिः॑ ॥

## भाष्यम्

ओ३म् ॥ आनन्दमजरं नित्यमजमक्षयमच्युतम् ।
अनन्तशक्तिं सर्वज्ञं नमस्ये पुरुषोत्तमम् ॥ * ॥

## टीका

आनन्दज्ञानशक्त्यादिसम्पूर्णगुणविग्रहम् ।
जन्मादिदोषरहितं प्रणमामि रमापतिम् ॥ * ॥

नमोऽस्तु व्यासदेवाय[1] पूर्णप्रज्ञाय नित्यशः ।
शम्भुपूर्वामरज्येष्ठगुरवेऽभीष्टदायिने ॥ * ॥

सत्तत्वदीपिकाचार्यान् नत्वा नत्वा गुरूनपि ।
अथर्वोपनिषद्भाष्यं[2] व्याख्यास्यामो यथामति ॥ * ॥

---

१. 'वासुदेवाय' ख.

२. 'आथर्वणोपनिषद्भाष्यम्' ख.

अथ श्रीमदानन्दतीर्थभगवानेतद्भाष्यमारभमाणः **'आनन्दमजरम्'** इत्यादि-श्लोकेन सर्वोत्तमं स्वेष्टतमं नारायणं नमस्करोति मङ्गलाचरणाद्यर्थम् । स एव व्यासरूपः स्वगुरुरिति तन्नमस्कारोऽप्यनेनैव कृतः स्यात् । अत्र पुनरधि-कार्यादयश्च सूचिताः स्युः । तथाहि– नन्तृनम्यावधिकारिविषयौ । तयोर्ज्ञातृ-ज्ञेयभावः सम्बन्धः । ज्ञातारमधिकारिणमानन्दयति मुक्तिं दत्वेत्यानन्दशब्देन फलमपि सूचितम् । अत्रैवाऽथर्वणोपनिषदि पठितानां गुणानामुपन्यस्तत्वात् तद्भाष्यमिदं करिष्यमाणमिति वस्त्वप्यर्थतो निर्दिष्टं भवति ॥ ❋ ॥

## भावचन्द्रिका

उपनिषदि नितान्तं वेद्यमाद्यं प्रशान्तं
पुरिशयमुपतिष्ठे ब्रह्म नारायणाख्यम् ।
य इदमथ च सत्यं नित्यमाविश्चकार
प्रथमगुरुममुं तन्नाभिपद्मे निषण्णम् ॥ ❋ ॥

नमोऽस्तु सुजनव्रातबन्धवे ज्ञानसिन्धवे ।
श्रीमदानन्दतीर्थाख्यगुरवे नरवेषिणे ॥ ❋ ॥

तत्ववादामृताम्भोधौ व्यहरन् ये निरन्तरम् ।
तत्वबोधाय तान् वन्दे पूर्वाचार्यान् गुरून् मम ॥ ❋ ॥

**'आनन्दं सर्वज्ञमनन्तशक्तिम्'** इति पदत्रयमेकयोक्त्या व्याख्याति– **आनन्द-ज्ञानशक्त्यादिसम्पूर्णगुणविग्रहमिति**। **'अजरं नित्यमजमक्षयमच्युतम्'** इति पदानि व्याख्याति– **जन्मादिदोषरहितमिति** । **'नमस्ये'** नमस्यामि पूज-यामि । 'नमोवरिवश्चित्रङः क्यच्' [अष्टा.सू.३.१.१९] । अत्र जयादित्य आह– 'नमसः पूजायाम्– नमस्यति देवान्। वरिवसः परिचर्यायाम्– वरिवस्यति गुरून्। चित्रङ आश्चर्ये– चित्रीयते' इति। यद्यप्ययं परस्मैभाषः। अथाप्यात्म-

गामिफलं भगवत्प्रसादातिशयं द्योतयितुमात्मनेभाषः। तमेव नमनस्य प्रकर्षं **प्रणमामी**त्याह। क्षराक्षर'**पुरुषोत्तमम्**'। तदेतदाह– **रमापतिम्**। तेन वाग्देवता रमाऽपि प्रणता ॥ * ॥ पूर्णज्ञानाय **व्यासदेवाय नमः**। अथच शम्भुपूर्वामरज्येष्ठानामपि **गुरवे पूर्णप्रज्ञाय नित्यशः** सर्वाभीष्टप्रदाय **व्यासदेवाय नमः**। व्यासो देवो ज्ञानदीपको यस्य तस्मै **पूर्णप्रज्ञाय** श्रीमध्वाय च **नमः** 'नमोऽस्तु वासुदेवाय' इति क्वचित्। वासुदेव इति च श्रीमध्वस्यैव पूर्वाश्रमनाम। ज्ञानार्थमवतीर्णोऽसुदेवश्च सः ॥ * ॥ **सत्तत्त्वदीपिकाचार्यान्** त्रिविक्रमपण्डिताचार्यान्। **गुरून्** नारायणपण्डिताचार्यान्। **अथर्वोपनिषदि**ति। अथर्वण इयमुपनिषद् भवति। अथर्वणां चेयं भवति। ननु षट्प्रश्नोपनिषदप्याथर्वणी। माण्डूक्यप्याथर्वणी। सत्यम्। अथापीयमथर्वणे ब्रह्मणा दत्ता, आदावथर्वणा गृहीता चेति विशिष्याऽथर्वणोपनिषदुच्यते, आथर्वणी चेयमुपनिषच्चेति। अस्याः खण्डा मुण्डका उच्यन्त इत्येनां मुण्डकोपनिषदमप्याहुः। व्याचक्षते च मुण्डितमुण्डानामुपनिषदिति। अयि भोः, प्रथमवक्ता चतुर्मुखो न मुण्डितमुण्डः। प्रथमग्रहीताऽथर्वा न मुण्डितमुण्डः। मुण्डितमुण्डा अप्येनमधीयते। अमुण्डितमुण्डा अपि। वस्तुत ऋषिणा च्छन्दसा देवतया वा मन्त्राणां नाम भवति। ऋषिणा यथा– माण्डूकोपनिषत्। छन्दसा यथा– शाक्करो मन्त्रः। देवतया यथा– याज्ञीयमन्त्रः। तस्मात् सूक्त**मथर्वोपनिषद्भाष्यमि**ति ॥ * ॥

**स एव स्वगुरु**रिति। तदेतत् सूचयाम्बभूव '**सर्वज्ञं नमस्ये**' इति। **उपनिषदि पठितानामि**ति। तथाहि– 'नित्यं विभुं सर्वगतम्' इति नित्यत्वम्। 'यः सर्वज्ञः सर्ववित्' इति सर्वज्ञत्वम्। 'आनन्दरूपममृतम्' इत्यानन्दत्वम्। 'स बाह्याभ्यन्तरो ह्यजः' इत्यजत्वम्। 'पुरुषो ह्यव्ययात्मा' इत्यक्षयत्वमच्युतत्वं च। 'अक्षरात् परतः परः' इति पुरुषोत्तमत्वमित्यादि ॥ * ॥

'भद्रं कर्णेभिः–' इति, 'स्वस्ति नः–' इति चाऽथर्वणानां शान्तिमन्त्रौ। अयं मन्त्रार्थः– यजनेन त्रायन्त इति यजत्राः, यजनीया वा। 'अमि-नक्षि-यजि-

वधि-पतिभ्योऽत्रन्' [दशपा.३.१०५] इति हि पठन्ति। इन्द्रियाभिमानिनो देवाः, वयं भद्रं भगवन्तमेव कर्णैः शृणुयाम। सर्ववचनानामन्ततो भगवत्-परत्वात्। लोकव्यवहारेऽपि कल्याणोदर्कमेव वचनं शृणुयाम। अक्षिभिरपि तमेव सर्वान्तर्यामिणं सर्वभूतेषु पश्येम। लोकव्यवहारेऽपि मङ्गलावहमेव सदा पश्येम। स्थिरैरङ्गैस्तनूभिश्च तमेव भगवन्तम्, तत्परिवारतया युष्मांश्च तुष्टुवांसः स्तुवन्तः, यावदायुरस्माकं तेन देवेन युष्माभिर्वा विहितम्, यावज्जीवमित्येतत्, तावत् तस्य देवस्य युष्माकं च प्रीतिकरं यथा स्यात् तथा व्यशेम अनुभवेम॥ * ॥ वृद्धश्रवा जगत्सर्जनजनितविपुलकीर्तिरिन्द्रः प्रद्युम्नो नः स्वस्ति सुखम्, सुखमयं वा जीवनं दधातु ददातु। विश्वं वेत्तीति विश्ववेदाः। 'विद ज्ञाने'। विश्वं विन्दते वा। 'विद्लृ लाभे'। पूषा स्थिति-हेतुरनिरुद्धः स्वस्ति दधातु। नयति स्ववशं शत्रूननेनेति नेमिरायुधसामान्यं चक्रं चक्रप्रधिर्वा। अप्रतिहतप्रहरणस्तार्क्ष्यः स सङ्कर्षणः स्वस्ति दधातु। दुरितात् तारयति क्षपयति च जगदिति तार्क्ष्यः। स्वस्ति नो बृंहितानां मुक्तानां पतिर्वासुदेवो दधात्विति॥ * ॥

**ओ३म् ॥ ब्रह्मा देवानां प्रथमः सम्बभूव**
**विश्वस्य कर्ता भुवनस्य गोप्ता।**
**स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठा-**
**मथर्वाय ज्येष्ठपुत्राय प्राह ॥ १ ॥**

**(भा.)** **'मनोर्वैवस्वतस्याऽदावथर्वा ब्रह्मणोऽजनि।**
**'मित्रश्च वरुणश्चाथो प्रहेतिर्हेतिरेव च ॥**

**'ब्रह्मणः प्रथमे कल्पे शिवः प्रथमजः सुतः।**
**'सनकाद्यास्तु वाराहे ब्रह्मा विष्णोः सुतोऽग्रजः'**

**इति ब्रह्माण्डे ॥**

**(टी.)** अथ कथमथर्वा महर्षिः **'ब्रह्मा देवानाम्–'** इत्युपक्रमवाक्ये ब्रह्मपुत्रेषु ज्येष्ठः पठ्यते । नहि रुद्रादिभ्योऽन्यस्तद्भावमर्हतीत्येतामाशङ्कां परिहरति– **'मनोर्वैवस्वतस्य–'** इत्यादिना ब्रह्माण्डवाक्येन । वैवस्वतो मनुः सप्तमः । प्रहेतिर्हेतिश्चेति राक्षसौ । यौ सूर्यस्य रथचक्रपथप्रेरणया[1] नक्षत्रतिथीनां वृद्धि-ह्रासनिमित्तभूतौ । वराहकल्पे **सनकाद्याः** प्रथमजाः सुताः । अवान्तर-सृष्टौ मूलसृष्टिक्रमापेक्षा नास्तीत्यभिप्रायः । **'सम्बभूव'** विष्णोर्बभूवेत्यर्थः । समित्यव्ययशब्दस्य विष्णुशब्दपर्यायत्वात् । 'अकयप्रविसंभूमा विष्णुपर्याय-वाचकाः'[2] इत्यभिधानम् ।। १ ।।

**(भा.चं.) मनोर्वैवस्वतस्यान्तरे, आदौ । ब्रह्मणः** सृष्ट्यनन्तरं प्रवृत्ते **प्रथमे कल्पे** । वर्तमाने **वाराह** एव **कल्पे,** तत्रापि **प्रथमे** स्वायम्भुवमन्वन्तरे **'सनकाद्याः' प्रथमजाः** सुताः । **'ब्रह्मा देवानां प्रथमः सम्बभूव'** इत्यस्य व्याख्यानम्– **'ब्रह्मा विष्णोः सुतोऽग्रजः'** इति । ननु प्रथमसम्भवत्वं श्रूयते श्रुतौ । नतु विष्णुसम्भवत्वम् । तत् कथमेवं व्याख्यानम्? कोऽयमाक्षेपः? व्याख्यानतो हि विशेषप्रतिपत्तिः । अपिच श्रुतिरपि विष्णुसुतत्वं सूक्ष्मदृशाम-वगमयत्येवेत्याह– **सम्बभूव विष्णोर्बभूवेत्यर्थ** इति । विष्णुशब्दपर्यायत्वेऽ-भिधानसंवादं चाऽह– **अकये**त्यादिना । अधिकत्वादानन्दत्वादजत्वादनन्तत्वाच्च अः । तमेतं प्रणवावयवं व्याचिकीर्षन्नेवाऽह मङ्गलपद्ये भगवान् भाष्यकारः– आनन्दमजरमजमक्षयमच्युतमनन्तशक्तिमिति । सर्वेऽप्येतेऽकारार्थाः । पुरुषोत्त-ममित्युकारार्थः । सर्वज्ञमिति मकारार्थः । 'मानं ज्ञानम्' । आनन्दरूपत्वादेव कम् । 'कं ब्रह्म' इति च श्रुतिः । सर्वगतत्वात् सर्वज्ञत्वाच्च यः । ईर्लक्ष्मीः । तत्सहितः अः यः । लक्ष्मीनारायण इत्येतत् । प्रकृष्टत्वात् प्र । प्रचुरानन्दत्वादिना

१.. '–चक्रप्रेरणया' ख.

२. सर्वत्राऽदर्शेष्वेवमेव पाठः । लिपिकृत्प्रमादः सम्भाव्यते । **'अकयप्रविसम्भूमसखहा विष्णुवाचकाः'** इति त्वभिधानपाठो भाष्यकृत्सम्मतः । अभिधानान्तरं वा स्यात् ।

च। विशिष्टत्वाद् विलक्षणत्वाद् विगतदोषत्वाच्च वि। वेति सर्वत्रेति विः। वी गतौ। सम्पूर्णगुणत्वात् सन्ततत्वाच्च सम्। भूमत्वाद् भूः। महत्त्वान्मः। सारत्वात् सः। ज्ञानरूपत्वात् खम्। 'खं ब्रह्म' इति च। दोषहानात् हः, हं वा। **'विश्वस्य भुवनस्य कर्ता गोप्ता'** च। **'विश्वस्य'** जगतः **'कर्ता'**। **'भुवनस्य'** भवनशीलस्य जीवजातस्य **'गोप्ता'** रक्षिता ज्ञानदानेनेति वा। अत एव **'स ब्रह्मविद्यामथर्वाय ज्येष्ठपुत्राय प्राह'**। न थर्वतीत्यथर्वः, अथर्वा च। द्वयमपि साधु। यथा नचिकेत इति नचिकेता इति च। 'थर्वतिश्चरतिकर्मा। तत्प्रतिषेधः'[११.१८] इति निरुक्तम्। चरतिः संशयकर्मा। तेन तत्वनिश्चयवानथर्वोच्यते। अकारवाच्ये भगवति तिष्ठन् रमते वनति भजति चेतिवा। सर्वमधरयन् भजति वा। अं धरमाणो वननीयश्चेति वा। समित्पाणिरधरं वर्तयन् वा। क्वचिद् विरळतया 'अथर्वणः' इत्यपि प्रयुञ्जते। यद्यपि ब्रह्मा विश्वस्य कर्ता। अथापि स्वयं विश्वनाम्नो विष्णोर्बभूव। यद्यपि सर्वस्य भुवनस्य गोप्ता। अथापि स्वयं विष्णुना सम्यग् गुप्तो बभूव। स्वयं ब्रह्मा। स्वस्यापि ब्रह्मणो विद्याम्। **'सर्वविद्याप्रतिष्ठाम्'**। यस्यां सर्वविद्याः परिसमाप्यन्ते। वक्ष्यति च– 'कस्मिन्नु विज्ञाते सर्वमिदं विज्ञातं भवति' इति। यथा विष्णुः स्वज्येष्ठपुत्राय ब्रह्मणे प्राह तथा चतुर्मुखोऽपि **'अथर्वाय ज्येष्ठपुत्राय प्राह'** इति॥ १॥

**अथर्वणे यां प्रवदेत ब्रह्मा-**
**ऽथर्वा तां पुरोवाचाङ्गिरे ब्रह्मविद्याम्।**
**स भारद्वाजाय सत्यवहाय प्राह**
**भारद्वाजोऽङ्गिरसे परावराम्॥ २॥**

**(टी.) अथर्वा तां** ब्रह्मणोक्तां **ब्रह्मविद्याम्**। पुरा कृतयुगे। **अङ्गिरसे** तामेव विद्यां परापरत्वेन द्विरूपिणीं **प्राह**। अपरस्यापि सर्वस्य परज्ञानाङ्गत्वेन

ज्ञेयत्वात्। नन्वेवं सति सर्वज्ञानसापेक्षं हि तत् परज्ञानम्। सर्वज्ञानं तु परज्ञानेनेत्युत्तरवाक्ये प्रतिज्ञायत इत्यन्योन्याश्रयता स्यादिति। नायं दोषः। सर्वमिति [1]सर्वसामान्यज्ञानात् तदुत्तम इति विशेषज्ञानम्, तदनन्तरमेव हि सर्वं पराधीनमिति विशेषज्ञानम्। एवं विषयविभागादविरोधः। अत एवाङ्गिराः शौनकायापि **'द्वे विद्ये वेदितव्ये'** इत्याह। ऋगादीनामपरविद्यात्वे कथं प्रत्यक्षादिभ्य उत्तमत्वमिति चेत्, अपरस्य जगतो वेदकत्वमात्राद्ध्यपरविद्यात्वम्। [2]नतु ज्ञापनशक्तेरनाधिक्यात्। अतो नोत्तमत्वविरोधः ॥ २ ॥

**(भा.चं.) यां ब्रह्मा प्रवदेत** तामेवाथर्वा प्रवदेत्। यदि ब्रह्मा न वदेत् कथमथर्वा प्रवदेत्। सर्वविद्यामूलाधिष्ठानत्वाद् ब्रह्मणः। तेन सर्वप्रवचनफलमात्मगामीत्यात्मनेभाषः। प्रकृष्टं वचनं प्रवचनं भवति। भगवत्प्रियता हि नाम मुख्यः प्रकर्षः। ज्ञानदानेन लोकोद्दिधीर्षया च प्रकृष्टं तत्। प्रतनस्य च वचनं प्रवचनं भवति। अथच **ब्रह्मा यां** प्रोवाच **अथर्वा तामङ्गिरे पुरोवाच**। यद्यपि पुराशब्दयोगे लुङ् भवतीति वैयाकरणा मन्यन्ते– 'पुरि लुङ् चास्मे' [अष्टा.सू.३.२.१२२] इति। अयोगव्यवच्छेद एवायम्। चकारादन्येऽपि लकारा भवन्ति। यदाह जयादित्यः– 'अन्येऽपि प्रत्यया भवन्ति। वसन्तीह पुरा छात्राः। अवात्सुरिह पुरा छात्राः। अवसन्निह पुरा छात्राः। ऊषुरिह पुरा छात्राः' इति। **स** चाङ्गिरः भरद्वाजपुत्राय **सत्यवहाय प्राह**। तमेनमङ्गिरं द्वेधाऽपि पठन्ति– अङ्गीरिति, अङ्गिर इति। 'अङ्गान्यन्या देवताः' इति वचनात्, अङ्गिनि नारायणे रमत इत्यङ्गिरः। अङ्गिनमेव सदा मनसा रसयन्नङ्गिराः। सत्यं भगवन्तं हृदये वहन् सत्यवहः ॥ ❊ ॥

तथाच विद्याया अस्या ब्रह्मा प्रथम ऋषिः। ततश्चाथर्वा। अङ्गिरादयः शौनकान्ताश्च। ब्रह्म नारायणाख्यं देवता। यथायोग्यं छन्दांसीति। प्रथममन्त्रे तावत्

---

१. 'स्वसामान्य–' ख.

२. 'नहि' ख.

प्रथमतृतीयपादयोर्जगती । द्वितीयतुरीययोस्त्रिष्टुप् । द्वितीयमन्त्रे प्रथमतुरीयचरणयोस्त्रिष्टुप्त्वेऽपि द्वितीयतृतीययोस्त्रयोदशाक्षरत्वात् संहत्याष्टचत्वारिंशदक्षरत्वाज्जगत्येव ॥ २ ॥

**शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ । कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति ॥ ३ ॥**

**तस्मै स होवाच । द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति परा चैवापरा च ॥ ४ ॥ तत्रापरा । ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शीक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति[1] । अथ परा यया तदक्षरमधिगम्यते ॥ ५ ॥**

**(भा.चं.)** **'शौनको हवै महाशालः'** । **'हवा'** इति इतिहासप्रसिद्धमित्याह– इतिहवायासेति । अथच हेति गुरुपरम्परामास्वदते । वायिति तेषां वेदऋषित्वं स्मारयति । एवमुत्तरत्रापि । शुनक इति मातरिश्वा । यः श्वेतः श्वा सन् भगवन्तमुदगायत् । शौनकः प्राणोपासकः । शुनकपुत्रत्वाच्च शौनकः । प्रत्यब्दं यज्ञकृत् **'महाशालः'** । महती विशाला सुदृढा च यज्ञशालाऽस्येति । एतेन ज्ञानयोगिनामपि न कर्मत्याग इत्याह । यदेव विद्यया करोति तदेव हि वीर्यवत्तरं भवति । **'विधिवत्'**, समित्पाणिः, 'अधीहि भगवो ब्रह्म' इति प्रश्रितः प्रणिपत्य **पप्रच्छ** । **'भगवो'** भगवन् । 'मतुवसो रुः सम्बुद्धौ छन्दसि' [अष्टा.सू.८.३.१] इति नकारस्य रुत्वम् । ननु तर्हि अवस्य ओत्वमपि वार्त्तिककारो मन्यते । यदाह– 'विभाषा भवद्-भगवद्-अघवताम्, ओच्चावस्य' इति । सत्यम् । तेन 'भगोः' इति वक्तव्यम् । नच तथा वक्ति श्रुतिः । तेन निश्चीयते भगवच्छब्दविषये ओत्वमपि विभाषेति । **'कस्मिन् विज्ञाते'** सर्वमन्यद् विज्ञातप्रायं **भवति,**

---

१. 'ज्योतिषमितिहासपुराणं न्यायो मीमांसा धर्मशास्त्राणीति' इति श्रुतिपाठो रङ्गरामानुजीये ।

अथच यदिदं विज्ञातं सर्वं कस्मिन् विज्ञाते सफलं भवति तन्मे ब्रूहीति। **'द्वे विद्ये वेदितव्ये'**। यतो **'द्वे विद्ये वेदितव्ये इति ब्रह्मविदो वदन्ति'**। अपरविद्यया चेदं सर्वं विज्ञाय परविद्यया तस्य सफलीकरणम्। अथच तस्मिन् परविद्याविषये भगवति विज्ञात एवेदं सर्वं शास्त्रजातं विज्ञातं भवति। मुख्यार्थज्ञानेन परविद्यात्वानुभवात्। 'यस्य ज्ञानादन्यज्ज्ञातं भवति तत् किमिति शौनकप्रश्नार्थे एकविज्ञानस्य प्राधान्यावगमात् तदर्थमन्यदुच्यत इत्यवगम्यते। अङ्गिरसो व्याख्यानेऽपि– 'द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति परा चैवापरा च' इत्यादौ ब्रह्मज्ञानस्य परविद्यात्वोक्ते-स्तस्य च परत्वोपपादनार्थमन्यदुच्यत इति गम्यते' [१.४.१९] इति तत्व-प्रदीपे। **ऋग्वेद** इत्यादि। चत्वारो वेदाः, शीक्षादीनि षडङ्गानि इति सर्व-शास्त्रोपलक्षणम्। उच्चारविधिः **शीक्षा**। कर्मणां प्रयोगविधिः **कल्पः**। ज्योर्तींषि ग्रहनक्षत्रादीन्यधिकृत्य कृतं शास्त्रं **ज्योतिषम्**। स्फुटमन्यत्। यदा चैतेन शास्त्र-जातेन केवलमक्षरं ब्रह्मैवावगम्यते, न केवलं प्रतिवाक्यं प्रतिपदम्, किन्तु प्रत्यक्षरमपि परमाक्षरमेव प्रतिपद्यते तदा ता एव परमा विद्याः ॥ ॐ ॥

**(भा.) 'ऋगाद्या अपरा विद्या यदा विष्णोर्न्न वाचकाः।**
**'ता एव परमा विद्या यदा विष्णोस्तु वाचकाः'**
**इति परमसंहितायाम्।**

**'ऋग्भिर्होत्रेण[१] शंसन्ति तथौद्गात्रे स्तुवन्ति ये।**
**'विष्णवे च तथा तस्मै यजुर्भिरपि जुह्वति।**
**'स्तुवन्त्याथर्वणैश्चैनं सेतिहासपुराणकैः॥**

---

१. **'ऋग्भिर्हौत्रेण'** इति प्र.पाठः। यद्यपि होतृशब्दस्य युवादिगणपठितत्वात् '–युवादिभ्योऽण्' [अष्टा.सू.५.१.१३०] इति सूत्रेणाणि च कृते 'हौत्रम्' इत्येव भवति। अथापि वेदेषु वैदिकेषु च 'होत्रम्' इति बहुलमुपलम्भात् कर्मण्यजपि भवतीति वक्तव्यमिति भाति– होतुः कर्म होत्रमिति। तद्यथा– होतुः प्रभेदो होत्रा। 'होत्राशब्द ऋत्विग्विशेषवचनः' इति हि जयादित्यः।

'न विष्णुसदृशं किञ्चित् परमं वाऽपि मन्वते ।
'सर्वोत्तमं तं जानन्तस्ते हि भागवतोत्तमाः ॥

'वेदे रामायणे चैव पुराणे भारते तथा ।
'आदावन्ते च मद्ध्ये च विष्णुः सर्वत्र गीयते ॥

'एतदन्ते च मद्ध्ये च ब्रह्मैवोक्त्वा विजानताम् ।
'ऋगादि पञ्चधा संस्थं शब्दब्रह्म प्रशाम्यति ॥

'यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च ।
'स्तुवन्ति सत्यकर्म्माणं सत्यं सत्येषु सामसु ॥

'सर्वे वेदा यत् पदमामनन्ति तपांसि सर्वाणि च यद् वदन्ति ।
'यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत् ते पदं सङ्ग्रहेण ब्रवीमि ॥

'वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद् वेदविदेव चाहम्'
इत्यादि च भारते ॥

'चतुर्दश विद्याः स्थानानि वेदितव्यानि भवन्ति'
इति च मूलश्रुतिः ॥

**(टी.)** एवं चेत् काः पुनस्तद्व्यतिरेकेण[१] परविद्या इत्याशङ्कायामाह– **ऋगाद्या** इति। तत्तज्ज्ञापनावस्थायां तत्तद्विद्यात्वमित्यविरोधः। एवमप्यृगादीनां परविद्यात्वं मुख्यम्। अन्यद् गौणमिति विशेषोऽस्तीत्यभिप्रायेण **'ऋग्भिः–'** इत्यादीनि[२] भारतवाक्यान्याह। ऋग्वेदिनो होतृत्वं प्राप्य [३]तत्तदृग्भिर्विष्णुप्रीत्यै तद्गुणगणानेव **शंसन्ति**। अथ ये सामवेदिनस्तेऽपि[४] **तथा** औद्गात्रेण सामभिस्तानेव **स्तुवन्ति**। यजुर्वेदिनोऽप्याध्वर्यवेण यजुर्मन्त्रै-

१. '–रेकेणापरविद्या' ख.
२. 'इत्यादिभिर्निर्णायकवाक्यान्याह' ख.
३. 'तदृग्भिर्विष्णु–' क.
४. '–वेदिनस्ते सर्वेऽपि' क.

**र्विष्णव** एव **जुह्वति**। 'तदृचैव [१]होत्रमकरोद् यजुषाऽऽध्वर्यवं साम्नोद्गीथम्' [ऐ.ब्रा.२५.७] इति हि[२] ब्राह्मणम्। एवमथर्वादयोऽपि **आथर्वणैर्मन्त्रै**[३]**स्त-मेव स्तुवन्ति** ॥

ऋगादिकमितिहासादिसाहित्येन **पञ्चधा संस्थं शब्दब्रह्म** विष्ण्वाख्यं परं **ब्रह्मैव** यथाशक्ति **उक्त्वा प्रशाम्यति**, अतः परं न किञ्चिद् वदति। नचैतद-ज्ञमतम्।'**विजानताम्**' इत्युक्तत्वात् ॥

वाकाः सूक्तानि । तत्समुदायविशेषा अनुवाकाः । वेददर्शिभिः नैरन्त-र्येणोक्तमृग्जातं हि सूक्तं नाम । पूर्वाह्णिकमपराह्णिकमित्याद्येककालिकं सूक्तजातमनुवाकः । तथाचोक्तं भाष्यकारभट्टारकैरेवान्यत्र–'सूक्तं त्वनारतं प्रोक्तमनुवागेककालिका' इति। निषदो ब्राह्मणानि । '**सत्येषु सामसु**' इति-वचनादन्यवेदानामपि सत्यत्वमुपलक्षितम्। एवं च सर्ववेदमिथ्यात्वं निराकृतं भवति ॥

'**सर्वविद्याप्रतिष्ठाम्**' इत्येतद् विशेषणं विवृणोति– '**चतुर्दश–**' इत्यादिकया मूलश्रुत्या। चत्वारो वेदाः षडङ्गानि आयुर्वेदाद्युपाङ्गचतुष्टयं[४] चेति हि चतुर्दश विद्याः । अथ महाभारतं पुराणं पञ्चरात्रं मूलरामायणं चेत्येतद् वा तत्रान्त्यचतुष्कम्। एताश्चतुर्दश **विद्याः** ब्रह्मज्ञानस्य उत्पत्ति**स्थानानि । मूलश्रुतिः** अविभक्तवेदः ॥ ❊ ॥

**(भा.चं.) विष्णोस्तु वाचकाः**। मुख्यवृत्त्या विष्णोरेव वाचकाः। '**होत्रेण**' '**होतृत्वं प्राप्य**'। '**विष्णवे**' **विष्णुप्रीत्यै**। **औद्गात्र** इति तृतीयार्थे सप्तमी-त्याह– **औद्गात्रेण सामभिस्तानेव** गुणगणान् **स्तुवन्तीति**। यथा ऋग्भिः ऋग्वेदिनः, सामभिः सामवेदिनस्तथा **यजुर्भिरपि**, यजुर्वेदिनोऽपि यजुर्भिः,

---

१. 'होत्रमकुर्वन्–' इति कचित्। 'स ऋचैव हौत्रमकरोत्' प्रचलितः श्रुतिपाठः।

२. 'इति ब्राह्मणम्' क.    ३. '–प्याथर्वणमन्त्रै–' ख.    ४. '–चतुष्कम्' क.

**विष्णवे च**, विष्णुप्रीत्या एव **जुह्वति** । **अथर्वादय** इत्यादिपदेनाऽङ्गिरसाः । **आथर्वणैश्चे**ति चकारो वेदिनमनुसन्धापयति, वेद्यं चावधारयति । अथर्व-वेदिनोऽपि, **आथर्वणैर्मन्त्रैः**, **एनं च**, तमेनं विष्णुमेव **स्तुवन्ति** । एवं सर्वेऽपि शाखिनः **सेतिहासपुराणकैः** स्वस्ववेदैः स्तुवन्ति । **हि** यस्मात् **तं** विष्णुं **सर्वोत्तमं जानन्तो** भवन्ति तस्मात् **न किञ्चिदपि** अन्यत् **विष्णु-सदृशं परमं वा मन्वते** । यस्मान्न मन्वते तस्मात् **ते भागवतोत्तमाः** । **त** एव च **भागवतोत्तमा** इति **हि** सर्वागमप्रसिद्धमिति ॥

**'वेदे रामायणे–'** इति हरिवंशे । यथा **वेदे तथा रामायणे च पुराणे च भारते च विष्णुरेव** मुख्यतो **गीयते** । विशन्त्येनं सर्वाणि नामानि वाचकत्वेनेति हि विष्णुरुच्यते । 'नामानि सर्वाणि यमाविशन्ति' इत्यादेः । न केवल-**मादावन्ते च मध्ये च** प्रकरणशः । किन्तु **सर्वत्र**, वाक्येषु पदेष्वक्षरेषु च । **'वेदे पुराणे'** इति समुदायवचनम् । सर्वेषु वेदेषु पुराणेषु च । यद्यप्यनन्ताः वेदाः । अथाप्येको वेदः । अर्थैक्यात् । यद्यप्यष्टादश पुराणानि । अथाप्येकं पुराणम् । अर्थैक्यादेव । राजसतामससत्वेनाभिमतान्यपि पुराणानि सात्विकानां सात्विकमेव ह्यर्थमवगमयन्ति । केवलं राजसतामसा एव राजसं तामसं वाऽर्थं परिगृह्य पतन्ति । 'सर्वमेकं पुराऽभवत्' इति हि वक्ष्यति ॥

**वाकाः सूक्तानि** । अथवा वाका गद्यमयानि यजूंषि । पद्यमय्य ऋचोऽनु-वाकाः । वाक इति वाक्यम् । छन्दोऽनुगुणं वाक्यमनुवाकः । पूर्वाह्णे पठनीयं सूक्तजातं **पूर्वाह्णिकम्** । अपराह्णे पठनीय**मपराह्णिकम्** । **अन्यत्र** ऋग्भाष्ये **उक्तम्** । **'अनारतं'** अविच्छेदेन निरन्तरं मन्त्रद्रष्ट्रा **'प्रोक्तं'** मन्त्रजातं **'सूक्तं प्रोक्तम्'** । **निषदो ब्राह्मणानि**, आरण्यकानि च । **सत्येषु** तत्वावेदकेषु ॥

**'सर्वे वेदा'** इति काठके [१.२.१५] । **तपांसि** युक्तयः । **'वेदैश्च सर्वैः'** इति गीतायाम् [१५.१५]। **सर्वैरपि वेदैरहमेक एव** मुख्यतो **वेद्यः** । एवं

वेदानामर्थनिर्णयकृद् **वेदान्तसूत्रकृच्च अहमेव**। मुख्यतः **वेदहृदयविच्च अहमेव**। 'अस्या हृदयं साक्षान्नान्यो मद्वेद कश्चन' इति हि भागवते। अयमत्र क्रमः– आदौ भारतवाक्यानि, अन्ते गीतावाक्यम्। मध्ये काठकवचनम्। अत एव **'इत्यादि च भारते'** इत्याह। बहूनि वचनानि भारतगानीति प्राधान्यात् भारतं नामतो निर्दिश्य चकारेण काठकमुपसञ्जग्राह– **इत्यादि भारते** काठके चेति। मध्ये च काठकनिवेशनेन तत्समाख्यारूपं गीतावचनं च स्मारयति– 'यदक्षरं वेदविदो वदन्ति विशन्ति यद् यतयो वीतरागाः। यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत् ते पदं सङ्ग्रहेण प्रवक्ष्ये' [८.११] इति। स्थानान्तरे वा पठितोऽयं भारतगतः श्लोकः॥ ❊॥

**(भा.)** **'पञ्चरात्रमृगाद्याश्च सर्वमेकं पुराऽभवत्।**
**'मूलवेद इति ह्याख्या काले कृतयुगे तदा॥**

**'नैवर्क्सामादिनामानि तदा वेदस्य चाभवन्।**
**'नैव चेन्द्रादिनामानि विष्णोरन्यत्र कुत्रचित्॥**

**'ब्रह्मरुद्रेन्द्रपूर्वैस्तु नामभिः प्रोच्यते हरिः।**
**'देवतात्वेन चेज्यः स ब्रह्माद्या मनुनामकाः॥**

**'वक्तृत्वेन पितृत्वेन कारित्वेनैव चाऽदरात्।**
**'इज्यन्ते देवताः सर्वा नतु देवतया क्वचित्॥**

**'अनन्ययाजिनस्त्वेते तस्मात् कार्त्तयुगा जनाः।**
**'प्राप्नुवन्ति हरिं तं च तस्माद् वेदे न किञ्चन॥**

**'पारावर्यं हरेर्यस्मादुत्थितास्तुरगाननात्।**
**'ऋगाद्या अनुव्याख्यान्तास्तस्मात् सर्वैहरिं यजेत्॥**

**'तस्माद् ब्रह्मादयः सर्वे मनवो मानवास्तथा।**
**'यजन्ति सर्ववेदैस्तं जानन्ति च विनिश्चयात्॥**

'अशक्तः पञ्चरात्रेण ऋगाद्यैर्वाऽथ तं यजेत् ।
'ऋगाद्यैरेव सर्वत्र भिन्नैरिष्टो जनैर्हरिः ॥

'द्वापरीयैर्जनैर्विष्णुः पञ्चरात्रैस्तु केवलैः ।
'कलौ तु नाममात्रेण पूज्यते भगवान् हरिः ॥

'एको वेदः कृते ह्यासीत् त्रेतायां स त्रिधाऽभवत् ।
'स एव पञ्चधा जातो द्वापरं प्राप्य वै युगम् ।
'उत्सन्नः स कलिं प्राप्य वेदः प्रायेण सर्वशः ॥

'मुख्यो धर्म्मः कार्त्तयुगो वर्त्तितव्यः कलावपि ।
'त्रेतादौ तदशक्त्या हि धर्म्मोऽन्यः सम्प्रवर्त्तितः ॥

'कृते भागवताः सर्वे वेदाश्च पुरुषास्तथा ।
'त्रेतायां भिन्नविषयास्ततस्त्रैविध्यतां गताः ॥

'तस्मादेकः सर्ववेदैर्ज्ञेयो विष्णुः सनातनः ।
'पूज्यो यज्ञैः सोपचारैर्ध्येयो वन्द्यश्च सर्वदा'

इति नारायणसंहितायाम् ॥

'वेदवादाश्चानुयुगं ह्रसन्तीति हि नः श्रुतिः'

इति च भारते ॥

'वेदैश्च पञ्चरात्रैश्च भक्त्या यज्ञैस्तथैव च ।
'दृश्योऽहं नान्यथा दृश्यो वर्षकोटिशतैरपि'

इत्यादि वाराहे ॥ * ॥

**(टी.)** अथाप्यृगादीनां परविद्यात्वमेव प्रचुरमित्येतत् **'पञ्चरात्रमृगाद्याश्च–'** इत्यादौ नारायणसंहितायां च सुप्रसिद्धमिति दर्शयति । तत्तन्मन्त्र**देवतात्वेन चेज्यः स** भगवान् । मननशीलत्वात् **मनुनामका ब्रह्माद्याः** । ते केवलं गुरुत्वादि-

नैवान्यैरिज्यन्ते । नत्वेता देवताः साक्षात्[1] मन्त्रप्रतिपाद्यदेवतात्वेन[2] कैश्चित् क्वचिदिज्यन्ते । पारावर्यं परावरार्थद्वयवाचकत्वं वेदे स्वल्पमपि नास्ति । तत्काले केवलं विष्णुविषयत्वबुद्ध्यैव तुरगाननादृगादीनामुत्थितत्वात् । अतः कृतयुगे तु एक एव वेदः । परब्रह्मैकविषयत्वात् । स एकोऽपि त्रेतादौ परापरविषयत्वेन बहुधाऽभवत् । अधिकारिणां शक्तिह्रासादित्यर्थः ।। * ।।

(भा.चं.) 'सर्वमेकं पुराऽऽभवत्' । सर्वमेकार्थं परविद्यापदास्पदं विष्णुमात्रपरं कृते युगेऽभवत् । अतः सर्वदेवतामूलं विष्णुमेव वेदयन्तीति सर्वस्यापि 'मूलवेद इति ह्याख्या तदाऽभवत्' । 'नैव चेन्द्रादिनामानि विष्णोरन्यत्र' मुख्यतः 'कुत्रचित्' । मन्यन्त इति मन्तृत्वेन मनुनामकाः । तन्नियम्या मानवाः । 'वक्तृत्वेन' मन्त्रद्रष्टृत्वेन, मन्त्रार्थप्रवक्तृत्वेन, गुरुत्वेन च । रुद्रादीनां ब्रह्मादयः 'पितृत्वेन' । सर्वलोकस्य च पितामहत्वादिना । 'कारित्वेन' कारयितृत्वेन । अभिमानिनो देवा जीवेषु स्थित्वा भगवदाराधनात्मकं कर्म कारयन्तीति । सहकारित्वेन च । 'नतु देवतया' मन्त्रप्रतिपाद्यतया 'क्वचित्' । 'ऋगाद्या अनुव्याख्यान्ताः' । तथाहि बृहदारण्यके– 'अस्य महतो भूतस्य निःश्वसितमेतद् यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानि' इति । 'तस्माद् वेदाः समुत्पन्ना विद्याख्या मूलिका श्रुतिः । सर्वोपनिषदश्चैव पञ्चरात्राख्यसंहिताः । ब्रह्मसूत्राणि वेदानां व्याख्यास्तासां च विस्तरः । सर्वमेतज्जगच्चैव निःसृतं तुरगाननात्' इति हयग्रीवसंहितायाम् । तथाच ब्राह्मणारण्यकानि व्याख्यानानि । तेषां विस्तररूपाः वेदसंहिताव्याख्यानरूपाः संहिताग्रन्था अनुव्याख्यानानि । तद् यथा– ऐतरेयसंहिता । सर्वैः वेदैः सर्वैश्च नामभिर्हरिमेव पूजयेत् । अथ अनन्तरम् । त्रेतायुग इत्यर्थः । एकवेदानुसन्धाने तत्र चैकदेवानुसन्धाने अशक्तः । ऋगाद्यैः ऋचा यजुषा साम्ना वा । केनचनैकेन वेदेन । एवं सर्वत्र त्रेतायां द्वापरे कलौ च भिन्नभिन्नदेवताविषयैरेव

१. 'नच तावदेतासां काश्चित्' क. २. 'मन्त्रप्रतिपाद्यत्वेन' क.

वेदैरन्तर्यामितया केवलं **हरिरिष्टः** । तत्रापि प्रतियुगं शक्तिह्रासात् **द्वापरीयैः** प्राधान्येन पञ्चरात्रानुसारेणैव **हरिः पूज्यते** । कलौ तु पञ्चरात्राणामपि विलोपेन तदा केवलं हरिनामशरणाः सन्त इति । **'त्रिधाऽभवत्'** । नियताक्षरा ऋचः, अनियताक्षराणि यजूंषि, गेयानि सामानीति स्वरूपतः। जडविषया अभिमानिविषया अन्तर्यामिविषया इत्यर्थतः । ज्ञानकाण्डं कर्मकाण्डमुपासनाकाण्डमित्यादि विनियोगतः । केचिद् विष्णुमेव यजन्ति, केचित् पृथगिष्ट्वा विष्णावर्पयन्ति, केचिदिन्द्रादीनेव स्वातन्त्र्येण यजन्तीति त्रेधाऽभवदित्युपरि ब्रह्माण्डवचने स्फुटम् । द्वापरे तु शाखाभेदेन वेदसम्प्रदायाश्चत्वारः, तन्त्रागममयः सम्प्रदाय इति **स एव पञ्चधा जातः** । वेदवादिष्वेव पुनः पञ्चायतनपूजका इत्येवं च **पञ्चधा**, बहुधा च जातः । **'हि'** यस्मात् **'तदशक्त्या'** मुख्यधर्मानुवर्तनेऽशक्त्या **'अन्यः'** अमुख्यः **'धर्मः सम्प्रवर्तितः'** इति **'हि'** सर्वशास्त्रप्रसिद्धं सर्वविद्वत्प्रसिद्धं च, तस्मात् **'मुख्यो धर्मः कलावपि वर्तितव्यः'** । यतः **'पुरुषाः तथा'** भगवदेकतानाः, अतो **'वेदाश्च सर्वे भागवताः'** । **'त्रैविद्यतां गताः'** वेदाश्च पुरुषाश्च **'त्रेतायां स त्रिधाऽभवत्'** इति पूर्वोक्तदिशा । यतः विष्णुरेव **'सनातनः'** सर्ववेदेड्यः सदातनश्च **'तस्मात्'** स **एक** एव **ज्ञेयः पूज्यश्च** । **'सोपचारैः'** षोडशोपचारादिसहितैः । **'वन्द्यः'** स्तुत्यश्च । **'वेदवादाः'** वेदेष्वर्थविशेषानुसन्धानरूपाः संवादाः ह्रसन्ति, विवादाश्च वर्द्धन्ते । **'भक्त्या यज्ञैः'** भक्तिपूर्वकमाराधनैः । **'वर्षकोटिशतैरपि'** इति शतशब्दो बहुत्वार्थः । अनन्तैरपि जन्मभिरित्येतत् । 'शतं दश सहस्रं च सर्वमक्षय्यवाचकम्' इति हि स्मरन्ति । सूत्रभाष्योदाहृतं [१.२.२१] श्रुत्यन्तरं च स्फुटं समाख्याति– 'अथ द्वे वाव विद्ये वेदितव्ये परा चापरा च । तत्र ये वेदा यान्यङ्गानि यान्युपाङ्गानि यानि प्रत्यङ्गानि साऽपरा । अथ परा यया स हरिर्वेदितव्यो योऽसावदृश्यो निर्गुणः परः परात्मा' इति । अङ्गानि शीक्षादयः षडत्राप्युक्तानि । आयुर्वेदो धनुर्वेदो गान्धर्वं स्थापत्यं चोपाङ्गानि । उपाङ्गेषु चरममर्थशास्त्रमित्यपरे । शिष्टाः कलाविद्याः प्रत्यङ्गानि ॥ * ॥

**(भा.) अत्रापि 'तदेतत् सत्यम्। मन्त्रेषु कर्म्माणि कवयो यान्यपश्यन्' इत्यादिना कर्म्मविषयामपरविद्यामुक्त्वा, 'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्वतो ब्रह्मविद्याम्' इत्याद्यारभ्याऽथर्वणानेव मन्त्रान् परविद्यात्वेनाऽह॥**

**(टी.)** नन्वस्यामुपनिषदि 'द्वे विद्ये वेदितव्ये' इत्येवोक्तत्वात् आद्यन्ततः[१] परविद्यात्वमस्तीति नोक्तमित्यत आह– **अत्रापीति**। [२]अस्यामप्युपनिषदि **'तदेतत् सत्यम्'** इत्याद्युत्तरखण्डे **कर्मविषयामपरविद्यामुक्त्वा 'येनाक्षरम्'** इत्यन्तवाक्ये[३] **'तत्वतो ब्रह्मविद्यां प्रोवाच'** इत्याथर्वणमन्त्रानशेषानपि **परविद्यात्वेनाऽह**॥

**(भा.चं.) 'परविद्यात्वेनाऽह'**। पूर्वं विद्याद्वैविध्यमुदितं परापरभेदेन। **'तत्रापरा'** इत्यादिना चापरविद्या मुखत उक्ता। लक्षिता च परविद्या **'यया तदक्षरमधिगम्यते'** इति। तदेव परविद्यालक्षणमक्षराधिगमहेतुत्वमत्रानूद्य **'येनाक्षरं पुरुषं वेद'** इति, कर्मप्रतिपादकानामेव मन्त्राणां ब्रह्मविद्यात्वमुच्यते– **'प्रोवाच तां तत्वतो ब्रह्मविद्याम्'** इति। एतेन विद्यानां परत्वमवरत्वं वा विवक्षाभेदेन नतु ग्रन्थभेदेनेत्यवगम्यते। अन्यथा, परविद्या अपि पृथक् पर्यगणिष्यन्त। अपिच सर्वे वेदा अपरविद्यात्वेन पठिताः। तेन वेदानामब्रह्मविद्यात्वम्, अवेदानां च ब्रह्मविद्यात्वमिति सर्वं व्याकुलं भवत्यन्यथाव्याख्याने। तेनेदं स्फुटमवगम्यते या एवाज्ञानामपरा विद्याः **'ता एव परमा विद्याः'** विदुषामिति॥

**(भा.) चातुर्वेदसंस्कारवतामेव च परविद्यायामधिकार उक्तः– 'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद् यैस्तु चीर्ण्णम्' इति। शिरोव्रतमित्युपलक्षणत्वेन–**

---

१. 'आन्ततः' ख. २. 'अस्यामुपनिषद्यपि' ख. ३. 'इत्यादिवाक्ये' क.

**'स्ववेदव्रतयुक्तस्य सर्ववेदगतास्वपि ।**
**'अधिकारोऽस्ति विद्यासु नावेदव्रतिनः क्वचित्'**
**इति व्यासस्मृतौ ॥ * ॥**

**(टी.)** एवम्भूतायामपि परविद्यायां केषामधिकार इत्याकाङ्क्षायामाह– **चातुर्वेदेति**[1] । सर्ववेदोक्तसंस्कारवतामेवास्यां परविद्यायां मुख्याधिकार उक्तः शाखान्ते– **'तेषामेव–'** इत्यादौ । अत्र शिरोव्रतं नाम ब्रह्मचारिण उपनिषदि विहितं माहानाम्न्यादिव्रतचतुष्कम् । चातुर्वेदसंस्कावत्त्वं कथमिह विहित-मित्याकाङ्क्षायामाह– **शिरोव्रतमिति** । एतद्वचनस्य सर्ववेदव्रतोपलक्षणत्वेन वर्तमानत्वात् । तानि चोपनयनोपाकरणादीनीति सिद्धम् । [2]अथर्वव्रतेष्वशक्त-स्यापि स्वशाखोक्तव्रतिनः सर्वविद्याधिकारः स्मर्यत इत्याह– **स्ववेदेति** ॥ ३–५ ॥

**(भा.चं.)** चतुर्वेदसम्बन्धी संस्कारश्चातुर्वेदसंस्कारः । चतुर्णामपि वेदानां समानः । षोडशसंस्कारेषु उपनयनान्तरभावि गुरुकुले क्रियमाणं व्रतचतुष्कं शिरोव्रतमुच्यते । सर्वशाखिनामपि समानम् । किं तत्? महानाम्नीव्रतम्, महाव्रतम्, उपनिषद्व्रतम्, गोदानव्रतं चेति । गुरुकुले वेददीक्षार्थं क्रियमाणं ऐतरेयोप-निषदन्ते पठिष्यमाणानां महानाम्नीमन्त्राणामध्ययनं महानाम्नीव्रतम् । अथैतरेयारण्यकस्याध्ययनं महाव्रतम् । 'अथ महाव्रतम्' इति हि आरण्य-कारम्भः । ऐतरेयोपनिषदोऽध्ययनमुपनिषद्व्रतम् । ऐतरेयेण भगवता महि-दासेन स्वयमाविष्कृतमेतत्त्रयमिति चातुर्वेदसंस्कारत्वमस्य । गवां केशानां दानं खण्डनं गोदानं नाम व्रतं केशसंस्कारः । सोऽपि बहुविधः । ऋग्वेदिनां गोष्पदमात्रः केशपाशः । यजुर्वेदिनां ललाटाग्र एव केशखण्डनम् । जटिलिनः सामवेदिनः । मुण्डितमुण्डा आथर्वणा इत्यादि । उपनयनान्ताः पूर्व-संस्काराः । ततो गुरुकुले महानाम्नीव्रतादीनि चत्वारि शिरोव्रतानि भवन्ति ।

---

१. 'चतुर्वेदेति' ख. २. 'अथर्वव्रतेऽशक्त–' क.

अयं समानः संस्कारः । प्रतिवेदं विभिन्नश्च संस्कारो भवति । ताम्रपात्रे तप्ताङ्गारान् निधाय शिरसा तप्तपात्रधारणं शिरोव्रतमाथर्वणानामिति वदन्ति । पात्रस्यावरोहणार्थं गुरुणाऽनुमतिप्रदानपर्यन्तं तच्छिरसि धार्यं शिरोदाहेऽपि । मध्ये दाहभिया शिरःकम्पेन पात्रपाते न वेदाध्ययनाधिकारः । इदमाथर्वणिकेषु प्रसिद्धं शिरोव्रतम् । तदेतद् व्रतमपि कटाक्षितं च भाष्ये– **'स्ववेदव्रतयुक्तस्य'** इति । टीकायां च– **अथर्वव्रतेष्वशक्तस्यापीति** ।। ३–५ ।।

**यत्तदद्रेश्यमग्राह्यमगोत्रमवर्ण्ण-**
**मचक्षुःश्रोत्रं तदपाणिपादम् ।**
**नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं**
**यद् भूतयोनिं परिपश्यन्ति धीराः**[1] ।। ६ ।।

**यथोर्ण्णनाभिः सृजते गृह्णते च**
**यथा पृथिव्यामोषधयः सम्भवन्ति ।**
**यथा सतः पुरुषात् केशलोमानि**
**तथाऽक्षरात् सम्भवतीह विश्वम्** ।। ७ ।।

**(टी.)** यत्तत् परविद्यावेद्यमक्षरम् **'यद् भूतयोनिम्'** इति सर्वकारणत्वेनोक्तं[2] तद् दृष्टान्ततोऽपि व्याचष्टे– **यथोर्णनाभिरिति** ।। ६–७ ।।

**(भा.चं.) अद्रेश्यम**दृश्यं चक्षुषा । न द्रेक्यत इति चाद्रेश्यं वर्णव्यत्यासेन । न स्वोत्साहेन द्रष्टुं ज्ञातुं वा शक्यम् । किन्तु तदनुग्रहेणैवेति । 'द्रेकृ उत्साहे' । **अग्राह्यं** मनसा । **अगोत्रमवर्णमि**त्यनामरूपम् । 'अनामा सोऽप्रसिद्धत्वादरूपो

---

१. इतः परं रामानुजीया मन्त्रमेकमधिकं पठन्ति–
**'यस्मात् परं नापरमस्ति किञ्चिद् यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् ।**
**'वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्'** इति ।

२. **'सर्वकारणमुक्तम्'** ख.

भूतवर्जनात्' इति पौराणं वचः। 'अवर्णं न वर्णः शुक्लादिः, वर्णरहितं च। नच वर्ण्यते, नापि वर्णात्मकम्' इति तत्वप्रदीपे [१.३.४१]। अवर्णत्वादेव न दृश्यते। अवर्णनीयत्वादेव न वचसा गृह्यते। अगोत्रत्वादेव चावर्णनीयम्। 'अद्रेश्यं ज्ञानेन्द्रियाविषयः। अग्राह्यं कर्मेन्द्रियाविषयः' इत्यन्ये। 'अगोत्रं कुलरहितम्। अवर्णमपेतब्रह्मक्षत्रादिकम्' इति च। सम्भवत्सु सूक्ष्मेष्वर्थ-विशेषेषु न स्थूलव्याख्यानमात्रेण सन्तोष्टव्यम्। **अचक्षुःश्रोत्रं** ज्ञानेन्द्रिय-वर्जितम्। अथापि विश्वतश्चक्षुर्मुखतया ततत्वात् **तत्**। **अपाणिपादं** कर्मेन्द्रिय-वर्जितम्। एतेन प्राकृतरूपराहित्यमाह। अथाप्यवतारेषु विविधरूपं भवतीति **विभु**। बिन्दुरवधारणार्थे। स्वरूपदेहेनैव विभु सर्वकरणसमर्थं च। एतेन अप्रा-कृतरूपवत्तामाह। अत एव शरीरतोऽपि **नित्यम्**। **सर्वगतं** महतो महीयः। अथापि **सुसूक्ष्मम**णोरणीयः। अणोर्जीवादप्यणुतरं जीवान्तर्यामि। अवतार-रूपेष्वपि वृद्धिह्रासविरहात् **तदव्ययम्**। गुणैस्ततत्वाच्च **तत्**। शयानमेव सर्वत्र यातीति **यत्**। सर्वजगत्कारणं ज्ञानिनः **पश्यन्ति**। परितोऽन्तर्बहिश्च। यत्तु 'भूतयोनिम्' इति योनिशब्दाद् जगदुपादानत्वं भगवतो विवक्षितमिति केचिदाचक्षते तदक्षममित्युपेक्षणीयम्। योनिरिति न क्वाप्युपादानकारणं विशिष्योच्यते। कारणसामान्यवचनं हि तत्। 'योनिर्भार्या तथा स्थानं योनिः कारणमेव च' इति शब्दनिर्णये। उत्पत्तिस्थानं योनिः। उत्पत्तिकारणं च योनिरुच्यते। तदपि सामान्यतः कारणमेव नतु विशिष्योपादानकारण-मित्यर्थः। अत्र प्रथमपादे चतुर्दशाक्षराणि। तृतीयपादे पञ्चदश। द्वितीय एका-दश। तुरीये च द्वादश। संहत्य द्विपञ्चाशदक्षराणीत्यतिजगतीयम्॥ ६॥

**यथा ऊर्णनाभिः**, 'जेड' इति भाषायाम्, स्वस्माद् भिन्नमेव तन्तुजालं स्वोदरात् **सृजते** पुनः स्वान्त**र्गृह्णते** गृह्णीते च तथा परमाक्षरो भगवान् विश्वं सृजति संहरति च। **तथाऽक्षरात्** निमित्तात्, अक्षरमेवाधिष्ठानमाश्रित्य विश्वं सञ्जातं भवति, संहृतं च भवतीति। 'तस्योदरस्थजगतः....सृज्यसृष्टावीक्षा बभूव'

इति तात्पर्यनिर्णये। सृष्टौ स्थितौ संहारे च सृज्यस्य भगवानेवाधिष्ठानमित्याह– **यथा पृथिव्यामिति**। ओषधयः अन्नभूता व्रीह्यादयः। देहस्य ओषमुष्णं दधत इति। **यथा सतः पुरुषान्निमित्तात्** केशाद्युत्पत्तिः तथा विश्वस्य निमित्तकारणमक्षरम्। नह्यविद्यमाने जीवे मृतशरीरात् केशाद्युत्पत्तिर्दृश्यते। तेन ज्ञायते न दृश्यमानाया जडप्रकृतेरेवेयं सृष्टिः। किन्त्वदृश्यमानात् परमपुरुषादेवेति। नचात्र भगवत उपादानत्वमुच्यते। नहि लूताकीटस्तन्तुजालस्योपादनम्। नाप्योषधीनां पृथिवी। नात्र पृथिवीति मृदुच्यते। किन्तु पृथिवीदेवता। **'ऊर्णनाभिः'** इति **'सतः पुरुषात्'** इति चेतनप्रसङ्गात्। **सतः पुरुषादिति** च स्फुटं चेतनस्य निमित्तत्वम्, जडस्य चोपादानत्वम्। **सतः** जीवाधिष्ठितात् **पुरुषाच्छरीरादिति** वा। स्वातन्त्र्यात् **'सृजते'** इत्यात्मनेभाषः। बहुरूपत्वाद् **'गृह्णते'** इति बहुवचनम्। अथाप्येकरूप एवेति **'सृजते'** इत्येकवचनम्। मन्त्रोऽयं जागतः। प्रथमपादे तृतीये च स्फुटं द्वादशाक्षरः। द्वितीये त्रयोदशाक्षरः। तुरीय एकादशाक्षर इति केवला जगत्येव॥ ७॥

**तपसा चीयते ब्रह्म ततोऽन्नमभिजायते।**
**अन्नात् प्राणो मनः सत्यं लोकाः कर्म्मसु चामृतम् ॥ ८ ॥**

**(टी.)** एवमप्यक्षरशब्देनोपादानकारणं प्रधानमत्रोच्यतामित्यत[१] आह– **तपसेति**। अत्र तपो नाम विश्वं सृजामीत्यालोचनम्। नह्यालोचनशक्तिरुपादानस्य भवति। अतो नेदं प्रधानम्। नचास्य ब्रह्मत्वे दृष्टान्तविरोधः। चेतनानां निमित्तत्वात्, जडानामेवोपादानत्वाच्च॥ ८॥

**(भा.चं.) तपसा चीयते** संयुज्यते। अभिव्यक्तसृष्टीच्छं भवतीर्त्यः। 'सृज्यसृष्टावीक्षा बभूव' इत्युक्तम्। **अन्नं** भोज्यप्रपञ्चः पृथिवीजलात्मकमन्नमयशरीरं च। जठरगतमेव स्थूलतया **अभिव्यक्तं जायते**। प्राण इति करण-

---

१. '–त्रोच्यत इत्यत' ख.

शक्तिः कायसम्भवा। **मन** इति मननं मानसम्। **सत्यमिति** यथार्थभाषणं वाचिकम्। एवं त्रिभिः करणैः कर्ता भोक्ता च लोको जीवः। ततः कर्माणि। तन्निमित्त**ममृतं** स्वर्गादिमोक्षान्तं फलं चेति। एवं **प्राण** इति तेजोवाय्वाकाशात्मा प्राणमयकोशश्च। **मन** इति मनोमयकोशश्च। अथच, **अन्नं** अन्नमानिनी श्रीः प्रथमं जायते। 'अन्नं मे दक्षिणा' इति हि श्रुतिः। तस्या जननं नाम प्रकृतिविकारात्मके जगत्यभिमानजननम्। अत एव **'अभिजायते'** इत्याह। भगवता सह सृष्ट्यर्थं रूपविशेषाभिव्यक्तिश्च। तथा च मायाजयादिरूपेण सा प्रथमं जज्ञे। तत्रान्ननामा भगवानभिनिविष्टः। **अन्नात्** अन्नसृष्ट्यनन्तरम्, **अन्नात्** अन्ननामकाद् भगवतः श्रियश्च। **प्राणः** इति ब्रह्मवायू। ततो **मन** इति गरुडशेषरुद्राः। इन्द्रकामौ च। अथ च अतिनादादन्नमानित्वाच्च **अन्नं** चतुर्मुखो जायते। तदनन्तरं चतुर्मुखगतादन्ननाम्नो भगवतः, तदधिष्ठानत्वादेवान्ननाम्नश्चतुर्मुखाच्च प्राणमानी मुख्यप्राणो जायते। प्राणान्मनोमानिन इति। ततः **सत्यं** जगत्। जगति चतुर्दश **लोकाः**, लोकेषु लोकिनश्च। तैः क्रियमाणानि कर्माणि कर्मफलानि चाजायन्त। अथच **सत्यं 'तदेतत् सत्यम्'** इति वक्ष्यमाणः सत्याख्यो भगवानेव स्वयं रामकृष्णादिरूपेण **अभिव्यक्तो जायते** प्रादुर्भवति। एवमादयोऽर्थविशेषा यथासम्भवमनुसन्धेयाः। **चेतनानामिति**। ऊर्णनाभिशरीरमुपादानम्, तद्गो जीवो निमित्तम्। एवं मृदुपादानम्। पृथिवीदेवता निमित्तम्। पुरुषशरीरमुपादानम्। पुरुषो निमित्तम्। अत्र मन्त्रे केवलाऽनुष्टुप्॥ ८॥

**यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः।**
**तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते ॥ ९ ॥**

**(भा.)** एतद् ब्रह्म चतुर्म्मुखः॥ ※॥

**इति प्रथममुण्डके प्रथमः खण्डः**

—०—

**(टी.)** अस्तु तर्ह्यालोचनशक्तिमती श्रीरेव निमित्तकारणम् । ब्रह्माक्षरशब्दोपपत्तेश्चेत्यत आह– **यः सर्वज्ञ** इति । नहि देव्याः सार्वज्ञ्यादिकं स्वातन्त्र्येण युज्यते। ब्रह्मत्वादिकं च नातिमुख्यम्। अतः, पुल्लिङ्गशब्दप्राचुर्याच्च विष्णुरेवात्रोच्यते । नन्वालोचनेन विशेषज्ञानेच्छोः कथं सार्वज्ञ्यादिकमतिमुख्यमित्यत आह– **यस्य ज्ञानमयं तप** इति । विष्णोरालोचनमपि विशेषज्ञानात्मकं न संशयलेशमिश्रमित्याशयः ॥

अस्माज्जायमानं ब्रह्म प्रकृत्याख्यमिति[१] मा भूदित्याह– **एतद् ब्रह्म चतुर्मुख** इति। **'अन्नं च जायते'** इत्यत्र चशब्दात् **'अन्नात् प्राणो मनः सत्यम्'** इत्यादि पूर्ववाक्योक्तमनुसन्धेयम् । अन्नादेव हि जन्तूनां करणशक्तिः कर्मादिकं फलं च भवति ॥ ९ ॥

—०—

**(भा.चं.)** सर्वं जानातीति **सर्वज्ञः** । सर्वत्र विद्यत इति **सर्ववित्** सर्वगतः । सर्वं विन्दत इत्याप्तकामो वा । **यस्य ज्ञानमयं तप** आलोचनम् । 'तप आलोचने' । 'सर्वत्र विद्यत इति सर्ववित् । विद सत्तायामिति धातोः । यस्य ज्ञानमयमालोचनम् । न संशयात्मकम्' [१.२.२२] इति तत्वप्रदीपे । **एतत्** सृज्यकोटिप्रविष्टं **ब्रह्म चतुर्मुखः** । तदभिमन्यमानं जीवजातं भोक्तृ । 'बृह जातिजीवकमलासनशब्दराशिषु' इति हि पठन्ति। अथच **एतद् ब्रह्म** वेदात्मकः शब्दराशिः **जायते**। तदेव स्फुटमाह– **नाम जायते**। ततः रूपात्मकं **अन्नं** भोग्यं जडं **च जायते** । अथचान्नमयं शरीरं जायते । शरीरे **प्राणः** क्रियाशक्तिः, इन्द्रियव्यापारश्च जायते। ततो मनःक्रिया। ततः कर्माणीति। तद्यथा चक्षुषा प्रथमं पश्यति । अथ मनसा इच्छति । ततः कर्माणि कुरुते । अत्र प्रथमपादे सप्ताक्षरा, एकाक्षरोनाऽनुष्टुप् । 'सरुववित्' इति क्षैप्रविश्लेषे केवला ॥ ९ ॥

—०—

१. 'प्रकृत्याख्यं मा भू–' क.

[अथ प्रथमे द्वितीयः खण्डः]

तदेतत् सत्यम् ।

मन्त्रेषु कर्म्माणि कवयो यान्यपश्यन्
तानि त्रेतायां बहुधा सन्ततानि ।
तान्याचरथ नियतं सत्यकामा
एष वः पन्थाः सुकृतस्य लोके[1] ॥ १ ॥

(भा.) तदेतत् सत्यं भगवान् । तत्कामाः कर्म्माण्याचरथ । तदा साऽपि परविद्या । अन्यथा 'प्लवा ह्येते अदृढा यज्ञरूपाः' । भगवद्विषयत्वेन कृते 'एष वः पुण्यः सुकृतो ब्रह्मलोकः' परब्रह्मलोकः ।

'निष्कामं ज्ञानपूर्वं च निवृत्तमिति चोच्यते ।
'निवृत्तं सेवमानस्तु ब्रह्माभ्येति सनातनम्'
इति हि व्यासस्मृतिः ॥

'स य आत्मानमेव लोकमुपास्ते न हास्य कर्म्म क्षीयते'
इति च श्रुतिः ॥

'सहयज्ञाः प्रजाः सृष्ट्वा' इत्युक्त्वा–

'एवं प्रवर्त्तितं चक्रं नानुवर्त्तयतीह यः ।
'अघायुरिन्द्रियारामो मोघं पार्थ स जीवति' इति च ॥

'यान्ति मद्याजिनोऽपि माम्' इति[2] ।

---

१. 'पन्थाः सुकृतो ब्रह्मलोकः' इति क्वचित् ।

२. प्राचीनादर्शे 'इतीति' इति पठ्यते । प्रायः स्खलितं स्यात् ।

'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
'नतु मामभिजानन्ति तत्वेनातश्च्यवन्ति ते' इति च ॥

'यस्त्वात्मरतिः' इत्युक्त्वाऽपि 'कुर्याद् विद्वांस्तथाऽसक्तः' इत्येवोक्तत्वाच्च ।

'ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।
'सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः' इति च ॥

'लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ'

इत्युक्तत्वाच्च नाऽश्रमान्तरविरोधः । त्रेतायां बहुधा सन्ततानि । कृते त्वेकप्रकारेणैव सन्ततानि ॥

**(टी.)** यदिदं ब्रह्म जगतो[१] जनकत्वेनोक्तं **तदेतत्** सर्वगुणत्वान्निर्दोषत्वाच्च **सत्यमित्युक्तम्** । स च **भगवान्** विष्णुरेव । अथ **कवयो** ब्रह्मादयो **यानि कर्माणि मन्त्रेष्ववान्तरार्थत्वेनापश्यन् तानि** कर्माणि भगवत्प्रसादकामा भूत्वा तदर्थत्वेनाऽ**चरथ** । कर्मश्रुतेरपीत्थं यदा योजना **तदा साऽपि परविद्यैव** स्यात् । अन्यकर्मविषयत्वेन योजनायां त्वपरविद्यैव सा स्यात्[२] । **एते** ह्यज्ञानां[३] स्वर्गाख्यपारगमनागमनहेतुत्वेन प्लवोपमत्वात्[४] **प्लवाः अदृढाः** अस्थिरफलदाः । अदार्ढ्यश्रवणं सर्वकर्मणामपि सममित्यत आह– **भगवदिति** । **भगवद्विषयत्वेन कृते 'सुकृतो ब्रह्मलोकः'** इति विष्णुलोकाख्यं नित्यं फलं[५] सुश्रुतम् । अत्र स्मृतिः प्रमाणमित्याह – **निष्काममिति** । अज्ञकृतो भगवद्यज्ञो ज्ञानद्वारेण मोक्षद इति ह्युक्तम् । अथ ज्ञानिकृतो मोक्षे सुखाधिक्यद इत्यत्र[६] श्रुतिमाह– **स य** इति ॥ ※ ॥

१. 'ब्रह्मादिजगतो' ख.
२. क. पाठे इदं वाक्यं न पठ्यते ।
३. 'एतद्यज्ञानाम्' ख.
४. 'प्लवसमत्वात्' ख.
५. 'फलं श्रुतम्' ख.
६. 'इति श्रुति–' क.

श्रीभगवान् गीतास्वपि[1] **'सहयज्ञाः प्रजाः सृष्ट्वा–'** [३.१०] इत्यादौ[2] तद्यजनं परं श्रेयस्करमित्युक्त्वा, तदननुवर्तिनम्[3] **'अघायुः–'** [३ .१६] इत्यादिना विनिनिन्द। 'भूतानि यान्ति भूतेज्या **यान्ति मद्याजिनोऽपि माम्'** [९.२५] **इति** यज्ञभेदः फलभेदश्चोक्तः। **'अहं हि–'** [९.२४] इत्यादिना सर्वयज्ञभुजं विष्णुमजानन्तो यजमानाः पुण्यनाशेन स्वर्गाच्च्यवन्त **इति चो**क्तम्। एवं च ज्ञानिनां पुण्यमेवाक्षयमित्यर्थः। ननु ज्ञानिनः कर्माधिकार एव नास्ति। 'तस्य कार्यं न विद्यते' इत्युक्तत्वादित्यत आह– **यस्त्विति**। **'यस्त्वात्मरतिः–'** [३.१७] इत्यादौ ज्ञानिनः कार्यं न विद्यत **इत्युक्त्वाऽपि** ज्ञानफलवृद्ध्यर्थं **'कुर्याद् विद्वांस्तथाऽसक्तः'** [३.२५] **इत्येवोक्तत्वाच्च** नोक्तविरोधः[4]। अथ विपक्षे दूषणमाह– **ये त्वेतत्–'** [३.३२] इति। अथ विदुषः कर्मविधेर्निषेधस्य चान्योन्यविरोधमाशङ्क्य परिहरति– **लोकेऽस्मिन्–'** [३.३] इति। विदुषामपि केषाञ्चित् केवलज्ञानयोगेन केषाञ्चित् कर्मयोगेन च सहितेनेति ब्रह्मनिष्ठाया द्वैविध्यस्य **चोक्तत्वाच्च** गृहस्थानां यतीनां चेत्याश्रमभेदविवक्षया विधिनिषेधयोर्न कश्चिद् विरोधः॥

**'तानि त्रेतायाम्'** इत्यादेरर्थं व्याख्याति– **त्रेतायामिति**। कविभि**र्मन्त्रेषु** दृष्टानि **कर्माणि त्रेतायां** बहुदेवताविषयत्वेन लोके **सन्ततानि। कृते तु एकप्रकारेण** विष्णुविषयत्वेनैव व्याप्तानि॥ ※ ॥

**(भा.चं.)** 'सत्यं साधुगुणत्वतः–' इत्यादेराह– **सर्वगुणत्वान्निर्दोषत्वाच्च सत्यमिति**। सत्त्वं सर्वगुणपूर्णत्वं यातीति सत्यम्। सत्त्वं निर्दोषत्वं यातीति सत्यम्। सति सद्गुणसमुदाये साधुः योग्य इति वा। 'तत्र साधुः'[४.४.९८] इति यत्। 'साधुरिह प्रवीणो योग्यो वा गृह्यते' इति जयादित्यः। **'सत्यं भगवान्'** इति भाष्यपदं विवृणोति– **विष्णुरेव**। 'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते' इति भागवतवचनाद् **विष्णुरेव** हि **भगवान्। 'सत्यकामाः'**

---

१. 'श्रीमद्भगवद्गीतास्वपि' क. २. 'सह यज्ञा इत्यादौ' ख.
३. '–वर्तिनः' क. ४. 'नोक्तदोषः' क.

**भगवत्प्रसादकामा 'आचरथ'** आचरत। लोटः स्थाने लट्। तद् यथा 'तमेवैकं जानथ आत्मानमन्या वाचो मुञ्चथ' इत्यादि। श्रुत्वैतद् यूयमाचरथैवेति विश्वासं व्यञ्जयति लकारव्यत्ययेन। इदमेवोक्तं भाष्यकारेणान्यत्र–'कुरु भुङ्क्ष्व च कर्म निजं नियतं हरिपादविनम्रधिया सततम्' इति। यस्मात् **एषः** सत्यकामतया कर्मणां समाचारः **वः सुकृतस्य** ज्ञानद्वारा सुष्ठूपासितस्य विष्णोः **लोके** लोकाय, तल्लोकं गन्तुमित्येतत्, **पन्थाः** मार्गभूत इति ॥ * ॥

**निष्कामं** भगवत्प्रसादातिरिक्तकामनारहितम्। भगवज्ज्ञान**पूर्वं च**। 'यदि ह वा अप्यनेवंविन्महत् पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एवाऽत्मानमेव लोकमुपासीत, **स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते**' इति बृहदारण्यके [३.५.९]। **न हास्य कर्म क्षीयते**। किन्तु मोक्षपर्यन्तमनुवर्तते, मोक्षे सुखाधिक्यदं च भवति। 'क्षीयन्ते चास्य कर्माणि' इति त्वभगवद्विषय-कर्मविषयम्। **विधिनिषेधयोरिति**। 'कुर्याद् विद्वान्' इति कर्मविधेः। 'तस्य कार्यं न विद्यते' इति निषेधस्य च। **केषाञ्चित्** साङ्ख्यानां **ज्ञानयोगेन**। **केषाञ्चिद्** योगिनां **कर्मयोगेन च सहितेन**। तदेव स्फुटमाह– **गृहस्थानां यतीनां चेत्याश्रमभेदविवक्षयेति** ॥ * ॥

**(भा.)** **'अग्निष्टोमादिभिर्यज्ञैः सर्वदेवस्थितं हरिम्।**
**'यजन्ति तांश्च कारित्वाद् वसुस्तस्मात् तथाऽयजत्॥**
**'पृथक्पृथक् च त्रेतायां यजन्ते देवतागणान्।**
**'यथा कृते तथा प्राज्ञास्त्रेतायां बहुधा ततः' इति पाद्मे।**
**'यमिन्द्रमाहुर्वरुणं यमाहुर्यं मित्रमाहुर्यमु सत्यमाहुः।**
**'यो देवनां देवतमो जनित्रं वायोस्तस्मै सोममेभ्यो जुहोमि॥**
**'एवं वायोः पितरं विष्णुमेव यजन्ति देवैः सह ये कृते जनाः।**
**'एवं त्रेतायां केचिदन्ये पृथक् तानिष्ट्वा विष्णावर्प्पयन्ते न चान्ये'**
**इति च ब्रह्माण्डे ॥ * ॥**

**(टी.)** अस्मिन्नर्थे **'अग्निष्टोमादिभिः–'** इत्यादिकं पाद्मवचनमाह । **वसुः** सत्यवतीजनकः । अत्र पुनर्ब्रह्माण्डवचनं चाऽह– **यमिन्द्रमिति** । अत्र त्वेकेन श्लोकेन याजुषं सोमाहुतिमन्त्रमनुवदति । **ये** कृतयुगे **जनाः**[१] ते सर्वेऽपि **एवं** अनेन प्रधानाहुतिमन्त्रेण इन्द्रादिनामकं वायोर्जनकं **विष्णुमेव सर्वदेवैश्च सह यजन्ति** । **एवं त्रेतायामपि केचिद्** विद्वांसः समर्थाः तमेव **यजन्ति** । **अन्ये** तद्वदसमर्थाः इन्द्रादीनपि **पृथगिष्ट्वा विष्णावर्पयन्ते** तत्पूजाऽस्त्विति । एतेभ्योऽप्य**न्ये** मूढतमाः तानेव यजन्ति **नच विष्णावर्पयन्ते**। अतो विद्वन्मतानुसरणार्थं **'तान्याचरथ नियतं सत्यकामा'** इत्याह। तथाऽऽचरणं हि विशिष्टं विशिष्टफलमित्याह– **एष व** इति । **एष** भगवद्यज्ञः स्वजन्यज्ञानसाधितस्य विष्णोर्लोकस्य गमनाय मार्गः उपायो भवति, साधनसाधनत्वात् ॥ १ ॥

**(भा.चं.) सोमाहुतिमन्त्रमनुवदतीति** । तथा हि मन्त्रः–'यमिन्द्रमाहुर्वरुणं यमाहुः । यं मित्रमाहुर्यमु सत्यमाहुः । यो देवानां देवतमस्तपोजाः । तस्मै त्वा तेभ्यस्त्वा' [तै.ब्रा.३.७.९.३–४] इति । **यमिन्द्रं** इन्द्रान्तर्यामिणं मुख्यत इन्द्रपदवाच्यम्। **यमु सत्यं** साधुगुण**माहुः**। तेन गुणपूर्णत्वादिन्द्रादिसर्वनामानं तमेवाऽहुरिति। अथ च सत्यं वायुनामानं आहुः। तथाह्यैतरेयभाष्ये [२.१.१३]– 'सत्य इति वायुः । 'सदिति प्राणः' इति श्रुतेः । 'सदेव सत्यमित्युक्तं सत्यो वायुरुदाहृतः । साधुत्वं सत्यता प्रोक्ता साधुर्वायुर्हि सर्वतः' इति शब्दनिर्णये' इति । **देवानां देवतमः**। स्तुत्यतमो गम्यतमश्च। 'दैवतं देवतानां च' इति भारते। वायोर्जनयिता। किमुतान्येषाम्। **तस्मै** तद्द्वारा **एभ्य** इन्द्रादिभ्यश्च। **तस्मै** वायोः पित्रे **एभ्य** इन्द्राद्यन्तर्यामिभ्यो भगवद्रूपेभ्यश्चेति वा। **'न चान्ये'** । **अन्ये नचार्पयन्ते** । तदेवं 'त्रेतायां स त्रिधाऽभवत्' इति प्रमाणवचनं निगदव्याख्यातं भवति। तदेतत् सत्यमिति यजुः। मन्त्रेष्विति

---

१. 'ये कार्तयुगा जनाः' ख.

प्रथमः पादस्त्रयोदशाक्षरः। द्वितीयो द्वादशाक्षरः। तृतीयश्च। तुरीय एकादशाक्षर इति जागतोऽयं मन्त्रः ॥ १ ॥

**यदा लेलायते ह्यर्चिः समिद्धे हव्यवाहने।**
**तदाऽऽज्यभागावन्तरेणाऽहुतीः प्रतिपादयेत् ॥ २ ॥**

**(टी.)** [१]कर्माचरणप्रकारमपि सङ्क्षेपेणाऽह– यदेति । **यदा हव्यवाहने** इन्धनैः **समिद्धे** सति तदर्चिः **लेलायते** [२]इन्धनरसास्वादनमारभते तदानीं **आज्यभागौ** चक्षुर्होमौ कृत्वा तयोर्मध्यभागे वदनस्थाने प्रयाजाख्या **आहुतीः** जुहुयात्। एवं ह्यग्निहोत्रिणो दर्शपूर्णमासादिषु साधारणो नियमः ॥ २ ॥

**(भा.चं.) लेलायते** अतिशयेन लेलीयते। लीङ् श्लेषणे। 'तृतीयोऽतिशये' इति ह्युक्तम्। लोलायते वा। यो हि लोलायमानो लेलीयते लेलीयमानो वा लोलायते स किल लेलायते। लिहन्नास्वदते, स्वादंस्वादं नृत्यन्निव ज्वलतीत्यर्थः। यद्वा लेलेत्यनुकरणशब्दोऽयम्। चटचटायत इति यथा। 'लेला दीप्तौ, कण्ड्वादिः' इत्येके। वेदिस्थस्याग्नेः चक्षुःस्थाने 'अग्नये स्वाहा, सोमाय स्वाहा' इति चक्षुर्होमः। तयोश्चक्षुषोरन्तरेण मध्यभागेऽग्नेर्मुखस्थाने **'आहुतीः प्रतिपादयेत्'**। अत एव प्राणाग्निहोत्रेऽपि परिविष्टस्यान्नस्य द्विरभिघारः क्रियते। 'प्राणाय स्वाहा' इत्यादिप्रधानहोमात् पूर्वं चक्षुर्होमो हि स भवति। मन्त्रोऽयं स्फुटमानुष्टुभः ॥ २ ॥

**यस्याग्निहोत्रमदर्शमपूर्णमास[३]-**
**मनाग्रयणमतिथिवर्जितं च[४]।**

---

१. 'स्वकर्माचरण–' क.
२. 'लोलायते इध्मादिरसा–' ख.
३. '–मपौर्णमास–' इति पाठान्तरम्।
४. 'यस्याग्निहोत्रमदर्शपूर्णमासमचातुर्मास्यमनाग्रयणमतिथिवर्जितं च' इति क्वचित् पाठः।

**अहुतमवैश्वदेवमविधिना[1] हुत-**
**मासप्तमांस्तस्य[2] लोकान् हिनस्ति[3] ॥ ३ ॥**

**(टी.)** अथ तस्य दर्शादिनियमवर्जनेन[4] महानेव दोष इत्याह– **यस्येति**। अतो विधिवदेव सर्वमनुष्ठेयमित्यर्थः ॥ ३ ॥

**(भा.चं.) अदर्शमपूर्णमासं** दर्शपूर्णमासाख्येष्टिरहितम्। **अनाग्रयणं** नवधान्यग्रहणार्थं शरत्कालेऽनुष्ठेयेन आग्रयणाख्येष्टिविशेषेण रहितम् । अग्रे आदौ नूतनसस्यादेर्गृहं प्रत्ययनं आनयनं नवान्नभोजनं च वर्णव्यत्यासेन आग्रयणमुच्यते । **अतिथिसत्कारवर्जितम्**। अत एव ब्राह्मणमुखे **अहुतम्**। औपासनवर्जितं च **अहुतम्** । अनादरेण हुतं च । सर्वमपि विहितं करणीयमेवेत्यर्थः । नह्येकेन विहितेनानुष्ठितेन अपरस्याननुष्ठानलोपः पूर्यते। आदरेणापि **अविधिना हुतम्** । वैश्वदेवबलिहरणादिनियतकर्मवर्जितम् । सप्तपुरुषपर्यन्तं सुकृतफलं नाशयति । एकेन कृतं महदेनः कुले सप्त पूर्वान् सप्तोत्तरांश्च पुरुषान् बाधत इति सम्प्रदायविदः । पूर्वे त्रयः पितृपितामहप्रपितामहाः, उत्तरे च त्रयः पुत्रपौत्रप्रपौत्राः, स्वयं चेति सप्तेत्येके । सत्यान्तान् सप्त ऊर्ध्वलोकानित्यन्ये । वैकुण्ठान्तानित्यपरे । सप्तमान् सप्तसप्तिमानग्निस्तस्य लोकान् हिनस्तीत्यपरे प्रज्ञावादिनः । मन्त्रेऽस्मिन् प्रथमपादे त्रयोदशाक्षराणि । द्वितीये द्वादश । तृतीये चतुर्दश । चरमे चैकादशेति द्व्यक्षराधिका स्वराड् जगती ॥ ३ ॥

---

१. **'अहुतमवैश्वदेवमश्रद्धया अविधिना हुतम्'** इति केचित्।

२. **'हुतमासप्तमात् तस्य'** इति क्वचित्।

३. इतः परम्–

**'सप्त ते अग्ने समिधः सप्त जिह्वाः सप्तर्षयः सप्त धाम प्रियाणि ।**
**'सप्त होत्राः सप्तधा त्वां यजन्ति सप्त योनीरापृणस्वा घृतेन'**

इत्येकं मन्त्रमधिकं पठन्ति केचिद् रामानुजीयाः।

४. **'वर्जने महानेव'** ख.

**काळी कराळी च मनोजवा च**
**सुलोहिता या च सुधूम्रवर्ण्णा ।**
**स्फुलिङ्गिनी विश्वरुची च[1] देवी**
**लेलायमाना इति सप्त जिह्वाः ॥ ४ ॥**

**(टी.)** अग्नेरर्चिषो विशेषानाह– **काळीति** ॥ ४ ॥

**(भा.चं.)** सप्तवर्णाः **सप्त जिह्वाः** । देवी द्योतमाना **विश्वरुची च** । **देवी काळी, देवी कराळी**त्यादि सप्तानामपि जिह्वानां प्रत्येकं विशेषणं वा । आसां नामान्तराण्यपि पठन्ति– हिरण्या कनका रक्ता कृष्णा सुप्रभा अतिरक्ता बहुरूपा चेति । **काळी** कृष्णा भवति । **कराळी** रक्ता । **मनोजवा** सुप्रभा । **सुलोहिता** अतिरक्ता । **सुधूम्रवर्ण** कनका । **स्फुलिङ्गिनी** हिरण्या । **विश्वरुची** बहुरूपा । त्रैष्टुभोऽयं मन्त्रः ॥ ४ ॥

**एतेषु यश्चरते भ्राजमानेषु**
**यथाकालं चाऽहुतयो ह्याददायन् ।**
**तं नयन्त्येताः सूर्यस्य रश्मयो**
**यत्र देवानां पतिरेकोऽधिवासः ॥ ५ ॥**

**(टी.)** विष्णुयाजिनस्तल्लोकगतिप्रकारमाह– **एतेष्विति** । **य एतेषु** सप्तजिह्वात्मकेष्वर्चिष्षु **भ्राजमानेषु** दर्शाद्युक्ताहुतीश्च**रते** जुहोति, अथ **यथाकालं**[2] सायम्प्रातरग्निहोत्राहुतीश्च अग्न्यादिदेवता आदापयन् तत्तन्मन्त्रेण जुहोति । अथ च[3] रुद्रादीन्द्रान्तानां कलाख्यदेवतानां समुदायः कालमित्युच्यते । अतस्तदनुसारेणेति यथाकालशब्दार्थः । तथाहि श्रुतिः– 'यो वा अग्निहोत्रं वैश्वदेवं

१. **'विश्वरुचिश्च'** इति, **'विश्वरूपी च'** इति च क्वचित् ।
२. **'यथेष्टकालं'** ख.
३. **'अपि च'** ख.

षोडशकलं पशुषु प्रतिष्ठितं वेद' इत्याद्युक्त्वा 'रौद्रं गविसत्, वायव्यमुपावसृष्टम्, आश्विनं दुह्यमानम्, सौम्यं दुग्धम्, वारुणमधिश्रितम्, पौष्णं समुदयन्तम्, मारुतं विष्यन्दमानम्, वैश्वदेवं बिन्दुमत्, मैत्रं शरो गृहीतम्, द्यावापृथिवीयमुद्वासितम्, सावित्रं प्रक्रान्तम्, वैष्णवं ह्रियमाणम्, बार्हस्पत्यमुपसन्नम्[1], अग्नेः पूर्वाऽऽहुतिः, प्रजापतेरुत्तरा, ऐन्द्रं हुतम्, एतद्वा अग्निहोत्रं वैश्वदेवं षोडशकलम्' [ऐ.ब्रा.२५.१] इत्यादिका। अग्नेरर्चिर्होमादिकमपि सूर्यरश्म्यनुसन्धानेन प्रातरग्निहोत्रम्। तथा च श्रुतिः– 'उद्यन्नु खलु वा आदित्य आहवनीयेऽनु[2] रश्मीन् सन्दधाति' इत्यादिका। 'तस्मादुदिते होतव्यम्' [ऐ.ब्रा.२५.४] इति चोपरि। **'तं नयन्ति–'** इत्यादेरयमर्थः– **तमे**वं जुह्वतं यजमान**मेता** आहुतिमिश्राः **सूर्यस्य रश्मयो** देवाधिपतेर्विष्णोर्लोकं **नयन्ति**॥ ५॥

**(भा.चं.)** ननु सप्त जिह्वाः पूर्वं प्रस्तुताः। तेन 'एतासु यश्चरते भ्राजमानासु' इति वक्तव्यम्। तत् कथम् 'एतेषु' इति? आह– **'एतेषु सप्तजिह्वात्मकेष्वर्चिष्षु'** इति। जिह्वात्वेन रूपितानि किलार्चींषि तानि। तस्माद् युक्तं **'एतेषु'** इति। तद् यथा– अस्या उपकन्धरं राकानिशाकरो भवति। तदिदमासेचनकमसमसुषममिति। **गविसत्** ऊधोगतं क्षीरं रुद्रदेवताकम्। दोहाय सन्नद्धं वायुदेवताकम्। चुल्ल्यां क्वथनार्थं निहितं वरुणदेवताकम्। क्वाथेन पात्रादुपरि समुद्गच्छत् पूषदेवताकम्। पात्राद् बहि**र्विष्यन्दमानं** मरुद्देवताकम्। उपरिभागे सन्नद्धघनीभावं बिन्दुभिः परीतं विश्वदेवदेवताकम्। उपरि घनीभूतं मित्रदेवताकम्। चुल्लीत **उद्वासितं** द्यावापृथीदेवताकम्। यज्ञशालां प्रति नेतुमुपक्रान्तं सवितृदेवताकम्। अन्यत् स्फुटम्। 'एतद्वा अग्निहोत्रमन्येद्युर्हूयते यदस्तमिते सायं जुहोत्यनुदिते प्रातरथैतदग्निहोत्रमुभयेद्युर्हूयते यदस्तमिते सायमुदिते प्रातस्**तस्मादुदिते होतव्यम्**। चतुर्विंशे ह्वै संवत्सरेऽनुदितहोमी गायत्रीलोकमाप्नोति। द्वादश उदितहोमी। स यदा द्वौ

१. **'बार्हस्पत्यमासन्नम्'** ख.
२. **'आहवनीयेन'** क.

संवत्सरावनुदिते जुहोत्यथ हास्यैको हुतो भवत्यथ य उदिते जुहोति संवत्सरेणैव तत्संवत्सरमाप्नोति। य एवं विद्वानुदिते जुहोति। **तस्मादुदिते होतव्यम्**। एष वा अहोरात्रयोस्तेजसि जुहोति योऽस्तमिते सायं जुहोत्युदिते प्रातः। अग्निना वै तेजसा रात्रिस्तेजस्वत्यादित्येन तेजसाऽहस्तेजस्वत्। अहोरात्रयोर्हास्य तेजसि हुतं भवति य एवं विद्वानुदिते जुहोति। **तस्मादुदिते होतव्यम्'** [२५.४] इति समग्रा श्रुतिः। **आहुतिमिश्राः** आहुतिदेवतासङ्गता **रश्मयः**। आधिक्येन सर्वदृग्गोचरत्वेन सदा वसतीत्यधिवासः। **यत्र देवानां पतिरेकोऽधिवसति**। **देवानामधिपतिर्वा यत्र** वसति। तृतीयपादे 'नयन्ति+एताः' इति विश्लेषेण केवला जगती॥ ५॥

**एह्येहीति तमाहुतयः सुवर्चसः**
**सूर्यस्य रश्मिभिर्यजमानं वहन्ति।**
**प्रियां वाचमभिवदन्त्योऽर्चयन्त्य**
**एष वः पुण्यः सुकृतो ब्रह्मलोकः** ॥ ६॥

**(टी.)** आहुतयस्तु **यजमानमाहूयाऽहूय** अर्चयित्वा[1] **सूर्यस्य रश्मिभिः** वाहयन्ति। तस्मात् कारणात् 'एष हवै सत्यं वदन् सत्ये जुहोति योऽस्तमिते सायं जुहोत्युदिते प्रातः' इति श्रुत्यन्तरानुसारेण सत्यकामतयैव[2] कर्माऽचरणीयमिति सिद्धम्। **'एष वः पुण्यः'** इति विशिष्टफलत्वोक्तेः॥ ६॥

**(भा.चं.)** **'एह्येहीति'** प्रातिस्विकमाहूयाऽहूय, **'एष वः पुण्यः सुकृतो ब्रह्मलोकः'** इति **'प्रियां वाचमभिवदन्त्यः'**, तेन प्रियवचनेनैव **'अर्चयन्त्यः'** सुकृतिनः सम्भावयन्त्यः। मन्त्रेऽस्मिन् प्रथमद्वितीयौ त्रयोदशाक्षरावतिजगतीबद्धौ पादौ। अन्त्यौ द्वौ जागतौ। जगत्यतिजगत्योरुपजातिः स्वराड्जगती वा॥ ६॥

---

१. **'घटयित्वा'** ख.    २. **'सत्यकामेन'** क.

प्लवा ह्येते अदृढा यज्ञरूपा
अष्टादशोक्तमवरं येषु कर्म्म।
एतच्छ्रेयो येऽभिनन्दन्ति मूढा
जरामृत्युं ते पुनरेवापियन्ति ॥ ७ ॥

**(टी.)** असत्यकामा[1] यज्ञा हि प्लवन्ते । **येषु** यज्ञेषु **अष्टादश**पशुकमग्निकर्माप्यनित्याल्पफलत्वाद**वरमित्युक्तम्**। किं पुनरन्यानीत्यर्थः। **'एतच्छ्रेयः'** इत्यादिवाक्यैरसत्यकामयज्ञानामवरत्वं सम्यक् प्रपञ्चयति ॥ ७ ॥

**(भा.चं.)** **अष्टादशोक्तम**मित्येकं पदं भिन्नं वा । अष्टादशभिः पशुभिर्निर्वर्त्यत्वेनोक्त**मष्टादशोक्तम्**। तदिदमुक्तम्– **अष्टादशपशुकमि**ति। एतत्पक्षे उक्तमित्यावृत्त्या **अवरमित्युक्तमि**त्यन्वयः। अष्टादशपशुकत्वं चोक्तं श्रुतावेव 'नव ग्राम्यान् पशूनालभते नवाऽरण्यान्' इति । 'प्रजापतिरश्वमेधमसृजत । सोऽस्मात् सृष्टोऽपाक्रामत् । तमष्टादशभिरनुप्रायुङ्क्त । तमाप्नोत् । तमाप्त्वाऽष्टादशभिरवारुरुन्ध। यदष्टादशिन आलभ्यन्ते' [३.९.१.१] इति च तैत्तिरीयब्राह्मणम्। भिन्नपदत्वे **येषु** यज्ञेषु **अष्टादश** पशव आलभनीयास्त**दवरं कर्मे**त्यु**क्तम्**। 'होता, मैत्रावरुणः, अच्छावाकः, ग्रावस्तुदिति होतृगणः। अध्वर्युः प्रतिप्रस्थाता, नेष्टा, उन्नेतेत्यध्वर्युगणः। उद्गाता, प्रस्तोता, प्रतिहर्ता, सुब्रह्मण्य इत्युद्गातृगणः । ब्रह्मा, ब्राह्मणाच्छंसी, आग्नीध्रः, पोतेति ब्रह्मगण इत्येते षोळशर्त्विजः, यजमानस्तत्पत्नी चेत्यष्टादशभिर्निर्वर्त्यं कर्मेत्यपि व्याचक्षते। 'यजमानः सदस्यश्चेत्यष्टादश' इत्यन्ये। अष्टादशस्मृत्युक्तमिति तु सर्वथा न श्लिष्यति। **जरामृत्युम्**। क्वचिज्जरया मृत्युम्। क्वचिदृतेऽपि जराम्। अत्र प्रथमतृतीययोरेकादशाक्षराणीति त्रिष्टुप्। द्वितीयतुरीययोर्द्वादशाक्षराणीति जगती। उपजातिरियं स्वराट् त्रिष्टुब् वा स्यात् विराड् जगती वा ॥ ७ ॥

---

१. **'असत्यकामसत्वं'** इति ख. पुस्तके पठ्यते। **'असत्यकामत्वे'** इति सम्भावितः पाठः।

**अविद्यायामन्तरे वर्त्तमानाः[१]**
**स्वयन्धीराः पण्डितम्मन्यमानाः ।**
**जङ्घन्यमानाः परियन्ति मूढा**
**अन्धेनैव नीयमाना यथान्धाः** ॥ ८ ॥

**(टी.)** **'जङ्घन्यमानाः'** अतिजघन्या भवन्तः ॥ ८ ॥

**(भा.चं.)** **अविद्यायामिति** । काठके व्याख्यातमेतत् । स्वकपोलकल्पितया धिया रमन्त इति स्वयन्धीराः । स्वमनीषोत्थवचनैर्विवदमानाः प्रज्ञावादिन इत्येतत् । अत एव ते स्वयमेवाऽत्मानं पण्डितं मन्यन्ते । नेतरे तान् पण्डितान् मन्यन्ते । काठके दन्द्रम्यमाणा इति पठ्यते । अत्र **जङ्घन्यमाना** इति । अतस्तत् पदं व्याख्याति– **अतिजघन्या भवन्तः** । जघन्योऽवरः । जघन्यवदाचरन्ति जघन्यन्ते । स्वरूपानुगुण आचार इत्यात्मनेभाषः । अतिशयार्थे बिन्दुः । तदेतदाह– **अतिजघन्या** इति । वैयाकरणास्तु दन्द्रम्यमाणा जङ्घन्यमाना इत्येकार्थे पदे इति मन्यन्ते । तथाहि– कुटिलं क्रामन्ति चङ्क्रम्यन्ते । कुटिलं द्रमन्ति दन्द्रम्यन्ते । द्रम गतौ । कुटिलं घ्नन्ति जङ्घन्यन्ते । हन गतौ । 'नित्यं कौटिल्ये गतौ' [अष्टा.सू.३.३.२३] इति हि पाणिनिः । 'गतिवचनाद् धातोः कौटिल्ये गम्यमाने नित्यं यङ्प्रत्ययो भवति' इति जयादित्यः । अनुमतोऽयमप्यर्थोऽस्माकम् । टीकाकृदुक्तस्त्वपूर्वः श्रौतोऽर्थः वर्णव्यत्ययेन । 'जङ्घन्यमाना जरारोगाद्यनेकानर्थव्रातैर्हन्यमानाः' इति मायावादिनः भाष्यम् । समग्रवाक्यार्थेऽनन्वितमिवेदं विवरणम् । स्वयन्धीरा इत्यादिना स्तब्धता ह्यत्र प्रकृता । न रुग्णता । अपिचेदमपूर्वं व्याकरणपाटवं अतिशयेन हन्यते जङ्घन्यत इति । अतिशयेन हन्ति जङ्घन्यत इति तु व्याकरणज्ञा वदन्ति । स्वयं वैयाकरणस्य गजपद एव पदं निदधत् कथमेवं व्याख्यायात्? त्रैष्टुभोऽयं मन्त्रः ॥ ८ ॥

---

१. **'वेष्ट्यमानाः'** इति केचित् । काठके तु **'अविद्यायामन्तरे वेष्ट्यमानाः'** इत्येव पाठः ।

**अविद्यायां बहुधा वर्त्तमाना**
**वयं कृतार्था इत्यभिमन्यन्ति बालाः ।**
**यत् कर्म्मिणो न प्र वेदयन्ति रागात्**
**तेनाऽतुराः क्षीणलोकाश्च्यवन्ते ॥ ९ ॥**

**(टी.)** कर्मिणस्तु कर्मैकभक्ताः ॥ ९ ॥

**(भा.चं.)** ननु कर्म करणीयमुक्तं पूर्वम्– 'तान्याचरथ नियतम्' इति । तत् कथमत्र कर्मिनिन्दा? आह– **कर्मिणस्तु** । अत्र निन्द्यत्वेनोक्ताः **कर्मिणस्तु कर्मैकभक्ताः** । न भगवद्भक्ताः कर्मिण इत्यर्थः । **बालाः वयं कृतार्था इत्यभिमन्यन्ति** । तत् सत्यमिति चान्ये मन्यन्ते बालतमाः । ऐहिकफलेष्वेवा-**नुरागात्** । यतस्ते प्रकृष्टं परमात्मानं **न वेदयन्ति** । **तेन** अवेदनेनैव कारणेन । पुण्यलोकायाऽतुराः त्वरमाणाः, अथापि क्षीणपुण्याः **क्षीणलोकाश्च** सन्तः पुण्यलोकाच्च्यवन्ति । सोऽयं जीवस्वभाव इति **'च्यवन्ते'** इत्यात्मनेभाषः । एकादशाक्षरः प्रथमः पादः । तुरीयश्च । द्वितीयस्त्रयोदशाक्षरः । तृतीयो द्वादशाक्षरः । एकाक्षरोना जगती ॥ ९ ॥

**इष्टापूर्त्तं मन्यमाना वरिष्ठं**
**नान्यच्छ्रेयो वेदयन्ते प्रमूढाः ।**
**नाकस्य पृष्ठे ते सुकृतेऽनु भूत्वा**
**इमं लोकं हीनतरं वाऽऽविशन्ति[1] ॥ १० ॥**

**(भा.) विष्णोः सर्वेभ्यः किंचिदुत्तमत्वं जानन्त इमं लोकमाविशन्ति । साम्यं हीनत्वं वा जानन्तो हीनतरं नामाऽविशन्ति ।**

१. 'हीनतरं वा विशन्ति' इति प्रचलितः पाठः। 'चाऽविशन्ति' इति क्वचित्।

'देवेभ्य उत्तमं विष्णुं राजवद् यस्तु मन्यते ।
'याजी स मानुषं याति साम्यहीनत्ववित् तमः' इति च ॥

**'त्रैविद्या माम्–' इति तु 'येऽप्यन्यदेवताभक्ताः', 'तेऽपि मामेव कौन्तेय', 'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च' इत्युक्तत्वादज्ञानपूर्वयाजिनस्त्रैविद्याः ॥ ॐ ॥**

**(टी.) 'सुकृतेऽनुभूत्वा'**, सुकृते सति तत्फलमनुभूय क्षपयित्वा। सुकृतलभ्ये **नाकस्य पृष्ठे** उन्नतस्थाने सुकृतफलमनुभूयेति वा । **'इमं लोकं हीनतरं वाऽऽविशन्ति'** इत्यादिवाक्यं[1] विवृणोति– **विष्णोः सर्वेभ्य** इत्यादिना। अस्माल्लोकादनित्यनरकं हीनम्। **हीनतरम**न्धन्तमः । किञ्चिदुत्तम[त्वज्ञ]त्वेऽपि किञ्चित् संशयज्ञा अनित्यनरकमाविशन्तीति भवति कथञ्चित् । अतो विष्णोः[2] सर्वोत्तमत्वं सर्वैरपि सर्वथा निःसंशयेन ज्ञातव्यमिति मथितार्थः। अत्र पुनः **'देवेभ्यः–'** इत्यादिब्रह्माण्डवचनं चाऽह ॥

ननु 'त्रैविद्या मां सोमपाः पूतपापाः' [भ.गी.९.२०] इत्यादौ भगवद्याजिनामपि स्वर्गमात्रफलत्वादधःपात एव भवति न मोक्ष इत्यत आह– **त्रैविद्या मामिति** अत्र तु **अज्ञानपूर्वयाजिनस्त्रैविद्या** उक्ता नतु भगवत्तत्वज्ञाः। कुतः? [3]**ते** च **अन्यदेवताभक्ताः मामेव** सर्वयज्ञभुजं अविधिपूर्वकं यजन्तीत्युक्तत्वात्। अतो विधिवद् विष्णुयाजिनां मोक्ष इत्यत्र न कश्चिद् विरोधः ॥ १० ॥

**(भा.चं.)** किञ्चिदुत्तमत्वविदः तत्रापि किञ्चित्संशयोपेताः साम्यहीनत्वविद इति त्रिविधा जीवाः क्रमेण इमं लोकं हीनं लोकं हीनतरं च लोकमाविशन्ति। व्यवस्थितविकल्पे वाकारः। **'हीनतरं नाम'** हीनतरमिति प्रसिद्धम्। प्रसिद्धमेव ब्रह्माण्डवचनेन प्रकटयति ॥

---

१. 'इमं लोकमित्यादिवाक्यं' क. २. 'विष्णौ' क. ३. 'एते चान्यदेवताभक्ताश्च' ख.

स्वहितमिष्टम्। लोकहितं पूर्तम्। पूरयति समाजाभीष्टमिति। तेन यागादीष्टमुच्यते। तटाकादिनिर्माणं पूर्तमुच्यते। 'एकाग्निकर्म हवनं त्रेतायां यच्च हूयते। अन्तर्वेद्यां च यद् दानमिष्टं तदभिधीयते' इति। 'पुष्करिण्यः सभावापीदेवतायतनानि च। आरामाश्च विशेषेण पूर्तं कर्म विनिर्दिशेत्' इति च॥ *॥

**'भगवद्याजिनामपि अधःपात एव भवति न मोक्षः'** इति प्रतीयते **'इत्यत आह'**। **'त्रैविद्या मामिति तु'** इत्यत्र तु। तथाहि तत्र श्रूयते–'त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते। ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान् दिवि देवभोगान्' [९.२०] इति। 'ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति। एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते' [२१] इति च। **अज्ञानपूर्वयाजिन** इति। वैष्णवत्वेऽप्यन्यदेवतायाजिनोऽनुद्रिक्तभक्तयः सकामाश्च हि त्रैविद्याः। तदुक्तं गीतातात्पर्ये– 'अनन्यदेवतायागाद् भक्त्युद्रेकादकामनात्। सदा योगाच्च वैशिष्ट्यं त्रैविद्याद् वैष्णवादपि। स्याद्धि भागवतस्यैव' इति। 'येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयाऽन्विताः। **तेऽपि मामेव कौन्तेय** यजन्त्यविधिपूर्वकम्। **अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च**। न तु मामभिजानन्ति तत्वेनातश्च्यवन्ति ते' इति समग्रा श्लोकानुपूर्वी [भ.गी.९.२३–४]। मन्त्रेऽस्मिन् पूर्वार्द्धे त्रिष्टुप्। उत्तरार्द्धे जगती। तेन स्वराट् त्रिष्टुप्, विराड् जगती वा॥ १०॥

**तपःश्रद्धे ये [१]ह्युपवसन्त्यरण्ये**
**शान्ता विद्वांसो भैक्षचर्यां चरन्तः[२]।**
**सूर्यद्वारेण ते विरजाः प्रयान्ति**
**यत्रामृतः स पुरुषो ह्यव्ययात्मा ॥ ११ ॥**

---

१. 'येऽभ्युप–' इति पाठान्तरम्।
२. 'ब्रह्मचर्यं चरन्ति' इति कचित्।

**(टी.)** अथ भगवत्तत्वविदुषां कर्म विनाऽपि मोक्षः स्यादित्याह– **तपःश्रद्धे** इति । ये तपसा श्रद्धया च भगवन्तं सेवन्ते **विद्वांसस्ते** रागादिदोषरहिताः नित्यमुक्तस्य विष्णोर्लोकं **प्रयान्ति** ।। ११ ।।

**(भा.चं.) तपःश्रद्धे उपवसन्ति** उपसेवन्ते । 'उपान्वध्याङ् वसः' [अष्टा.सू. १.४.४८] इति द्वितीया । तपःश्रद्धे उपाश्रित्य वसन्तीत्यर्थः । तपसि श्रद्धयां च निष्ठिता इत्येतत् । उपरि वासो ह्युपवासः । अतः फलितमाह– **तपसा श्रद्धया च भगवन्तं सेवन्त** इति । तपो निरन्तरचिन्तनम्, ब्रह्मचर्यादिकं च । **शान्ता** भगवद्भक्ताः । **विद्वांसो** भगवत्तत्वज्ञाः । भैक्षेण या चर्या ध्यानाद्युपाये स्थितिस्तामनुतिष्ठन्तः । 'भिक्ष याचने अलाभे लाभे च' इत्यभिदधति । **विरजा रागादिदोषरहिताः** । अर्चिरादिना सूर्यं प्राप्य **सूर्यद्वारेण** तं लोकं **प्रयान्ति । यत्र हि पुरुषो** नारायणः । अव्ययः नित्यो निर्विकारश्च आत्मा देहोऽप्यस्येति **अव्ययात्मा** । केवला जगती ।। ११ ।।

**परीक्ष्य लोकान् कर्म्मचितान्[१] ब्राह्मणो**
**निर्वेदमायान्नास्त्यकृतः कृतेन ।**
**तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्**
**समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ।। १२ ।।**

**(टी.)** इतरफलेषु दोषनियमदर्शनात्[२] निर्वेदं प्राप्नुयादित्याह– **परीक्ष्येति** । **अकृतः** केवलकर्मणा न लभ्यः । किन्तु केवलज्ञानेनैव लभ्यः । अतो मोक्षार्थी ब्रह्मज्ञानार्थं **समित्पाणिर्भूत्वा गुरुमेवोपसीदेत्**[३] ।। १२ ।।

**(भा.चं.) 'कर्मचितान्'** कर्मनिर्मितान् कर्मनिष्पाद्यान् स्वर्गादीन् 'सर्व एतेऽनित्याः क्षुद्राश्च' इति **परीक्ष्य ब्राह्मणो** वेदवित् परब्रह्मजिज्ञासुः **निर्वेद-**

---

१. 'कर्मजितान्' इति प्रचलितः पाठः । २. '–नियमप्रदर्शनात्' क. ३. '–मेवोपासीदेत्' ख.

**मायात्**। **'अकृतः'** **केवलकर्मणा न लभ्यः**, नित्यश्च मोक्षः। **कृतेन** कर्मणा। **तत्** तस्मात् मोक्षप्रदविष्णुज्ञानार्थम्। **अभिवादनपूर्वकं गच्छेत्**। **समित्-पाणिः**। समिदित्युपलक्षणम्। यद् गुरोरिष्टमुपयुक्तं च तदादाय। ज्ञानिनाऽपि कर्मानुष्ठेयं भवतीति ज्ञापनाय समिधां विशिष्य ग्रहणम्। अरिक्तपाणि-रित्येतत्। 'रिक्तपाणिस्तु नोपेयाद् राजानं दैवतं गुरुम्' इति हि स्मरन्ति। गुरुरपि श्रोत्रियोऽधीती च्छन्दस्स्वित्येतावता न पूर्यते। परविदेव गुरुत्व-मर्हतीति **'ब्रह्मनिष्ठम्'** इत्युक्तम्। सर्ववेदानां ब्रह्मपरतावगमो हि ब्रह्मनिष्ठा। तत्वप्रदीपे [३.३.५०] व्याख्यातोऽयं मन्त्रः–'कर्मणा सञ्चितान् मन्दिरादीन् विनाशिनः परितो वीक्ष्य तद्वत् परानपि कर्मभिश्चितान् लोकान् विनाशिन एव परीक्ष्य तेभ्यो निर्वेदमायाद् ब्रह्मनिष्ठः। 'नास्त्यकृतः कृतेन' इति। अकृतप्रियो भगवान् कृतेन न लभ्यत इति। 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः' इति भगवद्वचनम्। 'कर्मणा त्वधमः प्रोक्तः' इत्यादि च। तस्य प्रियज्ञानस्य विष्णोर्विज्ञानार्थं स गुरुमेवाभिगच्छेदिति' इति। अत्र पूर्वार्द्धे तावज्जागतौ पादौ। उत्तरार्द्धे प्रथमस्त्रयोदशाक्षरः, द्वितीय एकादशाक्षर इति स्फुटं जागतो मन्त्रः ॥ १२ ॥

**तस्मै स विद्वानुपसन्नाय सम्यक्**
**प्रशान्तचित्ताय शमान्विताय।**
**येनाक्षरं पुरुषं वेद सत्यं**
**प्रोवाच तां तत्वतो ब्रह्मविद्याम्** ॥ १३ ॥

**इति प्रथममुण्डके द्वितीयः खण्डः**

**इति प्रथममुण्डकं समाप्तम्**[१]

—o—

१. **'इति प्रथमाध्यायः'** इति क्वचित्।

**(टी.)** एवं वदन् ब्रह्मा **तस्मै उपसन्नाय** अथर्वणे सर्वामपि वेदवाचं **तत्वतः** परामेव **ब्रह्मविद्यां प्रोवाच** ॥ १३ ॥

**(भा.चं.)** **प्रशान्तचित्ताय** प्रसन्नचित्ताय । अनुद्विग्नमवहितं च चित्त-मित्येतत् । जितेन्द्रियाय वा । **शमान्विताय** । 'शमो मन्निष्ठता बुद्धेः' इति भागवते । यदा बुद्धिर्विष्णुनिष्ठा भवति तदा चित्तं सलिलमिव प्रसन्नं तळदर्शि च भवति । बाह्येन्द्रियजयस्तु बुद्धेर्विष्णुनिष्ठामनुगच्छति । **येन** विज्ञानेन **अक्षरं सत्यं** साधुगुणभरितं पुरुषोत्तमं **वेद तां** तादृशविज्ञानजननीं **ब्रह्मविद्यां प्रोवाच** । **तत्वतः** याथातथ्येन सामस्त्येन च ॥ ॥

ननु 'गुरुमभिगच्छेत्' इति पूर्वमुक्तम् । तदनुगुणतयाऽत्रापि तस्मै शिष्याय प्रब्रूयादिति वक्तव्यम् । कथं प्रोवाचेति? आह– **एवं** गुरुशिष्ययोः सम्बन्धं **वदन् ब्रह्मा** तादृशाय **उपसन्नायाथर्वणे ब्रह्मविद्यां प्रोवाचेति** । अथर्वा चाङ्गिराय । स भारद्वाजाय सत्यवहाय । सत्यवहोऽङ्गिरसे । अङ्गिराश्च शौनकाय **प्रोवाच तां तत्वतो ब्रह्मविद्याम्** । एतेन 'तां ब्रह्मविद्यां प्रोवाच प्रब्रूयादित्यर्थः' इति व्याख्यानं दत्तोत्तरम् । मन्त्रेऽस्मिन् प्रथमपाद एव द्वादशाक्षरः । अन्य एकादशाक्षरा इति भुरिगियं त्रिष्टुप् ॥ १३ ॥

—०—

[अथ द्वितीये प्रथमः खण्डः]

तदेतत् सत्यम् ।

यथा सुदीप्तात् पावकाद् विस्फुलिङ्गाः
सहस्रशः प्रभवन्ते सरूपाः ।
तथाऽक्षराद् विविधाः सोम्य भावाः
प्रजायन्ते तत्र चैवापियन्ति ॥ १ ॥

**(टी.)** सत्याख्यस्य विष्णोः स्वरूपसामर्थ्यादिव सर्वस्रष्टृत्वादिकं चोपदिशति— **यथा सुदीप्तादिति** । **प्रभवन्ते** प्रजायन्ते । **तथाऽक्षरात्** परमपुरुषात् **विविधा भावाः** चिदचित्पदार्थाः **प्रजायन्ते, तत्रैवापियन्ति च** ॥ १ ॥

**(भा.चं.)** विविधाः स्फुलिङ्गाः अग्निना संवलिता अणुतरा इन्धनखण्डाः । **'प्रभवन्ते'** प्रजायन्ते, **'तत्रैव अपियन्ति च'** । भू उत्पत्तौ । **सोम्य** सोमपानार्ह । सत्यकामतया कर्मानुष्ठाननिरत । ज्ञानिनोऽपि कर्मसाहित्यमनेनावधारयति । **भावाश्चिदचित्पदार्था** इति । उपरितनमन्त्रेषु चितामचितां च सहैव सृष्टिकथनात् । **'सरूपा विस्फुलिङ्गाः'** इत्युपक्रमे श्रवणात् **सरूपा भावा** इति जीवा एव वा । प्रथमं वाक्यं यजुः । यथा सुदीप्तादिति द्वादशाक्षरः पादः । अन्ये त्वेकादशाक्षराः । संहत्य भुरिक् त्रिष्टुप् ॥ १ ॥

दिव्यो ह्यमूर्त्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः ।
अप्राणो ह्यमनाः शुभ्रोऽक्षरात्[1] परतः परः ॥ २ ॥

---

१. 'शुभ्रो ह्यक्षरात्' इति प्र.पाठः । रङ्गरामानुजीयः शाङ्करश्च पाठो वस्तुतश्चतुर्थपादे हिकारविरहत एव । स एव च प्राचीनः पाठः ।

**(भा.)** **'अपरं त्वक्षरं या सा प्रकृतिर्ज्जडरूपिका।**
**'अक्षरं परमं श्रीस्तु परतः परमक्षरम्।**
**'वासुदेवः परानन्द इति त्रिविधमक्षरम्' इति च ॥ ॐ ॥**

**(टी.)** तस्य तादृक् सामर्थ्यमुपपादयति– **दिव्यो** हीति । ननु किमेतत् सर्वोत्पादकमक्षरं सर्वोत्तममाहोस्विन्नेति वक्तव्यम् । आद्ये तस्मात् परतः परस्यान्यस्य विधिर्विरुद्ध्यते । अन्त्ये सर्वोत्पादकत्वासम्भव इति । अत्र प्रणिधत्ते– **'अपरं त्वक्षरम्–'** इत्यादिब्रह्माण्डवचनेन । अक्षरान्तरात् अस्याक्षरस्यैव परतः परत्वं विधीयत इत्यविरोधः ॥ २ ॥

**(भा.चं.)** यः **अक्षरात् परतः परः पुरुषः स दिव्यो हि**। पुरुष इत्यनेनेदमाह– यथा पुरुष एव पुरुषोत्तम उच्यते तथाऽक्षर एवाक्षरात् परतः परोऽपि विवक्षाभेदेन । पूर्वमन्त्रोक्तदिशा जगत्सर्जनादिरूपक्रीडादिगुणपूर्णो हि । 'दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिकान्तिगतिषु' । हीति 'चन्द्रमा मनसो जातः' इत्यादिपुरुषसूक्तसंवादमाह । अमूर्तः प्राकृतपरिच्छिन्नमूर्तिरहितः । किन्तु **बाह्याभ्यन्तरः** सर्वगतः । **स** एव सर्वस्माद् बाह्यः सर्वस्याभ्यन्तरश्च **हि** । 'अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः' इति हि श्रूयते । स एव **ह्यजः**। 'न जायते वर्द्धते नो कनीयान्' इति श्रुतेः। परमाक्षरस्यापि हि श्रूयते पराधीनविशेषावाप्तिरूपं जननम्। **अप्राणो ह्यमनाः**। उपलक्षणमेतत्। उपरि वक्ष्यमाणप्राणादिपृथिव्यन्तसर्वकलावर्जितः । षोडश कलाः षट्प्रश्नोपनिषदि कथिताः–'प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नमन्नाद् वीर्यं तपो मन्त्राः कर्म लोका लोकेषु नाम च'[६.४] इति। 'स एषोऽकलोऽमृतो भवति' [६.५] इति च। तथाच प्राणमनआदिषोडशकलारहित इति फलितम्। नायं कलाधीनः, किन्तु कलाश्रय इति। 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इति हि वक्ष्यते । कथं तेन सृष्टमेव तं बध्नीयात्? बन्धातीतत्वादेव शुभ्रः शुभेन रमते नित्यमिति। 'शुभ्रः+अक्षरात्' इत्युत्तरार्द्धे पादयोर्विश्लेषेण केवलाऽनुष्टुप्॥ २ ॥

**एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।**
**खं वायुर्ज्योतिरापः पृथिवी[1] विश्वस्य धारिणी ॥ ३ ॥**

**(टी.)** उक्तसृष्टेः क्रमं दर्शयति– **एतस्मादिति** ॥ ३ ॥

**(भा.चं.)** आदौ मुख्यप्राणस्य सृष्टिः । ततो मनोमानिनः शिवस्य । तत इन्द्रियमानिनामिन्द्रादीनाम् । ततो भूतमानिनां विनायकादीनां च सृष्टिरित्यर्थः । आकाशमानी विनायकः । ततः भूतवायुमानी प्रधानवायुपुत्रो मरीचिः । ततस्तेजोमानी प्रधानाग्निपुत्रः पावकाख्यः । ततोऽबभिमानी बुधः । ततः पृथिवीमानी शनिरिति भूतमानिनां सृष्टिक्रमः । अभिमन्यमानानां चानेनैव क्रमेण सृष्टिः । 'भूतं भूताभिमानी च तद्देहोऽन्तर्नियामकः' इत्यादेः । 'नारायणात् प्राणो जायते मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी । नारायणाद् ब्रह्मा जायते । नारायणाद् रुद्रो जायते । नारायणादिन्द्रो जायते' इत्याद्या च नारायणश्रुतिः । **पृथिवी विश्वस्य धारिणीति** । अत एव पृथिवी धरा धरित्री धरिणीत्यादिपदैर्व्यपदिश्यते । सा किल जीवजातस्य धारिणी । 'भावनं ब्रह्मणः स्थानं धारणं सद्विशेषणम् । सर्वसत्त्वगुणोद्भेदः पृथिवीवृत्तिलक्षणम्' [भाग.३.२७.४८] इति कापिलेये । मन्त्रेऽस्मिन् तृतीयचरणे सप्ताक्षराणि । तुरीये नवाक्षराणीति संहत्य केवलाऽनुष्टुबेव । 'खं वायुर्ज्योतिरापः पृ+थिवी विश्वस्य धारिणी' इति वा पादच्छेदः ॥ ३ ॥

**अग्निर्मूर्द्धा चक्षुषी चन्द्रसूर्यौ**
**दिशः श्रोत्रे वाग् विवृताश्च वेदाः ।**
**वायुः प्राणो हृदयं विश्वमस्य**
**पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा ॥ ४ ॥**

---

१. 'पृथ्वी' इति क्वचित् ।

(भा.) 'विष्ण्वङ्गानां हि नामानि द्युभ्वादीनि तु सर्वशः ।
'क्रीडादिशक्तिरूपत्वात् तज्जत्वादन्यवस्तुषु' इति च ॥ * ॥

(टी.) विष्णोस्तत्तदङ्गेभ्यो देवानां जननम्, नत्वेकस्मादेव सर्वेषामित्याह– अग्निर्मूर्धेति । अग्निस्तस्य[1] मूर्ध्नो जायते । नचाग्न्यादीनां [2]तन्मूर्धाद्यैक्यमिहाभिप्रेतम् । जन्यजनकभावाख्यभेदप्रकरणत्वात् । 'ब्राह्मणोऽस्य मुखम्' इतिवत् । अतो मूर्धादिशब्दानां [3]पञ्चम्यन्तत्वमिहाभिप्रेतम् । 'तन्नामवाच्यमङ्गं तत्' इति वचनाच्च न विरोधः । सव्येतरचक्षुषी चन्द्रसूर्याख्ये । तावपि ताभ्यां जातावित्यादि ग्राह्यम् । 'पद्भ्यां पृथिवी' इति स्पष्टोक्तेश्च ॥

अत्रापि 'विष्ण्वङ्गानाम्–' इत्यादिब्रह्माण्डवचनमाह । द्युभ्वादीनीति । अग्न्यादिप्रकाशवाचकानि स्वर्गादिवाचकानि च । तदङ्गजत्वादेव अन्यवस्तुषु तन्नामवत्वम् ॥ ४ ॥

(भा.चं.) जन्यजनकभावाख्यभेदप्रकरणत्वादिति । 'अक्षरात् प्रजायन्ते' इत्युपक्रमात् । 'एतस्माज्जायते प्राणः' इति प्रक्रमाच्च । पञ्चम्यन्तत्वमिहाभिप्रेतमिति । तथाहि पुरुषसूक्ते– 'मुखादिन्द्रश्चाग्निश्च' 'चक्षोः सूर्यो अजायत', 'प्राणाद् वायुरजायत', 'पद्भ्यां भूमिर्दिशः श्रोत्रात्' इत्यादि । प्राणो घ्राणः । अगं नयतीति अग्निर्मूर्धा भगवतः । आह्लादयति रमयति चेति चन्द्रः सव्यचक्षुः । सुखयति रमयति चेति सूर्यो दक्षिणचक्षुः । दिशतीति श्रोत्रं दिक् । दिगभिमानिनः श्रोत्राभ्यां जाताः । बहूनां जननाद् बहुवचनम् । एकस्यैव भगवतो लीलया द्वित्वं बहुत्वं चोपपन्नमिति 'दिशः श्रोत्रे' इत्युक्तम् । एवमुत्तरत्रापि । विवृत्य वेदयन्तीति विवृता वेदा वाक् । वयते सम्बध्यते सर्वमनेनेति वायुः । विशतीति विश्वम् । अस्य हृदयेन मनसा इच्छामात्रेण विश्वं सर्वं जगत् सृष्टम् । अत्र विश्वमिति रुद्र उच्यत इत्येके । तत्र प्रमाणं च निदर्शयन्ति–'तपोऽभिमानी रुद्रस्तु विष्णोर्हृदयमाश्रितः' इति । भाष्ये

---

१. 'अग्निस्त्वस्य' ख. २. '–दीनां मूर्धा–' क. ३. 'पञ्चम्यर्थत्व–' ख.

**द्युभ्वादीनी**ति । द्युभ्वादीनि सर्वाण्यपि नामपदानि **विष्णवङ्गानां नामानि** इति हि प्रसिद्धम्– 'यो देवानां नामधा एक एव' इत्यादौ । तुना तस्मिन्नेवार्थ-विशेषलाभात् तेषां समग्रं सार्थक्यमित्येतमर्थमाह । द्युप्रभृतीनि **अग्न्यादि-प्रकाशवाचकानि** । दीव्यति प्रकाशत इति द्यौः । अग्निश्च स्वर्गश्च । दिवु द्युतौ । दीव्यति क्रीडति सृष्ट्यादिनेति च भगवतो मूर्धा द्यौः । दिवु क्रीडायाम् । द्युभूप्रभृतीनि **स्वर्गादिवाचकानि च** । दीव्यन्ति क्रीडन्त्यत्रेति द्यौः स्वर्गः । भवन्त्यस्यां भूतानीति भूः पृथिवी, भवत्यनेनेति भगवतः पादोऽपि भूपदगदितः । प्रथनात् पृथिवीति च । तदेतदुक्तम्– '**क्रीडादिशक्तिरूपत्वात्**' इति । 'तत् सृष्ट्वा तदेवानुप्राविशत्' इत्याह श्रुतिः – **एष सर्वभूतान्तरात्मा**' स्वसृष्टानां सर्वेषां भूतानामन्तः प्रविश्याऽदानादिकर्ता । मन्त्रोऽयं त्रिषु पादेषु त्रैष्टुभः । तुरीयश्चतुर्दशाक्षरः शाक्करः । संहत्य चैकाक्षरोनो जागतः ॥ ४ ॥

**तस्मादग्निः [1]समिधो यश्च सूर्यः**
**सोमात् पर्ज्जन्य ओषधयः पृथिव्याम् ।**
**पुमान् रेतः सिञ्चति योषितायां**
**बह्वीः प्रजाः पुरुषात् सम्प्रसूताः ॥ ५ ॥**

**(भा.) 'वासुदेवः पुमान्नाम पूर्ण्णत्वात् स स्वयोषिति ।**
**'रमायां गर्भमदधात् प्रजास्तस्मात् प्रजज्ञिरे' इति च ॥ * ॥**

**(टी.)** एवमधिदैवं विष्णोरेव प्राणादिसृष्टिरुक्ता । अथाधियज्ञमपि अग्न्यादी-नामरण्यादिसंस्थात् तत एव सृष्टिरुच्यते– **तस्मादग्निरि**ति । अग्निः सोमश्च यज्ञपुरुषस्य दक्षिणेतरचक्षुषी । तावेव हव्यवाहः[2] सोमदेवता च । अथैतावेव

---

१. **'समिधो यस्य सूर्यः'** इति शङ्कररङ्गरामानुजादिसम्मतःसम्मतः पाठः । **'तस्मादग्निः समिद्धश्च सूर्यः सोमः पर्जन्यः'** इति श्रुतप्रकाशिकापाठः । **'तस्मादग्निः सोमः समिधश्च सूर्यः'** इत्यपि टीकासम्मतः पाठः स्यादिति भाति ।

२. **'हव्यवहः'** क.

देवानां[1] होता ब्रह्मा चर्त्विजौ । मनुष्यर्त्विजोरनुमन्तारौ । सूर्यो यूपमानी देवोऽध्वर्युर्जातः[2] । पर्जन्यस्तूद्गाता । तावपि मर्त्यर्त्विजोरनुमन्तारौ । सौम्यत्वान्मुख्यतः सोमाख्यो भगवान् । ओषधयो धान्याज्यबर्हिरादयः । समिधो वसन्तादिनामकाः प्रयाजदेवताः । इध्माभिमानिन्यश्चैताः । अथ परमपुरुषः स्वेच्छया प्रकृत्यनुसारेणापि सृष्टिं प्रवर्तयतीत्याह– **पुमानिति** । एतदभिप्रायं **'वासुदेवः–'** इत्यादिब्रह्माण्डवचनेनैव प्रकाशयति । अत्र पुनर्विशेषो भगवतैवानुव्याख्यायां[3] सुव्यक्तं व्याख्यातः– 'ततो जातः पुमान्नाम ब्रह्माऽस्यां वासुदेवतः । सूत्रात्मा प्राणनामा च देव्यौ प्रकृतिमानिनी । ततो रूपं महन्नाम ब्रह्मणोऽहङ्कृतिः शिवः । ब्रह्मणो बुद्धिनाम्नोमा तत इन्द्रो मनोऽभिधः । स्कन्दश्च तत एवान्ये सर्वे देवाः प्रजज्ञिरे' इति ॥ ५ ॥

**(भा.चं.) तस्मादग्निरिति** मन्त्रं पञ्चाग्निविद्योक्तक्रमेण सृष्टिपरतया व्याचक्षते । तस्माद् द्युलोकाख्योऽग्निः प्रसूतः । यश्चायं सूर्यस्तस्याग्नेः समित्स्थानीयः । 'तस्याऽदित्य एव समित्' इति श्रवणात् । तत्र सोमं राजानं प्राप्नोति । सोमात् पर्जन्याग्निः । ततः पृथिव्यामग्नावोषधयः सम्भवन्ति । ततः पुरुषाग्नौ प्रविष्टो जीवः रेतोद्वारा योषितमग्निं प्रविशति । ततः प्रजायत इति । वस्तुतोऽस्याप्यधिदैवसृष्टित्वान्न पूर्वोक्तसृष्टेर्विशेषः । अथाप्यास्तां तावदयमपि कश्चनार्थः । अस्ति चापूर्वमर्थान्तरमित्याह– **अधिदैवं विष्णोः सृष्टिरुक्ता । अथाधियज्ञमपि तत एव सृष्टिरुच्यत** इति । सौम्यत्वात् सोमनाम्नस्तस्मादेव परमपुरुषात् । उपलक्षणमेतत् । अग्निसोमादिनाम्नस्तस्मादग्निसोमादय उत्पन्नाः । 'तज्ज्ञत्वादन्यवस्तुषु' इति प्रमाणवचनमेवात्रापि गमकम् ॥

अरणीस्थादग्निनाम्नः **तस्मात्, सोमात्** सोमस्थात् सोमनाम्नश्च **तस्मात् अग्निः** सम्प्रसूतः, सोमश्च सम्प्रसूत इत्युपस्कर्तव्यम् । पूर्वं 'चक्षुषी चन्द्रसूर्यौ' इत्युक्तम् । अत्र त्वग्नीषोमौ यज्ञपुरुषचक्षुष्ट्वेन पुनरुत्पन्नावित्युच्यते । तावेव

---

१. 'देवतानां' ख. २. 'देवो ह्यध्वर्युर्जातः' ख. ३. '–व्याख्यायां व्यक्तं' क.

देवानां होतृत्वेन ब्रह्मत्वेन च जातौ। पृथिव्यां यज्ञाग्निमानित्वेन सोमलतामानित्वेन मनुष्यर्त्विजोर्होतृब्रह्मणोरनुमन्तृत्वेन च। एवं **यः** सूर्यगतः सूर्यनामा भगवान्, तस्मात् **यः** सूर्यमण्डलमानी **सूर्यः** पूर्वं जातः स पुनर्देवानामध्वर्युर्जातः। मर्त्यानामध्वर्यूणामनुमन्ता च। यूपमानी च। एवं सोमादनन्तरं मेघमण्डलमानी **पर्जन्यो** यः पूर्वं जातः स सम्प्रति देवानामुद्गाता मनुष्याणामुद्गातॄणामनुमन्ता च जातः। एवमोषधिमानिनो धान्याज्यबर्हिरादिमानिनो जाताः। ओषधयः फलपाकान्ता महीरुहाः। वसन्तादिनामकाः समिदभिमानिनो देवाः प्रयाजदेवता जाताः। एता एव देवता वसन्तादिऋत्वभिमानिन्यश्च। केचित् समिधः अयश्च इति पदं छित्त्वा, अयः शुभजनकं दैवं च तस्मादजायतेत्यर्थ इति वर्णयन्ति। योषितां वरा योषिता। 'आधिक्येऽधिकम्' इति सूत्रात्। अनुव्याख्यावचनस्यायमर्थः– पुरुषनाम्नो वासुदेवात् प्रकृतिमानिन्यां रमायां पुरुषनामा **ब्रह्मा** जातः, **प्राणनामा** वायुश्च। तथा प्रकृतिमानिन्यौ देव्यौ सरस्वतीभारत्यौ च। **ततो** महत्तत्वमानी महान् नाम ब्रह्मा जातः। ततः महत्तत्वमानिनो **ब्रह्मणो**ऽहङ्कारमानी **शिवः** बुद्धिमानिन्यु**मा** च जज्ञाते। **ततो** मनोमानिनौ स्कन्देन्द्रौ। **तत** इन्द्रियभूतादिमानिनो **देवाः** क्रमेण **जज्ञिर** इति। न केवलं तावदेव किन्त्वद्यापि यः कोऽपि **पुमान्** यस्याङ्कस्यामपि **योषितायां** सम्बुभुक्षया **रेतः सिञ्चति** तत्रापि तत्पुमधिष्ठितो भगवानेव तद्योषिताधिष्ठितायां रमायां **रेतः सिञ्चति,** ततस्तस्मादेव परम**पुरुषात्** प्रत्यहं बह्व्यः **प्रजाः** सम्प्रसूयन्ते। अपि च मुख्यत एव प्रतीयमानोऽन्योऽप्यर्थः– **तस्मादेव** परमपुरुषात् पृथिव्यां पाकाद्यर्थ**मग्निः** जातः। तस्य समेधनार्थं **समिधः** सृष्टाः। एवं पृथिव्यां कालविभागार्थं **सूर्यः** सोमश्च सृष्टौ। सूर्यात् **सोमाच्च पर्जन्यो** वृष्टिर्जायते। वृष्टे**रोषधयश्च**। ओषधीभ्योऽन्नम्। अन्नात् पुरुषः। **पुरुषात्** पुनर्बह्व्यः **प्रजाः सम्प्रसूताः**। तदेतत् सर्वमन्ततः परमपुरुषादेव

सम्प्रसूयत इति। अत्र द्वितीयः पादो जागतः। अन्ये त्रैष्टुभाः। तेनैकाक्षराधिका त्रिष्टुप्॥ ५॥

**तस्मादृचः साम यजूंषि दीक्षा**
**यज्ञाश्च सर्वे क्रतवो दक्षिणाश्च।**
**संवत्सरश्च यजमानश्च लोकाः**
**सोमो यत्र पवते यत्र सूर्यः ॥ ६ ॥**

**(टी.)** 'वाग् विवृताश्च वेदाः' इति यदुक्तं तत् प्रपञ्चयति– **तस्मादृच** इति। विष्णोरेव ह्युगादिमन्त्रा[1] तन्मूला दीक्षादयश्च प्रवृत्ताः। संवत्सरादियज्ञकालः तत्कर्ता तत्फलं च तस्मादेव बभूवुः॥ ६॥

**(भा.चं.)** शस्त्रमय्य **ऋचः**। स्तोत्रमयं **साम**। यजनमयानि **यजूंषि**। छन्दोबद्धा अथाप्यप्रगीता मन्त्राः शस्त्रम्। त एव प्रगीताः स्तोत्रम्। निगदात्मका वेदभागा **यजूंषि**। कर्मानुष्ठानेऽधिकारसिद्ध्यर्थं **दीक्षा**बन्धा उपनयनादयः। प्रत्येकं यज्ञदीक्षाश्च। अहीनैकाहादयो **यज्ञाः**। यज्ञेषु प्रत्यहमनुवर्तमानानि सवनानि **क्रतवः**। यज्ञनाम्ना भगवताऽधिष्ठिता यज्ञाः, तत्पत्न्या दक्षिणाख्यया रमयाऽधिष्ठिता **दक्षिणाश्च**। **तत्कर्ता** दीक्षितो **यजमानः**। अग्निहोत्रादयो यज्ञाः, सोमयागाः पशुसम्बद्धाः क्रतव इत्यपि व्याचक्षते। 'सवनत्रयात्मकः क्रतुरहीनादिषु प्रत्यहं सम्बध्यमानो विशिष्टो भवति, तमन्तरेण एकस्याप्यह्नोऽननुष्ठेयत्वेन' [३.३.५९] इति हि तत्वप्रदीपाचार्यः। यज्ञफलभूताः स्वर्गादयो **लोका यत्र** सोमसूर्यौ स्वरश्मिभिर्लोकान् पुनन्तौ सञ्चरतः। नित्यलोकव्यावृत्त्यर्थमिदं विशेषणम्। 'न तत्र सूर्यो भाति' इत्यादि श्रूयते हि। अत्र प्रथमतुरीयौ त्रैष्टुभौ। द्वितीयतृतीयौ जागतौ। संहत्य द्व्यक्षराधिका त्रिष्टुप्, द्व्यक्षरोना वा जगती॥ ६॥

---

१. 'ह्यग्न्यादिमन्त्राः' क.

**तस्माच्च देवा बहुधा सम्प्रसूताः**
**साद्ध्या मनुष्याः पशवो वयांसि।**
**प्राणापानौ व्रीहियवौ तपश्च**
**श्रद्धा सत्यं ब्रह्मचर्यं विधिश्च ॥ ७ ॥**

**(टी.)** देवाश्च पुनरपि **तस्मादेव** नानायोनिषु **बहुधा सम्प्रसूताः** । बहुसाधनेच्छुत्वात् । बहुधा साधनं तु प्राणापानादिप्रवर्तनम्, तपआदिजीवधर्मनियमनं च ॥ ७ ॥

**(भा.चं.)** प्राणापानादीन् जीवेषु प्रवर्तयितुं प्राणापानादिमानित्वेन, व्रीहियवादिधान्यसमृद्ध्यर्थं व्रीहियवादिमानित्वेन, तपआदिसातत्याय तपआदिमानित्वेन **तस्माच्च** तस्मादेव **बहुधा सम्प्रसूता देवाः** । न केवलमन्तर्नियामकतया। **साध्याः** साधनेच्छवः सन्तः **देवा** नानायोनिषु सम्प्रसूताः मनुष्यत्वेन, पशुपक्षिरूपेण च । मनुष्यत्वेन यथा भीमार्जुनलक्ष्मणादयः । पशुत्वेन यथा रामावतारे सुग्रीवजाम्बवदादयः **सम्प्रसूताः** । वयस्त्वेन यथा जटाय्वादयः । ऋषयोऽपि स्वेच्छया बहुधा भगवत्सेवार्थं च पशवो वयांसि वा भवन्ति। यथा जरितार्यादयः । किमुत देवाः । अथ च साधनेच्छवः सन्तः मनुष्येषु पशुषु वयस्सु चान्तर्नियामकतया बहुधा सम्प्रसूताः । एवं देवानां बहुधा साधनार्थं **प्राणापानौ व्रीहियवौ तपश्च श्रद्धा सत्यं ब्रह्मचर्यं विधिश्च** तस्मादेव भगवतो **बहुधा सम्प्रसूताः** सृष्टा इति । **व्रीहियवा**विति सर्वेषां धान्यानामुपलक्षणम् । देहधारणहेतुरन्नमित्येतत् । कायिकं वाचिकं मानसिकं च **तपः** । **श्रद्धा** आस्तिक्यबुद्धिर्मानसी । सत्यवचनं वाचिकम् । **ब्रह्मचर्यं** च त्रिकरणसम्बन्धि । विहिताविहितविधिनिषेधौ च । अथचार्थान्तरम्– तस्मादेव देवा बहुधा सम्प्रसूताः तद् यथा प्रथमं ब्रह्मणः, ततो वायोः, ततः शङ्करात्, तत इन्द्रात्, ततः काश्यपादित्यादि बहुधा । एवं साधनार्हा अन्येऽपि जीवाः

स्वस्वकर्मानुसारेण मनुष्यरूपेण पशुपक्ष्यादिरूपेण च तस्मादेव जाताः । तेषां जातानां देहधारणार्थं **प्राणापानौ**, आहारार्थं हि **व्रीहियवौ**, साधनार्थं **तपः श्रद्धा सत्यं ब्रह्मचर्यं** च तस्मादेव जायन्ते । तथा **विधिश्च** निषेधश्च विहिते प्रवृत्तिरविहितान्निवृत्तिश्चेत्यतत् सर्वं तस्मादेव परमपुरुषात् सम्पद्यत इति । अत्र प्रथमपादो जागतः । अन्ये त्रैष्टुभाः । तेन चैकाक्षराधिका त्रिष्टुप् ॥ ७ ॥

**सप्त प्राणाः प्रभवन्ति तस्मात्**
**सप्तार्चिषः समिधः सप्त होमाः[1] ।**
**सप्तेमे लोका येषु चरन्ति प्राणा**
**गुहाशयां [2]निहिताः सप्तसप्त ॥ ८ ॥**

**(भा.) सप्तार्चिषः वृत्तयः । होमाः सम्बन्धाः । लोका गोळकाः । गुहाशयां बुद्धौ । 'लोपः समाने' इति सूत्रादेकयकारलोपः । प्रतिपुरुषं सप्तसप्त ॥ ॐ ॥**

**(टी.)** अथ ज्ञानेन्द्रियाणां तद्देवतादीनां च विशेषतो विष्णोरेव प्रभव इत्याह– **सप्तेति** । **सप्त प्राणा** ज्ञानेन्द्रियाणि तद्देवताश्चेति सिद्धम् । अर्चिरादयः क इत्याकाङ्क्षायामाह– **सप्तार्चिष** इत्यादिभाष्येण । प्राणाना**मर्चिषो वृत्तयः** प्रकाशविशेषा इत्यर्थः । **होमाः** तेषां विषय**सम्बन्धाः** । इन्द्रिय**गोळकाः** शष्कुल्यादयः । गुहाशयायामित्यत्र पूर्वयकारलोपात् **गुहाशयामिति** । **'समाने लोप' इति सूत्रात्** ॥ ८ ॥

**(भा.चं.)** ननु 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इत्युक्तमेव किं पुनरुच्यते **'सप्त प्राणाः प्रभवन्ति तस्मात्'** इति? आह– **विशेपतो विष्णोरेव प्रभव** इति । अत्र तात्पर्यार्थं ज्ञानेन्द्रियदेवानां विशिष्य सृष्टिरुच्यते । तत्रा-

---

१. **'सप्त जिह्वाः'** इति रङ्गरामानुजीयः पाठः ।

२. **'गुहाशयाः'** इति शाङ्करः पाठः । रङ्गरामानुजीयेऽपि तथा । तैत्तिरीया अपि 'गुहाशयान्निहिताः' इत्येव पठन्ति । स एव सार्वत्रिकः श्रुतिपाठ इति साधुः पन्थाः ।

नुक्तानां विषयादीनां च विशेषतः सृष्टिरुच्यत इति। चक्षुरादयः पञ्च मनसा बुद्ध्या च सह **'सप्त प्राणाः' ज्ञानेन्द्रियाणि तद्देवताश्च। अर्चिषः** ज्ञानानि। सप्तेन्द्रिय**वृत्तयः। समिधः सप्त** विषयाः शब्दस्पर्शरूपरसगन्धाः सङ्कल्पोऽवधारणं चेति। **होमा** मात्रास्पर्शाः। 'शब्दादीन् विषयानन्य इन्द्रियाग्निषु जुह्वति' इति स्मरणात्। **लोका गोळकाः** कर्णशष्कुल्यादयः। **येषु चरन्ति प्राणा** इति स्फुटव्याख्यानात्। गुहायां शेत इति, हृदयगुहा आशयो वासस्थानमस्या इति वा। गुहाशया बुद्धिः। तस्यां **बुद्धौ** बुद्ध्यर्थम्। अवगत्यर्थमित्येतत्। विवरणान्तरं च तत्वप्रदीपे [२.४.६] – 'गुहाशयायां बुद्धौ निहिताः सप्तसप्त प्राणाः। 'समाने लोपः' इति सूत्रादेकयकारलोपः। तादर्थ्ये सप्तमी। गुहाशयां प्रति निहिता इति वा। उभयथा च बुद्ध्यर्थं निहिता इत्यर्थः। सप्तसप्तेति प्रतिपुरुषं भेदात्। अथवा गुहायामाशयं प्रति आशयार्थं निहिताः। 'निहितं गुहाऽऽविः', 'गुहा सन्तम्' इत्यादिवत् सप्तम्यर्थे प्रथमा। 'दैर्घ्यं प्लुतं च हुङ्कारो बिन्दुरप्यवधारणे' इति शब्दनिर्णये' इति। एतेन बुद्धिमनसोः हृदयगुहैव गोळकस्थानीयेति चोक्तं भवति। भाष्ये तात्पर्यत उद्धृतस्य सूत्रस्याऽनुपूर्वीं स्वयं पठति– **समाने लोप इति सूत्रादिति**। तत्वप्रदीपे चैतत् स्फुटम्। तथाहि तद्वचनम्–'समाने लोप इति सूत्रादेकयकारलोपः' इति। समाने अक्षरे सह द्विरावर्त्यमाने सति एकस्य लोपो वा स्यात्। तद्यथा– तततमं ततमम्। गुहाशयायां गुहाशयाम्। तैत्तिरीये नारायणोपनिषद्यप्ययं मन्त्रः पठ्यते। तत्र तु 'सप्त होमाः' इत्यत्र 'सप्त जिह्वाः' इति पाठान्तरम्। प्रथमो दशाक्षरः। तृतीयो द्वादशाक्षरः। संहत्य केवला त्रिष्टुप्॥ ८॥

**अतः समुद्रा गिरयश्च सर्वे-**
**ऽस्मात् स्यन्दन्ते सिन्धवः सर्वरूपाः।**

**अतश्च सर्वा ओषधयो रसाश्च[1]**
**येनैष भूतैस्तिष्ठते[2] ह्यन्तरात्मा ॥ ९ ॥**

**(टी.)** सर्वभूतानां चलनादिशक्तिरपि तन्नियतैवेत्याह– **अत** इति । **अतो** विष्णोरेव समुद्रादीनां तत्तच्छक्तिः प्रवर्तते । **येनैष** परमात्मा सर्वभूतानामन्तर्नियामकत्वेन तिष्ठति ॥ ९ ॥

**(भा.चं.)** **'अतः'** विष्णोरेव **समुद्राः गिरयश्च** प्रभवन्ति । अत एव च समुद्रा उल्लोलकल्लोला भवन्ति । गिरयश्च निष्पन्दा निगूढास्तिष्ठन्ति । **अस्मात् सर्वरूपाः** सर्वतोदिशं प्रवहमाणाः **सिन्धवो** नद्यश्च **स्यन्दन्ते** । **ओषधयः** पोषयन्ति । **रसाश्च** रोचयन्ति । अयमपि मन्त्रो नारायणोपनिषदि पठ्यते । 'भूतस्तिष्ठते ह्यन्तरात्मा' इति च तत्र पाठान्तरं पठन्ति। **भूतैस्तिष्ठते ह्यन्तरात्मा**। **येन** कारणेन **एष** भगवान् भूतानामन्तर्नियामकत्वेन **भूतैः** सह तिष्ठति । तस्मादन्यैः क्रियमाणमपि तत्तदन्तर्यामिणाऽनेनैव कृतमिति मन्तव्यमिति । तस्य सर्वमात्मच्छन्दमिति **'तिष्ठते'** इत्याह । अत्र प्रथमः पाद एकादशाक्षरः । 'सर्वे अस्मात्' इति पादयोर्विश्लेषेण द्वितीयो द्वादशाक्षरः । तृतीयतुरीयौ च । तेनैकाक्षरोना जगती ॥ ९ ॥

**पुरुष एवेदं विश्वं[3] कर्म्म**
**तपो ब्रह्म परामृतम् ।**
**एतद् यो वेद निहितं गुहायां**
**सोऽविद्याग्रन्थिं विकिरतीह[4] सोम्य ॥ १० ॥**

**इति द्वितीयमुण्डके प्रथमः खण्डः**

—०—

१. **'रसश्च'** इति शाङ्करः पाठः ।
२. **'एतेषु भूतेषु तिष्ठते'** इति श्रुतप्रकाशिकापाठः ।
३. **'पुरुष एवेदं सर्वम्'** इति च ।
४. **'विकिरति ह'** इति क्वचित् ।

**(भा.)** भगवतः कर्म्म चेष्टा तपो ज्ञानं च परामृतब्रह्माख्यः पुरुषो भगवानेव ।

'यैषा चेष्टा भगवतो यच्च ज्ञानं परात्मनः ।
'तत् सर्वं भगवानेव ये च धर्म्मा बलादयः' इति च ॥

'स्वाभाविकी ज्ञानबलक्रिया च' इति श्रुतिः ॥ ※ ॥

—०—

**(टी.)** ननु किमिदमीश्वरस्य सृष्ट्यादि नित्यमाहोस्विदनित्यम्। अनित्यं चेन्नेदमादरणीयम् । नित्यं चेदौपाधिकं स्वाभाविकं वा? औपाधिकं चेत् पराधीनत्वादमुख्यम् । स्वाभाविकं चेत् किमत्र प्रमाणमित्याकाङ्क्षायामाह– **पुरुष** एवेति। एतद्वाक्यार्थं **भगवतः कर्मे**त्यादिना विवृणोति। यदिदमीश्वरस्य सुखचेष्टाख्यं सृष्ट्यादि**कर्म, तपः**शब्दितनिश्चय**ज्ञानं च तदिदं विश्वमपि परामृतब्रह्माख्यः पुरुषो भगवानेव**। अतो नेदमनित्यम्। नाप्यौपाधिकम्। किन्तु स्वाभाविकमेवेत्यर्थः। अस्मिन्नर्थेऽपि ब्रह्माण्डवचनमाह– **यैषा चेष्टे**ति। **य एतत्**[1] स्वाभाविकज्ञानाद्यनन्तगुणवद् ब्रह्म स्वहृदिस्थं **वेद सो**ऽनाद्यविद्यात्मकं संसार**ग्रन्थिमिह** ब्रह्मणि प्रविश्य **विकिरति** विनाशयतीत्यर्थः ॥ १० ॥

—०—

**(भा.चं.)** पुरुष एवेदं विश्वमिति प्रथमः पाद आनुष्टुभः । द्वितीयः पाङ्क्तः। कर्मपदान्तः प्रथमः पाद इति पक्षे स पाङ्क्तः। द्वितीय आनुष्टुभः। तृतीयस्त्रैष्टुभः। तुरीयो जागतः। संहत्य चैकाक्षराधिका पङ्क्तिः। यत् **पुरुषस्य कर्म,** यच्च **तपो** ज्ञानम्, ये चान्ये धर्माः तदिदं **विश्वं** सर्वमपि **पुरुष** एव। 'नेह नानाऽस्ति किञ्चन' इति श्रुतेः। स एव पुरुषसूक्तप्रतिपाद्यः। तदेव

---

१. ख. पुस्तके– **'स्वाभाविकभक्तिज्ञानाद्यनन्त–'** (?) इति पठ्यते। लिपिकृत्प्रमादः। प्रमादोऽप्यप्रमत्तं पाठं गमयति। तेन **'स्वाभाविकशक्तिज्ञानाद्यनन्तगुणवत्'** इत्येव मूलपाठः स्यात्।

च समस्तवेदप्रतिपाद्यं ब्रह्म । 'तमेवं विद्वानमृत इह भवति' इति मोक्षप्रदत्वात् तदेव **परामृतम्**। **परामृतब्रह्माख्य** इति । मुक्ता अमृता उच्यन्ते । ब्रह्म तु नित्य-मुक्तमिति **परामृतमु**च्यते । अमृतेभ्यः परमिति वा । परे जीवा अमृता यस्मादिति च । मुक्तानां परमा गतिरित्येतत् । 'अमृतस्यैष सेतुः' [२.२.६] इति, 'परा-मृतात् परिमुच्यन्ति सर्वे' [३.२.६] इति चोपरि ।। १० ।।



[अथ द्वितीये द्वितीयः खण्डः]

**आविः सन्निहितं गुहाचरं नाम महत् पदम्।**
**अत्रैतत् [1]'सर्वमर्प्पितमेजत् प्राणन्निमिषच्च यत्[2]' ॥ १ ॥**

**(टी.)** यत्तत् सर्वभूतानां हृदयगुहायामाविर्भावाय प्रतिचक्षणाय **सन्निहितं** वैष्णवं **महत् पदं** अस्मिन् एतत् जगत् **सर्वमर्पितम्**। **एजत्** तिर्यग्जातम्। **प्राणद्** देवासुरम्। **निमिषत्** स्थावरम्। चशब्दात् जडं **च** ॥ १ ॥

**(भा.चं.)** सन्निहितमपि किमिति न दृश्यते? आह– **गुहाचरम्**। यत्र जीवः स्थितस्तत्रैव हृदयगुहायां सञ्चरति सुखमनुभवति च। 'चर गतिभक्षणयोः'। हृदयगुहागतं स्वात्मानमेव द्रष्टुमप्रभवन् कथं परमात्मानं दिदृक्षेत? **वैष्णवं महत् पदम्**। 'तद् विष्णोः परमं पदम्' इति काठके। एजत् **तिर्यग्जातमिति**। एजन्तो हि तिर्यञ्चो भवन्ति। भयप्रधाना हि तेषां प्रवृत्तिः। 'आहारनिद्राभयमैथुनानि' इति हि वदन्ति। स्वतोऽपि बलवत्तरेभ्यः प्राणिभ्यो बिभ्यदेव जीवति तिर्यग्जातम्। **प्राणत् देवासुरं** मानुषं च। पूर्वार्द्धे स्फुटमानुष्टुभम्। तृतीयः पादोऽष्टाक्षरः। तुरीयो नवाक्षरो बार्हतः। संहत्य भुरिगनुष्टुप् ॥ १ ॥

---

१. 'तत्रेदं सर्वमर्पितमेजत्' इति क्वचित्।

२. इत आरभ्य मन्त्रत्रयं मन्त्रद्वयमिव केचित् पठन्ति। तद्यथा–

'आविः सन्निहितं गुहाचरं नाम महत् पदमत्रैतत् समर्पितम्।
'एजत् प्राणन्निमिपच्च यदेतज्जानथ सदसद्वरेण्यं परं विज्ञानाद् यद् वरिष्ठं प्रजानाम्॥ १॥
'यदर्चिमद् यदणुभ्योऽणु च यस्मिँल्लोका निहिता लोकिनश्च।
'तदेतदक्षरं ब्रह्म स प्राणस्तदु वाङ्मनः।
तदेतत् सत्यं तदमृतं तद् वेद्धव्यं सोम्य विद्धि' ॥ २॥ इति।

नूनं छन्दोऽपरिज्ञानमूलोऽयं मन्त्रविभागः।

एतज्जानथ सदसद्वरेण्यं
परं विज्ञानाद् यद् वरिष्ठं प्रजानाम् ।
यदर्चिमद् यदणुभ्योऽणु च
यस्मिन् लोका निहिता लोकिनश्च ॥ २ ॥

**(भा.)** विज्ञानात् ब्रह्मणः परम् ।

'नाभिह्रदादिह सतोऽम्भसि यस्य पुंसो
'विज्ञानशक्तिरहमासमनन्तशक्तेः' इति हि भागवते ॥ * ॥

**(टी.)** एतत् सर्वाधारं विष्णुपदं **जानथ** । **परं विज्ञानादि**त्येतद् विशेषणं व्याख्याति– **विज्ञानाद् ब्रह्मणः परमि**ति । ननु विज्ञानतत्वात् परं महत्तत्वाख्यं **सदसद्वरेण्यं** देवासुरजनकम् । एव**मेतज्जानथे**ति चतुर्मुखाख्यं ब्रह्मैवात्र प्रतिपाद्यते । 'एतद् ब्रह्म चतुर्मुखः' इति पूर्वोक्तत्वाच्चेति । मैवम् । नच मुख्ये सत्यमुख्योऽर्थो[1] ग्राह्य इति वचनात् । अमुख्यत्वं[2] चास्य 'तस्मादेतद् ब्रह्म'[3] इत्यत्रैवोक्तम् । नन्वेवमपि विज्ञानशब्दस्य महत्तत्वदैवते प्रयोगप्रसिद्धिर्नास्तीत्यत आह– **'नाभिह्रदात्–'** [भाग.३.१०.२४] इति । विशिष्टं ज्ञानं शक्तिश्च स्वरूपं तस्येति **विज्ञानशक्ति**र्ब्रह्मा । सर्व**प्रजानामपि वरिष्ठम्**[4] ॥ २ ॥

**(भा.चं.)** अथर्वणा सहान्यानपि सभ्यानुद्दिश्याऽह चतुर्मुखः– **जानथ** जानीत । अवधारणार्थं वर्णव्यत्ययः । सन्तः सात्विका देवाः । असन्तस्तामसा असुरा इति मनसि निधायाऽह– **सदसद्वरेण्यं देवासुरजनक**मिति । 'यो विज्ञाने तिष्ठन्' इति श्रवणाद् विज्ञानमिति जीवः । जीवकलामानी चतुर्मुखो मुख्यतो विज्ञानपदगदितः । विशिष्टज्ञानत्वाच्च । **यदर्चिमत्** । आदित्यादिगतम् ।

---

१. 'सत्यमुख्यार्थो–' क. २. 'अमुख्यार्थत्वं' क.
३. 'तस्मादेतज्जायत इत्यत्रैवोक्तम्' ख.
४. 'वरिष्ठं हि विष्णो' इति ख. पुस्तके पठ्यते । 'वरिष्ठं हि विष्णोः पदम्' इति पाठः सम्भाव्यते ।

'यदादित्यगतं तेजः' इत्यादेः । 'अर्चिष्मानर्चितः' इति सहस्रनामसु । अर्च्यत इत्यर्चिरितीदन्तोऽपि भवति । **अणुभ्योऽणु** जीवगतम् । यन्महतो महच्च, **यस्मिन् लोका निहिता लोकिनश्च** ॥ ✻ ॥

अत्र 'वरेणियं' इति क्षैप्रविश्लेषेण द्वादशाक्षरो जागतः प्रथमः पादः । अविश्लेषे त्रैष्टुभः । द्वितीयो जागतः । 'अणुभ्यो अणु' इति विश्लेषे तृतीयस्त्रैष्टुभः । अन्यथा पाङ्क्तः । तुरीयस्त्रैष्टुभः । विश्लेषपक्षे द्व्यक्षराधिका त्रिष्टुप् द्व्यक्षरोना वा जगती । अविश्लेषे केवला त्रिष्टुप् ॥ २ ॥

**तदेतदक्षरं ब्रह्म स प्राणस्तदु वाङ् मनः[1] ।**
**तदेतत् सत्यं तदमृतं तद् वेद्धव्यं सोम्य विद्धि[2] ॥ ३ ॥**

**(भा.)** 'प्राणः प्रणयनाद् विष्णुर्वक्तृत्वाद् वागुदीरितः ।
'मनो मन्तृत्वतो विष्णुः सर्वजीवनियामकः'
इति शब्दनिर्ण्णये ॥ ✻ ॥

**(टी.) 'स प्राणस्तदु वाङ्मनः'** इत्येतच्छब्दत्रयं शब्दनिर्णयवाक्येन विष्णौ निर्वक्ति– **'प्राणः प्रणयनात्–'** इत्यादिना । अथ **'तद् वेद्धव्यम्'** इत्यत्र मुमुक्षुयोधस्य ध्यानवेधो[3] विधीयते ॥ ३ ॥

**(भा.चं.)** देहेन्द्रियादीनां स्वव्यापारेषु आ सम्यक्, स्वातन्त्र्येण, प्रणयनात् **प्राणो** नारायणः । तदु तदेव नारायणाख्यं **ब्रह्म** । स्वयं सर्वं वक्तीति **वाक्** ।

---

१. 'तदवाङ्मनः' इति केचित् ।

२. एतदनन्तरं केचिच्छ्लोकमेकमधिकं पठन्ति–
'ऋग् धनुर्यजुर्बाणः साम ज्या घोषणादिना ।
आथर्वणमयं शुभ्रं प्रतिगृह्णीत सुव्रतः' इति । अहो प्रक्षेपचापलं प्राचाम् ।

३. 'ध्यानयोगो–' क.

सर्वजीवाश्चानेन वक्तारो भवन्ति । सर्वं मनुत इति **मनः** । सर्वजीवाश्चानेन मन्वत इति । एवं कायवाङ्मनस्सु स्थित्वा **सर्वजीवनियामकः** । अत एवाक्षेषु रमणा**दक्षरम्** । असत्स्वप्यक्षेषु स्वयं सत्यं साधुगुणपूर्णम् । तेषु विनश्यत्स्वपि स्वयम**मृतम**विनाशि । **तदेतदक्षरं** ध्यानेन **वेद्धव्यं विद्धि** । तृतीयः पादो नवाक्षर इत्येकाक्षराधिकाऽनुष्टुप् ।। ३ ।।

**धनुर्गृहीत्वौपनिषदं महास्त्रं**
**शरं ह्युपासानिशितं सन्दधीत**[1] **।**
**आयम्य तद्भावगतेन**[2] **चेतसा**
**लक्षं**[3] **तदेवाक्षरं सोम्य विद्धि** ।। ४ ।।

**(टी.)** तथा हि– सर्वोपनिषदाख्यं **धनुर्गृहीत्वा** वैष्णवास्त्राभिमन्त्रितं मनः**शरं** स्मरणो**पासानिशितं**[4] तद्धनुषि **सन्दधीत** । अथ तत् धनुः आकर्णमाकृष्य वस्तुतत्वमपि निश्चित्य ब्रह्माक्षरसञ्ज्ञलक्षस्य ध्यानवेधः कार्यः ।। ४ ।।

**(भा.चं.)** उपनिषदां समुदाय **औपनिषदम्** । तदेतदुक्तम्– **सर्वोपनिषदाख्यं धनुर्गृहीत्वेति** । महत् वैष्णवमन्त्राख्यं नारायणाष्टाक्षरादिकम्, अस्त्रं अभिमन्त्रणेन सन्निहितं यत्र तन्मनःशराख्यं शस्त्रम् । **'आयम्य' आकर्णमाकृष्य** । तस्याऽशयं स्फुटयति– श्रवणेन **वस्तुतत्वमपि निश्चित्य** । **तद्भावगतेन** । भावो भक्तिः । तस्मिन्नक्षरे भक्तिपूर्वं सङ्गतेन **चेतसा** । **तदेवाक्षरं** ब्रह्म वेद्धव्यं **लक्षं विद्धि** जानीहि । विदित्वा च विद्धि विध्येत्यर्थः । व्यध ताडने । तथाहि प्रयोगः–' भिन्धि विद्धि शृणीहीति फलभेदेन सर्वशः' इति । बृहत्तन्त्रवचनमिदं 'वेधाद्यर्थभेदात्'[ब्र.सू.३.३.२६] इति सूत्रभाष्ये समुद्धृतम् । मन्त्रेऽस्मिन् तुरीयपाद एकादशाक्षर इत्येकाक्षरोना जगती ।। ४ ।।

---

१. **'सन्धयीत'** इति शाङ्करः पाठः । २. **'तद्भागवतेन'** इति रङ्गरामानुजादृतः पाठः ।
३. **'लक्ष्यम्'** इति प्रचुरः पाठः । ४. **'निशितं हि तद्धनुषि'** क.

**प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्षमुच्यते[१] ।**
**अप्रमत्तेन वेद्धव्यं शरवत् तन्मयो भवेत्[२] ॥ ५ ॥**

**(टी.)** अथाप्युपनिषत्सारेण प्रणवधनुषा मनःसारेण स्वरूपचैतन्यशरेण तल्लक्षस्यैव ध्यानसारः समाधिवेधोऽप्यवश्यं विधेयः । **तन्मयः** तत्प्रविष्टचेतनो भवेत् ॥ ५ ॥

**(भा.चं.)** पूर्वश्लोके ध्यानविधिरभिहितः । अत्र स्वरूपमनसा समाधिस्थितिरभिधीयत इत्याह– **अथापीत्यादिना** । प्रणवो धनुरिति मन्त्रे प्रथमपादो बार्हत इत्येकाक्षराधिकाऽनुष्टुप् ॥ ५ ॥

**यस्मिन् द्यौः पृथिवी चान्तरिक्ष-**
**मोतं मनः सह प्राणैश्च सर्वैः ।**
**तमेवैकं जानथ आत्मानमन्या**
**वाचो [३]मुञ्चथामृतस्यैष सेतुः ॥ ६ ॥**

**(भा.)** अमृतस्य मुक्तस्य सेतुः । 'मुक्तोपसृप्यव्यपदेशात्' , 'मुक्तानां परमा गतिः' इत्यादेः ॥ ※ ॥

**(टी.)** यदिह ध्यानाद्युपासनमुक्तं तद् द्युभ्याद्यायतनत्वमुपसंहृत्यैवेत्याह– यस्मिन् द्यौरिति । नच तदन्यः[४] कश्चिदित्थमुपास्य इत्याह– **अन्या वाच**

---

१. 'तल्लक्ष्यमुच्यते' इति च।

२. इतः परं श्रुतप्रकाशिकाभिप्रायेणायमधिको मन्त्रः पठ्यते–
'आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम्।
'ध्याननिर्मथनाभ्यासाद् देवं पश्येन्निगूढवत्' इति।
'प्रणवो धनुः–' इत्यतः परम्, 'आत्मानमरणिम्–' इत्यतः पूर्वं केचित् पुनरेकं श्लोकमधिकं पठन्ति–
'लक्षं सर्वगतं चैव शरो मे सर्वतोमुखम्।
'वेद्धा सर्वगतश्चैव विद्धं लक्षं न संशयः' इति।

३. 'वाचो विमुञ्चथ' इति प्रचुरः पाठः। 'वाचो मुञ्चथ' इति श्रीहृषीकेशतीर्थादृतः पाठः।

४. 'नच कश्चित् तदन्य इत्थ–' क.

इति। मुक्तामुक्तजगदाश्रयत्वं विष्णोरेवेत्यत्र ब्रह्मसूत्रं स्मृतिं च प्रमाणमाह[1] – **मुक्तेति** ॥ ६ ॥

**(भा.चं.) प्राणै**रिन्द्रियैः सह **मनः**। तदभिमानिनश्च देवाः। द्युपृथिव्यादिकं बाह्यम्, मनआदिकमान्तरं च जगद् **यस्मिन्नोतमा**श्रितम्। ब्रह्माण्डं पिण्डाण्डं चेत्येतत्। **'तमेकं जानथऽआत्मानम्,** प्रधानं जानथ। अत्र विवृत्तिः सर्वतो विलक्षणत्वप्रदर्शनार्था। अन्यविषया वाचः अन्या वाचः। अमृतस्याऽश्रय इति मुक्ताश्रय इति श्रुत्यर्थः'[१.१.८] इति तत्वप्रदीपे। जानथ जानीतेत्यर्थः। **'अमृतस्यैष सेतुः'** इति समुदायापेक्षया। मुक्तगणस्य सेतुराश्रय इति। **'मुक्तोपसृप्यव्यपदेशात्'** [१.३.२] इति किल ब्रह्मसूत्रम्। 'ब्रह्मविदाप्नोति परम्', 'एतमानन्दमयमात्मानमुपसङ्क्रामति' 'नारायणं महाज्ञेयं विश्वात्मानं परायणम्' इत्यादि तैत्तिरीयाणामुपनिषदि, **'मुक्तानां परमा गतिः'** इत्यादि भारते च मुक्तोपसृप्यत्वस्य व्यपदेशात्। 'यस्मिन् द्यौः' इति मन्त्रे प्रथमः पादः पाङ्क्तः। द्वितीयस्त्रैष्टुभः। तृतीयः पुनः 'जानथ आत्मानम्' इति विश्लेषेण जागत एव पठ्यते। तुरीयस्त्रैष्टुभः। तेन केवला त्रिष्टुप् भवति। यद्यपि 'अन्या वाचो विमुञ्चथ' इति सर्वव्याख्यानसम्मतः पाठः। प्राचीनादर्शे 'वि' रहितः पाठः पठ्यत इति स एवात्राऽदृतः। प्रचुरपाठानुसारे तु प्रथमपादे 'दियौः' इति विश्लेषेण पूर्वार्धस्त्रैष्टुभः, उत्तरार्धश्च जागतः। तेन द्व्यक्षराधिका त्रिष्टुप्, द्व्यक्षरोना वा जगती ॥ ६ ॥

**अरा इव रथनाभौ संहता यत्र नाड्यः**
**स एषोऽन्तश्चरते वहुधा जायमानः।**
**ओमित्येव[2] ध्यायत[3] आत्मानं**
**स्वस्ति वः पाराय[4] तमसः परस्तात् ॥ ७ ॥**

---

१. 'स्मृतिं चाऽह' क.
२. 'ओमित्येवं ध्यायथ' इति शङ्कररङ्गरामानुजयोः पाठः।
३. 'ध्यायथ' इति प्रचुरः पाठः। 'ध्यायथाऽत्मानम्' इति संश्लिष्य च पठन्ति।
४. 'पराय' इति पाठान्तरम्।

**(भा.)** **'हृदयस्थः सदा विष्णुर्बहुधा चैकधाऽभवत् ।**
**'चरति स्वेच्छयैवान्तः सर्वजीवान् नियामयन्'**
**इति प्रवृत्ते ॥ ❋ ॥**

**(टी.)** स एव भगवान् सर्वधारणनियमनादिकर्तेत्याह– **अरा इवेति** । तदभिप्रायं **'हृदयस्थः–'** इत्यादिना प्रवृत्तवचनेन प्रवक्ति । नानानाडीभिः संहते[1] जीवशरीरे नियामकत्वेन **बहुधा** व्यज्यमानः सञ्चरति हरिर्भगवान्[2] । ओङ्कारार्थस्तु सर्वगुणैरत्युच्चो भगवानित्येवमेव[3] परमात्मानं **ध्यायत** । भवतां **तमसः परस्तात् स्वस्ति पाराय** सन्ततसुखरूपाय मोक्षायेत्यर्थः ॥ ७ ॥

**(भा.चं.)** **'रथनाभावरा इव यत्र'** हृदये **'नाड्यः संहताः'** सङ्गत्य स्थिताः । तत्र हृदये स्थितो भगवान् **'अन्तश्चरते'** स्वेच्छया **सञ्चरति** । स्वेच्छाचरणमेव सम्यक् चरणं नाम । **'बहुधा' व्यज्यमानः** । आत्मान्तरात्मेति द्विधा । कोशादिषु पञ्चधा । अस्थ्यादिषु षष्ट्युत्तरत्रिशतधा । नाडीषु द्वासप्ततिसहस्रधा । इत्येवं **बहुधा** । **'तमसः परस्ताद्'** विद्यमानाय **'स्वस्ति'** स्वस्तये **सन्ततसुखरूपाय** संसारपारभूताय **मोक्षाय** तं **परमात्मानं 'ओमित्येव'** गुणपूर्ण इत्येव **ध्यायत** । तत्राऽद्याक्षरद्वयतात्पर्यं तावदाह– **सर्वगुणैरत्युच्च** इति । अतिशयेन उच्च ओ इत्युच्यते । ओ इति मेयो ध्येय ओमित्यर्थः । 'ओमित्येवं सदा विप्राः पठत ध्यात केशवम्' [हरि.३.८९.९] इति हि स्मरन्ति । इयमपूर्वा षट्पदी । 'अरा इव रथनाभौ' इत्यष्टाक्षरः पादः । 'संहता यत्र नाडियः' इति क्षैप्रविश्लेषेण द्वितीयोऽप्यष्टाक्षर इति द्विपदा गायत्री । 'स एषः' इत्यादि सप्ताक्षरं पदद्वयमिति द्विपदा उष्णिक् । पञ्चमी पङ्क्तिः । षष्ठी जगती । संहत्य वा द्विपदा त्रिष्टुप् । केचित्तु 'ओमित्येव' इति पादद्वयमुत्तरमन्त्रभागत्वेन पठन्ति । वैवक्षिको हि मन्त्रविभागो भवति । वैवक्षिकी च च्छन्दोमीमांसा ॥ ७ ॥

---

१. 'सहिते' क. २. 'सञ्चरतीह भगवान्' ख.
३. '–नित्येव पर–' क.

**यः सर्वज्ञः सर्वविद् यस्यैष महिमा भुवि ।**
**दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा प्रतिष्ठितः ॥ ८ ॥**

**(टी.)** ओङ्कारोदितगुणाः सार्वज्ञ्यादय इत्याह– **यः सर्वज्ञ** इति। **एष** भगवान् **ब्रह्मपुरे** जीवशरीरे हृदयाकाशे नित्यं **प्रतिष्ठितो** भवति ॥ ८ ॥

**(भा.चं.)** अवतीति ओम्। अव अवगतौ। तदेतदाह– **यः सर्वज्ञः**। अव व्याप्तौ। तदेतदाह– सर्वत्र विद्यत इति **सर्वविदिति**। अव कान्तौ। कान्तिरिच्छा। तदेतदाह– सर्वं विन्दत इत्यवाप्तसकलकामत्वात् **सर्वविदिति**। अव सामर्थ्ये। तदेतदाह– **यस्यैष महिमा भुवीति**। **यस्यैष महिमा भुवि** बहुचित्रजीवलोकनियमनरूपः। 'बहुचित्रजगद्बहुधाकरणात् परशक्तिः' इति च भगवत्पादवचनम्। अव प्रवेशे। तदेतदाह– **व्योम्न्यात्मा प्रतिष्ठित** इति। **दिव्ये** भगवतो लीलाक्षेत्रे **ब्रह्मपुरे** शरीरे **व्योम्नि** हृदयाकाशे परमात्मा **प्रतिष्ठित** इत्यर्थः। 'पुरमेकादशद्वारमजस्यावक्रचेतसः' इति हि काठके। 'दिव्ये अप्राकृते परमे व्योम्नि ब्रह्मपुरे वैकुण्ठाख्ये' इत्यपि व्याचक्षते। अत्र 'व्योम्नि आत्मा' इति विश्लेषेण केवलाऽनुष्टुप् ॥ ८ ॥

**मनोमयः प्राणशरीरनेता**
**प्रतिष्ठितोऽन्ने हृदयं सन्निधाय[१] ।**
**तद् विज्ञानेन परि पश्यन्ति धीरा**
**आनन्दरूपममृतं यद् विभाति ॥ ९ ॥**

**(टी.)** स एव **अन्ने प्रतिष्ठितो हृदयं** प्रविश्य प्राणादीन् प्रवर्तयति ॥ ९ ॥

**(भा.चं.) मनोमयः** ज्ञानमयः। मननेन मेयत्वाद्वा मनोमयः। प्राणानां प्राणापानादीनाम्, प्राणानां इन्द्रियाणां शरीरस्य च **नेता**। कथम्? **'हृदयं**

---

१. 'प्रतिष्ठितोऽन्तर्हृदये संविधाय' इति केचित् पठन्ति।

**सन्निधाय'** **प्रविश्य**। **अन्ने प्रतिष्ठितो** भूत्वा मनः प्रविशति। ततश्च शरीरे-न्द्रियाणि **प्रवर्तयति**। 'अन्नमशितं त्रेधा विधीयते। तस्य योऽणिष्ठस्तन्मनः' इत्यादेः। अन्नमये शरीरे **'हृदयं' प्रविश्य 'प्रतिष्ठितो'** वा। **यत्** एतद् हृदये **विभाति आनन्दरूपं** आनन्दमयशरीरम्, अत एव **अमृतं** परं ब्रह्म तद् स्वयोग्यो-पासनाजनितेन **विज्ञानेन परि** उपरि उत्कृष्टतया **पश्यन्ति**। अन्तर्बहिः **परितश्च पश्यन्ति**। 'मनोमयः–' इति प्रथमचरण एकाक्षरन्यूना जगती ॥ ९ ॥

**भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।**
**क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे ॥ १० ॥**

**(भा.)** **'परा अप्यवरा यस्मात् स हि विष्णुः परावरः।**
**'ब्रह्माण्डमद्ध्यगो नित्यं तपत्येष रवौ स्थितः'** इति च ॥ * ॥

**(टी.)** **तस्मिन्** विज्ञानेन परिदृष्टे विज्ञाते **हृदयग्रन्थिः** लिङ्गशरीरं **भिद्यते**। बन्धक**कर्माणि च** तस्य **क्षीयन्ते**। अत्र **'परावरे'** इति विशेषणं **'परा अपि–'** इत्यादिप्रवृत्तवाक्येनैव व्याख्याति ॥ १० ॥

**(भा.चं.)** हृदयग्रन्थिः अविद्याग्रन्थिः, तन्मूलं **लिङ्गशरीरम्**। 'हृदय-ग्रन्थिरज्ञानम्' इत्यहिर्बुध्न्यसंहितायामित्युक्तम्। सर्वे **संशयाश्छिद्यन्ते**। उक्तं हि पुरैव– 'कस्मिन् भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति। तस्मै स होवाच' इति। तदिदमुपक्रान्तमत्रोपसञ्जहार। **बन्धककर्माणीति**। अन्यानि तु तमनुगच्छन्ति। 'कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकी-भवन्ति' [३.२.७] इति हि वक्ष्यति। 'न हास्य कर्म क्षीयते' इति च बृहदा-रण्यके [३.५.९]। **पराः** देवोत्तमा ब्रह्माद्या **अपि यस्मादवराः स हि विष्णुः परावरः** सर्वदेवोत्तमः। **'ब्रह्माण्डमध्यगः–'** इत्युत्तरार्द्धेन 'दिव्ये ब्रह्मपुरे–' इति मन्त्रभागस्यार्थान्तरं च ध्वनयति। ब्रह्मणश्चतुर्मुखस्य पुरे शरीरस्थानीये

ब्रह्माण्डे, व्योम्नि अन्तरिक्षे रविमण्डले परमात्मा प्रतिष्ठित इति । उत्तरमन्त्रं चानेनैव व्याख्याति । 'भिद्यते' इति स्फुटमनुष्टुप् । उत्तरमन्त्रे च ॥ १० ॥

**हिरण्मये परे[1] कोशे विरजं ब्रह्म निष्कळम् ।**
**तच्छुभ्रं ज्योतिषां ज्येतिस्तद्यदात्मविदो विदुः ॥ ११ ॥**

**(टी.)** हिरण्मये ब्रह्माण्डकोशे **मध्यगो** भगवान् । **ज्योतिषां ज्योतिः ब्रह्म** । **रवौ स्थितस्तपति** भगवानित्यर्थः ॥ ११ ॥

**(भा.चं.)** **विरजं** विरजस्त्रिगुणातीतम् । **निष्कळं** षोडशकलातीतम् । **यत्तत्** रवौ ततत्वात् **तत्**, तदेव स्वपुरमपि यातीति **यत्**, इति **आत्मतत्वविदो** विदुः । 'स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः'[तै.उ.३.१३] इति चान्यत्र ॥ ११ ॥

**न तत्र सूर्यो भाति न चन्द्रतारकं**
**नेमा विद्युतो भान्ति कुतोऽयमग्निः ।**
**तमेव भान्तमनु भाति सर्वं**
**तस्य भासा सर्वमिदं विभाति[2] ॥ १२ ॥**

**(भा.) सूर्यादयस्तं न भासयन्ति ॥ ✲ ॥**

**(टी.) 'न तत्र सूर्यो भाति–'** इत्यादेरभिप्रायमाह– **सूर्यादयस्तं न भासयन्तीति** ॥ १२ ॥

**(भा.चं.) सूर्यादयस्तं न भासयन्ति**– 'न तद् भासयते सूर्यो न शशाङ्को न पावकः'[१५.६] इति हि गीतासु । **तमेव भान्तमनु भाति सर्वम्**, 'अनु-

१. 'पुरे' इति रङ्गरामानुजीये पाठान्तरमपि ।

२. इतः परमेकं पद्यमधिकं पठन्ति केचित्–

'न तत्र चन्दार्कवपुः प्रकाशते न वान्ति वाताः कुतोऽन्या देवताः ।
स एष देवः कृतभूतभावनः स्वयं विशुद्धो विरजः प्रकाशते' इति ।

कृतेस्तस्य च' [१.३.२२] इति हि बादरायणसूत्रम्। 'अनुभानं नाम तदिच्छानुरोधेन भानम्' इति च तत्वदीपिका। **तस्य भासा सर्वमिदं विभाति**– 'यदादित्यगतं तेजो जगद् भासयतेऽखिलम्। यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्' [१५.१२] इति च। काठके च पठितोऽयं मन्त्रः। [२.२.१५]। व्याख्यातश्च तत्र। प्रथमचरणस्त्रयोदशाक्षरः। द्वितीयो जागतः। तृतीय-चतुर्थौ त्रैष्टुभौ। संहत्य निचृज्जगती ॥ १२ ॥

**ब्रह्मैवेदममृतं पुरस्ताद् ब्रह्म पश्चाद् ब्रह्म दक्षिणतश्चोत्तरेण।**
**अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम्[1] ॥१३॥**

**इति द्वितीयमुण्डके द्वितीयः खण्डः**
**इति द्वितीयं मुण्डकम्[2]**

—०—

**(भा.)** इदं ब्रह्मैव विश्वं पूर्णम्। इदमेव च वरिष्ठं सर्वोत्तमम्। इदंशब्दानां बहुत्वाद् ब्रह्मविषय एवैदंशब्दः ॥ * ॥

—०—

**(टी.)** **'ब्रह्मैवेदममृतम्–'** इत्यादिना परं ज्योतिर्ब्रह्म तत्तद्दिक्षु **'प्रसृतम्'** इत्युच्यते। **'ब्रह्मैवेदं विश्वमिदं वरिष्ठम्'** इति वाक्यद्वयं व्याख्याति भाष्येण– **इदं ब्रह्मैव पूर्णं सर्वोत्तमं च**। अन्यदपूर्णमवरं चेत्यर्थः। इदं विश्वशब्दितं

---

१. क्वचिदेवं पाठभेदः–

'ब्रह्मैवेदममृतं यत् परस्ताद् ब्रह्म पश्चाद् दक्षिणतश्चोत्तरतश्च।
'अधश्चोर्ध्वं च प्रसृतं ब्रह्म ब्रह्मैवेदं सर्वमिदं वरिष्ठम्' इति।

इतः परं मन्त्रमेकमधिकं च पठन्त्येके–

'पद्मकोशप्रतीकाशं सुषिरं चाप्यधोमुखम्।
'हृदयं तद् विजानीयाद् विश्वस्याऽयतनं महत्' इति।

२. केचित् 'इति द्वितीयोऽध्यायः' इत्येव पठन्ति।

जगत् ब्रह्मैवेति योजना किं न स्यादित्यत आह– [१]**इदंशब्दानामिति**। ब्रह्म-प्रकरणे ब्रह्मणः परिपूर्णत्वादिबहुधर्मविधानार्थं धर्मिग्राहकत्वेन वर्तमानाना-**मिदंशब्दानां बहुत्वाद् ब्रह्मविषय एव अयमिदंशब्दः**। न जगद्विषयः । **तस्य भासा सर्वमिदं विभातीति** जगद्धर्मस्य पुरैवोक्तत्वात्। तदधीनस्य तदैक्या-सम्भवाच्च ॥ १३ ॥

—०—

**(भा.चं.)** योऽयं **'हिरण्मये कोशे'**, यस्य **'भासा सर्वमिदं विभाति'** नायं सूर्यः। किन्तु **'इदममृतं ब्रह्मैव'**। तदेव **'इदं'** परिदृश्यमानसूर्यादिगतं **'ब्रह्म पुरस्तात्, इदं पश्चात्, इदं दक्षिणतः, इदमुत्तरेण च प्रसृतं'** व्याप्तम्। **'इदं ब्रह्मैव अधश्चोर्ध्वं च प्रसृतम्। इदं ब्रह्मैव विश्वं'** सर्वगुणपूर्णम्, सर्वदेश-कालगतं च। तस्मात् **'इदमेव'** ब्रह्मैव **'वरिष्ठम्'**। ततश्च जीवब्रह्मणोर्भेद-बोधकत्वात् **'इदं'** तत्ववादमतमेव **'वरिष्ठम्'** इति। 'ब्रह्मैवेदम्–' इति दशाक्षरः प्रथमपादः। चतुर्दशाक्षरो द्वितीयः। संहत्य जागतं पूर्वार्धम्। यद्वा द्वादशा-क्षरावेव द्वावपि पादौ। तृतीयः पाद आनुष्टुभः। तुरीयस्त्रैष्टुभः। विश्वमिति क्षैप्रव्यूहेन जागतो वा। अत्र बहुधा पाठभेदो दृश्यते। 'अधश्चोर्ध्वं च प्रसृतं ब्रह्म ब्रह्मैवेदं विश्वमिदं वरिष्ठम्' इति मूलपाठः सम्भाव्यते। तेन त्रैष्टुभमुत्तरार्धं भवति ॥ १३ ॥

—०—

१. 'इदम्ब्रह्मशब्दानामिति' ख.

[अथ तृतीये प्रथमः खण्डः]

द्वा सुपर्ण्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥ १ ॥

**(भा.)** स्वादुवत् सर्वदाऽत्ति । न स्वाद्वेव ।'तस्येदाहुः पिप्पलं स्वाद्वग्रे तन्नोन्नशद् यः पितरं न वेद' इत्यज्ञानां स्वादुनिषेधात् । जीवाद्यमेव नाश्नाति भगवान् । नतु नाश्नात्येव । 'तस्येदाहुः पिप्पलं स्वादु' इत्युक्तत्वात् ।

'स्वातन्त्र्येणैव भोक्तृत्वाद् दुःखाभोगाच्च सर्वदा ।
'अभोक्ता चैव भोक्ता च भगवान् विष्णुरव्ययः'
इति तत्वसारे ॥ * ॥

**(टी.)** ननु 'ब्रह्मैवेदं विश्वम्' इत्यादाविदमः शुक्तित्ववदस्य ब्रह्मत्वं हि विधीयते। तद्व्यतिरिक्तस्य तस्मिन्नध्यस्तत्वेन रजतवन्मिथ्यात्वात्। तस्मादिदं जीवब्रह्मैक्यमतमेव भेदमताद् वरिष्ठमिति मन्दाशङ्कोच्छेदार्थं **'द्वा सुपर्णा–'** इत्यादिकमुपदिशति । अत्र सुष्ठु परमानन्दत्वात्, तं परमणतीति च द्वौ सुपर्णावीशजीवौ[1] । तयोः साधारणो वृक्षो वृश्च्यमानत्वाद् देह उक्तः । **पिप्पलं** तत्कर्मफलम्[2] । तयोरीशजीवयोः स्वातन्त्र्यपारतन्त्र्याभ्यां स्थित्यदनेन भेदोक्तेः इदं भेदमतमेवान्यस्माद् वरिष्ठमित्युक्तम्। **स्वाद्वत्तीति** स्वातन्त्र्य-लक्षणं जीवस्येत्यत आह– **स्वादुवदिति** । अस्वाद्वपि **स्वादुवदेव सर्वदा** जीवोऽत्ति। **नतु स्वाद्वेवात्ति**। विपर्ययेणानुभवात्। **'तस्येदाहुः–'** इत्यादौ

---

१. 'द्वा सुपर्णावितीशजीवौ' क.    २. 'तद्वं कर्मफलम्' क.

वाक्यशेषेऽपि **अज्ञानां स्वादुफलादननिषेधात्** । एवं हि 'यस्मिन् वृक्षे–' इत्याद्यृगर्थोऽवगम्यते[१]– यस्मिन् शरीराख्यवृक्षे मध्वदः [२]भगवद्गुणामृतरसास्वादिनो जीवाख्यसुपर्णा निविशन्ते । पुनरधिकं शुभाख्यापत्यं सुवते । **तस्य** हस्ताख्यशाखाग्रात् सञ्जातमेव कर्माख्यं **पिप्पलं**[३] **स्वाद्वाहुः** । एवं च ज्ञानिकृतकर्मण एव स्वादुत्वात् तेषामेव तददनमित्यर्थः[४] । अथ **यो** जगत्**पितरं विष्णुं न वेद स तत्** स्वादुफलं नाश्नातीति ह्यज्ञानां स्वादुनिषेधः ॥

नन्वेवं सति ज्ञान्यज्ञानिनोः स्वाद्वस्वादुभोगविधानात्, **'अनश्नन्'** इत्युक्तेश्च न तस्य 'ऋतं पिबन्तौ' इत्युक्तभोग इत्यत आह– **जीवेति** । **जीवाद्यमेव सर्वेश्वरो भगवान् नाश्नाति** । **नतु** स्वयोग्यं पूर्णसुखमपि **नाश्नात्येव** । स्वातन्त्र्यातिरेकात्। **'तस्येदाहुः–'** **इति** अत्रैव साक्षात् स्वादुभोगस्यैव **उक्तत्वात्** । तथाचात्र योजना– संसारहेतुत्वात् स्वत एव वृतसुखचेष्टत्वाच्च साक्षाद् वृक्षशब्दितो नारायणः । यस्मिन् मुख्यत एव वृक्षाख्ये हरौ मध्वदः साक्षान्मोक्षसुखभोक्तारः सम्यक् पराणनात् सुपर्णशब्दिता विशिष्टचेतना नित्यं निविशन्ते । यस्मिन् स्थितास्ते पुनरतिशयमपि[५] मानसयज्ञं कुर्वाणा अस्मा एव मानसं सोममधिकं सुवन्ति । चशब्दात् कदाचित् स्वेच्छया द्रव्ययज्ञमपि कुर्वाणा अधिकाय विष्णवे सोममप्यभिषुवते । **तस्य** विष्णोरेव हि **पिप्पलमग्रे प्रथमं स्वाद्वाहुः**, पश्चात् तेन दत्तमेव ह्यन्येषां स्वल्पमपि स्वादु भवेत्। अत एव तदज्ञस्य तद्भोगासिद्धिः स्यात् । योऽयं भगवतो भोगाभोगविभाग उक्तस्तं तत्वसारवचनेन स्पष्टयति– **स्वातन्त्र्येणेति** ॥ १ ॥

**(भा.चं.)** 'द्वा सुपर्णा–' इति मन्त्रे क्षैप्रव्यूहेन केवला त्रिष्टुप् । प्रथमपादे 'दु+वा' इति, तृतीये च 'स्वादु अत्ति' इति विश्लेषेणैकादशाक्षरता। 'अत्ति अनश्नन्' इति पादविश्लेषेण चतुर्थचरणेऽप्यक्षरपूर्तिः । मन्त्रोऽयं श्वेता-

---

१. **'–गर्थो गम्यते'** ख. २. **'भगवद्रूपामृत–'** ख ३. **'कर्माख्यपिप्पलं'** ख.
४. **'त एव तदश्नन्तीत्यर्थः'** ख. ५. **'पुनरपि'** क.

श्वतरोपनिषदि च पठ्यते [४.६], ऋक्संहितायां च [१.१६४.२०], अथर्वसंहितायां च [९.९.२०]। अयमिह मन्त्रार्थः– सह युङ्क्त इति सयुजौ सहस्थितौ। उत्तमजीवापेक्षया मुख्यतः सखायौ सुहृदौ। सर्वेषामपि तत्तद्युक्तकारितया सदा सहख्यानात्। 'तस्याविज्ञातनामाऽसीत् सखाऽविज्ञातचेष्टितः' [४.२५.१०] इति हि भागवते। **समानं** साधारणं देहाख्यं **वृक्षं** जीवेश्वराख्यौ सुपर्णौ **परिषस्वजाते** निविविशाते। **तयोरन्यः** जीवाख्यः सुपर्णः अस्वाद्वपि **पिप्पलं** स्वकर्मफलं **स्वादु** यथा तथा अनुभवति। **अन्यः** ईश्वराख्यः सुपर्णस्तु **अनश्नन्नेव अभिचाकशीति** अभितश्चकास्ति। काशतेश्चर्करीतम्। निर्दुःखमानन्दमनुभवन् भातीत्यर्थः। **यस्मिन् वृक्ष** इति। 'यस्मिन् वृक्षे मध्वदः सुपर्णा निविशन्ते सुवते चाधि विश्वे। **तस्येदाहुः पिप्पलं स्वाद्वग्रे तन्नोन्नशद् यः पितरं न वेद'** [ऋ.सं.१.१६४.२२] इति समग्रो मन्त्रः। **'तस्य'** सात्त्विकजीवशरीराख्यवृक्षस्यैव शाखाग्रे **'पिप्पलं स्वाद्वाहुः'**। तदेतदाह– **तस्य हस्ताख्यशाखाग्रात्। 'तत्' स्वादु फलं 'न उन्नशत्' नाश्नाति**। संसारे जन्ममृतिभ्यां व्रश्चति जीवमिति वृक्षो भगवान्। स्वयमेव वृतौ क्षौ सुखचेष्टे येन स इति वा वृक्षः। कं सुखम्। षः प्राण इति चेष्टा। 'षकारः प्राण आत्मा' इति श्रुतिः। तदेतदाह– **संसारहेतुत्वात्, स्वत एव वृतसुखचेष्टत्वाच्च वृक्षशब्दितो नारायण** इति। ननु कथं द्वौ सुपर्णौ जीवेशावुच्येते? बुद्धिजीवौ हि तौ। तथाहि पैङ्गिश्रुतिः– 'तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वम्। अनश्नन्नन्यो अभिचाकशीतीति क्षेत्रज्ञः' इति। सोऽयं भगवान् भ्रमः। तत्रापि सत्त्वमिति जीवः। क्षेत्रज्ञ इति परमात्मा। सत्त्वमिति प्रसिद्धं जीववचनम्। 'न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः। सत्त्वम्–' [१८.४०] इति च गीतायाम्। 'क्षेत्रज्ञं चापि मां विद्धि' [१३.३] इति च। अतो न कश्चिद् विरोधः। उत्तरमन्त्रे च स्फुटं जीवेशवचनमिति ॥

'सुपर्णावितौ सयुजौ सखायौ यदृच्छया कृतनीडौ च वृक्षे। एकस्तयोः खादति पिप्पलान्नमन्यो निरन्नोऽपि बलेन भूयान्॥ आत्मानमन्यं च स वेद विद्वान- पिप्पलादो नतु पिप्पलादः। योऽविद्ययाऽन्धः स तु नित्यबद्धो विद्यामयो यः स तु नित्यमुक्तः' [११.११.६–७] इति भागवते। 'सुपर्णौ द्वौ शरीरस्थौ जीवश्च परमस्तथा। पारवश्यादनाज्जीवस्तत्रात्तीति श्रुतौ श्रुतः। स्ववशेनादनाद् विष्णुर्नात्तीत्यत्ताऽपि संश्रुतः। स एव हि शुभस्यात्ता जीवोऽत्त्यस्यैव वेदनात्' इति कूर्मसंहितावचनम्। एतेन उत्तरमन्त्रे पठ्यमानम्, 'अनीशया' इति पदं प्रथममन्त्रेऽप्यन्वेतव्यमिति सूचितम्। 'अनीशया यदृच्छया' इति भागवताभिमतोऽर्थः। 'ईश्वरेच्छा यदृच्छा स्यात्' इति हि स्मरन्ति। अनीशया भगवदिच्छयैव पिप्पलं स्वाद्विवात्ति। अनीशयैव मुह्यमानः शोचति। अयमत्र भाष्यविवृतोऽर्थः। अनीशया अनीशतया पारवश्यादिति कूर्मसंहिताविवक्षितोऽर्थः। अनीशतया अत्ति, अनीशतयैव शोचति च। तदिदमर्थान्तरमुत्तरमन्त्रव्याख्याने स्फुटीभवति। 'अस्वादु स्वादुवद्ध्यत्ति जीवो नैव जनार्दनः। अतो नात्तीति वचनमश्नतोऽपि शुभं सदा' इति हि स्मरन्ति। 'अत्तिं विनाऽप्यदौर्बल्यादनत्तिः' इति च। 'अनत्तृत्वं हरेर्दुःखानत्तृत्वादुच्यते सदा। विषयान् विनाऽपि पूर्णत्वात् स्वरूपानन्दभोगिनः' इति च॥ १॥

**समाने वृक्षे पुरुषो निमग्नो-**
**ऽनीशया शोचति मुह्यमानः।**
**जुष्टं यदा पश्यत्यन्यमीश-**
**मस्य महिमानमिति वीतशोकः ॥ २ ॥**

**(भा.) 'नास्तीशोऽस्या यतोऽन्यो हि ततोऽनीशा हरेर्म्मतिः।**
**'तया मुह्यति जीवस्तमन्यं ज्ञात्वा विमुच्यते।**
**'जीवादन्यः स्वतन्त्रोऽयं यतोऽतः पुरुषोत्तमः' इति ब्रह्मसारे॥ * ॥**

**(टी.)** अत्रोक्तं जीवेशभेदमजानतो जानतश्च फलभेदमाह– **समान** इति। अस्याभिप्रायं तु **'नास्तीशः–'** इत्यादिब्रह्मसारवचनेन व्यक्तं व्याख्याति। **अनीशया** हरीच्छया **मुह्यमानः** स्वेश्वरं स्वस्माद् भिन्नमजानन् जीवः संसारे **शोचति**। अथ जीवेशयोर्भेदो मिथ्येति **मुह्यमानः** नित्यनिरय एवात्यन्तं शोचति। स्वस्वामिनं स्वस्माद् भिन्नं पश्यन् **वीतशोको** भवति॥ २॥

**(भा.चं.)** अयमपि श्वेताश्वतरोपनिषदि पठ्यते [४.७]। **समाने वृक्षे निमग्नः पुरुषो** जीवः। इति पूर्वोक्तदिशा **'ईशं'** **स्वस्वामिनं** **'अन्यं'** स्वस्माद् भिन्नं **'यदा पश्यति'**, तथा सर्वजगन्नियमनादिलक्षण**मस्य महिमानं** च **पश्यति**, तदा **वीतशोको भवति**। **अस्य** जगतः सकाशात् महामानमिति वा। व्याख्यातोऽयं मन्त्रभागस्तत्वप्रदीपे–'यदा जीवसेव्यमीश्वरमन्यं पश्यति, अस्य महिमानं च इति उक्तप्रकारेण। 'द्वा सुपर्णा–' इत्यादिपूर्ववाक्ये समानशरीरस्थत्वेऽपि अकर्मफलभुक् सर्वसाक्षीत्यादिरुक्तप्रकारः। तदा विशोको भवति' [१.१.१७] इति। **अनीशया** स्वतन्त्रया भगवदिच्छया **मुह्यमानः**, तयैव **अनीशया यदा अन्यं पश्यति**। अर्थान्तरं च तत्वप्रदीपे–'समाने शरीरे निकृष्टत्वेन स्थितो जीवः अनीशतया भेदे मुह्यमानः शोचति। जुष्टं देवैः, अस्य जीवस्येशम्, अन्यं यदा पश्यति महिमानं महिमगुणात्मकं तदा तदैव वीतशोको भवति। न दुःखलेशमपि स्पृशति। नतु महिमगुणविहीनमन्यमनीशसेवितं पश्यन् वीतशोको भवतीति सतात्पर्यं भेदव्यपदेशाद् भिन्न एव प्राणभृत् परमात्मनः' [१.३.५] इति॥

अत्र प्रथमपाद एकादशाक्षरः। 'निमग्नो+अनीशया' इति विश्लेषेण द्वितीयोऽपि। तृतीयो दशाक्षरः। तुरीयो द्वादशाक्षरः। संहत्य चतुश्चत्वारिंशदक्षरस्त्रैष्टुभो मन्त्रः। तृतीयचरणे 'पश्यति अन्यमीशम्' इति विश्लेषे सोऽप्येकादशाक्षरः। तदा त्वेकाक्षराधिका त्रिष्टुप्॥ २॥

यदा पश्यः पश्यते रुग्मवर्ण्णं
कर्त्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान् पुण्यपापे विधूय
निरञ्जनः परमं साम्यमुपैति ॥ ३ ॥

(भा.) पुण्यं चानिष्टं विधूय ॥ * ॥

(टी.) पुण्यपापबद्धस्य शोकात्ययः कथमित्यत आह– **यदा पश्य** इति । ब्रह्मयोनिः महालक्ष्मीशः । अथ चतुर्मुखजनको वेदैकगम्यश्च । **साम्यं** निर्दोषत्वादि चतुर्भुजत्वाद्यपि वा । नह्मत्र[1] तद्भावो विहितः ॥ ३ ॥

(भा.चं.) रुक्मवर्णमिति श्रौतसम्प्रदायानभिज्ञानां प्रामादिकः पाठः । रुग्ममित्येव सुवर्णनाम । न रुक्ममिति । अपशब्दोऽयं वैयाकरणपाशोपज्ञं यद् रुक्ममिति । ननु रोचमानं हि रुक्मं भवति । रोचते च जनेभ्यः । 'युजिरुचितिजां कुश्च' [दशपा.१.११६] इति सूत्रं च संवदते । तत् कथं रुग्मम्? न भोः । समलोष्टाश्मकाञ्चनेभ्यः कथं रोचेत? तस्माद् रुजतीति रुग्ममित्येव साधु निर्वचनम् । रुजो भङ्गे । रुग्मं हि भनक्ति मनो दायभागिनाम् । सत्यपि कनके मनोभङ्गः । असत्यपि । तस्माद् रुग्मम्, रुग्मी, रुग्मिणी इत्येव साधुरूपाणि । ननु तर्हि सूत्रं कुप्यति? न भोः । पाठभ्रान्तिरियं वैयाकरणानाम् । 'युजिरुजितिजाम्' इत्येव प्राचीनो धातुपाठ इत्यभ्यूह्यते । अन्यथा चान्तस्य प्रथमं पाठो युक्तः । तदनन्तरं च जान्तयोर्धात्वोः– 'रुचियुजितिजाम्' इति । अन्यत्रापि दृश्यते किलैतादृशी पाठभ्रान्तिर्वैयाकरणानाम् । तथाहि काशिकाकारः रुचिं पठति– 'नहि-वृति-वृषि-व्यधि-रुचि-सहि-तनिषु क्वौ' [६.३.११६] इति । क्षीरस्वामी तु रुजिं पठति– 'नहिवृतिवृषिव्यधिरुजिसहितनिषु–' इति । एवमत्रापि रुचिं विहाय रुजिः पठनीयः । 'रुग्मवर्णम्' इति

---

१. 'चतुर्भुजत्वाद्यपि वा ह्यत्र' ख.

श्रुतिश्च तेन प्रीयते। रुचेरपि मक्प्रत्ययो भवति, रुजेरपीत्यन्ये। तेन रुक्ममिति, रुग्ममिति रूपद्वयमपि साधु– इति उभयस्वस्तिवादिनः। पश्यतीति पश्यो जीवः। तथाहि मैत्रोपनिषदि–'यदा पश्यन् पश्यति रुग्मवर्णं कर्त्तारमीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान् पुण्यपापे विहाय परेऽव्यये सर्वमेकीकरोतीत्येवऽह्याह' [६.१८] इति। ब्रह्म महालक्ष्मीः योनिर्भार्याऽस्येति ब्रह्मयोनिः। 'मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम्' [१४.३] इति हि गीतायाम्। ब्रह्मणो योनिर्विशेषावाप्तिकारणमिति वा। आह ह्यम्भ्रणीः स्वयम्–'मम योनिरप्स्वान्तःसमुद्रे' [ऋ.सं.१०.१२५.७] इति। अत आह– **'ब्रह्मयोनिः' महालक्ष्मीशः** इति। ब्रह्मा चतुर्मुखः। तस्य योनिः कारणम्। तदाह– **चतुर्मुखजनक** इति। ब्रह्म वेदः योनिर्ज्ञप्तिकारणमस्येति च ब्रह्मयोनिः। एतदप्याह– **वेदैकगम्यश्चे**ति। **'ब्रह्म योनिम्'** इति भिन्ने पदे इत्येके। **अनिष्टं पुण्यं** स्वर्गादिफलकं मोक्षानुपयुक्तं **विधूय**। पापं च सर्वात्मना **विधूय** निरञ्जनत्वेन **परमं साम्यम्**। तदाह– **निर्दोषत्वादी**ति। सारूप्यमुक्तिरूपं साम्यान्तरं चाऽह– **चतुर्भुजत्वाद्यपि** वेति। अत्र विषमचरणौ त्रैष्टुभौ। समौ तु जागतौ॥ ३॥

**प्राणो ह्येष सर्वभूतैर्विभाति**
**विजानन् विद्वान् भवते नातिवादी**[1]।
**आत्मक्रीड आत्मरतिः क्रियावा-**
**नेष ब्रह्मविदां वरिष्ठः** ॥ ४॥

**(टी.)** ईशदर्शनं जीवादन्यत्वेनेति यदुक्तं तच्चान्यत्वं चैत्रमैत्रयोरिव न साक्षाद् भिन्नत्वमात्रम्, किन्तु भोगवैलक्षण्यात्मकमेवेत्याह – **प्राणो ह्येष** इति। **एष** भगवान् सर्वप्रणेतृत्वात् [प्राणनामा] **भूतैः** सह **विभाति** इत्येतावदेव **जानन्**

---

१. 'प्राणो ह्येष यः सर्वभूतैः.......भवति नातिवादी' इति केचित् पठन्ति। 'एष हि ब्रह्मविदां वरिष्ठः' इति च।

ब्रह्मविदपि तस्यात्यन्ताधिक्यवैलक्षण्यवादी न जायते । अत्यन्तान्यनिरपेक्षतयाऽऽत्मन्येवाऽत्मना क्रीडते[1] रमते चेत्यत्यन्तविलक्षणानन्तधर्मवानिति **विजानन्नेव**[2] अतिवादित्वेन **ब्रह्मविदां वरिष्ठो** जायते[3] ।। ४ ।।

**(भा.चं.) सर्वप्रणेतृत्वात् 'प्राणः'** इत्युक्तः **'एषः'** भगवान् **'सर्वभूतैः' सह** स्वयमपि **विविधं 'भाति' इत्येतावदेव** शास्त्रेषु **विहितं विज्ञेयं** चेति **जानन् अतिवादी** परमात्मनः सर्वातिशयवादी **न** भवति । किन्तु **'आत्मक्रीडः आत्मरतिः क्रियावान्'** इति वादी किल **एषः** अतिवादी । **आत्मक्रीडः** । 'क्रीडामात्रं प्रभोः सृष्टिः' इति श्रुतिः । 'देवस्यैष स्वभावोऽयम्' इति च । **आत्मरतिः** । तथाहि भगवद्वचनम्– 'तस्योदरस्थजगतः सदमन्द्रसान्द्रस्वानन्दतुष्टवपुषोऽपि रमारमस्य' इति । 'अमन्दगुणसारोऽपि मन्दहासेन वीक्षितः । नित्यमिन्दिरयाऽऽनन्दसान्द्रो यो नौमि तं हरिम्' इति च । सृष्टिकाले आत्मना स्वेच्छया स्वातन्त्र्येण निखिलजगत्सृष्ट्यादि कुर्वन् ब्रह्मादिजीवजातं सृजन् पालयन् क्रीडतीति **आत्मक्रीडः** । 'लोकवत्तु लीलाकैवल्यम्' [ब्र.सू. २.१.३४] इति भगवद्वचनम् । प्रळयकाले सकलजगत् प्रविलाप्य आत्मन्येव रमया सह रमत इति **आत्मरतिः** । एवं स्वरूपभूतानन्त**क्रियावान्** भगवानिति **विजानन्** अतिवादी **ब्रह्मविदां वरिष्ठो** भवति । **एष** प्राणनामा भगवान् **ब्रह्म** सर्वगुणबृंहितं सर्वोत्तमं तत्वमिति **विजानन् विदां वरिष्ठो** जायते वा ।।

'प्राणो भगवानेष सर्वभूतैराश्रितो विभातीति विजानन् अतिवादी आत्मविकत्थनो न भवति' इत्यपि व्याख्यानान्तरम् । 'एष तु वा अतिवदति यः सत्येनाति वदति' [छं.७.२.१] इति श्रुतिप्रसिद्धोऽतिवादशब्दार्थ एवात्राऽपि मन्त्रे निरूपितष्टीकाकृतेति सर्वं सुन्दरम् । 'तेन विज्ञानेन, तेन परमात्मना वा

---

१. **'क्रीडति'** इति स्वरसम् । २. **'विजानन् नन्वेव'** ख.

३. **'प्राणो ह्येष सर्वभूतैर्विभातीति विजानन्... क्रियावानित्येष...'** इति च टीकानुगुणः श्रुतिपाठः स्यादपि ।

अतिवादी तस्य भगवतः सर्वातिशायित्ववादी भव' इति च व्याचक्षते । 'स ब्रह्मविदां वरिष्ठः परमात्मन्येव क्रीडति, तत्रैव रमते, भगवत्प्रीत्यर्थमेव च विहितक्रियानिरतः' इति च । 'स्वात्मन्येव क्रीडति नोद्यानादिषु, स्वात्मन्येव रमते न स्रक्चन्दनादिषु' इत्येके ॥ ❊ ॥

एकादशाक्षरः प्रथमपादः । द्वादशाक्षरो द्वितीयः । 'प्राणो हि एष' इति क्षैप्रविश्लेषे प्रथमपादोऽपि द्वादशाक्षरः । एकादशाक्षरस्तृतीयः । नवाक्षरस्तुरीयो बार्हतः । संहत्य चतुश्चत्वारिंशदक्षरा त्रिष्टुबेव भवति ॥ ४ ॥

**सत्येन लभ्यस्तपसा ह्येष आत्मा**
**सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम् ।**
**अन्तः शरीरे ज्येतिर्म्मयो हि शुभ्रो**
**यं पश्यन्ति यतयः क्षीणदोषाः ॥ ५ ॥**

**(टी.)** आत्मक्रीडादिमान् भगवान् केनोपायेन सुलभ इत्याकाङ्क्षायामाह– **सत्येने**त्यादि । सत्याख्यभगवत्प्रसादेन सत्यादिधर्मानुष्ठानेन **हि** स **एष आत्मा** जीवे स्व**शरीरे** प्रत्यक्षतो लभ्यते ॥ ५ ॥

**(भा.चं.) 'सत्येन'** सत्याख्यभगवत्प्रसादेन । **सत्येन** सत्यवचनेन च । एकादश्युपवासादि**तपसा,** बाह्यान्तःकरणजयेन, निरन्तरमननेन च । परविद्याजन्येन **सम्यग्ज्ञानेन** । ब्रह्मणि परमात्मनि मनश्चरणम्, तदर्थं ब्रह्मणि वेदे निरन्तरचरणम्, तदर्थं स्त्रीभोगादिवर्जनं च ब्रह्मचर्यम् । **अन्तः शरीरे** भगवच्छरीरस्थानीये जीवस्वरूपे वा हृद्यन्तः । **ज्योतिर्मयो हि 'लभ्यः' प्रत्यक्षतो लभ्यते । शुभ्रो** निर्दोषः । शुभेन रमते च । 'शुभं पिबत्यसौ नित्यं नाशुभं स हरिः पिबेत्' इति हि स्मरन्ति । **यं यतयः** निरन्तरयतनशीलाः **पश्यन्ति । क्षीणदोषाः** । एत एव हि मुख्यदोषाः यदसत्यमतपोऽसम्यग्ज्ञानमब्रह्मचर्यं च । तुरीयपादे एका-

दशाक्षर इति एकाक्षरन्यूनो जागतो मन्त्रः । 'पश्+यन्ति' इति विश्लेषे केवला वा जगती ॥ ५ ॥

**सत्यमेव जयति नानृतं**
**सत्येन[1] पन्था विततो देवयानः ।**
**येनाऽक्रमन्त्यृषयो ह्याप्तकामा[2]**
**यत्र तत् सत्यस्य परमं निधानम् ॥ ६ ॥**

**(भा.) 'सत्यो हि भगवान् विष्णुः सद्गुणत्वात् प्रकीर्त्तितः ।**
**'असुरास्तद्विरुद्धत्वादनृताः परिकीर्त्तिताः ।**
**'तस्य विष्णोर्न्निधानं तु वैकुण्ठो लोक उत्तमः' इति च ॥ * ॥**

**(टी.)** सत्यानुग्रहमपि तद्विरोध्यनृतं विघटयतीत्यत आह– **सत्यमेवेति** । अत्रायमभिसन्धिः– सत्यादिधर्मप्रवर्तकः सत्याख्यो भगवानेवानृताख्या-नसुरान् **जयति** । **न** विपर्ययेण । न च ते वैकुण्ठगमनमार्गं रोद्धुमलम् । तस्यापि पथस्तेनैव विततत्वात् । तथाहि– यस्मिन् प्रदेशे **सत्यस्य** विष्णोः **तत् परमं निधानं** वैकुण्ठलोकः, तं प्रदेशं **येन** पथा ब्रह्मदृश **ऋषय आक्रमन्ति** स हि **देवयानः पन्थाः सत्येन विततः** । अतः सोऽपि सुगम एव । अत्रापि **'सत्यो हि भगवान्–'** इत्यादि ब्रह्मसारवचनमाह ॥ ६ ॥

**(भा.चं.)** सत्यमनृतमिति प्रातीतिकमर्थं बाला अपि जानीयुरेवेति प्रमाण-प्रमितमर्थविशेषमाह– **'सत्यो हि भगवान् विष्णुः'** । प्रातीतिकोऽप्यर्थो विवक्षित एव,अविरोधात् । नहि भाष्यकारास्तमप्यर्थं विवृण्वते यं बाला अपि प्रतीयुः । यथार्थज्ञानरूपत्वादृतं भगवान् । तद्विरुद्धत्वात् **अनृतमसुरवृन्दम्** । 'अनृत-पदस्यासुरपरत्वे त्वप्रयुक्तलक्षणा' इति कश्चित् । प्रमाणवचनमपश्यन् स्वय-

---

१. **'सत्यस्य पन्थाः'** इति केचित् । २. **'येनाऽऽप्लुवन्त्यृषयो ज्ञानतृप्ताः'** इति च कचित् ।

मजानन् किमपि प्रमाणविरुद्धं बुक्कतीति शोच्य एव सः । नाप्यत्र लक्षणा । यौगिकी विद्वद्रूढिरेवेयम् । **ब्रह्मदृशः** । अत एव **आप्तकामाः** । सर्वकमनीयो भगवानाप्तस्तैरिति वा **ब्रह्मदृशः 'आप्तकामाः'** । **ऋषयः** इत्यस्य च विवरणं **ब्रह्मदृश** इति । ऋष ज्ञाने । अत्र प्रथमः पादो दशाक्षरः । द्वितीयस्तुरीयश्च द्वादशाक्षरः । तृतीय एकादशाक्षरः । तेनैकाक्षराधिका त्रिष्टुप् ।। ६ ।।

**बृहच्च तद् दिव्यमचिन्त्यरूपं**
**सूक्ष्माच्च तत् सूक्ष्मतरं विभाति ।**
**दूरात् सुदूरे तदिहान्तिके च**
**पश्यत्स्विहैव[१] निहितं गुहायाम्** ।। ७ ।।

**(भा.)** सर्वगत्वात् दूरेऽन्तिके च ।। * ।।

**(टी.)** अथापि ब्रह्मणो विलक्षणधर्मानाह– **बृहच्चेति** ।। ७ ।।

**(भा.चं.)** **बृहत्** देशतः कालतो गुणतः शक्तितश्चानन्तम् । सृष्ट्यादिना दीव्यति क्रीडतीति **दिव्यम्** । सर्ववेदैरपि स्तूयत इति च **दिव्यम्** । सर्वोत्तमत्वाद् **दिव्यम्** । अप्राकृतविग्रहत्वाच्च **दिव्यम्** । अत एव **अचिन्त्यरूपम्** । **सूक्ष्मात्** जीवस्वरूपादपि **सूक्ष्मतर**मन्तःशरीरे **विभाति** । अथापि सर्वगतमित्याह– **दूरात् सुदूरे** । ब्रह्माण्डाद् बहिः । **इह** ब्रह्माण्डे च । **अन्तिके** पिण्डाण्डे च । **इह** पृथिव्यां च । **इहैव** शरीरे पुनरन्तरन्तिक एव । तदेव स्फुटमाह–**इह** शरीरे **पश्यत्सु** ज्ञानिषु **इहैव** हृदयगुहायां **निहित**मिति । मन्त्रेऽस्मिन् स्फुटं केवला त्रिष्टुप् ।। ७ ।।

**न चक्षुषा गृह्यते नापि वाचा**
**नान्यैर्देवैस्तपसा कर्म्मणा वा ।**

---

१. 'पश्यस्येतत्' इति क्वचित् ।

ज्ञानप्रसादेन विशुद्धसत्त्व-
स्ततस्तु तं पश्यते[१] निष्कळं ध्यायमानः ॥ ८ ॥

**(भा.)** 'नान्यैर्देवैर्हरिं पश्येज्ज्ञानरूपेण वायुना ।
'ब्रह्मणा परमज्ञानरूपेण हरिणा तथा ।
'प्रसन्नेनैव तं पश्येदन्येऽनुज्ञाप्रदायिनः' इति च ॥

षोडशकलाशरीरो न भवतीति निष्कळः ।'यदा पश्यः पश्यते रुग्मवर्ण्णम्', 'आनन्दरूपममृतं यद् विभाति' इत्युक्तत्वात् ॥ ॥

**(टी.)** सुसूक्ष्मत्वादतीन्द्रियश्चायमित्याह– **न चक्षुषा** । अस्यार्थं **'नान्यैर्देवैः–'** इत्यादिब्रह्मसारवचनेन व्याख्याति । ज्ञानरूपेभ्योऽ**न्यैर्देवैः कोऽपि हरिं न पश्येत्** । तपआदिना स्वोत्साहेनापि[२] न पश्येत् । ततः केवलज्ञान-**प्रसादेनैव** तं पश्यति । ज्ञानरूपयोः ब्रह्मवाय्वोः परमज्ञानरूपस्य हरेश्च प्रसादेनैव तं पश्यतीत्यर्थः[३] । **अन्ये** रुद्रादयो द्रष्टुम**नुज्ञाप्रदायिनः** । निष्कळस्य ध्यानमेव कथमित्यत आह– **यदेति** । **'रुग्मवर्णम्'** , **'आनन्दरूपम्'** इत्यादौ विलक्षण-रूपविधानेन दत्तोत्तरत्वात् ॥ ८ ॥

**(भा.चं.)** चक्षुरादिभिरिन्द्रियैस्तदभिमानिभिः सूर्यादिभिर्देवैर्वा, तत्सहायेनेत्येतत्, न द्रष्टुं शक्यः । किन्तु **ज्ञानरूपयोः ब्रह्मवाय्वोः** मुख्यतः ज्ञानानन्दमयस्य प्रसादेन सत्त्वशुद्धिर्भवति । **ततः** अन्तःकरणस्य निर्मलत्वात्, **ततः** तस्मिन् निर्मलेऽन्तःकरणे तं पश्यति तमेव **ध्यायमानः** । 'सत्त्वं विशुद्धं वसुदेवसञ्ज्ञितम्' इति हि स्मरन्ति । **ततस्तु तं** स्वरूपमनसैव **पश्यते** । अन्येऽप्याहुः 'ज्ञायतेऽनेनेति व्युत्पत्त्या परमात्मा ज्ञानशब्देनोच्यते' इति । अत्र त्रयः पादा एकादशाक्षराः । तुरीयश्चतुर्दशाक्षर इत्येकाक्षरन्यूना जगत्येव ॥ ८ ॥

---

१. 'पश्यति निष्कलम्' इति च । २ 'सोत्साहेनापि' ख.
३. 'प्रपश्यतीत्यर्थः' ख.

**एषोऽणुरात्मा चेतसा वेदितव्यो**
**यस्मिन् प्राणः पञ्चधा संविवेश ।**
**प्राणैश्चित्तं सर्वमोतं प्रजानां**
**यस्मिन् विशुद्धे विभवत्येष आत्मा ॥ ९ ॥**

**(टी.)** विशुद्धसत्वो भगवन्तं पश्यतीति यदिहोक्तं तदेव पुनर्विशिनष्टि– **एषोऽणुरिति** । **एष** परमात्मा सूक्ष्मत्वात् जीवस्य स्वरूपचैतन्येनैव **वेदितव्यः** । न प्राकृतबुद्ध्या । **यस्मिन्** चेतसि **प्राणः पञ्चधा संविवेश** तच्छोधनार्थम् । **यस्मिन्** चेतसि **विशुद्धे** तेन **एष** परमात्मा **विस्पष्टं** दृष्टो **भवति** । अथेतरप्रजानामपि **चित्तं प्राणैः** प्रोतं भवति स्वस्वयोग्यज्ञानादिसिद्ध्यर्थम् ॥ ९ ॥

**(भा.चं.)** अयमापतप्रतीतिको मन्त्रार्थः– **एषोऽणुः** परमात्मा **चेतसा** निरन्तरचिन्तनेन **वेदितव्यः** । **यस्मिन्** परमात्मनि पञ्चात्मा **प्राणः संविवेश** आश्रितस्तस्थौ । कीदृशः प्राणः? **यस्मिन् विशुद्धे** प्राणे **प्रजानां प्राणैः** इन्द्रियैः सह **सर्वं चित्तमोतम्,** आश्रितमित्येतत् । स सर्वाश्रयः प्राणोऽपि **यस्मिन् संविवेश स एष** परमात्मा **विशिष्टो भवतीति** । एवं स्थितेऽप्युपासकानामनुसन्धानलाभाय कञ्चनापूर्वमर्थविशेषमाह– **एष परमात्मेत्यादि** । **'एष आत्मा' परमात्मा** यस्मात् **'अणुः'** अत्यन्तसूक्ष्मः तस्मात् स्थूलेन्द्रियागोचरत्वात् **'चेतसा'** स्वरूपचैतन्येनैव **'वेदितव्यः'** । **'यस्मिन्'** स्वरूपचेतसि **'प्राणः पञ्चधा संविवेश'**, जीवकलामानित्वात् । न केवलं ज्ञानिनां चित्त एव प्राणस्य पञ्चधावस्थानम् । सर्वेषामपि **चित्तम्,** प्राकृतं स्वरूपं चेति **सर्वं** च **चित्तं** पञ्चभिः **प्राणैः ओतं** निबिडं तत्तद्योग्यज्ञानादिनियमनार्थम् । एतेन स्वरूपशरीरे प्राणस्य न प्रवेश इति बालिश्येन रटन्तः परास्ता वेदितव्याः । स्वयं जीवकलामानी प्राणः स्वरूपशरीरं न प्रवेष्टुमीष्ट इत्यद्भुतं वचः । भगवद्दर्शनमेव

विभवो नामेत्याह– **'विभवति' विस्पष्टं दृष्टो भवतीति**। अत्र त्रिष्टुब्जगत्योः सङ्करः। प्रथमतुरीयौ जागतौ, द्वितीयतृतीयौ त्रैष्टुभाविति। तेन द्व्यक्षराधिका त्रिष्टुप्; द्व्यक्षरोना वा जगती ।। ९ ।।

**यँय्यँ ल्लोकं मनसा संविभाति**
**विशुद्धसत्त्वः कामयते यांश्च कामान्।**
**तन्तँ ल्लोकं जयते[1] तांश्च कामां-**
**स्तस्मादात्मज्ञं[2] ह्यर्च्चयेद् भूतिकामः ।। १० ।।**

**इति तृतीयमुण्डके प्रथमः खण्डः**

—०—

**(टी.)** एवं विशुद्धसत्वस्य ब्रह्मदृशः किमप्यशक्यं नास्तीत्याह– **यँय्यँ लोकमिति**। साक्षाद् **भूतिकामो** मुक्तिकाम एव ।। १० ।।

—०—

**(भा.चं.)** मनसा **संविभाति** भावयति। जिगमिषैवात्र मनसि भानं नाम। **जयते** लभते। **तस्मात्** सत्यकामत्वाज्ज्ञानिनः, स्वयं मोक्षादि**भूतिकामः** साधकः **आत्मज्ञं** परमात्मज्ञानिनं सदा **अर्च्चयेद्धि**। एकादशाक्षरः प्रथमः पादः। तृतीयश्च। त्रयोदशाक्षरो द्वितीयः। द्वादशाक्षरस्तुरीयः। तेनैकाक्षरोना जगत्येव। 'यस्य विष्णोर्दर्शनार्थमुपासनोक्ता तस्माद् दर्शनात्, तस्य प्रसादात् सञ्जाताद् दर्शनात् सर्वपुरुषार्थप्राप्तिरुच्यते– यंयं लोकं मनसा संविभाती-त्यादौ। सा च तस्माद् विष्णोर्दृष्टादिति भावः। नचैतज्ज्ञानसामर्थ्यं न भवति। विषयमपेक्ष्य विवक्षितत्वाद् विचक्षणसमाजाधिराजेन। 'संविभाति' भा ज्ञान इति धातोः'[३.४.१] इति तत्वप्रदीपाचार्यः ।। १० ।।

—०—

१. 'जयति' इति क्वचित्।
२. 'तस्मादात्मस्थम्' इति च।

[अथ तृतीये द्वितीयः खण्डः]

स वेदैतत् परमं ब्रह्मधाम
यत्र विश्वं[1] निहितं भाति शुभ्रम् ।
उपासते पुरुषं ये ह्यकामा-
स्ते शुक्रमेतदतिवर्तन्ति धीराः ॥ १ ॥

(भा.) स आत्मज्ञार्चको ब्रह्मणो धाम प्राणं वेद । यत्र विश्वं पूर्णं ब्रह्म निहितम् ।

'प्रधानं धाम विष्णोस्तु प्राण एव प्रकीर्त्तितः ।
'उपायैर्यो विजानीयात् प्राणस्थं परमेश्वरम् ।
'तस्य प्राणे हरिर्न्नित्यमाविष्टो भवति ध्रुवम् ॥

'नित्यं प्राणस्थितस्यैव विष्णोरावेश एव हि ।
'प्राणद्वारेण यज्ज्ञानदीपनं ज्ञानिनः सदा ॥

'सन्निधानं यथा प्राप्ताः पिशाचाः पुरुषेष्वपि ।
'तत्र स्थित्वाऽपि भुञ्जन्त आविशेयुः पुनश्च ते ॥

'मन्त्रादिभिस्तथा विष्णुः सदा प्राणस्थितोऽपि सन् ।
'ज्ञानदीप्त्यादिकं कुर्याज्ज्ञानिनः पुनरेव तु' इति च ॥

एतच्छुक्रं प्रत्यन्यदतिवर्त्तन्ते–

'सर्वं तीर्त्वा हरिं शुक्रं प्रति वृत्तिर्भवेत् पुनः ।
'ज्ञानिनः सा हि मुक्तिः स्यात् तन्नैवात्येति कश्चन'

इति महावराहे ॥ ❊ ॥

---

१. 'यस्मिन् विश्वम्' इति च।

**(टी.)** आत्मज्ञार्चनं क्रमेण मुक्तिद्वारं भवतीति यत् सूचितं तत् प्रपञ्चयति– **स वेदेत्यादिना** । अस्य वाक्यस्यार्थं **'स आत्मज्ञार्चकः–'** इत्यादिभाष्येण व्याख्याति । मुख्यप्राण एव हि परब्रह्मणः परं गृहम् । नित्यनिवासयोग्यत्वात् । अत्रापि **'प्रधानं धाम–'** इत्यादि ब्रह्मसारवाक्यमाह । उपायास्तु भक्तिपूर्वकाः प्रवचनादयः । सन्निधानं परदेहे गूढत्वेन स्थित्वा स्वेच्छया भोगादिकम् । मन्त्रौषधादिभिरावेशस्तु परकीयज्ञानाद्युद्बोधनेन तदशक्यार्थव्यवहारः । तस्मिन् ब्रह्मधाम्नि प्राणे **ये** जनाः **पुरुषमुपासते** ते तमेव प्राप्नुवन्ति । ननु नेयं सावयवप्राप्तिः केवलमोक्षोऽभिप्रेतः । किन्तु निर्गुणभावनया तदतिक्रम एव हि साक्षान्मोक्षो भवेदित्यत आह– **एतच्छुक्रं प्रतीति** । अत्र प्रमाणमाह– **सर्वं तीर्त्वेति** । [१]शोकादिदोषराहित्यात् शुक्राख्यं **हरिं प्रति** अन्यत् **सर्वं तीर्त्वा** **पुनस्तत्समीपवृत्तिरेव ज्ञानिनो भवेत्** । नापि तदैक्यं शङ्क्यम् । 'सह ब्रह्मणा' इति श्रुतेः । अत एवातिक्रमश्च न भवेत् ।। १ ।।

**(भा.चं.)** **'परमं ब्रह्मधाम'** । **परब्रह्मणः परं गृहम्** । 'वायौ मुख्यधिया' इति स्मरणात् । अत एव हि तमनिलमभिदधति । अकारवाच्यस्य विष्णोर्मुख्यं निलयनमिति । **'यत्र'** आत्मज्ञार्चके स्थिते प्राणे **'विश्वं' पूर्णं ब्रह्म 'निहितं'** नित्यमाविष्टं **'भाति'** । नित्यं सन्निहितस्य पुनरावेशो नाम **प्राणद्वारेण ज्ञानिनो ज्ञानदीपनमेव** । **ये हि अकामाः** प्राकृतकामनाविधुराः तमेव प्राणस्थं परमपुरुषं **उपासते ते** संसारमतीत्य भगवति वर्तन्ते । पूर्वं 'शुभ्रम्' इत्युक्तमेव 'शुक्रम्' इति परामृशति । स्वच्छं निर्दोषमित्येतत् । अथच शुभे रतं शुभ्रम् । शोकरहितं शुक्रम् । 'शुभं पिबत्यसौ नित्यम्' इत्यादेः । अथचार्थान्तरम्– **सः** आत्मज्ञार्चकः आत्मज्ञो वा **एतद्** हृदयं परस्य ब्रह्मणो **धाम** इति **वेद** । **यत्र** हृदये पूर्णं ब्रह्म ध्यानेन **निहितं** ध्यातं सद् **भाति** । एवं

---

१. 'शोकाख्यदोष–' क.

हृदयपुण्डरीके ये धीराः ज्ञानरताः परमपुरुषमुपासते ते एतदतिक्रम्य शुक्रं शोकरहितं मोक्षमधिवसन्तीति। मन्त्रोऽयं त्रैष्टुभ एकाक्षराधिकः। तुरीयपादस्य द्वादशाक्षरत्वात्। 'ये हि अकामाः' इति विश्लेषे समग्रमुत्तरार्द्धं जागतं भवति ॥ १ ॥

**कामान् यः कामयते मन्यमानः**
**स कामभिर्ज्जायते[1] तत्रतत्र।**
**पर्याप्तकामस्य कृतात्मनश्च[2]**
**इहैव सर्वे प्रविलीयन्ति कामाः ॥ २ ॥**

**(टी.)** अथ य उपासकः प्राकृत**कामान् कामयते** तानेव नित्यान्[3] **मन्यमानः स** नानायोनिषु तैरेव सहितो **जायते** । न मुक्तिं याति। अथ यः पर्याप्तकामोऽपि [4]तद्गतामनर्थसन्ततिमनुभूय ज्ञात्वा कृतात्मा शिक्षितबुद्धिर्भवेत् तस्य तज्जन्मन्येवाप्रियकामा विलीयन्ते ॥ २ ॥

**(भा.चं.) 'तत्रतत्र' नानायोनिषु 'जायते'। न मुक्तिं याति।** यतः कामा एव कामितास्तेन न मुक्तिः। नाप्यकामनया भगवानुपासितः। **पर्याप्तकामस्य** यथेच्छमनुभूतकामभोगस्य, अथ च **कृतात्मनः** अनुभूयानुभूय शिक्षितमतेः, अत एव कामभोगानामसारतां दृढमनुसन्दधतः, **इहैव** तस्मिन्नेव जन्मनि **सर्वे कामाः** प्रविलीयन्ते। ननु तदाऽपि स्याद् भक्तिकामः। स्याद् वैराग्यकामः। स्याज्ज्ञानकामः। स्यादपि च मुक्तिकामः। तत् कथं सर्वे कामाः प्रविलीयन्ते? अत आह– **अप्रियकामा** इति। स किल कामत्यागं कामयते यः सर्वानपि कामांस्त्यजति। तस्मात् सर्वत्रापि कामत्यागो नामाप्रियकामत्याग एव। कामानां प्रविलयोऽपि न स्वशक्त्या किन्तु भगवदनुग्रहादेवेति **'प्रविलीयन्ति'**

---

१. **'कामभृज्जायते यत्रतत्र'** इति केचित्। २. **'कृतात्मनस्तु'** इतिच।
३. **'नित्यम्'** ख. ४. **'तद्गतानर्थ–'** क.

इत्याह । अत्रापि द्वादशाक्षरश्चरमपाद इत्येकाक्षराधिका त्रिष्टुबेव । उत्तर-मन्त्रेऽपि ॥ २ ॥

**नायमात्मा प्रवचनेन लभ्यो**
**न मेधया न बहुना श्रुतेन ।**
**यमेवैष वृणुते तेन लभ्य-**
**स्तस्यैष आत्मा विवृणुते तनुं[1] स्वाम्** ॥ ३ ॥

**(टी.)** एवं विरक्तस्यापि भक्तिहीनैरुपायैरलभ्योऽयं भगवानित्याह– **नायमात्मेति** ॥ ३ ॥

**(भा.चं.)** नायं परमात्मा भक्तिहीनेन केवलप्रवचनादिना लभ्यः । मेधया धारणावत्या प्रज्ञया । **यमेवैष** भगवान् **वृणुते** भक्तोऽयमिति स्वीकरोति । **विवृणुते तनुं स्वाम्** । स्वरूपं प्रकाशयति । काठके चायं पठ्यते ॥ ३ ॥

**नायमात्मा बलहीनेन लभ्यो**
**नच प्रमादात् तपसो वाऽप्यलिङ्गात्[2] ।**
**एतैरुपायैर्यतते यस्तु विद्वां-**
**स्तस्यैष आत्मा विशते ब्रह्मधाम[3]** ॥ ४ ॥

**(टी.)** बलहीनस्तु युक्तिहीनः । अलिङ्गं तपः देवताविशेषस्मृतिहीनम् । **एतैः** प्रवचनाद्युपायैर्यतमानस्योक्तलक्षणस्याधिकारिणो हृदये प्राणगः प्रकाशते भगवान् ॥ ४ ॥

**(भा.चं.)** भगवतो विस्मरणं प्रमादः । तदन्यस्य स्मरणं प्रमादः । ऐहिक-फलप्रेप्सा प्रमादः । पाण्डित्यमदेनाहङ्कारनिगीर्णता च प्रमादः । ध्यातव्य-

---

१. 'तनूम्' इति प्रचुरः पाठः । 'तनुम्' इति प्रतनः । २. 'प्रमादान्न तपसोऽप्यलिङ्गात्' इति च क्वचित् ।
३. 'विशति ब्रह्मधाम' इति च ।

निश्चयरहितं **तपोऽलिङ्गम्**। तदाह– **देवताविशेषस्मृतिहीनम्**। एवमुक्तदोषरहितैर्भक्त्यादिसहितैः **एतैः** प्रवचनादिभिरेव **उपायैः यो यतते तस्य** उक्तलक्षणस्य भक्तस्य **तस्यैष** परमात्मा हृदयगं **ब्रह्मधाम** प्राणं **विशते**। प्रविश्य **प्राणगः प्रकाशते**। अर्थान्तरं च तत्वप्रदीपे [३.३.५४]– 'पूर्ववाक्योक्तैरुपायैर्यतमानस्य ब्रह्मपुरं हृदयमेष परमात्मा विशते। तत्र दृश्यत इत्यर्थः। प्रवेशस्य नित्यसिद्धत्वात्। प्रवचनादिभिर्भक्तिरहितैर्न लभ्यते। भक्तिप्रधानैरपि स्वातन्त्र्यान्न लभ्यः। किन्त्वेतैर्भक्तिप्रधानैर्यतमानस्य एवंविदुषो हृदये तदानीं प्रविष्ट इवाभिव्यज्यत इति' इति। अत्र प्रथमपादः केवलमेकादशाक्षर इति एकाक्षरन्यूना जगती ॥ ४ ॥

**सम्प्राप्यैनमृषयो ज्ञानतृप्ताः**
**कृतात्मानो वीतरागाः प्रशान्ताः।**
**ते सर्वगं सर्वतः प्राप्य धीरा**
**मुक्तात्मानः सर्वमेवापियन्ति[१] ॥ ५ ॥**

**(भा.)** सर्वतो देहादेर्मुक्ताः सन्तः। सर्वं भगवन्तं प्राप्य तमेवापियन्ति।

'देहादेः सर्वतो मुक्ताः सर्वगं पुरुषोत्तमम्।
'प्राप्य तस्मिन् प्रविश्याथ मोदन्तेऽन्तर्बहिस्तथा' इति च ॥ * ॥

**(टी.)** **'ते सर्वगम्–'** इति वाक्यशेषं व्याख्याति– **सर्वतो देहादेरिति**। ये **ज्ञानतृप्ताः ऋषयः** ते प्राकृतदेहेन्द्रियादेः **सर्वतो मुक्ताः** परिपूर्णं **भगवन्तं 'सम्प्राप्य'** **तमेव** प्रविशन्ति। अत्रापि **'देहादेः–'** इत्यादिकं महावराहवचनमाह ॥ ५ ॥

**(भा.चं.)** ज्ञानेन जातेन भगवद्विषयेण तृप्ताः अन्यत्रालम्बुद्धिमन्तः। विषयेषु वा। **कृतात्मानः** शिक्षितमतयः। कृतकृत्या वा। वीतरागद्वेषादिदोषाः।

---

१. 'सर्वमेवाऽविशन्ति' इति च।

**प्रशान्ताः** प्रकृष्टे भगवति परिनिष्ठितबुद्धयः । अकलुषमनसो वा । य **'ऋषय एनं'** प्राणगतमात्मानं ध्यानयोगेन **'सम्प्राप्य'** एतादृशा भवन्ति **'ते सर्वतः'** **देहादेः** **'मुक्तात्मानः'**, तृप्तत्वादेव गलितदेहगेहाद्यभिमानाः सन्तः प्रारब्धकर्मावसाने **सर्वतः प्राकृतदेहेन्द्रियादेश्च मुक्ताः**, स्वरूपभूतेन्द्रियमनोयुक्ताः **सन्तः**, **'सर्वगं सर्वं'** सर्वगुणपरिपूर्णं **भगवन्तं प्राप्य तं 'सर्वगं सर्वमेवापियन्ति' प्रविशन्ति 'धीराः'** इति। 'सर्वं पूर्णमिहोच्यते' इत्यभिदधति। 'सर्वः शर्वः शिवः स्थाणुः' इति च विष्णुसहस्रनामसु । मन्त्रेऽस्मिन् केवला त्रिष्टुप् ।। ५ ।।

**वेदान्तविज्ञानसुनिश्चितात्र्थाः**
**सन्यासयोगाद् यतयः शुद्धसत्वाः ।**
**ते ब्रह्मलोकेषु[1] परान्तकाले**
**परामृतात्[2] परिमुच्यन्ति सर्वे ।। ६ ।।**

**(भा.) ब्रह्मलोकेषु स्थित्वा परान्तकाले परिमुच्यन्ति ।। * ।।**

**(टी.) 'वेदान्त–'** इत्यादिना पुनश्च ज्ञानिनां विशेषं फलं चाऽह । **ब्रह्मलोकेष्विति** भाष्यस्यायमर्थः । सत्याख्ये ब्रह्मलोकेऽभीष्टदेशेषु च कंचित् कालं **स्थित्वा परान्तकाले** वैकुण्ठं प्राप्य **परिमुच्यन्ति** । अतो विरिञ्चलोक एव साक्षान्मोक्ष इति नाऽशङ्कनीयम्[3] ।। ६ ।।

**(भा.चं.) वेदान्तविज्ञानसुनिश्चितार्थाः** । वेदानामन्तो निर्णयो यस्मात् तादृशेन विज्ञानेन तळस्पर्शिन्या प्रज्ञया भगवानेव सर्ववेदमुख्यार्थ इति दृढनिश्चयवन्तः । वेदशिरसां विज्ञानेन सुनिश्चितसर्ववेदार्था वा । उपसंहाररूपत्वात् सर्ववेदसारत्वाच्चोपनिषदाम् । मीमांसाशास्त्रं वा वेदान्तः । सर्वकर्मणां भगवति सन्यासः, भगवानेव सर्वाणि कर्माणि करोतीति, भगवत्पूजेति च ।

---

१. 'ब्रह्मलोके तु' इति केचित्। २. 'परामृताः' इति, 'परानृतात्' इति च पाठान्तरम्।
३. 'न शङ्क्यम्' ख.

काम्यकर्मन्यासश्च सन्न्यासः। 'मयि सर्वाणि कर्माणि सन्न्यस्य' [३.३०] इति, 'काम्यानां कर्मणां न्यासं सन्न्यासं कवयो विदुः' [१८.२] इति च गीतासु। एतेन 'भगवति सर्वकर्मार्पणं सन्न्यास इति शास्त्रविरुद्धम्' इति स्वयमेव गीतादिसर्वशास्त्रविरुद्धं वदन्नुपेक्ष्यः। सन्न्यासाख्याद् योगादुपायाद् विशुद्धान्तः-करणाः, निरन्तरं **यतयः** प्रयतनशीलाः ये भवन्ति **ते सर्वे** सत्यलोकेषु स्थित्वा, ब्रह्मण आयुः परकाल उच्यते, ब्रह्मकल्पान्ते **परामृतात्**, ल्यब्लोपनिमित्ता पञ्चमी, परामृताख्यं वैकुण्ठं प्राप्य। देवा अप्यमरा उच्यन्त इति परेति विशेषणम्। परामृतस्य विष्णोरनुग्रहाच्च परिमुच्यन्त इति। मुक्तिश्च न मोच्यशक्त्या किन्तु मोचकशक्त्येति '**परिमुच्यन्ति**' इत्याह। तदेव '**परामृतात्**' इति विवृतम्। यद्यपि ब्रह्मलोक एक एव। तथाऽपि स्थानभेदविवक्षया बहुवचनोपपत्तिरित्याह– **ब्रह्मलोकेऽभीष्टदेशेषु**। मन्त्रोऽयं नारायणोपनिषद्यपि पठ्यते 'ब्रह्मलोके तु' इति पाठभेदेन। अत्र द्वितीयपादो द्वादशाक्षर इति एकाक्षराधिका त्रिष्टुबेव॥ ६॥

**गताः कला पञ्चदश प्रतिष्ठा**
**देवाश्च सर्वे प्रतिदेवतासु।**
**कर्म्माणि विज्ञानमयश्च आत्मा**
**परेऽव्यये सर्व एकीभवन्ति[1]** ॥ ७॥

**(भा.)** 'अविरोधश्च सादृश्यादेकदेशस्थितिस्तथा।
'एकीभावस्त्रिधा प्रोक्तो नैकीभावः स्वरूपयोः।
'कुतो भूतस्य भवनं स्वरूपस्यैक्यमेव हि॥
'अतो नदीनां जीवानां विरुद्धानां नृणामपि।
'अब्धिना हरिणा चैव तथैव च नरान्तरैः॥

---

१. 'एकं भवन्ति' इति च।

**'एकीभावस्तु संश्लेषो विरोधस्य च वर्ज्जनम् ।**
**'स्वरूपैक्यं कुतस्तेषां नित्यभिन्नस्वरूपिणाम् ॥**

**'हरेरपि स्वरूपाणामेकीभावो यदोच्यते ।**
**'संश्लेष एव सिद्धत्वात् स्वरूपैक्यस्य नो भवः'** इति च ॥

**(टी.) 'गताः कलाः–'** इत्यादिना मुक्तजीवानां परमात्मना स्वरूपैक्योक्तिमाशङ्क्य परिहरति– **अविरोधश्चेत्यादिना** महावराहवचनेन । इह जीवेशयोर्विधीयमान **एकीभावस्त्वविरोधादिरूपेण त्रिधा प्रोक्तः । न हि तत्स्वरूपयोरेकीभावो** युक्तः । [1]अनुभवादिविरोधात् । इदानीं भेदानुभवेऽपि मुक्तावभेदः स्यादिति चेत् सतोऽसत्त्वमपि तद्वत् स्यात् । मानाभावसाम्यात् । अथ पूर्वमपि परेणैकीभूत एव जीवो मुक्तावप्येकीभवतीति ब्रूम इति चेत्, मैवम् । **कुतो भूतस्य भवनं** मृतस्य मरणं वा सम्भाव्येत । स्वरूपस्य स्वेनैक्यमित्येवोच्यत[2] इति चेत्, भवतु नाम । किं नश्छिन्नम् । **'स्वरूपस्यैक्यमेव हि'** इति वचनात् । नहि देवादिजीवानां परमात्मस्वरूपत्वे किञ्चिन्मानम् । [3]नचेयमेव श्रुतिरत्र प्रमाणम् । **'परेऽव्यये'** इति व्यधिकरणत्वेन भेदोक्तेः । अन्यथा 'देवादयः परो भवन्ति' इति [4]सामानाधिकरण्येन श्रुत्युक्तिः स्यात् । **अतो नदीनामित्यादिना** श्रुत्यभिप्रेतार्थं दृष्टान्तप्रकटनपूर्वकं निगमयति । **अतः** स्वरूपैक्यासिद्धेः **नदीनामब्धिना जीवानां हरिणा विरुद्धानां नृणां नरान्तरैश्चैकीभावो** नाम **संश्लेषो** विरोधवर्जनं चेत्येतदेव । स्वरूपैक्यस्य भूतस्यापि भवनं भगवद्रूपेषु दृष्टं हीत्यत आह– **हरेरपीति** । अभूतस्यैव भवनमित्यङ्गीकारे खपुष्पाद्युत्पत्तिः केन निवार्यत इति चेत् कारणराहित्यादित्यविरोधः । कारणादेव हि कार्योत्पत्तिर्दृष्टा । नच जीवब्रह्मैक्योत्पत्तौ कारणं निरूपणीयम् । द्वैतापत्तेः ॥ ॥

---

१. 'अनुभवविरोधात्' क.
२. '–क्यमुच्यत–' क.
३. 'नचेयं श्रुतिरेवात्र' क.
४. 'सामानाधिकरण्यश्रुतिः' क.

**(भा.चं.)** **'परेऽव्यये सर्व एकीभवन्ति'** इति श्रुतौ जीवानां तत्वाभिमानिदेवानां च परमात्मन्येकीभाव उच्यते। तत् कोऽयमेकीभावो नाम? यः पुनरभूत्वा भवति। अभूततद्भावे हि च्विर्भवति। न तावदेकत्वं पदार्थः। कुतः पूर्वमभूतस्य एकत्वस्य पश्चाद् भवनम्? नहि क्वापि भिन्नमभिन्नं भवति। अभिन्नं वा भिन्नम्। तर्हि भूतमेव भवतु। ननु भोः कुतः पुनरिदं भूतस्याभूत्वा भवनं नाम युज्यते? येन च्विप्रत्ययोऽर्थवान् स्यात्। न क्वापि लोके भूतस्य भवनं दृश्यते। किन्त्वभूतमेव घटादिकं भवति। तस्मादेकीभवन्तीति नैक्यं बोध्यते॥

तर्हि कोऽयमेकीभावपदार्थः, योऽयमभूत्वा भवति? अविरोधस्तावत्– पूर्वं कलहायमानाववैरायेताम्, सम्प्रत्येकीभूतौ। तपोवनेषु गावश्च व्याघ्राश्चैकीभवन्ति। एकदेशस्थितिरपि– समरारम्भे सेने एकीभूते। गोष्ठे गाव एकीबभूवुः। उत्सवे ग्राम एकीभवति। एवमभूत्वा भवन्नविरोधः, संश्लेषश्च शब्दार्थः। यद्यपि सादृश्यं न शब्दार्थः। अथापि सादृश्यादपि क्वचिदेकीभावः प्रोच्यते श्रुतौ। यथाऽत्र–**'सर्व एकीभवन्ति'** इत्युच्यते। निरञ्जनत्वादिना सदृशा भवन्तीति ज्ञायते। 'निरञ्जनः परमं साम्यमुपैति' इति श्रवणात्। 'मम साधर्म्यमागताः' इति स्मरणाच्च॥

ननु तर्हि सादृश्यमप्येकीभावशब्दार्थ इत्यायातम्। न शब्दार्थः। लक्षणावृत्त्याऽयमर्थोऽवगम्यते। कुत एतदवगम्यते? प्रयोगादेव। यथाऽविरोधे संश्लेषे चैकीभावशब्दः प्रयुज्यते न तथा सादृश्येऽर्थे। अग्निर्माणवक इत्युच्यते। नाग्निनैकीभूतो माणवक इति। चन्द्रसदृशं मुखमित्युच्यते। न चन्द्रेणैकीभूतं मुखमिति। अत एवोपरिष्टाद् द्वाभ्यामेवोपसंहारः– **'एकीभावस्तु संश्लेषो विरोधस्य च वर्जनम्'** इति। तदेतदुक्तम्– **'अविरोधश्च सादृश्यात्'** इति। अविरोधोऽपि सादृश्यमूलः, एकदेशस्थितिरपि सादृश्यमूला– इति सूचयितुं

मध्ये पाठः । अथापि सादृश्यं न साक्षादेकीभावपदार्थ इति पञ्चम्यन्तता । ल्यब्लोपनिमित्ता चेयं पञ्चमी । सादृश्यं विवक्षित्वाऽपि जीवब्रह्मणोरेकीभाव उच्यत इति ॥

**नदीनामब्धिना एकीभावस्तु संश्लेषः । विरुद्धानां नृणां नरान्तरैः एकीभावस्तु विरोधस्य वर्जनम् । जीवानां हरिणा एकीभावस्तु संश्लेषो विरोधस्य वर्जनं च ।** चशब्देन मुख्यार्थस्य च्विप्रत्ययेन बाधात् सादृश्ये लक्षणया च । स्थानत्रयेऽपि तमेतमर्थविशेषं तुनाऽऽह । **अब्धिना** यथा **तथैव हरिणा च संश्लेषः । नरान्तरैश्च** यथा **तथैव हरिणा च विरोधस्य वर्जनम्** । **'तथैवच'** इति निपातसमुदायश्च समुच्चये भवति । एकीभावो यदोच्यते तदा संश्लेष एवोच्यते । स्वरूपैक्यस्य पूर्वमेव **सिद्धत्वात्** । भूतस्य च **नो भव** इत्युक्तम् ॥ ※ ॥

**(भा.) गताः मुक्ताः प्राणादिपञ्चदशकलारूपदेवाः, अन्ये च प्रतिदेवतासु देवताप्रतिबिम्बभूतासु प्रजासु प्रतिप्रति स्थिताः देवाः सर्वे, कर्म्माणि च, विज्ञानमयो जीवश्च परमात्मनि प्रविशन्ति ॥**

**(टी.)** अथ **'गताः–'** इत्यादिभाष्येण श्रुतेरन्वयं[1] दर्शयति । ये **प्राणादि-पञ्चदशकलारूपदेवाः** स्वंस्वं पदमनुभूय परं विष्णुं **गताः** प्राप्ता **मुक्ता** इति भावः । ये पुनस्तदन्ये **च प्रतिदेवतासु प्रतिष्ठा देवा** इत्यन्वयः । अयं भावः– देवानां **प्रतिबिम्बभूतासु प्रजासु** इन्द्रियादिनियामकत्वेन **प्रतिप्रति स्थिताः** सूर्यादिदेवता इति । त उभयेऽपि कर्मदेवश्च **'विज्ञानमयो' जीवश्च** एते **सर्वे**ऽपि **परमात्मनि 'अव्यय एकीभवन्ति' प्रविशन्तीत्यर्थः** ॥

**(भा.चं.) गता मुक्ता** इति । मूले तावत् केवलं **गता** इति श्रूयते? कुत्र गताः? पूर्वमन्त्रे तावत् 'सर्वं विष्णुं प्राप्य सर्वं तमेवापियन्ति' इत्युक्तम् । तेन

१. 'श्रुत्यन्वयं' क.

**'गताः'** परं विष्णुं **प्राप्ता** इत्यायातम्। तस्मिन् प्रवेशं गता इति च। **'परिमुच्यन्ति'** इति स्फुटं मुक्तवचनम्। तदिदमुक्तम्– **'गताः मुक्ताः'** इति। **'कर्माणि'** इत्येतत् **'कर्मदेवः'** इति व्याचख्यौ। अभिमन्यमानानां बहुत्वाद् बहुवचनम्। यथा–'चक्षूंषि सूर्यः'। **प्रविशन्तीत्यर्थ** इति। तथाहि तत्वप्रदीपे[२.१.१४]–'कर्माणि विज्ञानमयश्चेत्यत्र न स्वरूपैकत्वमुच्यते। कर्मणां तदनभ्युपगमात्' इत्यादि। विष्णुतत्वनिर्णये च–'स्वरूपैक्याभिभाये कर्माणि विज्ञानमयश्चेति न युज्यते। नहि तत्पक्षेऽपि कर्मणां ब्रह्मैक्यं मुक्तावस्ति। निवृत्त्यभिप्राये पञ्चदशकलानामपि समत्वात्' इत्यादि॥ ※॥

**(भा.)** **'प्रतिबिम्वो हरेः प्राणस्तस्य चान्याः कलाः क्रमात्।**
**'कलानां देवता अन्या देवतानां नरा अपि॥**
**'तस्मात् सर्वेऽपि मुक्तेषु नरेषु च नियामकाः।**
**'तिष्ठन्ति नात्र सन्देहः परमात्मनि चाखिलाः'**
**इति मुक्तिविवेके॥**
**'कलाभ्यश्चान्यदेवेभ्यः कर्म्म प्रत्यवरं यतः।**
**'कलाभ्यः पृथगुक्तं तत् पुष्करः[1] कर्म्म चोच्यते' इति च॥**

**(टी.)** **'प्रतिबिम्बो हरेः–'** इत्यादिना मुक्तिविवेकवाक्येन[2] तेषां विशेषं दर्शयति। कर्मकला प्राणादिभ्यः किमिति पृथगुक्तेत्यत आह– **कलाभ्यश्चेति**। **कलाभ्यः** प्रत्येकमप्यवरं **कर्म**। पुष्कराख्यो वरुणपुत्रस्तद्देवता॥

**(भा.चं.)** भाष्ये-- **तस्य** प्राणस्य **चान्याः** कलादेवताः रुद्राद्याः प्रतिबिम्बाः। स च बिम्बबिम्बिभावः क्रमात् तारतम्यक्रमेणैव भवति। कलादेवतानां च तदन्यास्ततोऽवराः वसुरुद्रादित्यमरुदादयो नवकोटयश्च देवानां प्रतिबिम्बाः। तासामपि **नराः** प्रतिबिम्बा इति। यस्मात् देवतानां **नराः** प्रतिबिम्बाः **तस्मात् सर्वेऽपि** देवा मुक्तेष्वपि बिम्बतया **नियामका-**

१. **'पुष्करं कर्म'** इति प्राचीनादर्शे। स्खलितं स्यात्। २. **'वचनेन'** ख.

**स्तिष्ठन्ति** । परमात्मनि च प्रतिबिम्बतया नियम्यास्तिष्ठन्ति । **अखिला** मुक्ता नराश्च देवाश्च । प्रत्यवरशब्दार्थमाह– **प्रत्येकमप्यवरमिति** । सर्वावरमित्यर्थः ॥ ॐ ॥

**(भा.) अन्यथा गता भविष्यन्तीत्यद्ध्याहारो दोषः । नच मूलरूपाणि प्रतिदेवता इत्युच्यन्ते देवानाम् । प्रतिरूपशब्दवद्धि प्रतिदेवताशब्दः । 'विज्ञानात्मा सह देवैश्च सर्वैः प्राणा भूतानि सम्प्रतिष्ठन्ति यत्र', 'इमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति', 'यथा सोम्येमाः समुद्रायणाः' इति नदीदृष्टान्तपूर्वकं पुरुषप्राप्तिकथनाच्च मुक्ता देवता एवोच्यन्ते । 'स प्राणमसृजत' इत्यादेश्च पुरुषो भगवान् ॥ ॐ ॥**

**(टी.)** अत्र पुनः परकीययोजनां दूषयति– **अन्यथेति** । कलानां निवृत्तिर्भवेदित्यर्थाङ्गीकारे **गता** भवन्तीति वृथाऽध्या**हारो** नाम दोषः स्यात्, अध्याहारकारणादृष्टेः । तासु प्रतिष्ठिता देवताश्च स्वस्वमूलरूपेषु गता भवन्तीत्यत्रान्योऽपि दोषः स्यादित्याह– **नचेति** । **नच** देवतानां **मूलरूपाणि प्रतिदेवता इत्युच्यन्ते**[1] । अर्थान्तरत्वापत्तेः[2] । **प्रतिरूपशब्दवत्** प्रतिबिम्बवाचको **हि** देवतानां **प्रतिदेवताशब्दः** प्रवृत्तः । प्रतिवीरवच्चेद् विरुद्धापत्तेः । मूलरूपेषु प्रत्येकमिति वक्तुं प्रतिशब्द इति चेदेकस्यापि देवस्य मूलरूपाणि वहूनि सन्तीत्यनिष्टापत्तिरेव स्यात् । नहि स्वस्वमूलरूपेष्वित्युक्तं भवतीत्यर्थः । अतः **प्रतिदेवतास्वि**त्युक्ते देवताप्रतिबिम्बभूतास्वित्येवार्थो निश्चीयते । एवं चात्र कलाशब्देन मुक्तियोग्या देवा एवोच्यन्ते । न निवृत्तियोग्या जडा इति सिद्धम् । **'विज्ञानात्मा–'** इत्यादिश्रुत्यन्तैरप्येतदेव दृढयति । कलानां पञ्चदशत्वं षोडशत्वं च संख्यानभेदाद् युज्यते । **'षोडशकलाः पुरुषं प्राप्य'** इति भगवत्प्राप्तिकथनाच्च मुच्यमानदेवता एवैता इति गम्यते । नन्विमाः कलाः पुरुषं संसारिजीवं प्राप्य तच्छरीरमाश्रित्य स्थित्वा तन्नाशे पुनरपगच्छन्ति । देवानां

---

१. '–देवता उच्यन्ते' क.                                        २. 'अर्थान्तरापत्तेः' क.

तु स्वमूलरूपं गत्वा परमात्मनैकीभावोपपत्तेरित्यत आह– **'स प्राणम्–'** इत्यादि । 'स ईक्षाञ्चक्रे' इत्याद्युक्त्वा **'स प्राणमसृजत'** इत्यादिवचनाच्च सर्वस्रष्टुः परस्यैव प्रकरणत्वात् **पुरुषो भगवानेव** । अस्तगतिर्देवानां विष्णावन्तःप्रवेश एव नदीनामिव समुद्रे ॥ ७ ॥

**(भा.चं.) वृथाऽध्याहारो नाम दोषः स्यादिति** । ननु नायमध्याहारः । नापि वृथा । तथाहि विपश्चितो भाषाशास्त्रविदोऽभ्युपयन्ति । यदाह पतञ्जलिः– 'अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्तीति गम्यते' इति । तस्माद् 'गताः' इत्युक्ते 'गता भवन्ति' इत्येवोक्तं भवति । नन्वस्तिरेव तत्र पठ्यते न भवतिः? मा पाठि । उपलक्षणीयं भवति न्यायसाम्यात् । तथाच भवतिरपि भवन्तीपरोऽप्रयुज्यमानोऽप्यस्तीति गम्यते । अस्तु नाम 'गता भवन्ति' इति भवन्तीपरः । नतु 'गता भविष्यन्ति' इति भविष्यन्तीपरः । अत एवोक्तं भाष्ये– **'गता भविष्यन्तीत्यध्याहारो दोषः'** इति । वस्तुतस्तु सर्वमिदं मुखचापलं प्रियतर्काणाम् । अन्य एव 'अस्तिर्भवन्तीपरः' इत्यादेर्विषयः । अन्य एवात्र प्रसङ्गः । तथाहि– यत्र वर्तमानव्यपदेशो विवक्षितस्तत्राप्रयुज्यमानोऽप्यस्तिरस्तीति गम्यत इति 'अस्तिर्भवन्तीपरः' इत्यादिनयस्याऽशयः । नहि 'पुरा किलायं दुःखितः' इत्युक्ते अस्तीति गम्यते । किन्त्वासीदित्येव । नहि 'श्वः किलायं गृहस्थः' इत्युक्ते अस्तीति गम्यते । किन्तु भविष्यतीत्येव । एवं 'गताः' इत्युक्ते भूतकालावच्छिन्नगत्याश्रयत्वमेव किल क्तेन बोध्यते । नतु भविष्यत्कालावच्छिन्नगत्याश्रयत्वम् । ऐक्यसाक्षात्कारे सति सर्वा अपीमा जडकला निवृत्ता भविष्यन्तीति किल परेषामभिलषितोऽर्थः । सोऽयमर्थः क्तेन तावन्न कथञ्चिद् बोध्यते । अतोऽनिच्छतोऽपि स्वाभिमतार्थलाभाय 'गता भवन्ति' इति वा, 'गता भविष्यन्ति' इति वाऽध्याहार एव शरणं परस्य । तेन श्रुतस्य अतीतत्वस्य त्यागः, अश्रुतस्योत्तरकालीनत्वस्य स्वीकारश्चेति द्वे शिरोभूषणे तस्य भवतः । प्राणः श्रद्धा पञ्चभूतानि इन्द्रियग्रामः मनः अन्नं वीर्यं तपो मन्त्रा

लोका नाम च पञ्चदश कलाः । कर्मणा सह षोडश । **'स प्राणमसृजत ।** प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नमन्नाद् वीर्यं तपो मन्त्राः कर्म लोका लोकेषु नाम च' [ष.उ.६.४] इति हि श्रुतिः । जीवकलामानी मुख्यप्राणः, श्रद्धामानिनी भारती, मनोमानी रुद्रः, इन्द्रियमानी इन्द्रः, अन्नमानी सोमः, वीर्यमानी वरुणः, तपोमानी वह्निः, आकाशमानी विनायकः, वायुमानी प्रधानवायुपुत्रो मरीचिः, तेजोमानी प्रधानाग्निपुत्रः पावकः, लोकमानी पर्जन्यः, मन्त्रमानिनी स्वाहा, जलमानी बुधः, नाममानिनी अश्विभार्या उषाः, पृथिवीमानी शनिः, कर्ममानी वरुणपुत्रः पुष्करश्चेति कलादेवताः ॥

**'विज्ञानात्मा सह देवैश्च सर्वैः प्राणा भूतानि सम्प्रतिष्ठन्ति यत्र** । तदक्षरं वेदयते यस्तु सोम्य स सर्वज्ञः सर्वमेवाऽविवेश' [४.११] इति षट्प्रश्नोपनिषदि । **'इमाः षोडशकलाः–'** [६.५] इति च । **'यथा सोम्येमाः–'** [६.५] इति च । 'स यथेमा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति' इत्युपनिषत्पाठः साम्प्रतः । भाष्ये तु आर्थिकं प्रतीकग्रहणं स्यात् । समाख्यानरूपं श्रुत्यन्तरं वा स्यात् । एवमन्यत्रापि । 'स ईक्षाञ्चक्रे । कस्मिन् न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि । कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामीति । **स प्राणमसृजत'** [६.३–४] इत्यादि तत्रैव । 'गताः कलाः' इति केवला त्रिष्टुप् । **'विज्ञानमयश्चऽआत्मा'** इति विवृत्तिस्तस्येतरकलाभ्यो वैलक्षण्यमाह । चेतनात्मकत्वात् षोडश्याः कलायाः । जडत्वादितरासाम् ॥ ७ ॥

**यथा नद्यः स्यन्दमानाः समुद्रेऽ-**
**स्तं[१] गच्छन्ति नामरूपे[ऽ]विहाय ।**
**तथा विद्वान् नामरूपाद् विमुक्तः**
**परात् परं पुरुषमुपैति दिव्यम्** ॥ ८ ॥

---

१. **'समुद्रे अस्तम्'** इति विश्लिष्यैव केचित् पठन्ति ।

**(भा.)** ‘अगम्यनामरूपत्वादमुक्तैर्म्मुक्तिगा नराः ।
‘विहीननामरूपास्तु नतु तद्रहितत्वतः ॥
‘अशरीरो यथा वायुः सामान्यागम्यदेहतः ।
‘एवं नद्यः समुद्रस्थाः सामान्यागम्यरूपतः’ इति च ॥
‘स्वकीयमुदकं नद्यः समुद्रे नैव जानते ।
‘वायुस्तु तत् पृथग् ज्ञात्वा मेघे कृत्वा प्रवर्षति’ इति च ॥

विमुक्त इत्यमुक्त इत्यर्थः । विप्रिय इतिवत् । अविहायेति च । ‘अनन्तं वै नाम’ इति च श्रुतिः ॥ * ॥

**(टी.)** अत्रापि परे प्रवेश एव देवानामित्येतन्नदीदृष्टान्तादेव दर्शयति– **यथा नद्य** इति । अस्य वाक्यस्याभिप्रायं **‘अगम्यनामरूपत्वात्–’** इत्यादिना मुक्तिविवेकवाक्येन स्पष्टीकरोति । मुक्तानां नदीनां च विलक्षणानां विलक्षणनामरूपे वायुदेहमिव इतरे न जानन्तीत्यत्रोक्तम् । अथ यद्यपि मुक्ताः सार्वज्ञ्यात् स्वकीयं नामरूपादिकं सम्यग् जानन्ति । तथाऽप्येता नद्यः स्वंस्वमुदकं स्वयं न जानन्तीत्याह– **स्वकीयमुदकमिति** । नामरूपाभ्यां विमुक्तिरेव हि मुक्तानां [1]स्पष्टोक्तेत्याशङ्क्याऽह– **विमुक्त** इत्यादि । अत्र तु **विमुक्त इत्यमुक्त** उच्यते । वीत्युपसर्गस्य **विप्रिय** इत्यादिवन्निषेधार्थत्वात् । नच नामरूपे विहायेति दृष्टान्तोक्तिविरोधः । तत्रापि **अविहायेत्येवाभिप्रेतत्वात्** ।अप्रग्रहस्तु पृथगभिमानाविहान[2]ज्ञापनार्थः । ‘सम्भृतिद्युव्याप्त्यपि–’ इत्याद्युक्त[3]न्याय-स्यात्रापि सम्भवात् । एवं च स्थूलस्यैव नामरूपादेर्विहानं न सूक्ष्मस्येत्यर्थः । अत्र **‘अनन्तम्’** इति श्रुतिमप्याह । नामादेरविनाशित्वं ह्यनन्तत्वम् ॥ ८ ॥

**(भा.चं.)** **‘नामरूपे विहाय’** इति, **‘अविहाय’** इति च प्रतृण्णमभ्युपेत्य व्याचष्टे । पृथगगोचरतया तदपेक्षया **नामरूपे विहाय**, वायुगम्यत्वाद् वस्तुतो

---

१. ‘स्पष्टोक्तेरित्याशङ्क्याऽह’ ख. २. ‘–मानापहान–’ क.
३. ‘न्यायेनास्यात्रापि’ ख.

**नामरूपे अविहायेति**। एवममुक्तापेक्षया, तैरविज्ञातनामरूपत्वात् स्थूलाभ्यां नामरूपाभ्यां **विमुक्तोऽपि** वस्तुतो नामरूपाभ्याम**मुक्तः** सूक्ष्मयोर्नामरूपयोरविहानादिति। नामसहितं रूपं नामरूपम्, तस्मात्। 'सम्भृतिद्युव्याप्ती अपि' इति प्रयोक्तव्ये **'सम्भृतिद्युव्याप्त्यपि चातः'** [ब्र.सू.३.३.२४] इत्यप्रगृह्यासूत्रयत्। तद्वदिहापि 'नामरूपे अविहाय' इति वक्तव्ये **'नामरूपेऽविहाय'** इत्यप्रगृह्य बोधयति श्रुतिः। ननु विषम उपन्यासः। सूत्रे किलाप्रग्रहोऽर्थवान्। उक्तं च तत्वप्रदीपे–'अपिशब्दाद् वीर्यैश्वर्यादयोऽपि ग्राह्याः। द्वित्वमात्रव्यावृत्त्यर्थं किलाप्रगृह्यासूत्रयत्' इति। अत्र तु किं प्रयोजनम्, ऋते बोद्धॄणामर्थविभ्रमात्? उभयविधप्रतृण्णलाभ एव महदिह प्रयोजनमिति जानीहि–विहायेति, अविहायेति। तदिदं स्फुटम्–**'अगम्यनामरूपत्वात्–'** इत्यादौ भाष्योदाहृते मुक्तिविवेकवचने। तदेतदाह– एवञ्चेत्यादिना। आगन्तुकं रूपं तन्नाम चानित्यं स्थूलम्। आगमापायि तत्। यत्स्वरूपं तन्नाम च नित्यं सूक्ष्मम्। सदातनं हि तत्। अत्र पूर्वार्द्धे पादयोः 'समुद्रे अस्तं' इति विश्लेषेण विषमपादयोस्त्रिष्टुप्, समपादयोर्जगती ॥ ८ ॥

**स यो ह वै तत् परमं ब्रह्म वेद ब्रह्मैव भवति।**
**नास्याब्रह्मवित् कुले भवति ॥ ९ ॥**

**(भा.) 'परं ब्रह्म विदित्वा तु बृंहितः स्यात् स्वयोग्यतः।**
**'नायोग्यं किञ्चिदाप्नोति कुत एव हरेर्गुणान्' इति च ॥**
**'ब्रह्मत्वं बृंहितत्वं स्याज्जीवानां न परात्मता।**
**अस्वतन्त्रस्य जीवस्य कुतो नित्यस्वतन्त्रता' इति स्कान्दे ॥**

**'यत्रामृतः स पुरुषो ह्यव्ययात्मा', 'यत्र तत् सत्यस्य परमं निधानम्', 'अमृतस्यैष सेतुः', 'शरवत् तन्मयो भवेत्', 'ब्रह्म तल्लक्षमुच्यते', 'निरञ्जनः परमं साम्यमुपैति' इत्यादिना मुक्तस्य सर्वत्र भगवत्सकाशाद् भेद-**

स्यैवोक्तत्वाच्च। 'मुक्तोपसृप्यव्यपदेशात्', 'जगद्व्यापारवर्ज्जम्', 'प्रकरणादसन्निहितत्वाच्च' इत्यादिना भगवताऽपि सर्वत्र भेदस्यैव सूचितत्वात् । 'न ते महित्वमन्वश्नुवन्ति', 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा',

'ब्रह्मेशानादिभिर्द्देवैर्यत् प्राप्तुं नैव शक्यते ।
'तद् यत्स्वभावः कैवल्यं स भवान् केवलो हरे' इत्यादेश्च ॥

**(टी.)** **'स यो ह वै तत्–'** इत्यत्र ब्रह्मविदस्तद्भावोक्तिमाशङ्क्य परिहरति– **'परं ब्रह्म–'** इत्यादिना मुक्तिविवेकवाक्येनैव। नहि घटादिज्ञानी तद्द्रष्टा श्रोता वक्ता वा तद्भावमाप्नोतीत्यभिप्रायेण नायोग्यं किंचिदाप्नोतीत्याह। परब्रह्मवित् तत्प्रसादात् यथायोग्यं बृंहित एव भवेदित्यर्थः । अत्रापि **'यत्रामृतः स पुरुषः–'** इत्यादिबहुवाक्यैर्मुक्तजीवस्य **सर्वत्र भगवत्सकाशात् भेदस्यैवोक्तत्वाच्च** नास्य परब्रह्मत्वम्। **'मुक्तोपसृप्यव्यपदेशात्'** **इत्यादिना** बादरायणेन **भगवताऽपि** अनयो**र्भेदस्यैव सूचितत्वाच्च** नाभेदोऽतिशङ्क्यः[1]। **'न ते महित्वम्–'** इत्यादिश्रुतिभ्यश्च[2] ॥ ✻ ॥

**(भा.चं.)** **परमं ब्रह्म** विदन् स्वयं **ब्रह्मैव** बृंहित एव **भवति**। नतु परमं ब्रह्म भवति। इति **ह वै** सर्वशास्त्रसम्मतं सर्वज्ञानिगणसम्मतं च। एवं परिस्फुटमपि श्रुतिवचनं भ्रान्तिपिहितनयना विपरीतमेव गृह्णन्ति। अतः श्रुत्यभिमतेऽर्थे बहुप्रमाणसंवादमाह । अस्यामुपनिषदि **'यत्रामृतः स पुरुषो ह्यव्ययात्मा'** [१.२.११] इत्यारभ्य **'यत्र तत् सत्यस्य–'** [३.१.६] इति, **'अमृतस्यैष सेतुः'** [२.२.६] इति, **'शरवत् तन्मयो भवेत्'** [२.२.५] इति **'ब्रह्म तल्लक्षमुच्यते'** [२. २.५] इति, **'निरञ्जनः परमं साम्यमुपैति'** [३.१.३] इति आऽऽदित आऽन्तं **मुक्तस्य भगवत्सकाशाद् भेदस्यैवोक्तत्वात्,** तद्विरोधेनोपसंहारे **'ब्रह्मैव भवति'** इत्यभेदवचनासम्भवात्। नहि स्वोक्तमेव विस्मृत्य स्वव्याहतं श्रुतिर्वक्तीति वक्तुं युक्तम्। ब्रह्मसूत्राणि चैतमेवार्थं समर्थयन्ते – **'मुक्तोपसृप्य-**

---

१. 'नाभेदः शङ्क्यः' क.
२. '–श्रुतिस्मृतिभ्यश्च' इति पाठः स्वरसः।

**व्यपदेशात्'** [१.३.२] इत्येतदुपनिषदर्थनिर्णयायैव प्रवृत्तं सूत्रम्– 'अमृतस्यैष सेतुः' इति स्फुटं मुक्तप्राप्यत्वव्यपदेशादिति। **'जगद्व्यापारवर्जम्'** [४.४.१७], **'प्रकरणादसन्निहितत्वाच्च'**[४.४.१८] इति च सर्ववेदार्थनिर्णयोपसंहारः– मुक्तोऽपि जगद्व्यापारे न व्याप्रियते, यत्र क्वापि जीवस्य सर्वकामावाप्ति-रुच्यते तत्रापि जीवप्रकरणात् जगद्व्यापारं वर्जयित्वैवान्यान् कामाना-प्नोतीति व्याख्येयम्। नहि जीवे सृष्ट्यादिसामर्थ्यसन्निधानम्। नच तावता मुक्तजीवे कामहतिरपि शङ्कनीया। असन्निधानादेव निषिद्धकामानां मुक्ते। 'परो मात्रया तन्वा वृधान न ते **महित्वमन्वश्नुवन्ति'** [ऋ.सं.७.९९.१.] इत्यैतरेयशाखायाम्। **'सोऽश्नुते सर्वान् कामान्त्सह ब्रह्मणा** विपश्चिता' इति तैत्तिरीयशाखायाम्। **'ब्रह्मेशानादिभिः–'** इति स्कान्दवाक्यमिति सूत्रभाष्ये स्थितम्। व्याख्यातश्चायं मन्त्रस्तत्वप्रदीपे [२.३.२९]–'स यो हवै तत् परमं ब्रह्म वेद ब्रह्मैव भवतीति च सादृश्यमेव विवक्षितम्। 'सम्पूज्य ब्राह्मणं भक्त्या शूद्रोऽपि ब्राह्मणो भवेत्' इतिवत्। 'नच ब्राह्मणपूजकः स एव ब्राह्मणो भवति' इत्युक्तं हि भगवत्पादैरेवान्यत्र[1]। यः परमं ब्रह्म वेद स बृंहित एव भवति, नतु तत् परमं ब्रह्म भवतीति ह्यर्थोऽवगम्यते। अन्यथा 'परात् परं पुरुषमुपैति दिव्यम्' इति पूर्ववाक्यविरोधाच्च' इत्यादि ॥ ※ ॥

**(भा.) 'मुक्तेभ्योऽपि मनुष्येभ्यो देवा एव गुणाधिकाः।**
**'तेभ्यो वायुस्ततो विष्णुः परिपूर्णगुणः सदा ॥**
**'ये त्वेदन्यथा विद्युस्ते हि यान्त्यधरं तमः।**
**'ये त्वेतदेवं जानन्ति ते यान्ति परमं हरिम्' इति च ॥**

**(टी.)** मुक्तानां भेदे सत्यपि तारतम्यं नास्तीत्याशङ्क्याऽह– **मुक्तेभ्योऽ-पीत्यादि**। मुक्तानामभेदं साम्यं वा जानन्त**स्तम** एव **यान्ति**। सम्यग्ज्ञानिनो मुक्तिमेव यान्ति। एतदपि स्कान्दे प्रोक्तम् ॥ ※ ॥

---

१. अन्यत्र विष्णुतत्वनिर्णये।

**(भा.चं.)** मुक्तौ सर्वमेकमिति वादिनो निरस्ताः। सत्यमनेके मुक्ताः। अथापि सर्वे समाना इति वादिनामपि स्कान्देनैवोत्तरमाह– **मुक्तेभ्योऽपि**। तेभ्यो देवेभ्यो **वायुः** गुणाधिकः। सर्वमप्याधिक्यं साधिक्यम्। **विष्णुः** पुनः **सदा** सर्वैरपि गुणैः सर्वेभ्योऽप्यधिकः। अधिकान्तररहितत्वे सति पूर्णत्वं हि परिपूर्णत्वं नाम ॥ ※ ॥

**(भा.)** **'देवानां सन्ततौ जाताः प्रायशो ज्ञानिनः कृते।**
**'बलवद्धेतुतश्चात्र यस्माद् ब्रह्मविदः सुराः॥**

**'नाऽसंस्ततोऽब्रह्मविदो नराणां ज्ञानिनामपि।**
**'प्रायशः स्युः सुराणां च नियमोऽयं कृते युगे॥**

**'तस्मात् स भगवान् विष्णुर्ज्ञेयः सर्वोत्तमोत्तमः।**
**'सदा सर्वगुणैः पूर्णो योऽनन्तः पुरुषोत्तमः'** [इति च[1]]

॥ ※ ॥

**(टी.)** **'देवानां सन्ततौ–'** इत्यादिना **'नास्याब्रह्मवित्–'** इत्यस्याभिप्रायमाह[2]। वरस्वीकारादि**बलवद्धेतुतश्च** केचिज्ज्ञानिनो भवन्ति। देवानां मुख्यतो ब्रह्मवित्त्वात् तत्सन्ततौ **अब्रह्मविदो** न **स्युः** ॥ ९ ॥

**(भा.चं.)** **वरस्वीकारादिबलवद्धेतुतश्च** 'अत्र' कृतयुगे **केचिज्ज्ञानिनः भवन्ति। 'यस्मात्'** मुख्यतो **'ब्रह्मविदः सुराः'**, ततः तस्मात्, **ततः** तत्र तत्सन्ततौ, **'अब्रह्मविदः नाऽसन्'** न **स्यु**रपि। **नराणां ज्ञानिनामपि** कुले **प्रायशोऽब्रह्मविदो न स्युः**। किमुत **सुराणाम्**। **नियमोऽयं** विशिष्य **कृते युगे**। कृतयुगधर्मानुवर्तनार्थं सर्वेष्वपि युगेषु सज्जनै**र्विष्णुः सर्वोत्तमोत्तमो ज्ञेय** इति। **योऽनन्तः** कालतो देशतः शक्तितश्च। अत एव क्षराक्षरपुरुषाभ्या-

---

१. प्राचीनादर्शे 'इति च' इति न पठ्यते।

२. **'इत्यस्यार्थमाह'** ख.

मुत्तमः । 'स यो ह्वा—' इति पद्यगन्धि गद्यं भवति । आर्षी चेयमुष्णिक् त्रिपदा । आनुष्टुभः प्रथमः पादः । 'ब्रह्म वेद ब्रह्मैव भवति' इति द्वितीयः पाङ्क्तः । तृतीयश्च । संहत्य चाष्टाविंशतिरक्षराणीत्यपूर्वेयमुष्णिक् ॥ ९ ॥

**तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति ॥ १० ॥ तदेष श्लोकः[१]—**

**क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः**
**स्वयं जुह्वत एकर्षिं श्रद्धयन्तः ।**
**तेषामेवैतां ब्रह्मविद्यां वदेत**
**शिरोव्रतं विधिवद् यैस्तु चीर्णम् ॥११॥**

**तदेतत् सत्यमृषिरङ्गिराः प्रोवाच[२] नैतदचीर्णव्रतोऽधीते[३] ।**
**नमः परमऋषिभ्यो नमः परमऋषिभ्यः ॥ १२ ॥**

इति तृतीयमुण्डके द्वितीयः खण्डः
इत्याथर्वणोपनिषत् समाप्ता

—०—

ॐ ॥ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ॥
स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥
ॐ शान्तिः शान्तिः शान्तिः ॥

—०—

१. 'तदेतदृचाऽभ्युक्तम्' इति रङ्गरामानुजादिसम्मतः पाठः । २. 'पुरोवाच' इति पाठान्तरम् ।
३. इतः परं क्वचित्— 'नाकृतपावनः । नासन्न्यासी च' इत्यधिकं पठ्यते ।

**(भा.चं.)** तरतीत्यादि गद्यम्। अथापि चतुर्विंशत्यक्षरेति भवेदार्ची अनुष्टुब् वा । **गुहाग्रन्थिभ्यः** अज्ञानरूपेभ्यः । **ब्रह्मनिष्ठाः** वेदेष्वधीतिनः, तत्रापि समस्तवेदानां ब्रह्मपरतानुसन्धानबद्धदीक्षाः, अथच वेदोक्तकर्म्मानुष्ठाननिरताः। एतेन विद्याकर्मणोर्नैकत्रावस्थानं गोव्याघ्रयोरिवेति रटन्तः परास्ताः। य एकर्षिनामकमाथर्वणिकानामाग्निं प्रति **स्वयं जुह्वते**। मुख्यतस्तु एकर्षिनामन्यग्नौ गतो भगवानेवैकर्षिः। प्रधानज्ञानरूपत्वात्। तत्प्रीतिं कामयमाना जुह्वति। चतुर्वेदसंस्काररूपं शिरोव्रतमन्यत्। शिरसि तप्ताङ्गारधारणरूपमाथर्वणिकानां शिरोव्रतमन्यदित्युक्तं पुरस्तादेव । मन्त्रोऽयं प्रथमचरमपादयोरेकादशाक्षरः। इतरयोर्द्वादशाक्षरः। तेन विराट् जगती वा स्वराट् त्रिष्टुप् वा। तदेतदित्यादि चरमं च वाक्यं गद्यमिति न च्छन्दश्चिन्ता। अथापि पद्यगन्धीनि यजूंषि भवन्ति। तदेतदित्यादि द्वाविंशतिरक्षराणीति साम्नी त्रिष्टुब् भवति । ‘नमः परमऋषिभ्यः’ इत्यादि च साम्नी अनुष्टब्। **परमऋषिभ्यः** पूर्णज्ञानरूपेभ्यो भगवद्रूपेभ्यस्तद्विद्भ्यो महर्षिभ्यश्च । द्विरुक्तिरुक्तं सर्वमर्थजातमवधारयन्ती ग्रन्थसमाप्तिं द्योतयति ॥ १०-१२ ॥

**(भा.)** **प्रीयतां भगवान् मह्यं प्रेष्ठप्रेष्ठतमः सदा ।**
**मम नित्यं नमाम्येनं परमोदारसद्गुणम्** ॥ * ॥

**इति श्रीमदानन्दतीर्थभगवत्पादकृतमाथर्वणोपनिषद्भाष्यं समाप्तम्**

—०—

**(टी.)** अथेदानीं ग्रन्थावसानेऽप्यनेन कृतेन प्रीयतां नारायण इति प्रार्थयंस्तं नमस्करोति–

**प्रीयतां भगवान् विष्णुर्मह्यं सर्वेश्वरेश्वरः ।**
**भूतभव्यात् समस्तान्मे प्रेष्ठप्रेष्ठतमः सदा** ॥ * ॥

**एनं नारायणं नित्यं नमामि रमया युतम् ।**
**परमोदारनिर्दोषचित्सुखादिगुणार्णवम्** ॥ * ॥

यस्य त्रिरूपाण्युदितानि वायोर्वेदे बलज्ञानवतो बळादौ ।
दशप्रमत्याख्यतृतीयमूर्तिराथर्वणं भाष्यमजे चकार ॥ ॐ ॥

आथर्वणोपनिषदो यदिदं सुभाष्यं
व्याख्याममुष्य विरचय्य यथावबोधम् ।
नारायणार्यवरशिष्य इमां रमेशे
श्रीमध्वपूज्यचरणेऽर्पयदर्पणीयाम् ॥ ॐ ॥

नमोनमो रमेशाय श्रीमध्वाय नमोनमः ।
नमस्त्रिविक्रमार्येभ्यस्तच्छिष्येभ्यो नमोनमः ॥ ॐ ॥

**इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य आथर्वणोपनिषद्भाष्यस्य टीका त्रैविक्रमार्यदासकृता समाप्ता**

—०—

**(भा.चं.)** भाष्यमङ्गलपद्यविवरणरूपं स्वयमपि मङ्गलमाचरति– **प्रीयताम्** । **मम सदा प्रेष्ठप्रेष्ठतमः मह्यं सदा प्रीयताम्** । **तमेनं नित्यं** शाश्वतं नारायणं **नित्यं नमामि** ॥ ॐ ॥ अजे नारायणे समर्पितं चकार । तत्प्रीत्यर्थं च चकार ॥ ॐ ॥ 'श्रीमध्वपूज्यचरणेऽर्पयतेऽर्पणीयाम्' इति पठनीयम् । **'अर्पयत्'** इत्यडभावश्छन्दोऽनुकरणाय वा ॥ ॐ ॥ तच्छिष्येभ्यो नारायणार्येभ्यः ॥ ॐ ॥

रामं मेघश्यामं राक्षसभीमं समस्तजगदभिरामम् ।
श्रीरघुवंशललामं पूरितनिजकामं नमामि धीमन्तम् ॥ ॐ ॥

बालं कुवलयनीलं गोपीलोलं निरस्तभवजालम् ।
दुर्जनभर्जनकालं गुणगणशीलं नमामि मुहुरतिवेलम् ॥ ॐ ॥

नीलोत्पलदलभासं व्यासं व्यासङ्गशीलकृतवासम् ।
अन्तस्तिमिरनिरासं शुभनासं नमामि मृदुहासम् ॥ ॐ ॥

सामध्वनिसदारामकामध्वस्तदुरागमः ।
मामध्वनि रतं कुर्याच्छ्रीमध्वमुनिराड् गुरुः ॥ * ॥

इमामाचार्यगोविन्दः प्रमृष्टां शब्दतोऽर्थतः ।
वितेने विमलां टीकां विनेयजनवाञ्छया ॥ * ॥

**इत्याचार्यगोविन्दस्य कृतिषु आथर्वणोपनिषद्भाष्यटीकापञ्चिका भावचन्द्रिका समाप्ता**



ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः ।




श्रीवामनपण्डिताचार्यविरचितया श्रीमद्भाष्य-
टीकया, आचार्यगोविन्दकृतया उपनिषद्-
भावचन्द्रिकाख्यया तत्पञ्चिकया च समेता



॥ हरिः ओ३म् ॥

भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ॥

स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

## भाष्यम्

ओ३म् ॥ नमो भगवते तस्मै प्राणादिप्रभविष्णवे ।
अमन्दानन्दसान्द्राय वासुदेवाय वेधसे ॥ * ॥

## टीका

नमो भगवते प्राणवागादिप्रभविष्णवे ।
पूर्णानन्दादिदेहाय[1] वासुदेवाय सश्रिये ॥ * ॥

नमोऽस्तु वेदवेदान्तगुरवे सर्ववेदिने ।
व्यासदेवाय दिव्याय मध्वनाथाय चानिशम् ॥ * ॥

सत्तत्वदीपिकाचार्यान् वन्देऽहं परमान् गुरून् ।
नारायणार्यांश्च गुरून् वन्दे सर्वांश्च सज्जनान्[2] ॥ * ॥

षट्प्रश्नोपनिषद्भाष्यं व्याख्यास्यामः स्वशक्तितः ।
श्रीमध्वमाधवप्रीत्यै तदनुग्रहशक्तितः ॥ * ॥

---

१. 'पूर्णानन्दात्मदेहाय–' ख.

२. 'वन्देऽहं सर्वसज्जनान्' क.

अथ श्रीमदानन्दतीर्थभगवान् एतद् भाष्यमारभमाणः **'नमो भगवते तस्मै'** इत्यादिश्लोकेनेष्टदेवतायै वासुदेवाय नमस्करोति मङ्गलाचरणाद्यर्थम्[1] । **'प्राणादिप्रभविष्णवे'** इत्यादीनां वासुदेवात्मकब्रह्मविशेषणानां **'सुकेशा च–'** इत्याद्युपनिषदभिप्रेतार्थग्राहकत्वात्[2] तद्भाष्यमिहाऽरभ्यत इति वस्तुनिर्देशोऽप्यर्थतः कृतः स्यात् । 'आत्मत एष प्राणो जायते' इत्यादावभिप्रेतं हि प्राणादिप्रभविष्णुत्वम् । एवमन्यच्च द्रष्टव्यम् । अत्रैवाधिकार्यादयश्च सूचिता भवन्ति । तथाहि– नमस्कर्ताऽधिकारी । नम्यो विषयः । प्राणशब्देन प्रकृष्टानन्दलक्षणस्य मोक्षस्याभिप्रेतत्वात् तत्प्रभविष्णुरिति प्रयोजनं च सूचितम् । अथ शास्त्रविषयस्य जिज्ञास्यत्वात् तदधिकारिणो जिज्ञासकत्वाच्च जिज्ञास्यजिज्ञासकभावः सम्बन्धो दर्शितः । यत्सम्बन्धात् सुप्तमुक्तयोः सुखं सुश्रुतं[3] च सूत्रितं च स ह्यमन्दानन्दसान्द्रः । सर्वजगतो धारणादिकमपि विधत्त इति वेधा उक्तः ॥ ✻ ॥

## भावचन्द्रिका

षोडशकलासु निहितं पिहितं हृदि सतां हितं हि तं सततम् ।
असतामहितं याचे कृपया मां पाहि भवपतितम् ॥ ✻ ॥

नमामि तं प्राणपतिं सतां गतिं
नमामि तं प्राणमुरुं जगद्गुरुम् ।
नमामि देवीं बृहतीं च भारतीं
त्रिविक्रमार्यं च नमामि संविदे ॥ ✻ ॥

वामनपण्डितरचितां षट्प्रश्नोपनिषद्भाष्यटीकां ताम् ।
कान्तां विवृणोति स्म हि धीमानाचार्यगोविन्दः ॥ ✻ ॥

---

१. 'मङ्गलाद्याचरणार्थम्' क. २. 'इत्युपनिषदर्थग्राहकत्वात्' क.

३. 'सुश्रुतं सूत्रितं च' ख.

मूलं व्याकुर्वन्नेव मङ्गलमाचरति– **नमो भगवते प्राणवागादिप्रभविष्णवे**। वसुदेवता हि श्रीः। तस्या अयं पतिरिति वासुदेव इति भावेनाऽह– **वासुदेवाय सश्रियै**। एतेन **'वासुदेवाय'** इति वदता भाष्यकारेण श्रीरपि नता भवति। **'वेधसे'** इति विशेषणेन च चतुर्मुखादिवाचीनि सर्वाण्यपि पदानि मुख्यतस्तस्यैव नामानीत्याह। न केवलं जगद् विधत्ते, **जगतो धारणादिकमपि विधत्त इति वेधाः**। विपूर्वाद् दधातेर्वेधादेशं हि मन्वते पदविदः– 'विधाञो वेध च' [अष्टा.सू.३.४.२२५] इति॥ ❊॥ मध्वस्य नाथाय **व्यासदेवाय**, व्यासो यस्य देवस्तस्मै मध्वाय च नाथाय **नमः** वेदान्तस्य ब्रह्मसूत्रस्य गुरवे, प्रणयनेन, भाष्यकरणेन वा॥ ❊॥ **सत्तत्त्वदीपिकाचार्यान्** त्रिविक्रमपण्डितान्॥ ❊॥ मध्वमाधवयोरनुग्रहबलतः स्वशक्तिमनतिक्रम्य **व्याख्यास्यामः**॥ ❊॥ **आत्मत एष प्राणो जायत इत्यादाविति**। आदिपदेन 'स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवी–' इत्यादि। 'शान्तमजरममृतम्' इत्यमन्दानन्दसान्द्रत्वम्। वासुदेवः प्रणवप्रतिपाद्यः। असुदेवं वातीति प्राणगश्च। 'एतस्मिन्नेतदाततम्' इत्यादिना वेधस्त्वम्। **प्राणादिप्रभविष्णव** इति मूले **प्राणशब्देन प्रकृष्टानन्दलक्षणस्य**, आदिपदेन च प्रकृष्टज्ञानलक्षणस्य **मोक्षस्य** विवक्षितत्वात् **प्रयोजनं च सूचितं** भवति॥ ❊॥

**ओ३म्॥ सुकेशा च भारद्वाजः शैब्यश्च सत्यकामः सौर्यायणी च गार्ग्यः कौसल्यश्चाऽश्वलायनो भार्ग्गवो वैदर्भिः कबन्धी कात्यायनः। ते हैते ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणाः। एष ह वै तत् सर्वं वक्ष्यतीति ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः॥ १॥ तान् ह स ऋषिरुवाच। भूय एव तपसा ब्रह्मचर्येण श्रद्धया संवत्सरं वत्स्यथ[1]। यथाकामं प्रश्नान् पृच्छत[2]। यदि विज्ञास्यामः सर्वं ह वो**

---

१. 'संवत्स्यथ' इति शाङ्करः पाठः। २. 'पृच्छथ' इति क्वचित्।

वक्ष्याम इति ॥ २ ॥ अथ कबन्धी कात्यायन उपेत्य पप्रच्छ भगवन् कुतो ह वा इमाः प्रजाः प्रजायन्त इति ॥ ३ ॥ तस्मै स होवाच प्रजाकामो वै प्रजापतिः स तपोऽतप्यत स तपस्तप्त्वा। [१] मिथुनमुत्पादयते रयिं च प्राणं चेति। एतौ मे बहुधा प्रजाः करिष्यत इति ॥ ४ ॥ आदित्यो ह वै प्राणो रयिरेव चन्द्रमाः । रयिर्वा एतत् सर्वं यन्मूर्त्तं चामूर्त्तं च तस्मान्मूर्त्तिरेव रयिः ॥ ५ ॥ अथाऽदित्य उदयन् यत् प्राचीं दिशं प्रविशति तेन प्राच्यान् प्राणान् रश्मिषु सन्निधत्ते। यद् दक्षिणां यत् प्रतीचीं यदुदीचीं यदधो यदूर्द्ध्वं यदन्तरा दिशो यत् सर्वं प्रकाशयति तेन सर्वान् प्राणान् रश्मिषु सन्निधत्ते ॥ ६ ॥ स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते ॥ ७ ॥ तदेतदृचाऽभ्युक्तम् –

विश्वरूपं हरिणं जातवेदसं
परायणं ज्योतिरेकं तपन्तम्।
सहस्ररश्मिः शतधा वर्त्तमानः
प्राणः प्रजानामुदयत्येष सूर्यः [२] ॥ ८ ॥

(भा.) 'प्रजानां पालनाद् विष्णुः प्रजापतिरितीरितः।
'स वायुं सूर्यनामानं चन्द्रनाम्नीं सरस्वतीम् ॥

---

१. 'स मिथुनमुत्पादयते' इति प्रचलितः पाठः।

२. मन्त्रोऽयं मैत्रायणीयारण्यकेऽपि पठ्यते। तद् यथा–

विश्वंरूप॑ हुरिणं जातवेदसं परायणं ज्योतिरेकं तपन्तम्।
सहस्रंरश्मिः शतधा वर्त्तमानः प्राणः प्रजानामुदयंत्येष सूर्यः ॥ [६.८]

'सूर्याचन्द्रगतौ देवः ससर्ज्ज पुरुषोत्तमः ।
'तावाविश्य स्वयं विष्णुः सर्वसृष्टिं करोत्यजः ॥

'अमूर्त्तस्थः स वायुस्तु मूर्त्तसंस्था सरस्वती ।
'आदित्यस्थः स वायुस्थः प्राणानात्मनि सन्नयेत् ॥

'प्राच्यप्राणास्तथेन्द्राद्या दक्षिणाश्च यमादयः ।
'प्रतीच्या वरुणाद्यास्तु सोमाद्या उत्तराः स्मृताः ॥

'शेषमित्राववाचीनौ वीन्द्रकामावुदक्तनौ ।
'सभार्याः कोणपैः सार्द्धं चत्वारो दिशिदिश्यपि ॥ ॥

**(टी.)** अथ सुकेशादयो भरद्वाजाद्यन्वयजाताः षण्मुनयो **भगवन्तं पिप्पलादमुपसन्नाः** । तं [१]प्रसाद्य यथेष्टं प्रश्नान्[२] पप्रच्छुः । सुकेशाख्यो भरद्वाजपुत्रः । शिबिपुत्रः **सत्यकामः** । सौर्यायणसुतो गार्ग्यगोत्रः । कोसलसुतश्चाऽश्वलायनगोत्रः । भार्गवगोत्रो विदर्भसुतः[३] । कत्ययनात्मजः **कबन्धी** । **'सुकेशा'** इत्यत्र मात्राधिक्येन दीर्घत्वं विशेषाधिक्यविवक्षया । 'आधिक्येऽधिकम्' इति सूत्रात् । अस्ति ह्यस्य परैर्दुष्परिहरप्रश्नकर्तृत्वं नाम विशेषः । विसर्गाभावस्तु 'हल्ङ्याब्भ्यो दीर्घात्–' इत्यादिना विभक्तिलोपात् ॥ १–३ ॥

**'प्रजाकामो वै प्रजापतिः'** इत्यादीनां कबन्धिप्रश्नपरिहारवाक्यानामभिप्रायं **'प्रजानां पालनात्–'** इत्यादिना प्रजापतिसंहितावाक्येन प्रदर्शयति । अत्र तपस्तपनं जगत् सृजामीत्यालोचनम् ॥ ४ ॥

**'आदित्यो ह वै प्राणः'** इत्यत्र सूर्यनामा मुख्यवायुरुच्यते । **रयिरिति** चन्द्रनाम्नी सरस्वती । सूर्यचन्द्रस्थत्वात्[४] तयोः । तौ रयिप्राणौ मूर्तामूर्तदेवते इत्यभिप्रयेणाऽह– **रयिर्वा एतदिति** । **'यन्मूर्तं चामूर्तं च'** इत्युक्त्वा **'तस्मान्मूर्तिरेव रयिः'** इत्यवधारणात् अमूर्तिर्वायुरिति सिद्ध्यति । ततृस्थौ तावित्यभिप्रायः । तदेतदाह–

१. 'तं सम्प्रसाद्य' ख.
२. 'यथेष्टप्रश्नान्' क.
३. 'विदर्भपुत्रः' ख.
४. '–चन्द्रसंस्थत्वात्' ख.

**अमूर्तस्थः स** इत्यादिना। **मूर्तं** पृथिव्यादित्रयम्। **अमूर्तं** वाय्वादिद्वयम्। एवं भूतपञ्चकसंस्थौ वाक्प्राणौ प्रविश्य स्वयमेव भगवान् सर्वसृष्ट्यादिकृद् भवतीति भावः ॥ ५ ॥

**'अथाऽदित्य उदयन्'** इत्यादेरभिप्रायं **'आदित्यस्थः–'** इत्यादिना दर्शयति। **स** भगवान् **वायुस्थ** एवाऽदित्ये स्थित्वा प्राच्यादि**प्राणान्** स्वरश्मिषु प्रवेशयति। **उदक्तनौ** उपरितनौ। **इन्द्राद्या** इत्यादिष्वाद्यशब्दात् के कति चेत्याकाङ्क्षायामाह– **सभार्या** इति। **इन्द्राद्याः कोणपैः सार्धं सभार्या** इत्यन्वयः। **दिशिदिशि चत्वार** इत्युक्तत्वात्। अपरथा चतुष्ट्वासिद्धेः। **अवाचीनावपि** सभार्यत्वाच्चत्वार एव। तथैवान्त्यावपीति चतुर्विंशतिः[1]। **स एष** भगवान् विश्वनरस्थः पाचकोऽग्निश्च भवति। स एव प्राणस्थो विश्वरूपे स्थित **उदयते** प्रजानां प्रकाशते। मामभि मामभीति प्रतिपुरुषं वर्तमानत्वात् **विश्वरूपः** सूर्यः। हरिणः स्वच्छवर्णः। जातञ्जातं वस्तुजातं च वेत्ति जानातीति जातवेदाः। 'प्राणो वै जातवेदाः। सहि जातानां वेद' [ऐ.ब्रा.१०.७] इति च श्रुतिः। पराणां ब्रह्मादीनां मुक्तानां वा मुख्याश्रयत्वात् **परायणम्**। दिवाकरस्तु परमगतिमार्गत्वात् परायणमित्युक्तः। अत्र पुनः 'विश्वात्मानं परायणम्' [तै.आ. १०.११.३] इति शाखान्तरोक्तगुणानामनुकर्षार्थं[2] किल विभक्तिव्यत्यासः। **सहस्ररश्मिः**। अथ तेषु रश्मिषु प्रत्येकं **शतधा वर्तमानः**[3]। रश्मीनां शतशाखत्वात्। अथवा रश्मीनामेव मूलभूता महारश्मयः शतमेतेषु **शतधा वर्तमानः**। प्राणिनां प्रणेतृत्वात् सूर्योऽपि कथञ्चित् प्राणशब्दितः[4]। चक्षुरादिप्राणानां प्रणयनान्मुख्यवायुर्मुख्यत एव **प्राण** उक्तः। तस्यापि प्रणेतृत्वाद् विष्णुरेव परममुख्यः **प्राण** उच्यते। सूरिभिरीयमानत्वात् सूर्यान्तर्यामित्वाच्च विष्णुरेव प्रधान**सूर्यः**। प्रजानामन्तर्बहिश्च प्रकाशते। 'उद्यन्नु खलु वा आदित्यः सर्वाणि भूतानि प्रणयति तस्मादेनं प्राण इत्याचक्षते' इत्यत्रापि एत एव

---

१. **'सर्वे चतुर्विंशतिः'** ख. २. **'–कर्षणार्थं'** ख.
३. **'शतधावर्तमानरश्मिः'** ख. ४. **'प्राणशब्दः'** ख.

गौणमुख्यातिमुख्यतया प्रोच्यन्त इत्यविरोधः । सर्वभूतप्रणयनस्यापि यथायोग्यत्वात् ॥ ६–८ ॥

**(भा.चं.)** अस्या उपनिषदः पिप्पलाद ऋषिः । प्रष्टारः सुकेशादयश्च षट् । प्रजापतिः पुरुषो हवै नारायणो देवता । प्राणश्च तदनन्तरम् । निगदप्राया चेयम् । यत्र श्लोकाः पठ्यन्ते तत्र च्छन्दांसि निरूपयामः । **'सुकेशा च भारद्वाजः'** । शोभनाः केशा अस्येति, शोभनस्य सुखस्येष्ट इति वा सुकेशा नाम । भरद्वाजस्य सुतः । सुकेश एव सुकेशा । आधिक्यार्थे दैर्घ्यम् । ननु तर्हि 'सुकेशाः' इति भाव्यम् । कथं विसर्गलोपः? आह– **विसर्गाभावस्त्विति** । 'हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्' [अष्टा.सू.६. १.६८] इति समग्रं सूत्रम् । हलन्तात् ङ्यन्तादाबन्ताच्च दीर्घात् परं सु ति सि इत्येतदपृक्तं हल् लुप्यत इत्यर्थः । 'अपृक्त एकाल् प्रत्ययः' [अष्टा.सू.१.२.४१] इत्युक्तम् । अत्र चाऽबन्ताद् दीर्घात् परस्य सोर्लोपः । वस्तुतस्तु नैतदपि वक्तव्यम् । अथापि तुष्यन्तु वैयाकरणपाशा अपीति परिहसतीव । छन्दसि हि सर्वेऽपि विधयो विकल्प्यन्ते । वदन्ति च–'वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्ण-विकारनाशौ । धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्' इति । अन्यो नैरुक्तानां मार्गः । अन्यो वैयाकरणानाम् । यास्कोऽप्याह–'विशयवत्यो हि वृत्तयो भवन्ति । न तासु विश्वसेत्' इति । वैयाकरणैरप्येदङ्गीकृतम्–'सुप्-तिङुपग्रह-लिङ्ग-नराणां काल-हलच्-स्वर-कर्तृ-यङां च । व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिद्ध्यति बाहुलकेन' इति ॥

सत्यं भगवन्तम्, सत्यवचनं च सदा कामयत इति **सत्यकामः शिबिपुत्रः** । सूर्यस्यापत्यं सौर्यायणः । सोऽस्यास्ति पितेति सौर्यायणी । 'सूर्यायणस्या-पत्यं सौर्यायणिः । ईकारश्छान्दसः' इत्यपि व्याचक्षते । 'सौर्यस्यापत्यं सौर्या-यणिः । स एव सौर्यायणी' इत्यन्ये । गर्गस्यापत्यं गार्गिः । गार्गेरपत्यं **गार्ग्यः** । गार्ग्यकुले जाताः सर्वेऽपि गार्ग्याः । 'एको गोत्रे'[४.१.९३] इति हि स्मरन्ति । 'अपत्यं पौत्रप्रभृति गोत्रम्' [४.१.१६२] इति च । गर्गस्य

गोत्रापत्यं वा **गार्ग्यः**। 'गर्गादिभ्यो यञ्'[४.१.१०५]। कोसलस्यायं सुत इति **कौसल्यः**। अश्वलस्यापत्यमाश्वलायनः। आश्वलायनस्य गोत्रजोऽपि **आश्वलायनः**। भृगोर्गोत्रापत्यं **भार्गवः**। विदर्भस्यापत्यं **वैदर्भिः**। कबन्धं जलम्। समृद्धजलः **कबन्धी** नाम। सुखबन्धी, कस्य वायोरनुबन्धी वा। कत्ययनस्यायं सुत इति **कात्यायनः**। श्रीजयतीर्थास्तु 'सूर्यस्यापत्यं सौर्यः। तदपत्यं सौर्यायणिः। स एव सौर्यायणी। कौसल्यो नामतः। कोसलायां भवो वा। अश्वलायनस्याऽपत्यमाश्वलायनः। भृगोरपत्यं भार्गवः। विदर्भेषु भवो वैदर्भिः। कत्यस्यापत्यं कात्यायनः' इति व्याचक्षते। 'कतस्यापत्यं कात्यायनः' इति वैयाकरणाः॥

नन्वत्राऽऽद्येषु चतुर्षु चकारः पठ्यते– **'सुकेशा च भारद्वाजः, शैब्यश्च सत्यकामः'** इत्यादि। अन्त्ययोर्द्वयोश्चकारविरहित एव पाठः। कश्चात्र चार्थः? यदि समुच्चयः, षट्स्वपि स्यात्, यत्र क्वच वा स्यात्। चतुर्ष्वेव चकारः किमाकूत इति?

अत्र केचिदाचक्षते– चत्वारः सम्भूयाऽऽगताः। अतः परस्परसमुच्चये चकारः। अन्त्यौ द्वौ परस्तात् सङ्गतौ। तेन तत्र न चकार इति। स्यात्, नवा स्यात्। दौर्लभ्यवाचकश्चकार इति तु स्वरसम्। तथाहि शब्दनिर्णयवचनम्– 'प्रकृतेन क्रियायोगं चशब्दः क्वचिदीरयेत्। क्वचित् समुच्चयं ब्रूयात् क्वचिद् दौर्लभ्यवाचकः' इति। प्रकृतेन क्रियायोगे यथा– 'देवदत्तः पठति। यज्ञदत्तश्च'। समुच्चये यथा– 'देवदत्तश्च यज्ञदत्तश्च पठतः'। दौर्लभ्ये यथा भारते– 'प्रिया च दर्शनीया च पण्डिता च पतिव्रता'। स्त्रीषु सामान्यतो दुर्लभयोगं प्रियत्वं दर्शनीयत्वं पाण्डित्यं च द्रौपद्यां सङ्गतमासीदित्यर्थः।

अथ च किमाद्येषु चतुर्षु दौर्लभ्यम्? किमपरयोः सौलभ्यम्? अतिप्रश्नकर्तृतैव दौर्लभ्यम्। तच्चात्रैव स्फुटम्। 'सुकेशा' इति दीर्घान्तनाम्ना सुकेशस्य तावदाधिक्यं प्रथमत एव सूचितम्। चतुर्थस्य कौसल्यस्याऽधिक्यं पिप्पलादेन घोषिष्यते– 'अतिप्रश्नान् पृच्छसि। ब्रह्मिष्ठोऽसि' इति। आद्यन्तयोराधिक्ये

मध्यपतितयोश्च तदर्थात् सिद्धम् । नामनिर्देशापेक्षया व्युत्क्रमेण प्रश्नोपक्षेपश्च तेषामुत्तरोत्तरं प्राधान्यमेव सूचयति। तेन पूर्वे चत्वारोऽपूर्वप्रश्नजनन्या प्रतिभया दुर्लभाः शिष्या इति स्थितम् ।।

एवमुत्तरत्रापि मन्त्रेष्वर्थविशेषोऽनुसन्धेयः सर्वत्र। उक्तं चैतदन्यत्र– 'नानर्थकः स्वरो वाऽपि वर्णो वा कुत्रचिद् भवेत्। पदं वाक्यं कुतश्च स्यान्नाल्पार्थमपि कुत्रचित्। उच्चाराद्यर्थमपि वा नास्ति किञ्चित् स्वरादिकम्। महार्थमेव सर्वं हि वेदे वा वैदिकेऽपि वा' इति। 'न वेदेषु पदं किञ्चिद् वर्णो वा व्यर्थ इष्यते। यथायोगं चार्थभेद ऊह्यः सर्वत्र वेदिभिः' इति च ।।

एतेन **'ते हैते ब्रह्मपराः'** इत्यादिषु **'ह'** इति, **'एष ह वै तत् सर्वं वक्ष्यति'** इत्यादिषु **'ह वै'** इत्यादि च वाक्यालङ्कारायेति वदन्तो वैदिकम्मन्याः शोच्या एव। हकारो निर्धारवचनः। विस्मयं चाऽनन्दं च व्यनक्ति। हवायिति निश्चयवचनः प्रसिद्धिवचनश्च। **'ते ह'**– ज्ञानार्जने कृतनिर्धारास्त इत्यर्थः। हन्तेयन्तो जिज्ञासवः सङ्गता इत्यानन्दः। अहो दुर्लभतरा किलेयमीदृशी ज्ञाननिष्ठेति विस्मयः। **'एष ह वै तत् सर्वं वक्ष्यति'**–एष निश्चप्रचं तत् सर्वं वक्ष्यतीत्यर्थः। प्रसिद्धं च तस्य तादृक् पाण्डित्यम्। नान्यः सम्प्रति तादृग् वक्तेति। हन्त महानुपदेष्टाऽन्ततोऽपि लब्ध इत्यानन्दातिशयः, अहो न इदं महद् भागधेयमिति विस्मयातिशयश्च। एवं सर्वत्राप्यूह्यमित्युपरम्यते ।।

**सुकेशादयः षण्मुनयः** वेदाध्ययनपराः वेदोक्तधर्म**निष्ठाः परम्ब्रह्म** मनसा **अन्वेषमाणा** बभूवुः। तदर्थं च कञ्चन **गुरुमन्वेषमाणाः** बभूवुः। 'एष गतौ'। अधिगतं च तैः अस्ति कश्चित् ब्रह्मवित् सम्प्रति पिप्पलादो नामेति। **श्रुत्वैव, एष हवै सर्वं,** यदस्माभिरन्विष्यमाणम्, **वक्ष्यती**ति हर्षनिर्भरा**स्ते ह पिप्पलादमुपसन्नाः**। सगौरवमुपगमनमुपसदनम्। महान्तो न रिक्तहस्तैर्द्रष्टव्याः, नापि रिक्थहस्तैरिति **समित्पाणयः** ।। १ ।।

**तान् ह** ब्रह्मनिष्ठान् विदुषोऽपि **स** पिप्पलाद **उवाच । तपसा** निरन्तर-मननेन । ब्रह्मणि भगवति चरणं ब्रह्मचर्यम् । तदर्थं ब्रह्मणि वेदे सञ्चरणं ब्रह्मचर्यम् । तदर्थमुपस्थजयश्च ब्रह्मचर्यम् । श्रद्धा तु सर्वमूलम् । नह्यश्रद्दधान-स्तपस्तप्यते । नच वा ब्रह्मचर्यं चरति । **संवत्सरं वत्स्यथ ।** अयं सार्वत्रिकः पाठः । मन्ये– **'वत्स्यत'** इत्येव प्रायः प्राचीनपाठ इति । अत एव वैदिकपदलोलुपै-राचार्यैरुक्तं महाभारततात्पर्यनिर्णये– 'वत्स्यन्तु वारणवते' इति । ननु भोः कथं 'वत्स्यत'? कोऽयं लकारः? यदि लृट् तर्हि वत्स्यथ । यदि लोट् तर्हि वसत । तत्कथं लोटश्च लृटश्च साङ्कर्यम्? तर्हि करिष्यमाणं वासं कथं विधत्ते तत्रभवान्? ननु कालद्वयेऽपि सञ्चरति लोट् वर्तमाने च भविष्यति च । सञ्चरतु नाम यत्र लोडेवोभयत्र प्रयुज्यते । महान्तस्तु भाविकालबोधनाय लृटा सह लोटं प्रयुञ्जते 'वत्स्यत' इति । सेयं लोलृट् । एतामपूर्वां वैदिकीं सरणिं जिज्ञाप-यिषन्नेवाऽचार्यः स्वयं हि प्रयुयोज–'वत्स्यन्तु' [म.ता.नि.१९.१८] इति; 'भविष्यतु' [२१.८१] इति, 'स्वप्स्यन्तु' [२६.२५६] इति च । प्रायुङ्क्त भगवान् बादरायणोऽपि 'अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुग्' [भ.गी.३.१०] इति । संवत्सरः परस्परं परीक्षाकालः । तावन्तं कालं मामपि परीक्षध्वम्– 'अपि स्यादयं योग्यो गुरुः' इति । अहमपि परीक्षे–'अपि वक्तुं युक्तमेतेषाम्' इति । यदि संवत्सरवासपरीक्षायामुभयेऽप्युत्तीर्णाः, ततो **यथाकामं प्रश्नान् पृच्छत । यदि विज्ञास्यामस्तर्हि वक्ष्याम** इत्यहङ्कारनिरासः । अत्र ज्ञाने जिज्ञा-सायां च ज्येष्ठः प्रथममुक्तः । उत्तरोत्तरं कनीयान् । प्रश्ने तु विपरीतः क्रमः । कनिष्ठः प्रथमं पृच्छति । ज्येष्ठोऽन्त इति सर्वं सुन्दरम् ॥ २ ॥

**अथ कबन्धी पप्रच्छ** उपसत्तिपूर्वकं समीपमेत्य– **कुतो ह वै** देवात् **इमाः प्रजाः प्रजायन्ते** । को मुख्यस्रष्टा देवः? के चावान्तरदेवा **इति** ॥ ३ ॥

**प्रजाकामः** प्रजानां भूतिकामः, तदर्थं च प्रजननकामः **प्रजापतिर्नारायणः** । तदुक्तम्– 'भूत्यै निजाश्रितजनस्य हि सृज्यसृष्टावीक्षा बभूव' इति । एतेन कुतो हेतोः सृष्टिरिति प्रयोजनप्रश्नोऽपि दत्तोत्तरः । **स तपोऽतप्यत** सिसृक्षारूपं

ज्ञानं प्रकट्यकरोत्। ततश्च **रयिं च प्राणं चेति** स्त्रीपुंसयोः **मिथुनमुत्पादयते** उदपादयत्। रायते दीयते आदीयते चेति रयिर्धनमन्नं वा। रा दाने। तेन **रयिरिति** तन्मानिनी सरस्वती भारती च। **प्राण** इति वायुर्ब्रह्मा च। किमिति प्रजा उत्पिपादयिषन् केवलं मिथुनमुदपादयत्? एतन्मिथुनद्वारा बह्वीः प्रजाः सिसृक्षन् प्रथममेतन्मिथुनं ससर्जेत्याह– **एतौ** रयिप्राणौ **मे बहुधा प्रजाः** विस्तारयिष्यत इति ॥ ४ ॥

**सूर्याचन्द्रगतौ**। 'देवताद्वन्द्वे च' [अष्टा.सू. ६.३.२६] इति पूर्वपदस्याऽऽनङ्। 'ये लोके प्रसिद्धसाहचर्या वेदे च ये सहनिर्दिष्टास्तेषामिह ग्रहणं भवति' इति हि वामनः। वायुर्हि पुरुषतत्त्वमानी। तस्यापि स्रष्टा **पुरुषोत्तम** इति युक्तम्। **तावाविश्य सर्वसृष्टिं करोति**। अत एव **विष्णुः**। आविशतीति हि विष्णुरुच्यते। स्वयं **अजः** सर्वं जनयति। अजे ब्रह्मणि स्थितः **सृष्टिं करोति** इति च। एतेन वायुपदं ब्रह्मोपलक्षणमित्याह। अत एव **'मूर्तसंस्था सरस्वती'** इति वक्ष्यति। **'रयिर्वा एतत्'** इत्यादिश्रुतिपदानामयमर्थः– **एतत्** वक्ष्यमाणं **सर्वं रयिर्वै**। किं तत्? यदेतत् **मूर्तं चामूर्तं च** राशिद्वयं **तस्माद्** राशिद्वयात् **मूर्तिरेव** मूर्तमेव **रयिः**। अर्थादमूर्तं प्राण इत्यवगन्तव्यम्। रयिः **सरस्वती** वाग्देवता भारतीत्यर्थः। प्राणप्रकरणत्वात्। प्राणशब्देन चतुर्मुखो वा गृह्यते। **मूर्तसंस्था** पृथिव्यप्तेजोगता। **अमूर्तस्थः** वाय्वाकाशगतः ॥ ५ ॥

**अवाचीनौ शेषमित्रौ** वारुणीरेवतीसहितौ। **अन्त्यावपि उदक्तनौ वीन्द्रकामौ** सुपर्णीरतिसहितौ। **अवाचीनौ** द्वावपि, तयोः **सभार्यत्वाच्चत्वार एव**। **सभार्याः कोणपैः सार्धमिति**। इन्द्रस्य शची। अग्नेः स्वाहा। यमस्य श्यामला। निर्ऋतेर्दीर्घग्रीवा। वरुणस्य गङ्गा। प्रवहस्य प्रावही। सोमस्य रोहिणी। ईशानस्य च पार्वतीति। एतेन **'यदन्तरा दिशः'** इति चतुर्ष्वपि दिक्षु प्रत्येकमन्वेतव्यमित्याह। **यत् प्राचीं दिशं** यदन्तरां च दिशं **प्रविशति** तेन **सभार्याविन्द्राग्नी रश्मिषु** प्रवेशयति। **यद् दक्षिणां** यदन्तरां तेन सभार्यौ यमनिर्ऋती इत्यादि। 'दिशोऽन्तरा दशदिशां मध्ये। अवान्तरदिशां प्राच्यादि-

ग्रहणेनैव गृहीतत्वात् । अन्यथा बहुवचनायोगात् । दिङ्मध्यस्था अपि केचिज्ज्ञातव्याः' इति तु श्रीजयतीर्थाः ॥ ६ ॥

विश्वनरेषु स्थित्वा वैश्वानरनामा सन्नग्निस्थः पचति । **प्राण** इति वायुश्च नारायणश्च । स एव विश्वरूपनामा सन् सूर्यस्थः **उदयते** ॥ ७ ॥

'त्रयोऽर्थाः सर्ववेदेषु' इति वैदिकीमर्थप्रक्रियां स्मारयन् , **'विश्वरूपम्'** इति मन्त्रवर्णं सूर्यपरतया प्राणपरतया नारायणपरतया च व्याख्याय गौणमुख्याति-मुख्यार्थपरतया सर्वत्र व्याख्यानसरणिं शृङ्गग्राहिकया दर्शयति– **'विश्वरूपः सूर्यः'** इत्यादिना । **जातञ्जातं वेत्तीति** । 'जातानि वेदांसि यस्मात् स जात-वेदाः । सर्वज्ञानोत्पादकः' इति च व्याचक्षते । श्रौतं तु निर्वचनं टीकाकृता कृतम् । **विश्वरूपं हरिणमित्यादि** द्वितीया प्रथमार्थे । विश्वरूपो हरिणो जातवेदा इति । कुतो हेतोरयं विभक्तिव्यत्ययः? आह– **शाखान्तरोक्त-गुणानामनुकर्षार्थमिति** । तैत्तिरीयशाखायां तैत्तिरीयारण्यके नारायणोप-निषद्युक्तानाम् । **सहस्ररश्मिः** सहस्रकिरणः, अनन्ततेजाश्च । **शतधा**ऽनन्तरूपैः पिण्डाण्डे ब्रह्माण्डे च **वर्तमान** इति प्रातीतिकमर्थं स्वीकृत्यैव कञ्चनापूर्व-मर्थविशेषमाह– **अथ तेषु रश्मिष्वित्यादिना** ॥ * ॥

ऋगेषा जागती भवति । यद्यप्येकादशाक्षरा द्वितीयपादे । अथापि 'ज्योतिः' इत्यत्र क्षैप्राक्षरस्य यकारस्य 'जियोतिः' इति विश्लेषेण केवला जगती च्छन्दः । अविश्लेषे पुनरेकाक्षरोना निचृज्जगती । अत्र 'विश्वरूपं करिणं जातवेदसम्' इति श्रीजयतीर्थादृतः पाठः । 'करा रश्मयोऽस्य सन्तीति करी । तं करिणम्' इति च व्याचक्रुः ॥ ८ ॥

**संवत्सरो वै प्रजापतिस्तस्यायने दक्षिणं चोत्तरं च । तद् ये ह वै तदिष्टापूर्त्ते कृतमित्युपासते ते चान्द्रमसमेव लोकमभि-जयन्ते । त एव पुनरावर्त्तन्ते । तस्मादेत ऋषयः प्रजाकामा**

दक्षिणं प्रतिपद्यन्ते । एष वै रयिर्यः पितृयाणः ॥ ९ ॥
अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मानमन्विष्याऽदित्यमभिजयन्ते । एतद् वै प्राणानामायतनमेतदमृतमेतदभयमेतत् परायणमेतस्मान्न पुनरावर्त्तन्त इत्येष निरोधः ॥ १० ॥ तदेष श्लोकः –

पञ्चपादं पितरं द्वादशाकृतिं
दिव आहुः परे अर्द्धे पुरीषिणम् ।
अथेमे अन्य उपरे विचक्षणं
सप्तचक्रे षळर आहुरर्प्पितमिति ॥ ११ ॥

**(भा.)** 'संवत्सरस्थो भगवान् वागीरावयनस्थितौ ॥ ※ ॥

**(टी.)** **'संवत्सरस्थो भगवान्–'** इत्यादिना **'संवत्सरो वै प्रजापतिः–'** इत्यादेरभिप्रायमाह । संवत्सरादिशब्दैस्तत्स्थो विष्णुरेव मुख्यतयोच्यते । 'तदधीनत्वादर्थवत्'[ब्र.सू.१.४.३] इत्यादेः । अयनादिशब्दैस्तदनन्तरं वाक्प्राणावपि यथायोग्यमुच्येते[१] । **'एष वै रयिर्यः पितृयाणः'** इत्याद्युत्तरवचनात् । पितृयाणं दक्षिणायनं हि । **'तद् ये हवै तत्'** इत्यादेरयमर्थः– तयोरनयोर्मध्ये तया दक्षिणायनदेवतया वाग्देव्या ये नरा इष्टापूर्तादिकर्मणा यज्ञं यजन्ते ते [२]चन्द्रलोकं गत्वा तत्फलं भुक्त्वा ततः **पुनरावर्तन्ते**[३] । **प्रजाकामाः** पुनः प्रजननेन प्रजोत्पत्तिकामाः[४] । **अथ** उत्तरायणदेवतया प्राणेन तपआद्यनुष्ठानपूर्वकं परमात्मानं[५] विचार्य ज्ञात्वा तत्प्रसादात् तमेवाऽदित्यपुरुषमभिसम्पद्यन्ते । एतत् परमात्माख्यमेव हि सर्वप्राणानामायतनं परायणं च ।

१. 'यथायोगमुच्येते' क. २. 'चन्द्रलोकात् तत्फलं' ख. ३. 'पुनरिहाऽवर्तन्ते' ख.
४. 'प्रजोत्पादनकामाः' ख. ५. 'पूर्वकमात्मानं' क.

**एतस्मान्न पुनरावर्तन्त इति वचनादेष[1] निरोधः। एष उत्तरायणस्थः [2]संसृतेर्निरोधकृत्, प्रभञ्जनः प्राण इत्यर्थः ॥ ९– १० ॥**

उक्तार्थं दृढयतो मन्त्रवर्णश्लोकस्यायमर्थः– संवत्सरस्थस्य विष्णोः पञ्चर्तुसंस्था नारायणादिपञ्चमूर्तयः पञ्चपादा [3]उच्यन्ते। तस्य पुनर्द्वादशमासस्थाः केशवादिमूर्तयो द्वादशाकृतयश्चोक्ताः। नचात्र 'षड्[4] वाव ऋतवः' [तै.ब्रा. १.३.१०.४] इति श्रुतिविरोधः। 'द्वादशमासाः पञ्चर्तवः' [तै.ब्रा.२.२.३.७; ऐ.ब्रा. १.१] इति श्रुत्यन्तरात्। 'पञ्चर्तवो हेमन्तशिशिरयोः समासेन। संवत्सरः प्रजापतिः'[5] [ऐ.ब्रा.१.१.] इति श्रुतिः। मुख्यप्राणसंस्थस्य तु तदीयेषु प्राणादिषु पञ्चरूपेषु इन्द्रियदेवस्थेषु संस्थास्ता एव मूर्तयः[6] पादाः आकृतय इति विशेषः। तस्य पुनः सूर्यसंस्थत्वेऽप्ययमेव न्यायः। अथ भगवतस्तेभ्यः पृथक्संस्थत्वापेक्षया स्वमूर्तयोऽपि पृथक् संस्था एव पादादयो वेदितव्याः। तमेतं जगत्पितरं विष्णुं द्युलोकात् परे विशिष्टे दूरस्थे वा आ समन्ताद् ऋद्धे वैकुण्ठलोके[7] पुरीषिणं स्वपुर्यां निषीदन्तमाहुर्वेदविदः। अथ परे विशिष्टचेतने भक्त्यादिभिरा समन्तादृद्धे सति तस्मै पुरीषिणं स्वपुरं दातुमिच्छन्तमाहुरौपनिषदाः। अपिच परे[8] पुण्यकृत्पुरुषे द्युलोकादीषद् भोगर्द्धे पुरीषिणं तस्य पुनर्देहोत्पादनेच्छुमाहुः ब्रह्मविदः। अथ मुख्यप्राणमपि पञ्चद्वादशरूपिणं शेषादिदेवपितरं सर्वजीवशरीरेषु नियन्तुं निषण्णं द्युदेव्याः परेऽर्द्धे दक्षिणभागे सुस्थितमाहुः प्राणादिवादिनः। सूर्यं तपन्तं च दिगन्तरश्मिं द्वादशात्मानं दिवोऽर्द्धभागे गगनमध्ये[9] पुनःपुनरुदेष्यन्तमाहुर्ज्योतिर्वेदिनः। 'तस्य ये प्राञ्चो

---

१. 'न निवर्तन्त इति वचनाच्चैष' क. २. 'सन्ततेर्निरोधकृत्' ख. ३. 'इत्युच्यन्ते' ख.

४. कोशेषु 'षड् वाव' इति पठ्यते। 'षड् वै–' इति तैत्ति.ब्राह्मणे बहुधा पठ्यते। ऐतरेयेऽपि [११.६] इत्यादि। पञ्चर्तुत्वं च तत्रतत्र–'पञ्च वा ऋतवः संवत्सरः' [तै.ब्रा.२.७.११.२] इत्यादि।

५. 'द्वादशमासाः पञ्चर्तवो हेमन्तशिशिरयोः समासेन। तावान् संवत्सरः। संवत्सरः प्रजापतिः' इति समग्रा ब्राह्मणानुपूर्वी। ६. 'चर्तवः' ख. ७. 'वैकुण्ठे लोके' ख.

८. 'अपरे' ख. ९. '–मध्ये पुरोभागात् पुनः–' ख.

रश्मयः' इत्यारभ्योर्ध्वरश्मिपर्यन्ताः पञ्चविधा हि रश्मयः सूर्यस्योच्यन्ते। किञ्च पञ्चद्वादशाद्यनन्तरूपिणं ब्रह्मवाय्वोः पितरं परायुषि काव्यब्रह्मणि ज्ञानकर्मभिः समृद्धे सति तस्य पुरीषिणमाहुर्वेदान्तिनः। 'अन्नं वा इषणम्' इति हि श्रुतिः। एवमादीनर्थविशेषान् सुबहूनाहुरधिदैवज्ञाः। अथ तेभ्योऽन्येऽधियज्ञा इमे कुत्सादयः [१]शतर्चिनः विचक्षणं विष्णुं उपरे जीवशरीरे नियामकत्वेनार्पितं स्थितमाहुः। अथवा जीवेन स्वशरीरे हृदये ध्यानेन निहितमाहुः। समीपस्थं चेदं रमणस्थानं चास्येति ह्युपरं शरीरम्। तदेतत् सप्तधातुसमूहरूपत्वात् सप्तचक्रमुक्तम्। सप्तपादायामत्वाद्वा सप्तचक्रम्। चङ्क्रमणाच्च चक्रशब्दितं पदम्। अथ सप्तपादमानेन न्यग्रोधपरिमण्डलत्वाच्चक्रसमं चेदम्। अतः षडङ्गत्वात् षडरमित्युक्तम्॥ ११॥

**(भा.चं.)** संवत्सरस्थो वै **प्रजापतिः**। **तस्य** प्रजापतिनाऽधिष्ठितस्य संवत्सरस्य **द्वे अयने** भवतः **दक्षिणं चोत्तरं च** इति। **तस्य** संवत्सरस्थस्य च प्रजापतेर्नारायणस्य सृष्टिकर्मण्यङ्गभूते **द्वे अयने** सहचरे भवतः। दक्षिणायनस्था भारती, उत्तरायणस्थः प्राणश्चेति। **'तद् ये ह वै तत्'** इति श्रुतौ प्रथमस्तच्छब्दस्तयोरित्यर्थे। **तत्** **तयोः** दक्षिणोत्तरायणयोस्तद्देवतयोः वाक्प्राणयोः। द्वितीयस्तयेति तृतीयार्थे। **तया दक्षिणायनदेवतया वाग्देव्या**। 'सुपां सु–' [७.१.३९] इति हि पाणिनिः। 'सुपां सुपो भवन्तीति वक्तव्यम्' इति च वार्तिकम्। 'सप्तसु प्रथमा' इति प्राचीनम्। **'इष्टापूर्ते इति'**, इत्यादिकर्मणा **'कृतमुपासते' यज्ञं यजन्ते**। ते भारत्याऽधिष्ठितं चन्द्रमसो लोकमभिगच्छन्ति। **तस्मात् प्रजाकामाः दक्षिणं** दक्षिणायनदेवतां भारतीं **प्रतिपद्यन्ते**। **एष रयिः** एषा हि वाग्देवता या पितृयाणस्य दक्षिणायनस्य देवता। पितृयाणे हि दक्षिणायनदेवताः॥ ९॥

**उत्तरेण** उत्तरायणेन, उत्तरायणस्य प्राणस्य चानुग्रहेण। तपआदिना **विद्यया** परविद्यया चाधिगतया **'आत्मानं'** **परमात्मानं** **'अन्विष्य'** **विचार्य**

१. 'तेभ्योऽन्येऽध्यात्मज्ञा इमे सत्सन्ततयः शतर्चिनः' ख.

**ज्ञात्वा । आदित्यपुरुषम्** । आदित्यशब्दितं परमपुरुषम् । आदित्यस्थं नारायणं प्रतिपद्यन्ते, आदित्यद्वारा । **प्राणानां** सर्वजीवानाम् । **एतदमृतम्** । मोक्षानन्दप्रदम् । अत एव **एतदभयम्** । संसारभयनिवर्तकमिति । **तत्** तत्रोक्तार्थे **एषः श्लोकः** मन्त्रः समाख्यारूपो भवति ॥ १० ॥

पुर्यां सीदतीति पुरीषी । तदाह– **पुरीषिणं स्वपुर्यां निषीदन्तमाहुरिति** । **दिवः** इत्यस्यार्थः– **भक्त्यादिभिरिति** । ज्ञानी भक्तो हि द्योतते । पुरमिच्छतीति पुरीषी । इषु इच्छायाम् । तदाह– **पुरीपिणं स्वपुरं दातुमिच्छन्तमाहुरिति** । पुरं देहान्तरं इच्छतीति पुरीषी । तदाह– **पुरीषिणं तस्य पुनर्देहोत्पादनेच्छुमाहुरिति** । **पञ्चद्वादशरूपिणम्** । प्राणादिभिः पञ्चरूपीत्युक्तम् । अथ ज्ञानेन्द्रियाणि पञ्च । कर्मेन्द्रियाणि पञ्च । मनोबुद्धी एकादशद्वादशे । एतन्नियामकतया चेन्द्रियदेवेषु स्थितानि द्वादश प्राणरूपाणि । पुरीषु पुरेषु वा सीदतीति पुरीषी । तदाह– **सर्वजीवशरीरेषु नियन्तुं निषण्णमिति** । पञ्चपाद इति विस्तृतकिरणः । तपतीति च पिता वर्णविपर्ययेण । तदेतदाह– **तपन्तं च दिगन्तररश्मिमिति** । पुनरेष्यतीति च पुरीषी वर्णलोपेन । तदाह– **पुनःपुनरुदेष्यन्तमाहुरिति** । 'तस्य ये प्राञ्चो रश्मय' इत्यादि मधुविद्यायाम् [छं.३.१.१] । अतश्च पञ्चपादः सूर्यः । अनुसन्धानलौल्यात् पुनरपि भगवत्परमर्थविशेषमाह– **किञ्चेति** । दिव इति द्युशब्दितेन ज्ञानेन कर्मणा च । द्योतयति ज्ञातारं कर्तारं चेति । **परे** परकालजीविनि चतुर्मुखे । तदाह– **परायुषि काख्यब्रह्मणि** । 'कस्मै देवाय हविषा विधेम' इति प्रस्तुते काख्ये ब्रह्मणि । क इति च हि प्रजापतिरुच्यते । तस्य च स्वपुरे स्वशरीर एव इषमिषणं सायुज्यलक्षणं सहभोगं ददतमाहुः । पुरीषं जलं तद्दानाच्च पुरीषी । 'आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' इति स्मरणात् । उपरमिति किमुच्यते? जीवशरीरम् । कथम्? आह– **समीपस्थं चेदं रमणस्थानं चास्येति** । ऋक्संहितायामेकं हि पदम्–**'उपरे'** इति पठन्ति प्रतृण्णविदः ।

उ परे इति द्वे पदे इति च व्याचक्षते। पादौ हस्तौ मध्यं शिरश्चेति षडङ्गानि। मनसा सह पञ्च ज्ञानेन्द्रियाणि वा। मन्त्रेऽस्मिन् केवला जगती च्छन्दः ॥ ११ ॥

मासो वै प्रजापतिस्तस्य कृष्णपक्ष एव रयिः शुक्लः प्राणः। तस्मादेत ऋषयः शुक्ल इष्टिं कुर्वन्तीतर इतरस्मिन् ॥ १२ ॥ अहोरात्रे वै प्रजापतिस्तस्याहरेव प्राणो रात्रिरेव रयिः। प्राणं वा एते प्रस्कन्दन्ति ये दिवा रत्या संयुज्यन्ते। ब्रह्मचर्यमेव तद् यद् रात्रौ रत्या संयुज्यन्ते॥ १३ ॥ अन्नं वै प्रजापतिस्ततो ह वै तद् रेतस्तस्मादिमाः प्रजाः प्रजायन्त इति ॥ १४ ॥ तद् ये ह वै तत् प्रजापतिव्रतं चरन्ति ते मिथुनमुत्पादयन्ते। तेषामेवैष ब्रह्मलोको येषां तपो ब्रह्मचर्यं येषु सत्यं प्रतिष्ठितम् ॥ १५ ॥ तेषामसौ विरजो ब्रह्मलोको न येषु जिह्ममनृतं न माया चेति ॥ १६ ॥

इति प्रथमः प्रश्नः

—०—

(भा.) 'मासस्थितः स भगवान् पक्षयोर्वाक् च मारुतः।
'अहोरात्रे तु भगवान् प्राणोऽह्नयथ च वाङ् निशि ॥
'दम्पत्योर्भगवान् विष्णुर्भार्यास्था तु सरस्वती।
'भर्तृस्थः स स्वयं वायुरेवं जानन् विमुच्यते'

इति प्रजापतिसंहितायाम् ॥ * ॥

—०—

**(टी.)** संवत्सरादिषु दम्पत्यन्तेषु स्थितो भगवान् अयनादिविभागस्थौ[1] वाक्प्राणावाविश्य तद्द्वारा रेतो रक्तं च जनयति । तत्संयोगात् **इमाः प्रजाः प्रजायन्ते** । एवं रयिप्राणावाविश्य विष्णुः स्वयमेव **सर्वसृष्टिं करोति** । नच सर्वनियन्तुर्विष्णोः कुतश्चिदुत्पत्तिः शङ्क्या । नित्यमुक्तत्वश्रुतेः । अत्रापि **'अजः'** इति दत्तोत्तरत्वात् । **एवंभूतं** भगवन्तं **जानन् विमुच्यते** ।। १२–१४ ।।

अत्रापि पुनः साधनविशेषात् फलविशेषोऽस्तीत्याह – **तद् ये ह वै तदित्या-** दिना । **तत्** तथा भगवतोत्पादितेषु जन्तुषु **ये** जनाः प्राजापत्यं **व्रतं चरन्ति,** तद् यथा ऋग्विधानोक्तभङ्ग्या शंनःपुरुषसूक्तयोः सम्पुटहोमशेषप्राशनपूर्वकं विष्णुयोनिसूक्तेनोपस्थाय प्रजापतिं प्रार्थयन्ति, **ते** तत्प्रसादात् सदपत्य-**मुत्पादयन्ते** । अथ **येषां** तपोब्रह्मचर्यादिगुणा बहवो भवन्ति । **तेषामेवैष** सत्याख्यो **ब्रह्मलोको** भवति । ब्रह्मचर्यादिगुणेष्वपि **येषु** सत्याख्यं ब्रह्म प्रकर्षेण स्थितम्, **तेषां** हि **असौ विरजो** जन्ममृत्यादिदोषहीनो वैकुण्ठाख्यः पर**ब्रह्मलोको** भवति । अथ येषु प्रारब्धकर्मविनाशेन जिह्मानृतादिदोषाणां कार्त्स्न्येनाभावः स्यात् **तेषामेव असौ** लोकः स्यादिति भावः । **जिह्मं** व्याजः । **अनृतमसत्यवचनम्** । **माया** त्वविद्यमानार्थप्रकटनम् । **इतीति** पिप्पलादः कबन्धिने प्रश्नपरिहारमुपसञ्जहार ।। १५–१६ ।।



**(भा.चं.)** **तस्मात्** शुक्लपक्षस्य प्राणसम्बन्धित्वात्, प्राणसम्बद्धाया इष्टेरेव च भगवतोऽतिप्रियत्वात्, **एते** प्राणनारायणौ प्रीणयन्तः **ऋषयः** । **इतरे** ऐहिक-फलकामा **इतरस्मिन्** कृष्णे पक्षे ।। १२ ।।

**दिवा** चेद् रतिनिमित्तं स्त्रिया **संयुज्यन्ते** तदा रेतसि पुरुषे च प्राणसन्निधाना-धिक्यात्, शोणिते स्त्रियां च भारतीसन्निधानशैथिल्यात् प्राणशक्तिं वृथा

---

१. 'विभागस्थवाक्–' क.

**प्रस्कन्दन्ति** शोषयन्ति । स्कन्दिर् शोषणे । **रात्रौ** चेत् **रत्या संयुज्यन्ते,** तदा प्राणो भारत्या संयुज्यते । ब्रह्मणो वायोः स्वभार्याचरणमेव **तत्** ।। १३ ।।

**तद् रेतः** । शोणितं चेत्युपस्कर्तव्यम् । पुरुषे रेतसि च प्राणः । स्त्रियां शोणिते च भारती । **अत्राप्यज इतीति** । **'सर्वसृष्टिं करोत्यजः'** इति ।। १४ ।।

**तद् ये ह वै तत् प्रजापतिव्रतम्** । **तत्** तेषु जीवजातेषु **ये तत् प्रजापतिव्रतम्** । 'ये गृहस्थाः प्रजापतिव्रतमृतौ भार्यागमनं चरन्ति कुर्वन्ति ते मिथुनं पुत्रं दुहितरं चोत्पादयन्ते' इति मायावादिनः । अहो नन्वेतदपि वक्तव्यमुपनिषदा ये भार्यां सम्भुञ्जते ते मिथुनेन संयुञ्जते चेति । 'ये प्रजापतिशब्दितस्यान्नस्य व्रतं भक्षणं व्रतत्वेनानुतिष्ठन्ति, येऽन्नभक्षणशीला ब्रह्मचर्यरहिताः, त एव प्रजा उत्पादयन्ते' इत्येके । ननु ब्रह्मचारिणोऽप्यन्नं चरन्ति । तैरपि शक्यं प्रजा उत्पादयितुम् । अतो विवक्षितमिह शास्त्रीयमर्थमाह– **ऋग्विधानोक्तभङ्ग्**चेति । तथाहि ऋग्विधाने शौनकः–

'शुक्लपक्षे शुभे वारे सुनक्षत्रे सुगोचरे ।
'द्वादश्यां पुत्रकामाय चरुं कुर्वीत वैष्णवम् ।।

'दम्पत्योरुपवासः स्यादेकादश्यां सुरालये ।
'ऋग्भिः षोडशभिः सम्यगर्चयित्वा जनार्दनम् ।।

'चरुं पुरुषसूक्तेन श्रपयेत् पुत्रकाम्यया ।
'प्राप्नुयाद् वैष्णवं पुत्रमचिरात् सन्ततिक्षमम् ।।

'द्वादश द्वादशीः सम्यक् पयसा निर्वपेच्चरुम् ।
'यः करोति सहस्रं स्यात् याति विष्णोः परं पदम् ।।

'हुत्वाऽग्निं विधिवत् सम्यगृग्भिः षोडषभिर्द्विजः[1] ।
'कृताञ्जलिपुटो भूत्वा स्तवं ताभिः प्रयोजयेत् ।।

---

१. '–षभिर्बुधः' इति पाठान्तरम् ।

'केशवं मार्गशीर्षे तु पौषे नारायणं तथा ।
'माधवं माघमासे तु गोविन्दं फाल्गुने तथा[1] ॥

'चैत्रे चैव तथा विष्णुं वैशाखे मधुसूदनम् ।
'ज्येष्ठे त्रिविक्रमं विद्यादाषाढे वामनं विदुः ॥

'श्रावणे श्रीधरं विद्याद्धृषीकेशं ततः परे ।
'आश्विने पद्मनाभं तु दामोदरं च कार्त्तिके ॥

'द्वादशैतानि नामानि ऋष्यशृङ्गोऽब्रवीन्मुनिः ।
'पूजयेन्मासनामभिः सर्वान् कामान् समश्नुते ॥

'आयुष्मन्तं सुतं सूते यशोमेधासमन्वितम् ।
'धनवन्तं प्रजावन्तं धार्मिकं सात्त्विकं तथा ॥

'समिधोऽश्वत्थवृक्षस्य हुत्वाऽग्निं जुहुयात् पुनः ।
'उपस्थानं हुताशस्य ध्यात्वाऽर्च्य मधुसूदनम् ॥

'हविर्होमं ततः कुर्यात् प्रत्यृचं वाग्यतः शुचिः ।
'सूक्तेन जुहुयादाज्यमादावन्ते च पूर्ववत् ॥

'हविःशेषं नमस्कृत्वा नारी नारायणं पतिम् ।
'भक्षयित्वा हविःशेषं लब्धाशीः संविशेत् क्षपाम्[2] ॥

'ततस्तु कर्म कृत्वेदं कर्तव्यं द्विजतर्पणम् ।
'द्वितीया[3] स्त्री निवर्तेत यावद् गर्भं न[4] विन्दति ॥

'अपुत्रा मृतपुत्रा वा या च कन्यां[5] प्रसूयते ।
'क्षिप्रं सा जनयेत् पुत्रमृष्यशृङ्गो यथाऽब्रवीत्'

[३.१३५–१४९] इत्यादि ॥

---

१. **'फाल्गुने पुनः'** २. **'क्षणम्'** ३. **'द्वितीयम्'**
४. **'गर्भं च विन्दति'** ५. **'कन्याः'**

'पुष्पं दृष्ट्वा तु या गर्भं न गृह्णीयाद् वयोऽन्विता ।
'विष्णुर्योनिं नेजमेष योनिं स्पृष्ट्वा ततो जपेत्' [४.११८] इति च ॥

'विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु । आ सिंञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥ गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति । गर्भं ते अश्विनौ देवावा धत्तां पुष्करस्रजा ॥ हिरण्ययी अरणी यं निर्मन्थतो अश्विना । तं ते गर्भं हवामहे दशमे मासि सूतवे' [ऋ.सं.१०.१८४] इति विष्णुयोनिसूक्तम् ॥

विष्णुः प्राजापत्य ऋषिः । लक्ष्मीनारायणौ देवते इत्यर्थानुसन्धाने स्फुटम् । विष्णुरिति वासुदेवः । त्वष्टा सङ्कर्षणः । प्रजापतिः प्रद्युम्नः । धाताऽनिरुद्धः । सारत्वात् स इति विष्णुः । सोऽस्त्यस्या रक्षकत्वेनेति सिनी चतुर्मूर्तिना भगवता रक्षिता योषित् । तां वलते संवृणुत इति सिनीवाली श्रीः । सरस्वती भूः । अश्विनौ देवौ रामकृष्णौ । हिरण्मय्यावरणी जायापती । तौ प्रजननार्थमश्विनौ निर्मन्थतः । अस्यैव सूक्तस्य खिलभागो 'नेजमेष–' इत्यादिः । तथाहि– 'नेजमेष परा पत सुपुत्रः पुनरा पत । पुत्रकामायै गर्भमा धेहि यः पुमान् ॥ यथेयं पृथिवी मह्युत्ताना गर्भमा दधे । एवं तं गर्भमा धेहि दशमे मासि सूतवे ॥ विष्णोः श्रेष्ठेन रूपेणास्यां नार्यां गवीन्याम् । पुमांसं पुत्राना धेहि दशमे मासि सूतवे' इति । यः परमपुरुषस्त्वं गर्भस्य नेजं शुद्धिं पोषणं प्रति वा परा पत । 'णिजिर् शौचपोषणयोः' । शोभनः पुत्रः यस्मात् स सुपुत्रः । शोभनपुत्रदः सन् परा पत । योऽस्याः पतिः पुमान् तस्मिन् मयि सन्निहितः परमपुरुषस्त्वं पुत्रकामाया अस्यै पुत्ररूपं गर्भमा धेहि । यः पुमान् भवति तं गर्भमा धेहीति वा । पुमांसं जनयेति यावत् । विष्णोरुत्तमाधिष्ठानभूतेन मया पत्या, अः विष्णुरस्त्यस्याः पतित्वेनेति इनी लक्ष्मीः, गवि भुवि, स्थिता इनी गवीनी । तस्यां लक्ष्मीप्रतीकरूपायां नार्याम् । पुमांसमा धेहि । एवं बहूंश्च पुत्राना धेहि । पुत्र्यश्च पुत्राश्च पुत्राः ॥ ✻ ॥

**मिथुनमित्येतत् सदपत्यमिति** व्याचष्टे । सन्तं वा पुत्रं सतीं वा पुत्रीमित्यर्थः । उत्तरयोर्मन्त्रवाक्ययोरयमन्वयभेदः– **'येषां तपो ब्रह्मचर्यं तेषामेवैष' सत्या-**

**ख्यो 'ब्रह्मलोकः'** । अथ **'येषु सत्यं प्रतिष्ठितम्, न येषु जिह्ममनृतं न माया च तेषामसौ विरजो ब्रह्मलोको'** **वैकुण्ठाख्य** इति । तामेतां फलश्रुतिं यथावद् व्याख्याति– **'येषां तपोब्रह्मचर्यादिगुणा बहवो भवन्ति'** इत्यादिना ।। १५ ।।

**जिह्मं व्याज** इति । डाम्भिकत्वमित्येतत् । **तेषामसौ विरजो ब्रह्मलोक** इति । एतदपि विवृतमृग्विधान एव । तथाहि–

'अर्चनं सम्प्रवक्ष्यामि विष्णोरमिततेजसः ।
'यत् कृत्वा मुनयः सर्वे ब्रह्म निर्बाणमाप्नुयुः ।।

'अप्स्वग्नौ हृदये सूर्ये स्थण्डिले प्रतिमासु च ।
'षट्स्वेतेषु हरेः सम्यगर्चनं मुनिभिः स्मृतम् ।।

'अग्नौ क्रियावतां देवो दिवि[1] देवो मनीषिणाम् ।
'प्रतिमास्वल्पबुद्धीनां योगिनां हृदये हरिः ।।

'आपो ह्यायतनं तस्य तस्मात् तासु सदा हरिः ।
'तस्य सर्वगतत्वाच्च स्थण्डिले भावितात्मनाम् ।।

'दद्यात् पुरुषसूक्तेन यः पुष्पाण्यप एव वा ।
'अर्चितं स्याज्जगदिदं तेन सर्वं चराचरम् ।।

'आनुष्टुभस्य सूक्तस्य त्रिष्टुबन्तस्य देवता ।
'पुरुषो[2] यो जगद्बीजमृषिर्नारायणः स्मृतः ।।

'वक्ष्ये पुरुषसूक्तस्य विधानं त्वर्चनं प्रति ।
'अग्निकार्यं जपविधिं स्तोत्रं चैव तदात्मकम् ।।

'स्नात्वा यथोक्तविधिना प्राङ्मुखः शुद्धमानसः ।
'प्रथमां विन्यसेद् वामे द्वितीयां दक्षिणे करे ।।

१. दिवि सूर्ये पूज्य इत्यर्थः । २. 'पुरुषोऽथ जगद्–'

'तृतीयां वामपादे तु चतुर्थीं दक्षिणे न्यसेत् ।
'पञ्चमीं वामजानुनि षष्ठीं वै दक्षिणे न्यसेत् ॥

'सप्तमीं वामकुक्षौ तु अष्टमीं दक्षिणे न्यसेत् ।
'नवमीं नाभिमध्ये तु दशमीं हृदये न्यसेत् ॥

'एकादशीं कण्ठदेशे द्वादशीं वामबाहुके ।
'त्रयोदशीं [1]दक्षबाहावास्ये चैव चतुर्दशीम् ॥

'अक्ष्णोः पञ्चदशीं चैव षोडशीं मूर्ध्नि विन्यसेत् ।
'एवं न्यासविधिं कृत्वा पश्चात् पूजां समारभेत् ॥

'यथा देहे तथा देवे न्यासं कृत्वा विधानतः ।
'उच्छ्वासावाहने न स्तः स्थावरे वै यथा तथा ॥

'साळग्रामार्चने नैव ह्यावाहनविसर्जने ।
'साळग्रामे तु भगवानाविर्भूतो यथा हरिः ।
'न तथाऽन्यत्र सूर्यादौ वैकुण्ठे वाऽपि सर्वगः ॥

'आद्ययाऽऽवाहयेद् देवमृचा तु पुरुषोत्तमम् ।
'द्वितीययाऽऽसनं दद्यात् पाद्यं चैव तृतीयया ॥

'अर्घ्यं चतुर्थ्या दातव्यं पञ्चम्याऽऽचमनीयकम् ।
'षष्ठ्या स्नानं प्रकुर्वीत सप्तम्या वस्त्रमेव च[2] ॥

'यज्ञोपवीतमष्टम्या नवम्या चानुलेपनम् ।
'पुष्पं दशम्या दातव्यमेकादश्या तु धूपकम् ॥

'द्वादश्या दीपकं दद्यात् त्रयोदश्या निवेदनम् ।
'चतुर्दश्या नमस्कारं पञ्चदश्या प्रदक्षिणम् ॥

---

१. 'दक्षिणे च आस्ये'  २. '–मेव तु'

'दक्षिणां तु यथाशक्ति षोडश्या च प्रदापयेत् ।
'स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनीयकम् ॥

'ततः प्रदक्षिणं कृत्वा जपं कुर्यात् समाहितः ।
'यथाशक्ति जपित्वा तु सूक्तं तस्मै[१] निवेदयेत् ॥

'देवस्य दक्षिणे पार्श्वे कुण्डं स्थण्डिलमेव वा ।
'कारयेत् प्रथमेनैव द्वितीयेन तु प्रोक्षणम् ॥

'तृतीयेनाग्निमादध्याच्चतुर्थेन समिन्धनम् ।
'पञ्चमेनाऽज्यश्रपणं चरोश्च श्रपणं तथा ।

'षष्ठेनैवाग्निमध्ये तु कल्पयेत् पाद्ममासनम् ।
'चिन्तयेद् देवदेवेशं कालानलसमप्रभम् ॥

'ततो गन्धं च पुष्पं च धूपदीपनिवेदनम् ।
'अनुज्ञाप्य ततः कुर्यात् सप्तम्यादि यथाक्रमम् ।
'समिधस्तावतीः पूर्वं जुहुयादभिघारिताः ॥

'ततो घृतेन जुहुयाच्चरुणा च ततः पुनः ।
'एवं हुत्वा ततश्चैवमनुज्ञाप्य यथाक्रमम् ।
'अग्नेर्भगवतस्तस्य समीपे स्तोत्रमुच्चरेत् ॥

'जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
'नमस्तेऽस्तु[२] हृषीकेश महापुरुष पूर्वज ॥

'नमो हिरण्यगर्भाय प्रधानाव्यक्तरूपिणे ।
'ओं नमो वासुदेवाय शुद्धज्ञानस्वरूपिणे ॥

'देवानां दानवानां च सामान्यमसि दैवतम् ।
'सर्वदा चरणद्वन्द्वं व्रजामि शरणं तव ॥

---

१. 'तस्य'
२. 'सुब्रह्मण्य नमस्तेऽस्तु महापुरुष'

'एकस्त्वमसि लोकस्य स्रष्टा संहारकस्तथा ।
[१]'अध्यक्षश्चानुमन्ता च गुणमायासमावृतः ॥

'संसारसागरं घोरमनन्तं क्लेशभाजनम् ।
'त्वामेव शरणं प्राप्य निस्तरन्ति मनीषिणः ॥

'न ते रूपं नचाऽकारो नाऽयुधानि नचाऽस्पदम् ।
'तथाऽपि पुरुषाकारो भक्तानां त्वं प्रकाशसे ॥

'नैव किञ्चित् परोक्षं ते प्रत्यक्षोऽसि न[२] कस्यचित् ।
'नैव किञ्चिदसाध्यं ते न च साध्योऽसि कस्यचित् ॥

'कार्याणां कारणं पूर्वं वचसां वाच्यमुत्तमम् ।
'योगिनां परमां सिद्धिं परमं ते पदं विदुः ॥

'अहं भीतोऽस्मि देवेश संसारेऽस्मिन् महाभये ।
'त्राहि मां पुण्डरीकाक्ष न जाने शरणं परम् ॥

'कालेष्वपि च सर्वेषु दिक्षु सर्वासु चाच्युत ।
'शरीरे विगते वाऽपि वर्तते मे महद् भयम् ॥

'त्वत्पादकमलादन्यन्न मे जन्मान्तरेष्वपि ।
'निमित्तं कुशलस्यास्ति येन गच्छामि सद्गतिम् ॥

'विज्ञानं यदिदं प्राप्तं यदिदं ज्ञानमर्जितम्[३] ।
'जन्मान्तरेऽपि मे देव मा भूदस्य परिक्षयः ॥

'दुर्गतावपि जातस्य त्वद्गतो मे मनोरथः ।
'यदि नाशं न विन्देत तावताऽस्मि कृती सदा ॥

---

१. 'अव्यक्तश्चा–'
२. 'ते न प्रत्यक्षोऽसि कस्यचित्'
३. 'विज्ञानं यदिदं प्राप्य यदिदं स्थानमर्जितम्'

'अकामकलुषं चित्तं मम ते पादयोः स्थितम् ।
'कामये विष्णुपादौ तु सर्वजन्मसु केवलम् ॥

'पुरुषस्य हरेः सूक्तं स्वर्ग्यं धन्यं यशस्करम् ।
आत्मज्ञानमिदं पुण्यं योगज्ञानमिदं परम् ॥

'इत्येवमनया स्तुत्या स्तुत्वा देवं दिनेदिने ।
'किङ्करोऽस्मीति चाऽत्मानं देवायैव निवेदयेत् ॥

'फलाहारो भवेन्मासं पश्यत्यात्मानमात्मनि ।
'फलानि भुक्त्वोपवसेन्मासमद्भिश्च वर्तयेत् ।
'अरण्ये निवसेन्नित्यं जपन्नेतमृषिं[१] सदा ॥

'त्रिस्त्रिषवणकालेषु स्नायादप्सु समाहितः ।
'आदित्यमुपतिष्ठेत सूक्तेनानेन नित्यशः ॥

'आज्याहुतीरनेनैव हुत्वैतं चिन्तयेदृषिम् ।
'ऊर्ध्वं मासात् फलाहारस्त्रिभिर्वर्षैर्जयेद् दिवम् ॥

'तद्भक्तस्तन्मना युक्तो दशवर्षाण्यनन्यभाक् ।
'साक्षात् पश्यति तं देवं नारायणमनामयम् ।
'ग्राह्यमत्यन्तयत्नेन स्रष्टारं जगतोऽव्ययम् ॥

'गृहस्थधर्मे वर्तेत न्यायवृत्तः शुचिव्रतः[२] ।
'एवं देवं चिन्तयेत नारायणमनामयम् ॥

'अर्धरात्रे त्यक्तनिद्र उत्थाय शुचिवाग्यतः[३] ।
'सम्प्रसुप्तेषु भूतेषु योगं युञ्जीत योगवित् ॥

---

१. जपन्नेतमृषिमिति । ऋषिं मन्त्रं जपन्नित्यर्थः । 'ऋषिर्वेदे वसिष्ठादौ' इत्यभिधानम् । एवमुत्तरत्रापि ।

२. '–वृत्तः समाहितः' ३. 'शुचिर्वाग्यतः'

‘ऋज्वासीनः समे देशे निवाते शब्दवर्जिते ।
‘सव्यं पादं दक्षिणस्य जानुनि श्लेषयेत् ततः ।
‘संहृत्य[1] दक्षिणं पादं सव्ये जानुनि यच्छति ॥

‘ब्रह्माञ्जलिकृतः स्वस्थो योगसम्मीलितेक्षणः ।
‘ओमित्युक्त्वा स्वहृदयं चिन्तयेदविशङ्कितः ॥

‘तत्राऽत्मानं समादध्यादिन्द्रियाणि मनस्तथा ।
‘नच बुद्ध्येत किञ्चान्यन्न पश्येच्छृणुयान्न च ॥

‘न नमस्येद् यदा योगं तदा प्राप्तः स उच्यते ।
‘हृद्येतमृषिमभ्यस्येत् पश्यन्नेव यथाश्रुति ॥

‘प्राणानायम्य चाऽसीनो यावत् तं चिन्तयेदृषिम्[2] ।
‘उच्छ्वसिष्यन्नधो नाभिं गमयित्वा मनस्तथा ॥

‘उच्छ्वसेदेवमसकृत् तन्मना योगमुन्नयेत् ।
‘एवं हि युञ्जन् सामान्यं न पश्येच्छृणुयान्नच ॥

‘तदा शनैर्नयेच्चेतो हृदयादूर्ध्वमेव तु ।
‘समौ तु जत्रू चाऽस्यं च नासिका नयने भ्रुवौ ॥

‘भ्रुवोर्मध्ये परं स्थानं तत्रैतद् धारयेत् स्थिरम् ।
‘ललाटदेशे धार्याथ मूर्धानं गमयेत् ततः ॥

‘उच्छ्वसंश्च यथाकालं नाभिं गत्वोच्छ्वसेत् पुनः ।
एतत् परं स्थानमुक्तं ब्रह्मणः परमात्मनः ॥

‘एवं युक्तो महात्मा सन्महात्मानं प्रपद्यते[3] ।
‘यदि स्यात् सुकृती शुद्धो यदि वा पापकृत्तमः ॥

---

१. ‘संहृत्य’ २. ‘यावच्चित्तं तदर्पितम्’ ३. ‘महात्मानमात्मानं प्रतिपद्यते’

‘उपलभ्य परं ब्रह्म गतिं ज्ञात्वा भवेच्छुचिः ।
‘सर्वपापानुबद्धश्चेत् बुद्ध्वैतत् प्रयतो जपेत् ॥

‘अपि जिज्ञासनादेव गच्छेत परमां गतिम् ।
‘धारणा तु पृथक् कार्या धर्मेणानेन नित्यशः ॥

‘आदित्येऽग्नौ चन्द्रमसि वृक्षाग्रेषु च धारयेत् ।
‘पर्वताग्रे समुद्रे वा यत्र वाऽपि मनो रमेत् ॥

‘न त्वेव विषयान् प्राप्य धारयीत कथञ्चन ।
‘बह्वत्र दुःखं जानीयात् प्रध्वंसे धारणाकृते ॥

‘धार्मिकाणां कुले शुद्धे योगभ्रष्टोऽभिजायते ।
‘मूर्ध्नि ब्रह्म स विन्देत स एव ऋषिसत्तमः ॥

‘तदा मूर्ध्नः परं ज्योतिर्नक्षत्रपथमुन्नयेत् ।
‘योगी योगेश्वरं प्राप्य निर्द्वन्द्वः परमात्मवित् ॥

‘सर्वत्रैवाऽत्मनाऽऽत्मानं पश्येदृषिपरायणः ।
‘जपेच्चैव सदा स्नातः पवित्रमिदमुत्तमम् ॥

‘अपि पातकसंयुक्तः कालेन सुकृती भवेत् ।
‘तपःपरायणो नित्यं सत्यवागनसूयकः ॥

‘जपन्नेतमृषिं विप्रः कालेन सुकृती भवेत् ।
‘येनयेन स कामेन जपेदिममृषिं सदा ।
‘सस कामः समृद्धः स्याच्छ्रद्दधानस्य कुर्वतः ॥

‘होमं वाऽप्यथवा जाप्यमुपहारमथो चरुम् ।
‘कुर्वीत येन कामेन तत्सिद्धिमवधारयेत् ॥

'ज्ञातिश्रैष्ठ्यं महद् वित्तं यशो लोके परां गतिम् ।
'ज्ञानेन[1] विप्रमोक्षं च तत्सिद्धिमवधारयेत् ॥

'ज्ञानगम्यं परं सूक्ष्मं व्याप्य सर्वमवस्थितम् ।
'ग्राह्यमत्यन्तयत्नेन ब्रह्माभ्येति सनातनम् ॥

'सहस्रशीर्षेति सूक्तं सर्वकामफलप्रदम् ।
'वेदगर्भशरीरेण स वै नारायणः स्मृतः ।
'ब्रह्मेन्द्ररुद्रपर्जन्या अत्र सूक्ते व्यवस्थिताः ॥

'अत्रस्थमेतद् द्रष्टव्यं जगत् स्थावरजङ्गमम् ।
'अनासादयमानोऽपि[2] भक्तिं न परिहापयेत् ॥

'भक्तानुकम्पी भगवान् श्रूयते पुरुषोत्तमः ।
'पूजार्थं तस्य देवस्य वनात् स्वयमुपाहृतात् ॥

'आरण्यकविधानेन निर्वपेत् प्रत्यहं चरुम् ।
'नारायणाय स्वाहेति मन्त्रान्ते जुहुयाद्धविः ॥

'आ सहस्रात् ततश्चक्षुर्दिव्यं होतुर्ददाति सः ।
'अपि वा चरुसाहस्रं तन्त्रेणैकेन निर्वपेत् ॥

'यावन्तो वाऽपि शक्यन्ते अह्ना सर्वान् समापयेत् ।
'सहस्रस्येप्सितानां च कामानां लभते फलम् ।
'पुरुषायुःसमायुक्तः सिद्धो वाऽपि चरेन्महीम् ॥

'ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः ।
'केयूरवान् मकरकुण्डलवान् किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥

'एतत्तु यः पठति केवलमेव सूक्तं नारायणस्य चरणावभिवन्द्य वन्द्यौ ।
'पाठेन तेन परमेण सनातनस्य स्थानं जरामरणवर्जितमेति विष्णोः ॥

---

१. 'पापेन' २. 'अतः सम्पठमानोऽपि'

'हविषाऽग्नौ जले पुष्पैर्ध्यानेन हृदये हरिम् ।
यजन्ति सूरयो नित्यं जप्येन रविमण्डले ॥

'विल्वपत्रं शमीपत्रं पत्रं भृङ्गारकस्य च ।
'मालतीकुशपद्मं च सद्यस्तुष्टिकरं हरेः ॥

'यन्नोपपद्यते किञ्चित् तद् ध्यायेन्मनसैव तु ।
'सम्पद्यते प्रसादात्तु देवदेवस्य चक्रिणः ॥

'पत्रेषु पुष्पेषु फलेषु तोयेष्वक्रीतलब्धेषु सदैव सत्सु ।
'भक्त्येकलभ्ये पुरुषे पुराणे मुक्त्यै किमर्थं क्रियते न यत्नः'

[३.१५०–२३३] इत्यादि ।

मूले 'तेषामेवैषः–' इति फलश्रुतिवाक्यं पद्यगन्धि । 'येषां तपो ब्रह्मचर्यं येषु सत्यं प्रतिष्ठितम्' इति स्फुटमनुष्टुप् । 'तेषामेवैष ब्रह्मलोकः' इत्येकाक्षराधिकाऽनुष्टुप् । 'तेषामसौ विरजो ब्रह्मलोकः' इति त्रैष्टुभः पादः । 'न येषु जिह्ममनृतं न माया च' इति जागतः । एवं पञ्चपादं छन्दः । संहृत्य चाष्टचत्वारिंशदक्षरा जगती ॥ १६ ॥

—०—

[अथ द्वितीयः प्रश्नः]

अथ हैनं भार्ग्गवो वैदर्भिः पप्रच्छ । भगवन् कत्येव देवाः प्रजा[१] विधारयन्ते कतर एतत् प्रकाशयन्ते कः पुनरेषां वरिष्ठ इति ॥ १ ॥ तस्मै स होवाच । आकाशो हवा एष देवो वायुरग्निरापः पृथिवी वाङ् मनश्चक्षुः श्रोत्रं च। ते प्राकाश्या अभिवदन्ति[२] । वयमेतद्बाणमवष्टभ्य विधारयाम इति ॥ २ ॥ तान् वरिष्ठः प्राण उवाच । मा मोहमापद्यथ[३] । अहमेवैतत् पञ्चधाऽत्मानं [४]प्रविभज्यैतद्बाणमवष्टभ्य विधारयामीति। तेऽश्रद्दधाना बभूवुः ॥ ३ ॥ सोऽभिमाना-दूर्ध्वमुत्क्रमत इव तस्मिन्नुत्क्रामत्यथेतरे सर्व एवोत्क्र-मन्ते[५] । तस्मिंश्च[६] प्रतिष्ठमाने सर्व एव प्रतिष्ठन्ते[७] । तद्यथा मक्षिका मधुकरराजानमुत्क्रामन्तं सर्वा एवोत्क्रमन्ते[५] । तस्मिंश्च[६] प्रतिष्ठमाने सर्वा एव प्रतिष्ठन्ते[७] । एवं वाङ् मनश्चक्षुः श्रोत्रं च। ते प्रीताः प्राणं स्तुवन्ति ॥ ४ ॥–

एषोऽग्निस्तपत्येष सूर्य एष पर्ज्जन्यो मघवानेष वायुः ।
एष पृथिवी रयिर्द्देवः सदसच्चामृतं च यत् ॥ ५ ॥ १ ॥

---

१. 'प्रजाम्' इति शङ्कररङ्गरामानुजौ । २. 'प्रकाश्याभिवदन्ति' इति शं.रं.रामानुजौ ।
३. 'मोहमापद्यथाः' इति रङ्गरामानुजीयः पाठः । ४. '–त्मानं विभज्यैतद्–' इति क्वचित् ।
५. 'एवोत्क्रामन्ते' इति शङ्कररङ्गरामानुजयोर्मुद्रितः पाठः ।
६. 'तस्मिंस्तु' इति रङ्गरामानुजीयः पाठः । ७. 'प्रातिष्ठन्ते' इति मुद्रितः शाङ्करः पाठः ।

अरा इव रथनाभौ प्राणे सर्वं प्रतिष्ठितम् ।
ऋचो यजूंषि सामानि यज्ञः क्षत्रं च ब्रह्म च[1] ॥ ६ ॥ २ ॥

प्रजापतिश्चरसि गर्भे त्वमेव प्रतिजायसे ।
तुभ्यं प्राण प्रजास्त्विमा[2] यत् प्राणैः प्रतितिष्ठसि ॥ ७ ॥ ३ ॥

देवानामसि वह्नितमः पितॄणां प्रथमा स्वधा ।
ऋषीणां चरितं सत्यमथर्वाऽङ्गिरसामपि ॥ ८ ॥ ४ ॥

इन्द्रस्त्वं प्राण तेजसा रुद्रोऽसि परिरक्षिता ।
त्वमन्तरिक्षे चरसि सूर्यस्त्वं ज्योतिषां पतिः ॥ ९ ॥ ५ ॥

यदा त्वमभिवर्षस्यथेमाः प्राण ते प्रजाः ।
आनन्दरूपास्तिष्ठन्ति कामायान्नं भविष्यतीति ॥ १० ॥ ६ ॥

व्रात्यस्त्वं प्राणैकऋषिरत्ता विश्वस्य सत्पतिः ।
वयमाद्यस्य दातारः पिता त्वं मातरिश्व नः ॥ ११ ॥ ७ ॥

या ते तनूर्वाचि प्रतिष्ठिता या श्रोत्रे या च चक्षुषि ।
या च मनसि सन्तता शिवां तां कुरु मोत्क्रमीः ॥ १२ ॥ ८ ॥

प्राणस्यैतद् वशे सर्वं त्रिदिवे यत् प्रतिष्ठितम् ।
मातेव पुत्रान् रक्षस्व श्रीश्च प्रज्ञां च विधेहि[3] न इति
॥ १३ ॥ ९ ॥

इति द्वितीयः प्रश्नः

—o—

१. 'यज्ञाः क्षत्रं च ब्रह्म च' इति क्वचित् । 'यज्ञः क्षत्रं ब्रह्म च' इति च ।

२. 'प्रजास्त्विमा बलिं हरन्ति यः प्राणैः' इति शाङ्करः पाठः । रङ्गरामानुजीयेऽपि तथैव पाठो दृश्यते । छन्दोऽननुगुणोऽयं पाठः ।

३. 'श्रीश्च प्रज्ञां विधेहि' इति रङ्गरामानुजीयः पाठः । 'श्रीश्च प्रज्ञां च धेहि' इति क्वचित् ।

**(भा.)** ‘वायुरग्निः’ इत्यत्र भूतवायुः । प्राणशब्देन प्रधानवायुः ॥ * ॥

—०—

**(टी.)** **‘आकाशो हवा एष देवो वायुरग्निरापः’** इत्यादिना वैदर्भिप्रश्नपरिहारः क्रियते । **अत्र** वायुशब्देन **भूतवायुः** उच्यते । भूतप्रकरणत्वात् । **‘तान् वरिष्ठः प्राण उवाच’** इत्यत्र **प्राणशब्देन प्रधानवायुः** । वरिष्ठ इति विशेषणात् । अत्रेदमाकूतम्– अयमाकाशदेवो वाय्वादीनां चाभिमानिनो ये देवाः ते प्रधानवायुना प्रजानां तत्वप्रकाशनाय नियुक्ताः[1] । तथाऽप्येनं **अभिवदन्ति वयमेवैतासां** प्रजानां **बाणं** शरीरं **अवष्टभ्य विधारयाम इति** । ‘ब कामने’ इति धातोः कामाणनहेतुत्वात् बाणशब्देन शरीरमुच्यते । अथ मुख्यप्राणस्तानुवाच– **‘मा मोहमापद्यथ’** इति । **एतत्पञ्चधा** अनेन दृश्यमानेन प्राणापानादिरूपेण **पञ्चधा** । तद्वचनेनापि **अश्रद्दधाना बभूवुः** । अथ तस्योत्क्रमणोद्यमेन श्रद्दधानाश्च सन्तस्तमस्तुवन्– **‘एषोऽग्निः–’** इत्यादिना । अत्र हि मुख्यप्राणस्य अग्न्यादिषु स्थित्वा तद्धारणादिरेवाभिप्रेयते । नतु तदैक्यम् । **‘अरा इव रथनाभौ–’**[2] इत्यादिवाक्यशेषे सदृष्टान्तं व्यधिकरणत्वेन भेदोपदेशात्[3] । **रयिर्देवो** वाक्पतिः । **सदसत्** भूतपञ्चकम् । **अमृतं** चेतनजातम् । **त्वमेव प्रतिजायसे** त्वमेव प्राजापत्ये तं जनयसीत्यर्थः । प्रजापतिरित्युक्तत्वात् । **‘तुभ्यं प्राण प्रजास्त्विमाः’** इति प्रजानां तदीयत्वोक्तेश्च न तदैक्यम् । अग्निस्तावत् देवा-नामाज्ञया हव्यं वहतीति वह्निरेव भवति । त्वं पुनस्तस्यापि नियन्तृत्वाद् **वह्नितमोऽसि** । पितॄणां कव्यदत्वात् पितृपतिर्हि स्वधाशब्दितः । तन्नियाम-कत्वात् त्वमेव **प्रथमा स्वधा** । **ऋषीणां चरितं सत्यं** च **त्वमेव** नियच्छसि । **अङ्गिरसामथर्व**नियन्ता च **त्वमेवासि** । इन्द्रे पराक्रमप्रवर्तनेन स्थितोऽसि । रुद्रस्थो जगत् परितो **रक्षिताऽसि** । ननु रुद्रस्थः कथं रक्षिता भवति? ‘रुद्रो मा विशान्तकः’ इति संहर्तृत्वश्रवणात् इति । नैष दोषः । प्रळयावस्थायां संहर्तृत्वेऽपि स्थित्यवस्थायां रक्षितृत्वोपपत्तेः । ‘तेनान्नेनाऽप्यायस्व’ इति

---

१. **‘हि युक्ताः’** ख. २. **‘अरा इवेत्यादिवाक्य–’** ख. ३. **‘भेदोपमानदर्शनात्’** ख.

वाक्यशेषात् । 'त्वादत्तेभी रुद्र शन्तमेभिः शतं हिमा अशीय भेषजेभिः', 'भिषक्तमं त्वा भिषजां शृणोमि' इति च श्रुतिः। वेदव्रतप्रवर्तकत्वात् **व्रात्यस्त्वम् एकऋषिः** प्रधानज्ञानी । वयं जगत आदिभूतस्य तव **करदातारः** । हे **मातरिश्वन्, त्वं नः पिता** चासि । मातरिश्वन् इत्यत्र पदान्तनकारस्य लोपन्यायाभ्युपगमात्, उत्तरत्र न इति षष्ठ्यादेशः स्यात् । कोणवायोः **पिता त्वमिति** चार्थः । एवं स्तुवन्तो वागाद्यभिमानिनो देवा मुख्यप्राणमनुत्क्रमणेन शिवकरत्वाय प्रार्थयन्ति– **या ते तनूरित्यदिना**। इतिशब्दः प्राणसंवादसमाप्तिं सूचयन् भार्गवप्रश्नपरिहारसमाप्तिं वक्ति ॥ १–१३ ॥

—०—

**(भा.चं.)** अवगतः सृष्टिक्रमः । अवगतश्च स्रष्टा । अवगताश्चावान्तरस्रष्टारः । प्रजापतिपदेनैव मुख्यतः पाता च विष्णुरेवेत्यवगतम् । अथावान्तरपालकाः पृच्छ्यन्त इति प्रश्नसङ्गतिः । **'प्रजा विधारयन्ते'** इति देहधारकाणां प्रश्नः । **कतरे** कियन्तः । **'प्रकाशयन्ते'** इतीन्द्रियाभिमानिनाम् । **'आकाशो वायुरग्निरापः पृथिवी'** इति धारकाः । **'वाङ् मनश्चक्षुः श्रोत्रं च'** इति प्रकाशकाः । इतरेषामुपलक्षणम् । **'प्राकाश्याः'** तत्वप्रकाशनाय देहधारणाय च **नियुक्ताः** । **'वयमेतद् बाणमवष्टभ्य विधारयामः'** प्रकाशयामश्च **'इत्यभिवदन्ति'** । स्पर्धमाना इवाभिमुखं स्थित्वा वदन्ति । वयमिति समष्टिवचनम् । अहमेव धारयामि प्रकाशयामि चेति प्रत्येकमेकैकोऽपि व्यूद इत्यर्थः । **'मा मोहमापद्यथ'** आपद्यत । आपद्यध्वम् । परस्मैभाषत्वमार्षम् । तेनैतदाह– न स्वाधिक्यघोषणार्थमयमुपदेशः । किन्तु साधुलोकोद्दिधीर्षयेति । करुणयाऽवधारणार्थं तस्य थः । 'तमेवैकं जानथ' इतिवत् । बं कामितं प्रत्यणति गच्छतीति, बं कामभोगमाणयति प्रापयतीति वा **'बाणं' शरीरमुच्यते** । बं कामितं लक्षं गच्छतीति हि शरोऽपि बाण इति भण्यते । **'अभिमानात्'** अभिमन्यमानाच्छरीरात् ईषदुद्गतः । अल्पार्थ इवशब्दः । तेषामहङ्कारं न्यक्कुर्वन्नुच्चक्रामेति च । 'किञ्चित्त्वे चोभयत्वे च संशये सदृशे तथा । इवशब्दः

प्रयुज्येत न्यक्कारेऽपि च पण्डितैः' इति हि स्मरन्ति शब्दनिर्णयज्ञाः। उभयत्वार्थे च भवति। अंशत उच्चक्राम। अंशतो नोच्चक्राम। **'उत्क्रमत इव'** इत्यप्रतिघात आत्मनेभाषः। 'वृत्ति-सर्ग-तायनेषु क्रमः' [अष्टा.सू.१.३.३८]। 'वृत्ति-रप्रतिबन्धः' इति हि जयादित्यः। तद्यथा–'शास्त्रेष्वस्य क्रमते प्रज्ञा'। न प्रति-हन्यत इत्यर्थः। **सर्व एवोत्क्रमन्ते** स्थातुं न प्रभवन्त उत्क्रमणायैव सम-नह्यन्तेत्यर्थः। अयमेव च सूत्रे सर्गपदार्थः। तद्यथा–'क्रमतेऽयं शास्त्राध्य-यनाय'। उत्सहते सन्नह्यते वेति। **तस्मिन् प्रतिष्टमाने** ईषत् प्रस्थितमात्रे सर्व एव प्रातिष्ठन्त। 'समव-प्र-विभ्यः स्थः'[अष्टा.सू.१.३.२२] इत्यात्मने-भाषः। स्वयं किल प्राणे सर्वेऽपि अवतिष्ठन्ते। श्रुतौ **'मधुकरराजानम्'** इति पुंस्त्वमविवक्षितम्। यथा मक्षिकाशब्दे स्त्रीत्वमविवक्षितम्। दार्ष्टान्तिक-विवक्षया च पुँल्लिङ्गनिर्देशः। मधुविद्योपासका देवा मधुकराः। तेषां राजा मुख्यप्राण इति। मधुविद्योपसानया च मधुमक्षिका इव देवताः। यथा राज्ञीं मक्षिकां अन्ये मधुकरा अनुगच्छन्ति। **'एवं वाङ् मनश्चक्षुः श्रोत्रं च'**। एवमाकाशो वायुरग्निरापः पृथिवी च। प्रकाशकानामेव देवानां विशिष्य विवाद इति तेषां नामतो ग्रहणम्। अत एवाऽरम्भेऽपि **'प्राकाश्याः'** इति प्रकाशने नियुक्ता एव मुखत उल्लिखिताः ॥ १– ४ ॥

द्वाभ्यां परस्परं भाषमाणाः प्राणं निर्दिशन्तः स्तुवन्ति– **एषोऽग्निस्तपति**। **एष** एवाग्नौ सूर्ये च स्थितः **तपति**। पर्जन्यस्थो वर्षति। मघवति स्थित्वा देवान् नियमयति च वर्षति च। भूतवायुस्थः प्रवहतीत्यादि। तेन मुख्यतस्तन्नामा चायमेव। तथाचोक्तमैतरेयभाष्ये– 'वायुरग्निरिति प्रोक्तो ह्यग्रणीत्वादथा-ङ्गिनाम्। नेतृत्वाददनाद्वाऽपि तस्य स्रष्टा जनार्दनः। स वायुर्वायुरूपेण जगत्पाति शरीरगः। आदित्यस्थेन रूपेण जगद् याति प्रकाशयन्। अग्निस्थेन तु रूपेण हूयते सर्वयष्टृभिः। आदाय यात्यायुरिति स एवाऽदित्य उच्यते। तत्सम्बन्धात्तु तन्नाम सूर्यस्याग्नेस्तथैव च' इत्यादि। 'यदधीना यस्य सत्ता तत्

तदित्येव भण्यते' इति च । **एष** पृथिवीस्थः सर्वधारकः । **एष** रयिस्थो **देवः** वाचं व्याहारयति । यद् वयमेनं स्तुमः सा किलास्यैव करुणा ॥ ५ ॥

रथचक्रस्य मध्यं नाभिः । प्रान्तो नेमिः । नेमिं नाभौ संयोजयन्ति काष्ठान्यरा उच्यन्ते । अयं प्राणः सर्वस्य नामरूपात्मकस्य प्रपञ्चस्याऽश्रयः, नाभिरिवाराणाम् । तदेव विविच्याऽऽह– **ऋचो यजूंषि सामानि** । शब्दजातोपलक्षणमेतत् । **यज्ञ** इति क्रियाजातोपलक्षणम् । **ब्रह्म च क्षत्रं** चेति चेतनजातोपलक्षणम् । पूजारूपं कर्म मुख्यमिति तस्य मुखतो निर्देशः । यज्ञश्च मुख्यतो ब्रह्मक्षत्रनिर्वर्त्य इति तयोः ॥ ६ ॥

इदानीमपरोक्षतः स्तुवन्ति– **प्रजापतिरि**ति । गर्भस्थप्रजानां पालकः सन् **त्वमेव गर्भे चरसि** । **त्वमेव** जनयसि च । **तुभ्यमि**ति त्वदधीना इत्यर्थः । **यत् त्वं प्राणैः** इन्द्रियाभिमानिदेवैः सह तेषां प्रतिष्ठायै स्वयमेव **प्रतितिष्ठसि** ॥ ७ ॥

पितॄणां स्वंस्वं भागं धत्ते ददाति चेति **'स्वधा' पितृपतिः** । **अङ्गिरसामथर्व**-शाखिनामथर्ववेदेष्वधीतमपि त्वमेव नियच्छसि ॥ ८ ॥

मघवानित्युक्तमपि विशेषानुसन्धानाय पुनराह– **इन्द्रस्त्वं तेजसे**ति । यथाऽग्नेर्नियमनम्, **'देवानामसि वह्नितमः'** इति पुनरुक्तम् । रुजां द्रावणेन **'रुद्रोऽसि परिरक्षिता'** । 'प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तकः । तेनान्नेनाऽप्यायस्व' [तै.आ.१०.३७] इति नारायणोपनिषदि । त्वं प्राणानिन्द्रियाणि तद्देवांश्च ग्रन्थयसि । यद्यपि रोदयसीति रुद्रः कथ्यसे । अथापि रुजां द्रावणेन रुद्रः सन् मां विश । यद्यपि संहरन्नन्तकः कथ्यसे । अथापि दोषाणामन्तकः सन् मां विश । मदर्पितेनान्नेन प्रीतो भव । मां चाभिवर्द्धयेति मन्त्रार्थः । **'त्वादत्तेभी रुद्र शन्तमेभिः शतं हिमा अशीय भेषजेभिः** । व्यस्मद् द्वेषो वितरं व्यंहो व्यमीवाश्चातयस्वा विषूचीः' [ऋ.सं.२.३३.२; तै.ब्रा.२.८.६.८] इति समग्रो मन्त्रः । गृत्समदस्यार्षं त्रैष्टुभं रौद्रं सूक्तम् । अयं मन्त्रार्थः– त्वद्दत्तैः सुखतमैः भेषजैः शतं हिमाः हेमन्तान्, शतं संवत्सरानित्येतत् । अशीय व्याप्नुयाम्,

जीवेयम्। अस्मत्तः द्वेषः द्विषः वितरं नितरां वि चातयस्व निवारय। अंहः दुरितं च विचातयस्व। विषूचीः विष्वग् व्यापिनीरमीवाः रोगांश्च विचातयस्व। तस्मिन्नेव सूक्ते चतुर्थो मन्त्रः– 'मा त्वा रुद्र चुक्रुधामा नमोभिर्मा दुष्टुती वृषभ मा सहूती। उन्नो वीराँ अर्पय भेषजेभि**र्भिषक्तमं त्वा भिषजां शृणोमि'** [ऋ.सं.२.३३.४] इति। अयमर्थः– मा त्वां रुद्र, क्रोधयाम दुर्विहितैर्नमस्कारैः। मा च दुष्टया स्तुत्या क्रोधयाम। मैव च देवर्षभ सहूत्या नीचैः सहाऽह्वानेन। नो वीरान् पुत्रान् भेषजैः उत् अर्पय उत्कृष्टतया योजय। यतस्त्वां **भिषजां भिषक्तमं शृणोमि** अत एवं प्रार्थ्यस इति ॥ ९ ॥

**यदा** पर्जन्यस्थः **त्वमभिवर्षसि अथ** तव **इमाः प्रजाः कामाय** अस्मत्कामपूरणाय यथेष्टं **अन्नं भविष्यतीत्यानन्दरूपास्तिष्ठन्ति**। 'यत्र क्व च वर्षति तदेव भूयिष्ठमन्नं भवति'[६.२.१] इति, 'यदा सुवृष्टिर्भवत्यानन्दिनः प्राणा भवन्त्यन्नं बहु भविष्यतीति' [७.१.१३] इति च च्छन्दोगोपनिषदि ॥ १० ॥

'अन्यस्य संस्कर्तुरभावादसंस्कृतो व्रात्यस्त्वम्। स्वभावत एव शुद्ध इत्यभिप्रायः' इति मायावादभाष्यम्। 'संस्कारहीनो ब्राह्मणोऽपि त्वमेव' इत्यन्ये। तामेतामपार्थप्रक्रियामपानुदन्नपूर्वमर्थान्तरमाह– **वेदव्रतप्रवर्तकत्वादिति**। **एकऋषिः प्रधानज्ञानी**। एकर्षिनामाऽथर्वाङ्गिरसां प्रवर्तको योऽग्निस्तस्मिन् स्थितश्च। सतां पालकस्त्वं **विश्वस्यात्ता**। **वयमाद्यस्य** तवादनीयस्य **दातारः**। अर्थान्तरं चाऽह– **'वयमाद्यस्य' आदिभूतस्य तव करदातारः**। **लोपन्यायेति**। 'लोपः समाने' इति हि न्यायः ॥ ११ ॥

वागादिदेवेषु **'या ते तनूः सन्तता प्रतिष्ठिता'** सततं प्रतिष्ठिता। सर्वत्र व्याप्य प्रतिष्ठिता च। **'शिवां तां कुरु'** अनुत्क्रमणेनास्माकं शिवदां कुरु ॥ १२ ॥

**'प्राणस्य'** तव **'वशे सर्वम्'**। वश इतीच्छा। इच्छाधीनमित्येतत्। न केवलं पिण्डाण्डे। **त्रिदिवे** स्वर्लोके **यत्** ते रूपं **प्रतिष्ठितम्**। तस्य ते **प्राणस्य त्रिदिवे यद्** वस्तुजातमुपस्थितमिति वा। हे **श्रीः**, अयि सरस्वति, त्वं **च मातेव**

नः **पुत्रान् रक्षस्व** । इति सपत्नीकः प्राणः स्तुतः । 'शंरूपाने नित्यरतेरियं श्रीः' इत्युक्तत्वात् । केवलप्राणपरतया योजने श्रीरिति श्रियः । श्रियश्च **प्रज्ञां च विधेहि न** इति ॥ ❊ ॥

एवं खण्डान्ते नव प्राणमन्त्राः पठ्यन्ते । वैदिकी वायुस्तुतिरियम् । तत्वमानिनो देवा ऋषयः । प्राणो देवता । 'एषोऽग्निः–' इति प्रथममन्त्रे प्रथमचरणे तावत् 'तपति+एषः' इति, 'सूरियः' इति वा क्षैप्राक्षरस्य विश्लेषेण दशाक्षरा पङ्क्तिः । उभयोर्विश्लेष एकादशाक्षरा त्रिष्टुप् । अविश्लेषे पुनर्बृहती । द्वितीये द्वादशाक्षरा जगती । तृतीये नवाक्षरा बृहती । चरमे च स्फुटमनुष्टुप् । संहत्य पङ्क्तिः, एकाक्षरोना निचृत्पङ्क्तिः, द्व्यक्षरोना विराट्पङ्क्तिः, द्व्यक्षराधिका स्वराड् बृहती वा । द्वितीयमन्त्रे स्फुटमनुष्टुप् । तृतीये प्रथमपाद एकाक्षराधिकाऽनुष्टुप् । तुरीयेऽपि तथा । पञ्चमे स्फुटं केवलाऽनुष्टुप् । षष्ठे पूर्वार्धे '–वर्षसि+अथेमाः' इति पादयोर्विश्लेषेण स्फुटमनुष्टुप् । उत्तरार्धे तुरीयचरणे नवाक्षराणीति एकाक्षराधिका भुरिगनुष्टुप् । अविश्लेषे केवलाऽनुष्टुप् । सप्तमे केवलाऽनुष्टुप् । अष्टमे प्रथमचरणे पङ्क्तिः । अन्यत्रानुष्टुप् । संहत्य च स्वराडनुष्टुप् । नवमे च मन्त्रे चरममचरणे नवाक्षराणीति बृहत्योपसंह्रियते प्राणस्तुतिः । भुरिगनुष्टुप् । केचित्तु 'श्रीश्च प्रज्ञां च धेहि नः' इत्यष्टाक्षरमेव पादं पठन्ति । अन्ते पुनरितिकरणेन प्राणस्तुतिसमाप्तिं द्वितीयप्रश्नसमाप्तिं चाऽह ॥ १३ ॥

—०—

[अथ तृतीयः प्रश्नः]

अथ हैनं कौसल्य[1] आश्वलायनः पप्रच्छ। भगवन् कुत एष प्राणो जायते। कथमायात्यस्मिञ्छरीरे। आत्मानं वा प्रविभज्य कथं प्रतिष्ठते[2]। केनोत्क्रमते कथं बाह्यमभि धत्ते कथमध्यात्ममिति॥ १॥ तस्मै स होवाच। अतिप्रश्नान् पृच्छसि ब्रह्मिष्ठोऽसीति तस्मात् तेऽहं ब्रवीमि॥ २॥ आत्मत एष[3] प्राणो जायते। यथैषा पुरुषे च्छाया एतस्मिन्नेतदाततम्। मनोकृतेनायात्यस्मिञ्छरीरे॥ ३॥ यथा सम्राडेवाधिकृतान् विनियुङ्क्त एतान् ग्रामानधितिष्ठस्वैतान् ग्रामानधितिष्ठस्वेति[4] एवमेवैष प्राण इतरान् प्राणान् पृथक् पृथगेव सन्निधत्ते॥ ४॥ पायूपस्थेऽपानं चक्षुःश्रोत्रे मुखनासिकाभ्यां प्राणः स्वयं प्रतिष्ठते[5]। मध्ये तु समानः। एष ह्येतद्धुतमन्नं समं नयति। तस्मादेताः सप्तार्च्चिषो भवन्ति। हृदि ह्येष आत्मा॥ ५॥ अत्रैतदेकशतं नाडीनां तासां

---

१. 'कौसल्यश्चाऽश्वलायनः' इति शङ्कररङ्गरामानुजौ।

२. 'प्रतितिष्ठते' इति रङ्गरामानुजीयः पाठः। 'प्रातिष्ठते' इति शाङ्करः।

३. 'आत्मन एष' इति शाङ्करः पाठः। 'आत्मन एवैष' इति रङ्गरामानुजीयः।

४. 'एतान् ग्रामानेतान् ग्रामानधितिष्ठस्वेति' इति शङ्कररङ्गरामानुजौ।

५. 'प्रातिष्ठते' इति शाङ्करः पाठः। 'प्रतितिष्ठते' इति रङ्गरामानुजीयः।

शतंशतमेकैकस्यां[१] द्वासप्ततिन्द्वासप्ततिं[२] प्रतिशाखानाडी-सहस्राणि भवन्त्यासु व्यानश्चरति ॥ ६ ॥ अथैकयोद्र्ध्व उदानः पुण्येन पुण्यं लोकं नयति पापेन पापमुभाभ्यामेव मनुष्यलोकम् ॥ ७ ॥ आदित्यो ह वै बाह्यः प्राण उदयत्येष ह्येनं चाक्षुषं प्राणमनुगृह्णानः । पृथिव्यां या देवता सैषा पुरुषस्यापानमवष्टभ्यान्तरा यदाकाशः स समानो वायुर्व्यानः ॥ ८ ॥ तेजो हवा उदानः । तस्मादुपशान्ततेजाः पुनर्भव-मिन्द्रियैर्मनसि सम्पद्यमानैर्यच्चित्तस्तेनैष प्राण आयाति[३] ॥ ९ ॥ प्राणस्तेजसा युक्तः स हाऽत्मना यथासङ्कल्पितं लोकं नयति ॥ १० ॥ य एवं विद्वान् प्राणं वेद न हास्य प्रजा हीयतेऽमृतो भवति ॥ ११ ॥ तदेष श्लोकः –

उत्पत्तिमागतिं[४] स्थानं विभुत्वं चैव पञ्चधा ।
अध्यात्मं चैव प्राणस्य विज्ञायामृतमश्नुते
विज्ञायामृतमश्नुत इति ॥ १२ ॥

इति तृतीयः प्रश्नः

—o—

१. '–मेकैकस्याः' इति रङ्गरामानुजीयः पाठः ।

२. 'द्वासप्ततिर्द्वासप्ततिः' इति शाङ्करः पाठः । रङ्गरामानुजीयेऽपि तथैव पाठः स्यात् । प्रायः स एव श्रुतिपाठः । 'द्वासप्ततिम्' इति पाठे प्रथमार्थे द्वितीयेति वक्तव्यम् ।

३. 'प्राणमायाति' इति शङ्कररङ्गरामानुजौ ।

४. 'उत्पत्तिमायतिम्' इति पाठान्तरम् ।

(भा.) आत्मतः परमात्मतः।

'विष्णोर्वायुः समुत्पन्नो वायोः सर्वाश्च देवताः।
'प्राणाद्यास्तान् नयन् प्राण आज्ञापयति राजवत्।
'स्वयं च पञ्चरूपः सन् दद्यान्मोक्षादिकं प्रभुः'
इति प्रभञ्जने ॥ * ॥

—०—

**(टी.)** सर्वप्राणधारको मुख्यप्राण इति ह्युक्तम्[1]। अथ **'कुत एष प्राणो जायते'** इत्याद्याश्वलायनप्रश्नस्य **'आत्मत एष प्राणो जायते'** इत्याद्युत्तरमाह। अत्र **'आत्मत'** इत्येतत्[2] पदमनूद्य **'परमात्मतः'** इति व्याख्याति। एतदादिवाक्यानां भावं **'विष्णोर्वायुः–'** इत्यादि प्रभञ्जनवाक्येन प्रकाशयति। **एतस्मिन्** परमात्मनि **एतत्** प्रकृत्यादिकं सर्वं **आततम्**। वागीशानादिकं तु प्राण **आततम्**। **'कथमायात्यस्मिञ्छरीरे'** इत्यस्योत्तरमाह– **मनोकृतेनेति**। 'यन्मनसा न मनुते' इत्यादेर्मनसा मन्तुमशक्यत्वान्मनोऽकृतः परमात्मा। तेन प्रेरित **आयात्यस्मिञ्छरीरे**। **'यथा सम्राट्–'** इत्यादेरर्थं **'तान् नयन् प्राणः'** इत्यादिना वाक्यशेषेण व्याख्याति। **'आत्मानं प्रविभज्य कथं प्रतिष्ठते'** इत्यस्योत्तरमाह– **पायूपस्थ** इत्यादिना। अत्र द्वन्द्वसमासस्यैकवद्भावो विहितः। पायूपस्थयोः **अपानं** प्रस्थापयति। चक्षुःश्रोत्रयोः **मुखनासिकाभ्यां** सहितयोः **प्राणः स्वयं प्रतिष्ठते**। मध्यदेशे **समानः**। **तस्मात् हि** जीवस्य **एताः सप्तार्चिषः** सप्तेन्द्रियजन्यानि ज्ञानानि **भवन्ति**। **हृदि ह्येष** परमात्मा तिष्ठति। तस्मात् समानस्तत्र वर्तते। अथवा **हृदि हि** जीवात्मा तिष्ठति। तस्मात् तस्य तत्रस्थात् सप्तज्ञानान्युत्पद्यन्ते। अथ हृदये नाडीनामेकोत्तरं शतमस्ति। **तासां** प्रत्येकं **शतंशतं** शाखानाड्यः सन्ति। पुनश्च **एकैकस्यां द्वासप्ततिन्द्वासप्ततिं**[3] **प्रतिशाखानाडीसहस्राणि भवन्ति**।

१. 'इत्युक्तम्' क. २. 'इति पदमनूद्य' क.
३. अत्रापि 'द्वासप्ततिर्द्वासप्ततिः' इत्येव पाठः स्यादिति भाति।

आसु **व्यानश्चरति**। '**अथैकया**–' इत्यादि '**केनोत्क्रमते**' इत्यस्य परिहारमाह। **अथ** हृदयदेशादूर्ध्वभागे गले वर्तमान **उदानः** तासां नाडीनां **एकया** विवक्षितलोकगमनयोग्यया विविधान् मर्त्यानुत्क्रामयन् त्रीनेव लोकान् नयति ॥ १–७ ॥

'**आदित्यो हवै बाह्यः**–' इत्यादिना '**कथं बाह्यमभि धत्ते कथमध्यात्मम्**' इत्यनयोरुत्तरमाह। आदित्यस्थो हि जीवशरीराद् बहिष्ठः **प्राणः**। स उद्यन्नेतद् बाह्यं जगदभितो धत्ते। **एष एव हि** चक्षुरभिमानिनं सूर्य**मनुगृह्णानो**ऽध्यात्मं देहेन्द्रियादिकमभितो धत्ते। अत्राऽयं विशेषः– प्राणस्तु चक्षुरादिषु स्थित्वाऽश्रुश्लेष्ममलादिकं प्रवर्तयन् आप्यं देहावयवं धत्ते। **या सा पृथिव्यां** मलापनयनादपानाख्य**देवता** संस्थिता **सैषा** पुरुषशरीरस्यापि पार्थिवावयवं धत्ते। पाय्वादिसंस्थत्वात्। अथ तच्छरीरस्य मध्यभागे यो**ऽयमाकाश**स्तस्मिन् स्थितः **समानो वायु**राकाशांशं धत्ते। किञ्च नाडीनामन्तर्भागे **व्यानो वायु**-र्वाय्वंशं[1] सञ्चारयंश्चरतीत्येतदर्थतः सिद्धम्। तेजोरूपत्वादु**दानः** शारीरमपि **तेजों**ऽशं धत्ते। **तस्माद्** देहाभिमानी जीवो **मनसि सम्पद्यमानैरिन्द्रियैः** सह **उपशान्ततेजाः** उदानेनोत्क्रामितो भवति। अथ तत्काले **यच्चित्तः** स भवेत् तं **पुनर्भवं** उद्दिश्य **तेन** जीवेन सह **एष** पञ्चरूपी **प्राण आयाति**। **स प्राण** उदानेन **युक्तः** सन् **आत्मना यथासङ्कल्पितमेव लोकं** जीवं **नयति**। नच तदीयचित्तसङ्कल्पयोर्विरोधः। आत्मसङ्कल्पानुसारेण हि तच्चित्तं प्राणः प्रणयति। **य एवं** प्राणस्योत्पत्त्यादिवैलक्षण्यं **विद्वान्**[2] तं यथावद् **वेद** तस्य सर्वाभीष्टं भवति। तत्रोक्तश्लोकस्यायमर्थः – मुख्यप्राणस्य परमात्मत **उत्पत्तिं** तस्य जीवशरीर **आगतिं पञ्चधा** विभागमध्यात्माधिदैवतयोरवस्थानविशेषं प्रवृत्तिभेदं च **विज्ञाय** परमात्मज्ञानद्वारेण क्रमादमृतत्व**मश्नुते**। अवान्तरेश्वरज्ञानस्य मुख्येश्वरज्ञाननान्तरीयकत्वात् ॥ ८–१२ ॥

—०—

१. '**व्यानो वाय्वंशं**' क. २. '**विज्ञाय**' क.

**(भा.चं.)** 'कौसल्यश्चाऽश्वलायनः' इति मूले चकारसहितं पाठं केचित् पठन्ति। षट्सु प्रश्नेषु केवलमत्रैव चकारः कुत इति चिन्त्यमेतत्। न केवलं भार्गवो वैदर्भिः, कौसल्यश्च प्राणविषयमेव प्रश्नं चकारेति च व्याचक्षते। तर्हि चतुर्थप्रश्नेऽपि चकारः स्यात्। तस्यापि प्राणविषयत्वात्। अथ जगत्सृष्ट्यादिषु भगवतः प्रधानाङ्गस्य वायोर्महिमातिशयः प्रस्तूयते। यस्य वशे सर्वमिदम्, अरा इव रथनाभौ यस्मिन् सर्वं प्रतिष्ठितम्, सोऽपि **प्राणः कुतः** कारणात् **जायते?** **'प्रतिष्ठते'** प्रतिष्ठितो भवति। प्रतितिष्ठतीति वक्तव्ये 'लोपः समाने' इत्येक-तकारलोपः। इतरांश्च प्राणान् **कथं प्रतिष्ठते** प्रस्थापयति? इति च। **कथं बाह्यमधिभूतमभितो** धारयति? **कथमध्यात्मम्?** ब्रह्माण्डे च पिण्डाण्डे चेत्येतत्॥ १॥

**अतिशयितान् प्रश्नान् पृच्छसि**। यतस्त्वं **ब्रह्मिष्ठो** वेदसारज्ञो**ऽसि**। अतः प्राणविषयः प्रश्नस्त्वय्युपपद्यते। प्रसन्नश्चाहमनेन प्रश्नेन। **तस्मात् तेऽहं ब्रवीमीति**। **'ब्रह्मिष्ठोऽसि'** इत्यतः परं श्रूयमाण इतिशब्दः **'ब्रवीमि'** इत्यस्यानन्तरं पठनीयः— **'ब्रह्मिष्ठोऽसि। तस्मात् तेऽहं ब्रवीमीति'** इति। उभयान्वयि वा। **'ब्रह्मिष्ठोऽसीत्युवाच। तस्मात् तेऽहं ब्रवीमि इति च उवाच'** इति॥ २॥

**'आत्मत एष प्राणो जायते'** इत्यवधारणार्थम्। परमात्मन एव प्राणो जायते। नान्यस्मात्। प्राणादुत्तमस्य पुरुषान्तरस्याभावात्। तथाहि च्छन्दोग-भाष्ये— 'आत्मत एष प्राणो जायत इत्यवधारणान्न भगवतोऽन्यस्मात् प्राणो जायते' इति। ननु भगवतोऽन्यस्मादपि प्राणो जायते। तथाहि बृहद्भाष्ये पठ्यते तृतीयाध्यायेऽव्याकृतब्राह्मणे— 'एवं स मानसे यज्ञे त्वयजत् केशवं विभुम्। ततोऽस्य वाचः सम्भूता भार्या तस्य सरस्वती। पुत्रः प्राणादभूद् वायुः—' इति। 'प्राणिनां धैर्यरूपं च वायो रूपान्तरं पुनः। ससर्ज मतिमान् ब्रह्मा विष्णोराज्ञापुरःसरः' इति च। अत्र द्वयी गतिर्भवति। **आत्मतः** मुख्यत आत्मशब्दवाच्यात् विष्णोरेव मुख्यत **एष प्राणो जायते**। अथ च जीव-

कलामानित्वेनामुख्यतः आत्मशब्दवाच्यात् ब्रह्मणश्चामुख्यत **एष प्राणो जायते**। तदेतदपि बृहद्भाष्य एव स्फुटम्– 'आत्मा तु जगतां ब्रह्मा तस्याऽत्मा भगवान् हरिः' इति। 'ससर्ज मतिमान् ब्रह्मा विष्णोराज्ञापुरःसरः। तस्माद् वायोः परो नास्ति ऋते विष्णुं सनातनम्' इति च। तथाच विष्णोरन्येनाजननं ब्रह्मणोऽसाधारणं लक्षणम्। विष्णुब्रह्मणोरन्येनाजननं वायोरिति। अथापि ब्रह्मणा वायोर्जनिः ब्रह्मणा विष्णोर्जनिरिव क्रीडामात्रमिति तदविवक्षित्वा 'परमात्मत एव प्राणो जायते' इति तद्विदो वदन्ति॥

अवश्यं चैतदेवं वक्तव्यम्। भगवत उत्पत्तिमात्रस्य प्रथमप्रश्न एव गतत्वात्– 'स मिथुनमुत्पादयते रयिं च प्राणं च' इति। अत्र तु प्राणस्य भगवत एवोत्पत्तिः। नेन्द्रादीनां काश्यपादिभ्य इवान्यस्मादित्यवधार्यत इति विशेषः। अयमेव च वायोर्महिमातिशयः, यद् विष्णोरेव जननम्। सर्वाधारस्यापि प्राणस्य युक्तं विष्णोः सकशाज्जननम्। आत्मा हि विष्णुः प्राणस्यापि। अन्तर्यामी स्वामीत्यर्थः॥

आत्मेति तु परमात्मैवेति ब्रह्मिष्ठः कौसल्यो जानात्येव। नितरां वेदार्थज्ञो हि ब्रह्मिष्ठः। अत एवातिप्रश्नान् प्रष्टुं प्रभुरभूत्। आपातज्ञैः प्रष्टुमशक्यतैव प्रश्नेऽतिशयो नाम। 'आत्मेति मुख्यतो विष्णुस्तदन्ये तूपचारतः। तथैव स्व इति प्रोक्तस्तस्माद् ब्रह्माऽऽत्मभूः स्वभूः' इति हि स्कान्दे॥

**वागीशानादिकं** त्विति। एतेन **'यथैषा–'** इति श्रुतेरर्थान्तरमुक्तम्– **यथैषा च्छाया** पुरुषाधीना तथा वाग्देवीमारभ्य **सर्वं एतत्** जगत् **एतस्मिन्** प्राणे **आततमिति**। उभयोरपि पूर्ववाक्ये प्रस्तुतत्वात्। तेन युक्तं प्राणस्य नारायणतनयत्वं सर्वजनकत्वं च॥

मनसा मनसि वा कृतः मनःकृतः। 'इति मनसि कृत्वाऽऽह' इत्यादि-प्रयोगात्। यो मनसि न क्रियते स मनोऽकृतः। **मनोऽकृतेन** तेनाऽत्मनैव। मनःकृतानां सर्वेषां प्राणाधीनत्वात्। स्वयं मनोमानिनोऽपि हि प्राणाधीनाः।

एतदेवोक्तम्– **'एतस्मिन्नेतदाततम्'** इति । व्याख्यायि च स्फुटम्– **'वागीशानादिकं तु प्राण आततम्'** इति । आततमित्याश्रितम् ॥ ३ ॥

**'सन्निधत्ते'** सन्निधाय च विनियुङ्क्ते । अयमत्र विशेषः– सम्राट् केवलं विनियुङ्क्ते । न स्वयं सन्निधाय । अयं तु सन्निधत्ते च विनियुङ्क्ते च ॥ ४ ॥

**'स्वयं प्रतिष्ठते'** इत्यनेनाधिगतमध्याहरति– **अपानं प्रस्थापयति** । **'प्रतिष्ठते'** इत्येतदत्राप्यन्तर्णीतकारयितमनुवर्तते वा । प्राणाग्निहोत्रे हुतं भुक्त**मन्नम्** । 'श्रोत्रं त्वक् चक्षुर्जिह्वा नासा मनो बुद्धिश्चेति सप्तज्ञानेन्द्रियाणि । तज्जन्यानि ज्ञानानि **'सप्तार्चिषः'** ॥ ५ ॥

आत्मतः परमात्मत इति भाष्यानुगुण्येनोपक्रमानुगुण्येन च लब्धमर्थमाह– **हृदि ह्येष** आत्मा **परमात्मे**ति । ननु तर्हि बादरायणसूत्रविरोधः । तत्रायं श्रुतिभागो जीवात्मपरतया विवृतः–'अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि'[२.३.२५] इति । 'हृदि ह्येष आत्मेति जीवस्यापि तथाऽभ्युपगमात्' इति भाष्यम् । 'हृदि ह्येष आत्मेति श्रुतेर्जीवस्यापि हृदि सम्यगवस्थानाभ्युपगमादन्यत्रासम्यगवस्थानाभ्युपगमात्' इति तत्वप्रदीपे । सर्वत्र मुख्योऽर्थो भगवानिति परमात्मपरतया प्रथमं व्याख्यातम् । जीवपरतयाऽपि शक्यं व्याख्यातुम् । तस्याप्यर्थस्य प्रकटप्रतिभानादित्याह– **अथवे**ति । **तत्रस्थात्** समानात् । 'द्वासप्ततिः' इति प्रथमान्तः समुचितः पाठः । 'द्वासप्ततिम्' इति पाठे प्रथमार्थे द्वितीया । 'सुपां सुपो भवन्ति' इति हि वदन्ति । प्रायशः प्राचीनटीकासम्मतोऽयमत्र नाडीनां गणनक्रमः– शतं चैका च हृदयस्य नाड्यः । तासां प्रत्येकं शतं शाखानाड्यः । तथाच नाड्यः १०१०० । तासां द्वासप्ततिसहस्राणि प्रतिशाखानाड्यः । तथाच संहतानां नाडीनां सङ्ख्या–

१०,१००x७२,०००

२,०२,००,०००
७०,७०,००,०००
७२,७२,००,०००

**आसु सर्वासु नाडीषु व्यानश्चरति** ॥ ६ ॥

**पुण्येन पुण्यं लोकं** त्रिदिवम्। **पापेन पापं** लोकं निरयम्। **उभाभ्यां** पाप-पुण्याभ्यां मिलिताभ्यां भूलोकम्॥ ७॥

**पृथिव्यां या देवता** अपानाख्या, उपरि क्षिप्तमपानयतीति, यामाकर्षणशक्ति-रित्यर्वाचीना निर्वदन्ति, सैव **पुरुषस्यापानं** मलाद्यपनयनद्वारं पायूपस्थं **अवष्टभ्य** वर्तते। धरासुरालययोर्मध्ये य **आकाशः** तत्र स्थितः समानो बाह्यं धत्ते। यश्च **अन्तरा** शरीरमध्ये **आकाशः** तत्रापि स एव समानः सन्नन्त-र्धत्ते। बाह्यगत एवाध्यात्मं **व्यान** उच्यते॥ ८॥

**'चाक्षुषं प्राणम्'** इत्यस्यार्थमाह– **चक्षुरभिमानिनं सूर्यम्**। अत्र प्राण इतीन्द्रियमान्युच्यते। न मुख्यप्राण इत्यर्थः। न हि स्वयमेव स्वात्मान-मनुगृह्णातीति युज्यते। **तदीयचित्तसङ्कल्पयोर्विरोध** इति। जीवचित्तस्य प्राण-सङ्कल्पस्य च न विरोधः शङ्कनीयः। जीवचित्तस्यापि प्राणाधीनतया तेनैव प्रणयनादिति॥ ९–१०॥

**न हास्य प्रजा हीयते**। का प्रजा? ननु प्रज्ञैव। यया सम्पादितयाऽयं साधकः प्रकृष्टो जायते सा हि प्रज्ञा प्रजोच्यते। न हि सन्तत्या प्रकृष्टो जायत इति नियमोऽस्ति। तयैव प्रज्ञाख्यया प्रजया **अमृतश्च भवति**॥ ११॥

**'आत्मत एष प्राणो जायते'** इति **परमात्मत** एव **मुख्य'प्राणस्य उत्पत्तिं विज्ञाय'**। तथा **'एतस्मिन्नेतदाततम्'** इति तस्य **'आगतिं'** आततिं च। तथा **'कथमायात्यस्मिन् शरीरे'** इत्यस्योत्तरत्वेन **'यथा सम्राडेव–'** इत्याद्युक्त-दिशा **तस्य 'प्राणस्य'** जीवशरीरे **'आगतिं च विज्ञायैव'**। **'पञ्चधा'** स्थितस्य तस्य **प्राणस्यैव विभुत्वं** विविधभवनं च नियमनवैभवं च। बहिः सूर्यादिषु स्थितस्य प्राणस्यैव **अध्यात्मं च** चक्षुरादिषु **पञ्चधाऽवस्थानं विभुत्वं च विज्ञायैव 'अमृतमश्नुते' अमृतत्वमश्नुते**। यत्र मृता न भवन्ति, यत्र वा मृतं मृतिर्न विद्यते तदमृतम्। तृतीयप्रश्नोत्तरसमाप्तिं खण्डसमाप्तिं च द्योतयितु-मितिकरणं द्विरुक्तिश्च। उत्तरमवधृतं च तेन भवति। मन्त्रेऽस्मिन् स्फुटं केवलाऽनुष्टुप्॥ १२॥

—०—

## [अथ चतुर्थः प्रश्नः]

अथ हैनं सौर्यायणी गार्ग्यः पप्रच्छ । भगवन्नेतस्मिन् पुरुषे कानि स्वपन्ति । कान्यस्मिन् जाग्रति । कतर एष देवः स्वप्नान् पश्यति । कस्यैतत् सुखं भवति । कस्मिन्नु[1] सर्वे सम्प्रतिष्ठिता भवन्तीति ॥ १ ॥ तस्मै स होवाच । यथा गार्ग्य मरीचयोऽर्कस्यास्तं गच्छतः सर्वा एतस्मिंस्तेजोमण्डल एकीभवन्ति । ताः[2] पुनरुदयतः प्रचरन्त्येवं ह वै तत् सर्वं परे देवे मनस्येकीभवति । तेन तर्ह्येष पुरुषो न शृणोति न पश्यति न जिघ्रति न रसयते न स्पृशते नाभिवदते नाऽदत्ते नाऽनन्दयते न विसृजते नेयायते स्वपितीत्याचक्षते ॥ २ ॥ प्राणाग्नय एवैतस्मिन् पुरे जाग्रति गार्हपत्यो हवा एषोऽपानो व्यानोऽन्वाहार्यपचनो यद् गार्हपत्यात् प्रणीयते प्रणयनादाहवनीयः प्राणः ॥ ३ ॥ यदुच्छ्वासनिःश्वासावेतावाहुती समं नयतीति[3] स समानो मनो ह वाव यजमान इष्टफलमेवोदानः । स एनं यजमानमहरहर्ब्रह्म गमयति ॥ ४ ॥ अत्रैष देवः स्वप्ने महिमानमनुभवति । यद् दृष्टन्दृष्टम-

---

१. 'कस्मिन् सर्वे' इति क्वचित् ।
२. 'ताः पुनःपुनरुदयतः' इति शाङ्करः पाठः ।
३. 'समं नयतीति समानः' इति रङ्गरामानुजीयः पाठः ।

नुपश्यति श्रुतंश्रुतमेवार्थमनुशृणोति देशदिगन्तरैश्च प्रत्यनुभूतं पुनःपुनः प्रत्यनुभवति दृष्टं चादृष्टं च श्रुतं चाश्रुतं चानुभूतं चाननुभूतं च सच्चासच्च सर्वं पश्यति सर्वः पश्यति ॥ ५ ॥ स यदा तेजसाऽभिभूतो भवत्यत्रैष देवः स्वप्नान् न पश्यति। [1]अथ यदेतदस्मिन् शरीरे सुखं भवति ॥ ६ ॥ स यथा [2]सोम्य वयांसि वासोवृक्षं सम्प्रतिष्ठन्ते। एवं ह वै तत् सर्वं पर आत्मनि सम्प्रतिष्ठते ॥ ७ ॥ पृथिवी च पृथिवीमात्रा चाऽपश्चाऽपोमात्रा च तेजश्च तेजोमात्रा च वायुश्च वायुमात्रा चाऽकाशश्चाऽकाशमात्रा च चक्षुश्च द्रष्टव्यं च श्रोत्रं च श्रोतव्यं च घ्राणं च घ्रातव्यं च रसश्च[3] रसयितव्यं च त्वक् च स्पर्शयितव्यं च वाक् च वक्तव्यं च हस्तौ चाऽदातव्यं च[4] पादौ च गन्तव्यं च पायुश्च विसर्ज्जयितव्यं चोपस्थश्चाऽनन्दयितव्यं च मनश्च मन्तव्यं च बुद्धिश्च बोद्धव्यं चाहङ्कारश्चाहङ्कर्त्तव्यं च चित्तं च चेतयितव्यं च तेजश्च विद्योतयितव्यं च प्राणश्च विधारयितव्यं च ॥ ८ ॥ एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्त्ता विज्ञानात्मा पुरुषः[5]

---

१. 'अथ तदैतदस्मिञ्छरीर एतत् सुखम्' इति शाङ्करः पाठः।

२. 'सौम्य' इति च पाठान्तरम्।

३ 'रसनं च' इति रङ्गरामानुजीयः पाठः।

४. 'हस्तौ चाऽदातव्यं चोपस्थश्चाऽनन्दयिव्यं च पायुश्च विसर्जयितव्यं च पादौ च गन्तव्यं च मनश्च–' इति शङ्करङ्गरामानुजयोः सम्मता श्रुत्यानुपूर्वी।

५. 'पुरुषः स परेऽक्षर आत्मनि सम्प्रतिष्ठते ॥ ९ ॥ परमेवाक्षरं प्रतिपद्यते स यो हवै–' इति शङ्करङ्गरामानुजयोः पाठः।

॥ ९ ॥ सयो ह वै तदच्छायमशरीरमलोहितं शुभ्रमक्षरं वेदयते यस्तु सोम्य स सर्वज्ञः सर्वो भवति[१] ॥ १० ॥ तदेष श्लोकः —

विज्ञानात्मा सह देवैश्च सर्वैः
प्राणा भूतानि सम्प्रतिष्ठन्ति यत्र ।
[२]तदक्षरं वेदयते यस्तु [३]सोम्य
स सर्वज्ञः सर्वमेवाऽविवेशेति ॥ ११ ॥

इति चतुर्थः प्रश्नः

—०—

(भा.) 'रश्मीनामविशेषेऽपि ह्यज्ञदृष्टि[४]व्यपेक्षया ।
'सूर्यस्य मण्डलं यान्तीत्युच्यन्ते तददर्शनात् ॥

'एवं विष्णोस्तु सामीप्याद् देवानां सुप्तिगस्य तु ।
'व्यवहाराकरत्वाच्च एकीभाव इवेर्यते' इति च ॥

भगवतः शरीरवत् सादृश्ययुक्ते जीवे सुखं भवति । 'कस्यैतत् सुखं भवति' इति पृष्टत्वात् । नह्यचेतनस्य शरीरस्य सुखं भवति । 'यस्याऽत्मा शरीरम्' इति च श्रुतिः ।

'सादृश्याद् देहवज्जीवो विष्णोस्तस्य सुखं भवेत् ।
'सुप्तौ तस्य सुखार्थं हि भगवान् सुप्तिमानयेत्' इति च ॥ * ॥

—०—

१. 'सर्वं भवति' इति क्वचित् ।
२. 'शुभ्रमक्षरम्' इति रङ्गरामानुजीयः पाठः ।
३. 'सौम्य' इति च पाठान्तरम् ।
४. 'ह्यन्यदृष्टि–' इति प्राचीनादर्शे ।

**(टी.)** **'यथा गार्ग्य मरीचयः'** इत्यादिवाक्याभिप्रायं वक्ति–**'रश्मीनामविशेषेऽपि–'** इत्यादिप्रभञ्जनवाक्येन। **यथा सूर्यस्य अस्तं गच्छतो मरीचयः** तन्मण्डलं प्रविश्य तस्मिन् **एकीभवन्ति** इति स्थूलदृग्व्यवहारेऽपि न तत् सत्यम्। नहि तासां तदैक्यं केनचित् प्रमाणेन सिद्धम्। सूक्ष्मदृग्बुद्धौ तासां पूर्ववद् भेदेन तस्मिन् स्थित्यवगमात्। एवं देवादीनामपि भगवत्सामीप्यादिनिमित्तात् तस्मिन्नेकीभाववद् व्यवहार एवाल्पज्ञैः क्रियते नत्वेकीभावोऽस्ति। सर्वप्रमाणबाह्यत्वात् तस्य। परस्य प्रतियोगित्वानुक्तेः। **परे देव** इत्यधिकरणत्वोक्तेश्च। सुप्तजीवस्तु परेण ग्रस्तकरणत्वात् श्रवणादिकं न करोति। तदा जीवं सेन्द्रियं **स्वपितीत्याचक्षते**। नह्येकीभूत इति ॥ १–२ ॥

एव**मस्मिन्** पुरे **कानि स्वपन्ती**त्यस्योत्तरमुक्त्वा **कान्यस्मिन् जाग्रती**त्यस्योत्तरमाह– **प्राणाग्नय एवे**ति। **'गार्हपत्यः'** इत्यादिना प्राणाग्नीनां विशेष उच्यते। उत्तराग्न्योरपानस्थानत्वाद् **गार्हपत्यः** [अपान] इत्युक्तः। गार्हपत्याद् विभज्यानीयत इति **व्यानोऽन्वाहार्यपचनः**। गार्हपत्यात् प्रज्वलन्नेवानीयत इत्याहवनीयनाम्ना **प्राण** उच्यते। अत्र हि **उच्छ्वासनिःश्वासावेव** पूर्वोत्तरे द्वे **आहुती**। प्राणश्रद्धादिषोडशकलासु **समं नयतीति समानो**ऽग्निरुक्तः। अन्याग्निस्त्वग्निहोत्रे पयआहुती द्वे परेण हूयमाने रुद्रवाय्वादिषोडशकलासु सन्नयति हुतवहत्वात्। 'रौद्रं गविसत्। [1]वायव्यमुपावसृष्टम्। आश्विनं दुह्यमानम्। सौम्यं दुग्धम्। वारुणमधिश्रितम्। पौष्णं समुदयन्तम्। मारुतं विष्यन्दमानम्। वैश्वदेवं बिन्दुमत्। मैत्रं शरोगृहीतम्। द्यावापृथिवीयमुद्वासितम्। सावित्रं प्रक्रान्तम्। वैष्णवं ह्रियमाणम्। बार्हस्पत्यमुपसन्नम्। अग्नेः पूर्वाऽऽहुतिः। प्रजापतेरुत्तरा। ऐन्द्रं हुतम्। एतद् वा अग्निहोत्रं वैश्वदेवं षोडशकलम्' [ऐ.ब्रा.२५.१] इति हि श्रुतिः[2]। अथ ते द्वे आहुती

---

१. **'वायव्यमपाव–'** क.

२. ईषद् व्यत्यासेन तैत्तिरीयब्राह्मणेऽपीमाः कलादेवताः पठ्यन्ते–**'रौद्रं गवि। वायव्यमुपसृष्टम्। आश्विनं दुह्यमानम्। सौम्यं दुग्धम्। वारुणमधिश्रितम्। वैश्वदेवाः बिन्दवः। पौष्णमुदन्तम्।**

जुह्वन्मनस्वी जीवो **यजमानः**। तस्मा इष्टफल[1] **उदानोऽग्निः**। पुण्यलोकप्राप्तिनिमित्तत्वात्। किञ्च **स एनं** जीवं स्वप्नावस्थायां **ब्रह्म**समीपं **गमयति**। सुप्त्यवस्थायामेव ह्यन्तःप्रवेशः ॥ ३–४ ॥

**'कतर एष देवः स्वप्नान् पश्यति'** इत्यस्योत्तरमाह– **अत्रैष देव** इति। **अत्र** ब्रह्मसमीपे **एष देवः** पञ्चधा वर्तमानः मुख्यप्राणस्तु भगवन्**महिमानमनुभवति**। यथा **सर्वं पश्यति**। ब्रह्माख्यो विष्णुदेवस्तु **स्वमहिमानं** स्वयमेव **अनुभवति**। 'न ते महित्वमन्वश्नुवन्ति' इत्यादेः। अयं भावः– जीवः जाग्रदवस्थायां **दृष्टन्दृष्टं** स्वप्नेऽ**नुपश्यति**। तत्प्रकटनादिभिः स्वप्नो भगवन्महिमा। न केवलं तद्देशकालगं तत्रैव प्रकटयति। नापि सकृद् दृष्टं सकृदेवेत्याह– **देशे**ति। चशब्दात् वस्तुविशेषाणामावापोद्धापतश्च प्रकटयति। तदेव विशिनष्टि– **दृष्टं चे**ति। पुरुषो विषाणी भाषत इत्यादि सुघटं दुर्घटं चेति **सर्वं पश्यति** संसारी, यतः सर्वशक्तिर्भगवानेवं **पश्यति** दर्शयति ॥ ५ ॥

**स** जीवो **यदा तेजसा** उदानेन प्रेरकेण प्राज्ञे विष्णौ प्रवेशनात् तत् **तेजसाऽभिभूतो भवति अत्र** निद्रावस्थाया**मेष देवः** स्वाप्नान् पदार्थान् न प्रदर्शयति। **'कस्यैतत् सुखम्'** इत्यस्योत्तरमाह– **अथ यदि**ति। **भगवत** इत्यादेस्तद्भाष्यस्यायमर्थः। **अथ यत्** कस्यैतदिति पृष्टं सौप्तिकं **सुखं** तद् **भगवतः शरीरवत्** सादृश्ययुक्तत्वात् शरीरशब्दिते **जीवे भवति**। अचेतनस्य शरीरस्य सुखभोक्तृत्वासम्भवात्। **'सादृश्याद् देहवज्जीवः–'** इत्यादिप्रभञ्जनवाक्यं च प्रमाणमाह ॥ ६ ॥

वयसां निवासवृक्षवद् विष्णुरेव सर्वस्याऽश्रयः। अथ **'पृथिवी च –'** इत्याद्युत्तरवाक्यैरेतदेव सविस्तरमाह ॥ ७–८ ॥

---

सारस्वतं विष्यन्दमानम्। मैत्रं शरः। धातुरुद्वासितम्। बृहस्पतेरुन्नीतम्। सवितुः प्रक्रान्तम्। द्यावापृथिव्यꣳ ह्रियमाणम्। ऐन्द्राग्नमुपसन्नम्। अग्नेः पूर्वाऽऽहुतिः। प्रजापतेरुत्तरा। ऐन्द्रꣳ हुतम्' [तै.ब्रा.२.१.७.१] इति।

१. 'तस्मादिष्टफल–' क.'इष्टफलदः' इति मूलपाठः स्यात्।

**'एष हि द्रष्टा'** इत्यादिना दर्शनादिस्वातन्त्र्यनिमित्तात् पृथिव्यादिधारणं युक्तमेवास्येत्युपपादयति। **विज्ञानात्मा पुरुषः** विशिष्टज्ञानानन्ददेहो[1] विष्णुः ॥ ९ ॥

तद्वेत्ता **सर्वज्ञः** सर्वपुरुषार्थी च **भवति** ॥ १० ॥

तत्र **एष श्लोकोऽस्ति– विज्ञानात्मेति** । **स** पूर्वोक्तः **सर्वज्ञः सर्वमेवाऽविवेश** । सर्वः परिपूर्णो विष्णुः । तज्ज्ञस्तमेव प्रविशतीत्यर्थः ॥ ११ ॥

—०—

**(भा.चं.)** प्राणस्यैव महिमातिशयः पुनरारभ्यते । कानि इन्द्रियाणि, तदभिमानिदेवता इत्येतत्, **अस्मिन् पुरुषे** पुरगते जीवे स्वपति **स्वपन्ति** । **कान्यस्मिन्** स्वपत्यपि जाग्रति । अथवा **अस्मिन् पुरुषे** अस्मिन् पुरे शरीरे **'कानि स्वपन्ति । कानि'** वा **'जाग्रति'** इत्यादि । अत एवोत्तरमन्त्रमवतारयति– **एवमस्मिन् पुर** इत्यादिना ॥ १ ॥

**'तत् सर्वं परे देवे मनस्येकीभवति'** । चक्षुराद्यभिमानिदेवताजातं अवबोधात्मकत्वान्मनोनाम्नि मनःस्थिते परमात्मन्येकीभवति । तत्समीपे निर्व्यापारं निलीय तिष्ठति । मनःस्थे मुख्यप्राणे च । **तेन** कारणेन तदा **एष सुप्तः पुरुषः न शृणोतीत्यादि** । यदेकः शृणोति तत् परेऽपि शृण्वन्ति, यदेकः पश्यति तत् परेऽपि पश्यन्ति, यदेको जिघ्रति तत् परेऽपि जिघ्रन्ति । तदेतत् सूचयति शृणोतीत्यादि परस्मैपदेन । यदेको रसयते, तदेक एव रसयते, न परोऽपि रसयते । एकः स्पृशते, एकोऽभिवदते, एक आदत्ते, एक आनन्दयते, एको विसृजते, एक एव चेयायते । तदेतत् सूचयति रसयत इत्याद्यात्मनेपदेन । रूपं शब्दो गन्धश्च परगतः स्वैरिन्द्रियैरनुभूयते, स्पर्शादिस्तु स्वेन्द्रियाणां धर्म इत्येतत् । **आनन्दयते** आनन्दमनुभवति । उपस्थविषयः । पतिर्जायामानन्दयति,

---

१. **'विशिष्टानन्ददेहो–'** क.

जाया च पतिमानन्दयतीति च। पुरीषं **विसृजते**। **नेयायते** न गच्छति। इण् गतौ, यङ्। तदाऽयं पुरुषः **'स्वपितीत्याचक्षते'**। यतो ज्ञानकर्मेन्द्रियमानिनस्तदा स्वपन्ति। नन्वस्वप्रा देवाः? सत्यम्। न स्वपन्त्येव। किन्तु स्वपन्तीव। परे देवे मनसि निलीय निर्व्यापारास्तिष्ठन्तीत्यर्थः। अथच **'स्वपितीत्याचक्षते'**, स्वं ह्यपीतो भवतीति, नैकीभवतीति ॥ २ ॥

कानि स्वपन्तीत्यवगतम्। अथ **कानि जाग्रति**? **'प्राणाग्नय एवैतस्मिन् पुरे जाग्रति'**। कथं प्राणा अग्नयः? अग्नयः पञ्च, प्राणा अपि पञ्चेति सङ्ख्यासाम्यात् तावत्। प्राणाग्निहोत्रे प्राणा एव ह्यग्नयः। एवमस्मिन्नन्तरङ्गयज्ञे पुनरन्यच्चोपासावेद्यं पाञ्चविध्यमाह पिप्पलादः– **'गार्हपत्यो ह वा एषोऽपानः'** इत्यादिना। यथा गार्हपत्योऽग्निः उत्तराग्न्योराहवनीयान्वाहार्यपचनयोरपनयनस्थानं तथाऽपानोऽपि प्राणस्य च व्यानस्य चोत्तराग्निस्थानीययोरपनयनस्थानमिति स गार्हपत्य उच्यते। गार्हपत्येन ह्यपानीयेते उत्तराग्नी आहवनीयान्वाहार्यपचनौ। अग्निशरणमध्ये गार्हपत्य इवापानः शरीरमध्ये मूलाधारे व्यवस्थितः। तत ऊर्ध्वं सरन् प्राणो भवति। परितः सरन् व्यानो भवति। कथं प्राण आहवनीयः? आह– **'प्रणयनादाहवनीयः प्राणः'**। **गार्हपत्यात् प्रज्वलन्नेवाऽनीयत** इति प्रणयनेनाऽहवनीयः **प्राणः**। प्राणश्च तत्साधर्म्यादाहवनीय उच्यते। मुखे ह्यन्नं हूयते। नासिकायामुच्छ्वासनिःश्वासौ। रूपं चक्षुषि। शब्दः श्रोत्र इत्यादि। 'अग्निनाऽग्निः समिद्ध्यते' इति हि श्रुतिः। 'आहवनीयोऽग्निर्गार्हपत्यात् समिद्ध्यते' इति च भाष्यम्। नारायणाग्निना प्राणाग्निः समिद्ध्यत इति च ॥

कथं व्यानोऽन्वाहार्यपचनो नाम दक्षिणाग्निः? आह– **गार्हपत्याद् विभज्याऽनीयत इति**। एतदप्युक्तम्– 'अग्निनाऽग्निः समिद्ध्यते'। सम्भिद्य इद्ध्यत इत्यर्थः। तेन **अन्वाहार्यपचनो व्यानः**। तत्साधर्म्याद् व्यानश्चान्वाहार्यपचनः। स हि सर्वमनुगुणं पचति यद् देहधारणार्थमाहार्यते। हृदयाद् दक्षिणसुषिरद्वारेण निर्गच्छतीति दक्षिणाग्निश्च स इति वदन्ति ॥ ३ ॥

**'उच्छ्वासनिश्वासौ'** द्वे **'आहुती'** **पूर्वोत्तरे** अग्निप्रजापतिदैवत्ये । 'अग्नेः पूर्वाऽऽहुतिः । प्रजापतेरुत्तरा' इति श्रवणात् । कथं **समानः**? भुक्तमन्नं **प्राणादिषोडशकलासु** **'समं'** आ सम्यक् **'नयती'**ति । कथमग्निः समानः? हुतामाहुतिं रुद्रादिषोडशकलासु समानयतीति । के प्राणादयः षोडश कलाः? 'प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नमन्नाद् वीर्यं तपो मन्त्राः कर्म लोका लोकेषु नाम च' इत्युपरि वक्ष्यमाणाः । तदभिमानिनश्चोपरि स्फुटीकरिष्यन्ते । के रुद्रादयोऽग्निहोत्रे षोडश कलाः? आह– **'रौद्रं गविसत्–'** इत्यादिना ऐतरेयब्राह्मणवचनेन । अग्निहोत्रे होतव्यस्य क्षीरस्य षोडश कलाः । तद्देवताश्च षोडश । दोहनात् पूर्वमूधसि सम्भृतस्य पयसो रुद्रो देवता । उपगतवत्सस्य प्रस्नुतस्य वायुः । दुह्यमानस्याश्विनौ । दुग्धस्य सोमः । अग्नावारोपितस्य वरुणः । अग्निस्पर्शेनोत्सर्पतः पूषा । उद्धृत्य विष्यन्दमानस्य मरुतः । 'ऊर्ध्वीभवत् क्षीरकं तु मङ्गलं मारुतम्' इति हि वदन्ति । उपरि बिन्दुभावं गतस्य विश्वे देवाः । उपरि मण्डभावेन घनीभूतस्य मित्रः । अधिश्रयिण्या अवरोपितस्य द्यावापृथिव्यौ । यज्ञशालां नेतुं सन्नद्धस्य सविता । नीयमानस्य विष्णुः । नीतस्य बृहस्पतिः । प्रथमं हूयमानस्य अग्निः । परस्ताद् हूयमानस्य प्रजापतिः । इन्द्रः प्रधानदेवतेति ता इमा रुद्राद्या इन्द्रान्ताः षोडश पयःकलादेवताः । अत्र नीयमानस्य पयसः स्वयं विष्णुर्देवता । अन्यत्र तत्तत्कलादेवतागतो विष्णुरिति विशेषः ॥

अथ को यष्टा? **'मनो ह वाव यजमानः'** । कथं जडस्य मनसो याजमान्यम्? चेतनविवक्षया न दोष इत्याह– **मनस्वी जीवो यजमानः** । मनुते इति मनो जीव उच्यते । कथमुदानोऽग्निः? **'इष्टफलमेवोदानः'** । इष्टफलं प्रत्युन्नयनादुदानः । समं प्राणेऽप्यग्नावपि । **इष्टफल उदानोऽग्निरि**ति । इष्टं फलं यस्मात् स इष्टफलः । इष्टफलद इत्यर्थः । न केवलं देहत्यागानन्तरमिष्टफलदः । अस्मिन्नेव शरीरे प्रत्यहं **स्वप्नावस्थायां ब्रह्मसमीपं** नयतीति स उदानः । उत्कृष्टस्य हरेः समीपे आनीय स्थापनात् ॥ ४ ॥

**एष देव** इति प्राणनारायणावुच्येते । **प्राणः** भगवतो **'महिमानमनुभवति'** । नारायणस्तु स्वमहिमानमेव स्वयमनुभवति। जीवेन **अदृष्टमश्रुतमननुभूतं च** स्वयं **'सर्वं पश्यति'** । जीवश्च पश्यति । यतः **'सर्वः'** सर्वशक्तिर्भगवानेवं **'पश्यति'** दर्शयति, प्राणश्च। **'सच्चासच्च'** इति किमुच्यते? आह– **सुघटं च दुर्घटं** चेति । यतः स्वप्ने विषाणिनमपि शशं पश्येदेव ।। ५ ।।

ननु **'शरीरे सुखं भवति'** इति सुखायतनत्वमेवोच्यते। न सुखभोक्तृत्वम्। तद् युक्तमचेतनस्यापि शरीरस्य । सत्यम् । भोगायतनं शरीरमुच्यते । परन्तु 'कस्मिन्नधिकरणे सुखं भवति' इति न गार्ग्येन पृष्टम्। नापि सुप्तौ सुखं शरीरे वा भवति, शरीराद् बहिरेव वा क्वापीति संशयः। किन्तु कस्य भोक्तुरयं सौप्तिकः सुखानुभव इत्येव प्रश्नः । अत उत्तरवाक्यमपि तथैव व्याख्येयम् । भगवच्छरीरस्थानीये जीवे भोक्तरि सत्ययं सौप्तः सुखानुभवः सम्भवतीति । नन्वयमपि व्यर्थः प्रश्नः। जीवस्य सुखमित्यपि सर्वोऽपि जानात्येव। न भोः । उपरतसमस्तेन्द्रियव्यापारस्य जीवस्य कथं सुखानुभव इति गार्ग्यस्य जिज्ञासा। शरीरे सति हि सुखादिभोगः । सुप्तौ शरीरस्य निवृत्तत्वात् कथं सुखानुभव इति गार्ग्यस्य हार्दं जानन्नेव मुनिः पिप्पलाद आह– 'शरीरे सुखं भवति' इति। सत्यं शरीरे सत्येव भोगः । अस्ति हि सुषुप्तावपि स्वरूपभूतं शरीरम्। तस्य भगवच्छरीरस्थानीयत्वाच्छरीरशब्दवाच्यत्वं च युज्यते। तथाच स्वरूपभूते शरीरे स्वरूपभूतं सुखं स्वरूपेणैवानुभूयत इत्युक्तं भवति ।। ६ ।।

**स यथा,** भगवतः सर्वाश्रयत्वे दृष्टान्तो यथा । यस्तु साधुभिर्गुणैः सौशील्यसौन्दर्यादिभिः परेषां मनांस्यावर्जयति स सौम्य उच्यते । यः सोमपानमर्हति स कर्मानुष्ठाननिष्ठः सोम्य उच्यते। **'वासोवृक्षम्'** इत्यत्र 'वासः'पदेन निवास उच्यते। वाससो निवासस्यायं वृक्ष इति । वाससे निवासाय वा । वयांस्यत्राऽसत इति, वसन्त्यस्मिन्निति वा वासाः । वासाश्चासौ वृक्षश्चेति वासोवृक्षः ।। ७ ।।

मूले **'पृथिवीमात्रा'** इत्यादिना पृथिव्यादीनां सूक्ष्मावस्था गन्धतन्मात्रादय उच्यन्ते । पृथिवी स्थूलतया मीयते ज्ञायते निर्मीयते वाऽनयेति पृथिवीमात्रा । नतु गन्धादयः । तेषां 'घ्राणं च घ्रातव्यं' चेत्यादिना पृथगुल्लेखात् । **आपोमात्रेति** । छन्दसि बहुलमीदृशाः प्रयोगा भवन्ति । अपां मात्रेत्यर्थः । 'अन्नमयं सोम्य मन आपोमयः प्राणः' [६.२.९] इति च छन्दोगोपनिषदि । **'तेजः'** इति चेतनोच्यते । 'बहुस्मरणशक्तिस्तु चेतनेत्यभिधीयते' इति हि स्मरन्ति । जन्मान्तरादिस्मरणमेव च विद्योतनं नाम । **प्राण** इति मुख्यवायुः ॥ ८ ॥

**'एष हि'** परमात्मा मुख्यतो **'द्रष्टा स्प्रष्टा श्रोता'** इत्यादि । **'विज्ञानात्मा'** इत्यानन्दस्याप्युपलक्षणमित्याह– **विशिष्टज्ञानानन्ददेहो विष्णुरिति** । स एव हि विष्णुपदार्थः । वीति विशिष्टमुच्यते । षकारो ज्ञानवचनः । 'षकारः प्राण आत्मा' इति श्रुतेः । अण गताविति प्रकृष्टमणनं ज्ञानं च हि प्राणशब्दार्थः । णश्च निर्वृतिवाचकः । तेन सुष्ठूक्तम्– **'विशिष्टज्ञानानन्ददेहो विष्णुः'** इति ॥ ९ ॥

**'अच्छायं'** तमसः परस्तात् । **'अशरीरं'** लिङ्गशरीररहितम् । **'अलोहितं'** लोहितादिसप्तधातुमयस्थूलशरीररहितम् । अत एव लोहितादिप्राकृतवर्णरहितं च । यः **'सयो ह वै'** जिज्ञासायां निरतत्वेन विश्रुतः । प्राचीना शैलीयम् । लोकेष्वपि चेदृशा व्याहारा भवन्ति । तद्यथा– यत्तत् सास्नादिमत् सा गौरिति, यस्स परं विषहते स पुरुष इति । नातः पुनरुक्तिः । **'स सर्वज्ञः सर्वो भवति'** सर्वपुरुषार्थी भवति । सर्वं पुरुषार्थजातमस्येति । मत्वर्थीयोऽच् । 'सर्वं भवति' इति पाठे सर्वं पुरुषार्थं प्राप्नोतीत्यर्थः । 'भू प्राप्तौ' ॥ १० ॥

**प्राणा** इन्द्रियाणि पञ्च च महा**भूतानि** स्वाभिमानिभिः **सर्वैर्देवैश्च यत्र** सम्यक् प्रतिष्ठितानि भवन्ति स **विज्ञानात्मा** परमपुरुषः । तदेव पर**मक्षरम्** । **यस्तु तद् वेदयते स** तादृशः साधकः **सर्वज्ञ** उच्यते । सर्वस्य परिपूर्णस्य

विष्णोः परिपूर्णत्वेन ज्ञातत्वात्। ज्ञानेन च तेन तमेव परिपूर्णमाविशति चेति मन्त्रवर्णश्लोकार्थः। 'विज्ञानात्मा' इति मन्त्रे प्रथमचरमचरणौ त्रैष्टुभौ। मध्यमौ जागतौ। उपजातिरियम्। स्वराट् त्रिष्टुब् वा। विराड् जगती वा । इतीति चतुर्थप्रश्नमुपसञ्जहार ॥ ११ ॥



[अथ पञ्चमः प्रश्नः]

अथ हैनं शैब्यः सत्यकामः पप्रच्छ। स यो ह वै तद् भगवन् मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत कतमं वाव स तेन लोकं जयतीति ॥ १ ॥ तस्मै स होवाच। एतद् वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारस्तस्माद् विद्वानेतेनैवायनेनैकतरमन्वेति[1] ॥ २ ॥ स यद्येकमात्रमभिध्यायीत स तेनैव संवेदितस्तूर्ण्णमेव जगत्यामभिसम्पद्यते। तमृचो मनुष्यलोकमुपनयन्ते। स तत्र तपसा ब्रह्मचर्येण श्रद्धया सम्पन्नो महिमानमनुभवति ॥ ३ ॥ अथ यदि द्विमात्रेण मनसि सम्पद्यते सोऽन्तरिक्षं यजुर्भिरुन्नीयते सोमलोकं स सोमलोके विभूतिमनुभूय पुनरावर्त्तते ॥ ४ ॥ यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिद्ध्यायीत स तेजसि सूर्ये सम्पन्नो यथा पादोदरस्त्वचा विनिर्म्मुच्यते। एवं ह वै स पाप्मना विनिर्म्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकम् ॥ ५ ॥ स एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते ॥ ६ ॥ तदेतौ श्लोकौ भवतः —

तिस्रो मात्रा मृत्युमत्यः[2] प्रयुक्ता
अन्योन्यसक्ता अनविप्रयुक्ताः।

---

१. 'विद्वानेतेनैवाऽयतनेन' इति शां.रङ्गरा.पा.।

२. 'मृत्युमन्त्यः–' इति पाठान्तरमपि रङ्गरा. पठति।

क्रियासु बाह्यान्तरमद्ध्यमासु[१]
सम्यक् प्रयुक्तासु न कम्पते ज्ञः ॥ ७ ॥

ऋग्भिरेतं यजुर्भिरन्तरिक्षं
सामभिर्यत्तत् कवयो वेदयन्ते ।
[२]तमोङ्कारेणायनेनान्वेति विद्वान्
यत् तच्छान्तमजरममृतमभयं परं चेति ॥ ८ ॥

इति पञ्चमः प्रश्नः

—०—

(भा.) 'प्रणवेन हरिं द्ध्यायन् ब्रह्मलोकं समेत्य च ।
'ज्ञानं चतुर्म्मुखात् प्राप्य मुच्यते नात्र संशयः ॥ * ॥

—०—

**(टी.)** ओमित्याक्रियमाणत्वादोङ्कारो विष्णुर्भगवान्[३] । एतदेव पूर्वोत्तरकालवर्ति **ब्रह्म** । एतदेव सर्वेषामभीष्टलोकप्रापकम् । अनेनैव त्रयाणां लोकाना**मेकतरमन्वेत्युपासकः** । तत्रैवोपास्तिविशेषेण लोकविशेष इत्याह– **स यदीति** । **स** उपासको **यदि** भगवन्त**मेकमात्रं** अ इत्येकमात्रेणैव प्रणवेन संवेद्य**मभिध्यायीत** तर्हि तावन्मात्रविशेषेणैव हि भगवान् **संवेदितोऽनेन** । अतस्तथोपासको **जगत्यामेव** प्रतिमादिसंस्थं भगवन्त**मभिसम्पद्यते** । ऋग्देवतास्त**मुपासकं** तेनायनेन **मनुष्यलोकमुपनयन्ते** । ऋग्वेदमूलत्वादकारस्य । **तत्र** तपआदिभिः **सम्पन्नो**[४] महान् भवति ॥ १–३ ॥

---

१. **'बाह्याभ्यन्तरमध्यमासु'** इति शाङ्करः पाठः ।
२. **'तमोङ्कारेणैवाऽयतनेनान्वेति'** इति शां.रङ्गरा. पा. । **'तमोङ्कारेणैवायनेनान्वेति'** इत्येके ।
३. **'–रो भगवान्'** क .
४. **'सम्पद्यमानो–'** क.

ओ इति **द्विमात्रेण** भगवदुपासकस्तु **मनसि सम्पद्यते**। प्रतिबिम्बमात्रं सामान्यरूपं वा पश्यतीत्यर्थः। **स सोमलोकं** प्राप्य तत्फलं भुक्त्वा **पुनरावर्तते** ॥ ४ ॥

**यः पुनरेतमित्यादेरभिप्रायं** तु **'प्रणवेन हरिं ध्यायन्'** इत्यादिना तत्वविवेकवाक्येन प्रकटयति। पादा उदरे गूढत्वेन स्थिता अस्येति **पादोदरः** पन्नगः। जीवघनो जीवसारश्चतुर्मुखः ॥ ५–६ ॥

अत्रोदाहृतश्लोकयोरयमर्थः। ओङ्कारस्य श्रूयमाणा अकारादयः **तिस्रो मात्रा** विशेषेणैव ओमित्यन्योन्यसक्ततया पुरुषेण प्रयुक्ततया **मृत्युमत्यो** भवन्ति। मृत्युमत्याययन्त्युपासकमिति[1] मृत्युमत्य उच्यन्ते। किञ्च पुनरत्र[2] प्रथमा त्वेका पुनः प्रथमाद्वितीये च द्वे अन्योन्यसक्ते इति पक्षद्वयविवक्षायामेतास्तिस्रो **मृत्युमत्यः** सांसारिकफलदा भवन्ति। भुवि दिवि चेति शेषः। अनः प्राणघोषः। तेन विशेषतः **प्रयुक्ताः**। बाह्यक्रिया प्रतिमादौ भगवदुपासनम्। आन्तरा आत्मनि साक्षिणा ब्रह्मदृष्टिः। मध्यमा मनसा तत्प्रतिबिम्बादिदृष्टिः। आसु तिसृष्वपि **क्रियासु** विष्णौ **सम्यक् प्रयुक्तासु** सतीषु प्राज्ञो **न कम्पते** सुस्थिरो भवति ॥ ७ ॥

**ऋग्भिरेतं** भूलोकं **अन्वेति** एकमात्रोपासकः। **यजुर्भिरन्तरिक्षं** सोमलोकं द्विमात्रोपासकः। **सामभिस्तु** ज्ञानिभिर्वेदितव्यं ब्रह्मलोक**मन्वेति** त्रिमात्रोपासकः ॥ ८ ॥

—०—

**(भा.चं.)** उपास्यमीमांसामवसायेदानीमुपासनामीमांसामारभते। **'प्रायणान्तम्'** मरणान्तम्। **'परं'** पूर्वकालवर्ति **'ब्रह्म'**। **'अपरं'** उत्तरकालवर्ति। दत्तकपिलादिकं व्यासकृष्णादिकं च ओङ्कारवाच्यं ब्रह्मैवेत्यर्थः। तथाहि माण्डूक्यामुपनिषदि– प्रणवो ह्यपरं ब्रह्म प्रणवश्च परं स्मृतः' [४.४] इति।

---

१. '–मिति हि मृत्यु–' क. २. 'किञ्चात्र पुनः' ख.

व्याचख्यौ च भाष्यकारः–'पूर्वावतारे पश्चिमावतारेऽपि पूर्ण एवेति 'प्रणवो ह्यपरं ब्रह्म' इत्यादेरर्थः' इति । उद्धधार च ब्रह्मतर्कवाक्यम्–'परत्वमपरत्वं च विष्णोरेकस्य वै यदा । श्रूयते नतु सामर्थ्यभेदस्तत्र कथञ्चन । अवतारस्य पूर्वत्वात् पौर्वापर्यमुदाहृतम्' इति ॥

श्रीजयतीर्थास्तु–'यदोङ्कारः, ओमित्याक्रियमाणं वस्तु, तदेतत् परं चापरं च ब्रह्म । यस्मात् प्रणवो मुख्यतः परमात्मनः प्रतिपादकः, यस्माच्च तत्प्रतिमात्वेनामुख्यतो विरिञ्चप्रतिपादकश्च, तस्माद् विद्वान् प्रणवेनोपासकः एतेनैव उपासनाख्येन अयनेन गमनसाधनेन परापरब्रह्मणोरेकतरमन्वेति प्राप्नोति' इति व्याचक्षते। आपातत इदं भाष्याननुगुणमिव भाति। अत एवास्य भाष्यानुगुणं हृदयमाविष्कृतं श्रीवादिराजश्रीचरणैः–'परं वैकुण्ठादिलोकस्थितमन्यानधिष्ठितं ब्रह्म । अपरं चतुर्मुखाख्यप्रतिमान्तर्गतं ब्रह्म । तदिदमुक्तं टीकाकृता– अमुख्यतो विरिञ्चप्रतिपादक इति । गङ्गाजलवाचकगङ्गापदस्य तत्सम्बन्धिनि तीरे अमुख्यप्रयोगवत् ब्रह्मान्तर्गतविष्णुवाचकप्रणवेन तत्सन्निधानात् लक्षणया विरिञ्चेऽपि प्रयोग इति भावः । 'अहमेवाखिलगुणो वाचकः प्रणवो मम' इति स्मृतेः, 'ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्' इति गीतोक्तेश्च नारायणादिनामवत् प्रणवस्यापि विष्णवसाधारणनामत्वात्' इति ॥

**'एकतरं'** एकतमम् । 'यत्रोभयोः प्रयोगो न तत्रैकार्थौ तरप्तमौ' इति हि स्मरन्ति । **'संवेदितः'** उपासनया ज्ञातः । **'जगत्यां'** भूमौ । **'तेनायनेन'** ओङ्कारेणैव भगवता। **उपनयन्ते** सम्मानपूर्वकं नयन्ति। 'सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः' [अष्टा.सू.१.३.३६]। **'सामभिरुन्नीयते ब्रह्मलोकम्'** चतुर्मुखलोकम् ॥

तत्र जीवसारात् **चतुर्मुखात्**, तदुपदेशबलात् **पुरि** हृत्कमले शयानं वैकुण्ठपुरि च शेषपर्यङ्के शयानं **पुरुषोत्तमं** **ईक्षते** । तदेतदुक्तम्– **'मुच्यते नात्र संशयः'** इति। 'जीवघनो जीवसारो ब्रह्मा। तस्मात् तदुपदेशादित्यर्थः'[१.१.५] इति तत्वप्रदीपे ॥ १–६ ॥

अक्षरसाम्यान्निर्ब्रूयादित्येतत् स्मारयन्नाह– **मृत्युमत्याययन्तीति मृत्युमत्यः**। आययतीति इण् गताविति धातोर्णिचि रूपम्। तद्यथा– वेगेनात्येति इतरानिति अत्य इत्यश्व उच्यते। अत्र पुनरकारस्य ईभावः स्त्रीत्वात्। तेन मृत्युम्+अति+ई 'मृत्युमती' इति रूपम्। अनेन प्राणघोषेण **विप्रयुक्ताः**। प्राणशक्तिपूरणेन गम्भीरघोषवत्तयोच्चारिताः ॥ ७ ॥

**तमोङ्कारेणायनेन** आश्रयेण तमेवोङ्कारं **विद्वाननुगच्छति**। स्वानुगुण-मानन्दमनुभवति। यत्तदोङ्कारवाच्यं परं ब्रह्म **कवयो वेदयन्ते**, यच्च **शान्तमजर-ममृतमभयं** सर्वोत्तमं सर्वविलक्षणं चेति। अथवा **ओङ्कारेण** आश्रयेण **यत्तत् कवयो वेदयन्ते** त्रिमात्रोपासकप्राप्यत्वेन, तं ब्रह्मलोकं सत्याख्य**मन्वेति**। ततश्च विद्वान् चतुर्मुखाल्लब्धज्ञानः परं ब्रह्मान्वेति। अर्थद्वयमपि मनसि निधायाऽह– **ब्रह्मलोकमन्वेति त्रिमात्रोपासक** इति। पूर्वस्मिन्नर्थे ब्रह्मैव ज्ञानरूपत्वाल्लोकश्चेति ब्रह्मलोकः। इतीति समाख्याश्लोकसमाप्तिं पञ्चमप्रश्नोत्तरसमाप्तिं चाऽह ॥

अत्र 'तिस्रो मात्राः' इति स्फुटं त्रिष्टुप्। 'ऋग्भिरेतम्' इति द्वितीयश्लोके प्रथमः पाद एकादशाक्षरस्त्रैष्टुभः। द्वितीयतृतीयौ द्वादशाक्षरौ जागतौ। चरमः षोळशाक्षर इत्यनुष्टुब्द्वयगर्भ इत्यपूर्वा छन्दःसंसृष्टिः ॥ ८ ॥

—०—

[अथ षष्ठः प्रश्नः]

अथ हैनं सुकेशा भारद्वाजः पप्रच्छ। भगवन् हिरण्यनाभः कौसल्यो राजपुत्रो मामुपेत्यैतं[1] प्रश्नमपृच्छत। षोडशकलं भारद्वाज पुरुषं वेत्थ[2]। तमहं कुमारमब्रुवम्। नाहमिमं वेद यद्यहमिममवेदिष्यं[3] कथं ते नावक्ष्यमिति। समूलो वा एष परिशुष्यति योऽनृतमभिवदति तस्मान्नार्हाम्यनृतं वक्तुम्। स तूष्णीं रथमारुह्य प्रवव्राज। तं त्वा पृच्छामि क्वासौ पुरुष इति॥ १॥ तस्मै स होवाच। इहैवान्तः शरीरे सोम्य स पुरुषो यस्मिन्नेताः षोडश कलाः प्रभवन्तीति॥ २॥ स ईक्षाञ्चक्रे। कस्मिन्[4] न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि। कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामीति॥ ३॥ स प्राणमसृजत। प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नमन्नाद् वीर्यं तपो मन्त्राः कर्म लोका लोकेषु नाम च[5]॥ ४॥ स यथेमा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति। भिद्येते तासां नामरूपे समुद्र इत्येवं

---

१. '–मुपेत्यैनं प्रश्न–' रङ्गरा.पा.।

२. 'वेत्थेति' रङ्गरा.। 'वेत्थ तं मह्यं ब्रवीहीति' इति कचित्।

३. '–वेदिषम्' इति पाठान्तरम्।

४. 'कस्मिन्नह–' शां.रङ्गरा. पा.।

५. 'लोकेषु च नाम च' इति शां.पाठ इति भाति।

प्रोच्यते। एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति भिद्येते चाऽसां नामरूपे पुरुष इत्येवं प्रोच्यते स एषोऽकलोऽमृतो भवति ॥ ५ ॥ तदेष श्लोकः—

अरा इव रथनाभौ कला यस्मिन् प्रतिष्ठिताः।
तं वेद्यं पुरुषं वेदयथा[1] मा वो मृत्युः परिव्यथा इति ॥ ६ ॥

तान् होवाच। एतावदेवाहमेतत् परं ब्रह्म वेद नातः परमस्तीति ॥ ७ ॥ ते तमर्च्चयन्तस्त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसीति। नमः परमऋषिभ्यो नमः परमऋषिभ्यः ॥ ८ ॥

इति षष्ठः प्रश्नः

इति षट्प्रश्नोपनिषत् समाप्ता

—०—

ॐ ॥ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ॥
स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥
ॐ शान्तिः शान्तिः शान्तिः ॥

—०—

१. 'वेद यथा मा वो मृत्युः—' इति शं.पा. 'वेद मा वो मृत्युः—' इति रङ्गरा.पा.।

(भा.) ‘कर्म्मेति पुष्करः प्रोक्त उषा नामाभिमानिनी ।
‘लोकाभिमानी पर्ज्जन्यः स्वाहा वै मन्त्रदेवता ॥

‘तपोऽभिमानी वह्निश्च वरुणो वीर्यदेवता ।
‘अन्नस्य देवता सोमो मनोनामाऽनिरुद्धकः ॥

‘इन्द्रियेशाश्च सूर्याद्याश्चक्षुराद्यभिमानिनः ।
‘रुद्रो वीन्द्रः शेषकामौ मनसस्त्वेव देवताः ॥

‘श्रद्धेति वायोः पत्नी स्यात् सर्वेषां प्रभवाप्यया ।
‘तस्याश्च कारणं प्राणः सर्वेषामुत्तमोत्तमः ॥

‘तस्यापीशः कारणं च वासुदेवः परोऽव्ययः ।
‘न तस्य सदृशः कश्चित् कुत एवोत्तमो भवेत् ।
‘तं ज्ञात्वा मुच्यते जन्तुर्विदित्वैवं परावरम्’

इति तत्वविवेके ॥

‘एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
‘खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी’

इति मन्त्रोक्त एव क्रमः । नहीन्द्रियेभ्यो मनः पश्चात् । ‘तत्प्राक्छ्रुतेश्च’ इति च भगवद्वचनम् ।

‘विष्णोः प्राणस्ततः श्रद्धा तस्या रुद्रो मनोऽभिधः ।
‘तस्मादिन्द्रस्त्विन्द्रियात्मा तस्य सोमोऽन्नदेवता ॥

‘ततश्च वरुणः सृष्टस्तस्मादग्निस्ततोऽवरः ।
‘आकाशदेवता विघ्नस्ततो वायोः सुतो मरुत् ॥

‘तस्मादग्निः पावकाख्यः प्रथमोऽग्नेः सुतस्ततः ।
‘ततः पर्ज्जन्य उद्भूतः स्वाहाऽतो मन्त्रदेवता ॥

'उदकात्मको बुधस्तस्या उषा नामात्मका ततः ।
'ततः शनिः पृथिव्यात्मा कर्म्मात्मा पुष्करस्ततः ॥

'क्रमात् प्रत्यवरा एते मुक्ताः सर्वगुणैरपि ।
'नित्यमुक्तस्तथा विष्णुः प्राणादप्युत्तमोत्तमः' इति च ।

समुद्रे इत्येवं प्रोच्यते। पुरुषे इत्येवं प्रोच्यते। 'भिद्येते तासां नामरूपे', 'भिद्येते चासां नामरूपे' इत्युक्तत्वात्। अज्ञैरनवगतान्यपि समुद्रे स्थितानां नदीनां विष्णौ स्थितानां मुक्तानां च भिन्नान्येव नामरूपाणि सन्त्येवेत्यर्थः। नच भेदशब्दो नाशे प्रयुज्यमानः क्वचिद् दृष्टः । घटादावपि बहुभाव एव भेदशब्दः प्रयुज्यते । नाशस्त्वर्थत एवावगम्यते । नचात्रार्थतोऽपि नाशोऽवगम्यते । नहि नामानि रूपाणि च कपालवद् बहुधाभूतानि तिष्ठन्ति। अतो 'भिद्येते' इति पृथक्त्वमेवोच्यते। 'अरा इव रथनाभौ कला यस्मिन् प्रतिष्ठिताः' इति वाक्यशेषाच्च । अतः पुरुषे भिन्नानि प्रतिष्ठितानीत्येवार्थः। अस्तगमनं त्वादित्यवदज्ञानामविज्ञेयत्वमेव।

'प्राणादयः कला यस्मिन् मुक्ता नित्यं प्रतिष्ठिताः ।
'पृथक्पृथङ् नामरूपैर्न्नमस्तस्मै पराय ते' इति च सत्तत्वे ॥

'नामरूपाद् विमुक्तः' इत्यनेनापि नामरूपामुक्तत्वमुच्यते । विप्रिय इत्यादिवत्। 'नामरूपे अविहाय' इति च पूर्वत्र। 'अनन्तं वै नामानन्ता विश्वे देवाः' इति नामरूपयोरनन्तत्वं हि श्रुतिर्वक्ति। 'यत्र पूर्वे साद्ध्याः सन्ति देवाः', 'स तत्र पर्येति जक्षन् क्रीडन् रममाणः', 'सोऽश्नुते सर्वान् कामान्त्सह ब्रह्मणा विपश्चिता', 'ऋचां त्वः पोषमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्करीषु' इत्यादेश्च।

अतः सर्वमुक्तेभ्योऽप्युत्तमोत्तमः परिपूर्ण्णो नारायण इति सिद्धम्॥ * ॥

नमोनमोऽस्तु हरये प्रेष्ठप्रेष्ठतमाय मे ।
परमानन्दसन्दोहसान्द्रानन्दवपुष्मते ॥ * ॥

**इति श्रीमदानन्दतीर्थभगवत्पादविरचितं**
**श्रीषट्प्रश्नोपनिषद्भाष्यं समाप्तम्**

—०—

**(टी.)** षोडशकलः **पुरुषः** सर्वेशो विष्णुः । **'स प्राणमसृजत–'** इत्यादिना कलानां सृष्टिमाह । अथ तासां देवताविशेषं तारतम्यविशेषं च प्रपञ्चयति– **कर्मे**त्यादिना तत्वविवेकवाक्यशेषेण । **पुष्करो** वरुणपुत्रः कर्मदेवता । **उषा** अश्विनोर्भार्या । **स्वाहा**ऽग्निभार्या । मन्त्रो वाग्व्यवहारः । तप आलोचनम् । **'इन्द्रियेशाश्च सूर्याद्याश्चक्षुराद्यभिमानिनः'** इत्यस्यायमर्थः– सोमवायुसूर्याद्याः श्रोत्रत्वक्चक्षुराद्यभिमानिनः । तथाच भागवते–'दिग्वातार्कप्रचेतोऽश्वि-वह्नीन्द्रोपेन्द्रमित्रकाः'[२.५.३०] इति । 'सोमवित्तपसूर्याप्पा अश्व्य-ग्नीन्द्रेन्द्रसूनवः । यमो दक्षश्चेन्द्रियेशाः' इति चान्यत्र च । 'इन्द्रसूनुर्यज्ञनामा जयन्त इति चोच्यते' । **वायोः पत्नी** तु खं वायुरित्यादीनां **सर्वेषां** प्रभ-वाप्ययस्थानभूता । **परावरम्** देवतातारतम्यम् । तदप्यत्रोक्तमेव हीत्यत आह– **एतस्माज्जायत** इत्यादि । इह तावत् **'स प्राणमसृजत'** इत्यारभ्य कलानां स्रष्टा भगवानित्येतदेवोच्यते । न पुनः सृष्टिक्रमः । **'एतस्माज्जायते प्राणः–'** [आथ.२.१.३] इत्यादिना मन्त्रवर्णेनोक्त एव हि तासां सृष्टिक्रमो भवति । नहि भूतेन्द्रियसृष्ट्यनन्तरं मनःसृष्टिः । प्रत्युत मनःसृष्ट्यनन्तरमेवेन्द्रियभूत-सृष्टिः । अपरथा ब्रह्मसूत्रविरोधाच्च । अथाप्येनं सृष्टिक्रमं **'विष्णोः प्राणः–'** इत्यादिना तत्वविवेकवाक्येन सुव्यक्तं व्याख्याति ॥ १–४ ॥

**'समुद्र इत्येवं प्रोच्यते'**, **'पुरुष इत्येवं प्रोच्यते'** इत्यनयोर्दृष्टान्तदार्ष्टान्तिक-वाक्ययोः **समुद्रे पुरुषे** चेति पदच्छेदं करोति । **'स यथेमाः नद्यः स्यन्दमानाः'**

इति दृष्टान्तवाक्येन **नद्यः समुद्रे** स्थिता इत्येवं भेद एवोच्यते। **'एवमेवास्य'** इति दार्ष्टान्तिकवाक्येऽपि **'इमाः कलाः पुरुषे** स्थिताः**'** इत्येवं भेद एवोच्यते। कुतः? **तासां** नदीनां **नामरूपे** समुद्रस्य नामरूपाभ्यां **भिद्येते** [तथा, **आसां** कलानां **च नामरूपे** पुरुषस्य नामरूपाभ्यां **भिद्येते**] इत्युभयत्रापि भेदस्यैवो**क्तत्वात्**। अथ समुद्रः पुरुषः इति पदं छित्वा ताः समुद्रा भवन्ति इमाश्च पुरुषा भवन्तीत्येवमभेदः प्रोच्यत इत्यङ्गीकारे तत्तन्नामरूपयोर्भेदविधिविरोधः स्यात्। अनयोर्वाक्ययोरभिप्रायं वक्ति– **अङ्गैरिति**। अत्र **'भिद्येते'** इति भेदशब्दस्य नाशार्थ[त्व]माशङ्क्य परिहरति– **नचेति**। भेदशब्दार्थं निगमयति– **अत** इति। नामरूपयोः पृथक्त्वमेवोच्यते। नतु नाशः। वाक्यशेषेऽप्याधाराधेयभावेन भेदोक्तेः। अथ वाक्यार्थं निगमयति– **अत** इति। नच **'अस्तं गच्छन्ति'** इत्यपि नाश उच्यत इत्याह– **अस्तगमनं त्विति**। **अविज्ञेयत्वं** स्थानान्तरप्रवेशात्। मुक्तानां नामरूपप्रहाणमन्यत्रापि नोच्यत इत्याह– **नामरूपादिति**। नामरूपाभ्यां मुक्तो न भवतीति **विमुक्त** उच्यते। प्रियो न भवतीति **विप्रिय** इतिवत्। नच तत्र 'नामरूपे विहाय' इति पूर्ववाक्यविरोधः। तत्रापि **अविहाय'** इत्यभिप्रेतत्वात्। **नामरूपयोरनन्तत्वमनन्त**कालीनत्वम्। **'यत्र पूर्वे साध्याः सन्ति देवाः'** इत्यादिश्रुत्युपन्यासादिहोक्तानां प्राणादिदेवानां पूर्वकल्पवर्तिनामपि[1] अनन्तपरम्पराणां परमपुरुषाद् भिन्नत्वम्, तदुपासनान्मोक्षम्, स्वेच्छयैव सञ्चरणादिकं [2]सर्वकामभोगम्, सर्वविद्याभिरपि भगवद्ध्यानं चेति बहूनर्थविशेषानभिप्रेतान् **प्रकटयति**। अस्यामुपनिषद्यादित आरभ्योक्तमर्थमशेषं निगमयति– **अतः सर्वमुक्तेभ्योऽप्युत्तमोत्तमः परिपूर्णो नारायण इति सिद्धमिति**॥ ५–८॥

अथ भाष्यकारभट्टारको ग्रन्थावसानेऽपीष्टदेवतायै हरये नमस्करोति–

---

१. 'पूर्वापरकालवर्तिनामपि' ख. २. 'सहकाम–' क.

नमोनमोऽस्तु हरये प्रेष्ठप्रेष्ठतमाय ते[1] ।
परमानन्दसन्दोहसान्द्रानन्दवपुष्मते ॥ * ॥

यस्य त्रिरूपाण्युदितानि वायोर्वेदे बलज्ञानवतो बळादौ ।
दशप्रमत्याख्यतृतीयरूपी षट्प्रश्नभाष्यं कृतवान् रमेशे ॥ * ॥

तस्य टीकामिमां शक्त्या कृत्वा विष्णोः पदाब्जयोः ।
समार्पयद् वामनोऽयं सततं तत्प्रसत्तये ॥ * ॥

ज्ञानानन्दादिनिर्दोषसम्पूर्णगुणविग्रह ।
सर्वप्रेष्ठप्रेष्ठतम नमो नारायणाय ते ॥ * ॥

[2]श्रीनारायणपादाब्जद्वन्द्ववन्दारवेऽनिशम् ।
नमोऽस्तु श्रीमदानन्दतीर्थप्रज्ञाय नित्यशः ॥ * ॥

तत्पादसेवासुधया वर्द्धिता ये निरन्तरम् ।
परमेभ्यो गुरुभ्यो नः सर्वदैव नमोनमः ॥ * ॥

**इति श्रीमदानन्दतीर्थभगवत्पादविरचितश्रीषट्प्रश्नोपनिषद्भाष्यस्य टीका त्रैविक्रमार्यदासरचिता समाप्ता**

—०—

**(भा.चं.)** चेतनाचेतनजगन्नियन्ता विष्णुर्देवतातारतम्यान्तगत्वेनोपास्य इतीदानीमुपसंह्रियते । अस्या उपासनाया दौर्लभ्यज्ञापनाय काञ्चनाख्यायिकामुपक्रमते– **'हिरण्यनाभः कौसल्यो राजपुत्रः'** इत्यादिना । कौसल्यः कोसलदेशपतेस्तनयः । तदेव स्फुटमाह– राज्ञः पुत्रः क्षत्रियकुमार इति । **'न अवेदिष्यम्'** । विद ज्ञाने । लृङ् । 'लिङ्निमित्ते लृङ् क्रियातिपत्तौ' [अष्टा.

---

१. **'प्रेष्ठप्रेष्ठतमाय मे'** इति मङ्गलपद्ये **'मे'** इति भाष्यकारेणोक्तं व्याकुर्वन् टीकाकृदाह– **'ते'** तव भाष्यकारस्य प्रेष्ठप्रेष्ठतमायेति । **'हरये ते नमः'** इति वा ।

२. ख.पाठे पूर्वार्धोत्तरार्धयोर्व्यत्यासेन पाठः । उत्तरार्द्धे च– **श्रीमन्नारायणपदद्वन्द्ववन्दारवेऽनिशम्'** इति पठ्यते । **'द्वन्द्वं वन्दामहेऽनिशम्'** इति क्वचित् ।

सू.३.३.१३९] इति हि स्मरन्ति। 'किमिति **'नावक्ष्यमिति कुमारमब्रुवम्'** उल्लाघयन् अब्रवम् । **'परिशुष्यति'** सर्वपुरुषार्थवञ्चितो भवति । तन्मूलं पुण्यजातमपि नश्यति। **'तस्मान्नार्हाम्यनृतं वक्तुम्'** इति च **'तं कुमारमब्रुवम्'**। **स** राजपुत्रः नैराश्यात् किमपि वक्तुमप्रभवन् किं करणीयमित्यप्यजानन् अनिवृत्तजिज्ञास एव **तूष्णीं रथमारुह्य** मदाश्रमात् **प्रस्थाय** कोसलान् **वव्राज** जगामेति। 'तूष्णीं व्रीडितो प्रगतवान्' इत्यपि व्याचक्षते। स तु आश्वतरमत एवाऽशुतरं **रथमारुह्य** जगाम मां पुनः संशयरथमारोप्य। अतः **तं** प्रश्नं त्वामिदानीं **पृच्छामि** चिरकालनिरूढसन्देहापोहार्थम्। पुरुषशब्देनैव सामान्यतस्तं नारायणं जानन् विशेषजिज्ञासया पृच्छति– **'क्वासौ पुरुषः'** उपास्य **इति** ॥ १ ॥

अत्र कलाशब्देन जडकलास्तदभिमानिनश्चोच्यन्ते। प्राण इति तु चेतनकला जीवस्वरूपम्। 'षोडशी कला जीवस्वरूपम्' इति टीकाकृतैवान्यत्रोक्तत्वात्। जीवकलाया अभिमानिनां च सृष्टिरिति देहसृष्टिरेव। अभिमानसृष्टिश्च। सोम इव सोम्यः। 'शाखादिभ्यो यत्'[अष्टा.सू.५.३.१०३]। स्वभावतो मृदुर्मनोज्ञश्च । शाखादिषु सोमशब्दोऽपि पठनीयः । अनियतो ह्याकृतिगणो भवति। सोमपानार्हो वा ॥ २–३ ॥

**प्राणादनन्तरं श्रद्धामसृजत** भारतीम्। **अन्नात्** अन्नाभिमानिनः सोमादनन्तरं वीर्यमानिनं वरुणम् । **वीर्यं** सामर्थ्यातिशयः, रेतो वा । अन्यत्र न क्रमविवक्षेति न पञ्चमी। **अश्विनोर्भार्या, उषाः**। या उषोदेवता। अनिरुद्धभार्या पुनरुषा ॥

'विशुद्धिसाधनं शरीरशोषणादिलक्षणं **तपः**, ऋगादयो **मन्त्राः'** इत्येके। आद्यं कर्मणा गतम् । द्वितीयमपूर्णमिति षोडशकलान्तर्गते मन्त्रतपसी स्वयमाह– **मन्त्रो वाग्व्यवहारः । तप आलोचनम् ।** मनसाऽदावालोचयति– मयेदं

करणीयमिति। तदिदं तपः। 'तप आलोचने'। ततो वाचा व्याहरति– अहमिदं चिकीर्षामीति। सोऽयं मन्त्रः। ततः करोति। तदिदं कर्म। 'मत्रि गुप्त-परिभाषणे'। गुप्तत्वमविवक्षित्वा केवलं भाषणेऽर्थेऽत्र मत्रिः प्रयुक्त इति॥

ननु को लोकः? यः कर्मणाऽऽप्यते। यदाहुः परे– 'कर्मफलभूताः स्वर्गादयो लोकाः' इति। एतदप्यनुमतं स्यादिति न पृथग् व्याचख्यौ। ननु कथमथ त्रिलोकमानिता पर्जन्यस्य? जीवानां लोकत्रयप्राप्तौ पर्जन्यो हेतुभूत इति लोकमानी स उच्यते; नतु लोकनियामकत्वेन। अथापि न युक्तम्। 'यस्मिन्नेताः षोडश कलाः' इति कलानां शरीरे स्थित्युक्तेः। नहि त्रयो लोकाः शरीरे भवन्ति। मैवम्। नायमर्थः श्रुतेः– 'यस्मिन् शरीरे षोडश कला भवन्ति' इति। किन्तु, 'यस्मिन् परमपुरुषे स्वाश्रये प्रविष्टास्तिष्ठन्ति, येन च प्रभवन्ति जायन्ते, यस्मिन्नाश्रये सत्येव च स्वस्वकार्यप्रभवो भवन्ति' इति। तेन न कोऽपि क्षुद्रोपद्रवः। भवन्ति च कलामानिनः शरीरेऽपि। कलानां शरीरे निगमनार्थमेव 'लोका इन्द्रियगोळकाः' इति श्रीजयतीर्थैर्व्याख्यातमिति भाति। प्राचीनटीकाकारास्त्वन्यथा विवृणते॥

यद्वा लोका इति स्वार्जितं स्थिरं चरं च स्वम्। अथवा भूतेन्द्रियाणां सङ्घातरूपाणि शरीराणि लोकाः। युक्तं च पर्जन्यस्य सस्यादिजननेन शरीरपोषहेतुतया शरीरमानित्वम्। प्रसिद्धश्च लोकशब्दः शरीरे। शरीरनिमित्तं च नाम चैत्रो मैत्र इत्यादि। पुरुषः सिंहो गजः श्वा वृक्ष इत्यादि च। प्रथा च नाम। तद्यथा– रामो नाम। राम इति प्रथित इत्यर्थः॥

**इन्द्रियेशाश्च सूर्याद्याः**। अयमर्थः– दिगभिमानिनो मित्रयमवरुणकुबेराः सोमश्च श्रोत्राभिमानिनः। तथाह्युक्तम्– 'मित्रो यमश्च वरुणः कुबेरश्च दिगीश्वराः। श्रोत्राभिमानिनः सर्वे वैदिकश्रवणोचितम्। श्रोत्रं चन्द्रस्तथा स्मार्ततान्त्रिकश्रवणोचितम्। यम एव षडङ्गानां विषयश्रवणोचितम्। श्रोत्रं तु वरुणः काम्यशास्त्रार्थं मित्र एव च। श्रोत्रं यन्नीतिशास्त्रार्थं कुबेरस्तत् प्रकीर्तितः'

इति । एतेन तेषां तारतम्यक्रमोऽप्युक्तः । यमचन्द्रमसौ प्रायः समानौ । ततो वरुणः । ततो मित्रस्ततः कुबेर इति । वायुसुतो मरीचिः कुबेरश्च त्वगिन्द्रियस्य । सूर्यश्चक्षुषः । वरुणो रसनायाः । अश्विनौ नासायाः । वह्निर्वागिन्द्रियस्य । इन्द्रो हस्तयोः । इन्द्रसूनुर्जयन्तनामा यज्ञः पादयोः । तस्मिन्नुपेन्द्रस्य भगवतो विशेषसन्निधानं बलाधानाय । इन्द्रसूनुरपरः शम्भुनामाऽपि पाद-देवता । मित्रो यमश्च पायोः । दक्षप्रजापतिरुपस्थस्य देवतेति । 'कः प्रजापति-रुद्दिष्टः' इति ह्यभिदधति । **'खं वायुरित्यादीनां सर्वेषां'** चतुर्दशकलानाम्, कलादेवतानां च । परावरमिति पारावर्यमुच्यत इत्याह– **परावरं देवतातार-तम्यमिति** । परं परं विदित्वा, अवरमवरं विदित्वेति । परा अप्यवरा यस्मात् तं च वासुदेवं सर्वोत्तमं विदित्वा ॥

नन्वत्र– **'इन्द्रियं मनः'** इति मनसः पश्चात् सृष्टिः श्रूयते । 'मनः सर्वेन्द्रियाणि च' इत्याथर्वणे पूर्वम् । उभयोरपि श्रुतित्वाविशेषात् कथमाथर्वणोक्त एव क्रम इति निर्णीयेत? निर्णीयेत **'मन्त्रोक्त एव क्रम'** इति । मन्त्रब्राह्मणयोर्मन्त्रस्य प्राधान्यात् । ब्राह्मणस्य मन्त्रव्याख्यानरूपत्वात् । ननु व्याख्यानतो विशेष-प्रतिपत्तिः । तेन व्याख्यानानुगुणतया मन्त्रार्थ एवोन्नेय इति । सत्यम् । अथापि क्वचित् मूलानुगुणतया व्याख्यानमप्युन्नेयं भवति यत्र व्याख्यानं साव-काशम् । अत्र तु प्रवृत्तिक्रमापेक्षया व्युत्क्रमेण निर्देश इति सावकाशं व्याख्यानम् । एतेन भागवतादिषु व्युत्क्रमेण सृष्टिनिर्देशोऽपि गदिताभिप्रायो भवति । अथाप्यतिशङ्कमानं भगवान् वेदव्यास एव स्वयमित्थम्भाव-माहेत्याप्याययति–**'तत्प्राक्च्छ्रुतेश्च'** [ब्र.सू.२.४.४] इति । इन्द्रियेभ्यः पूर्वं मनसो जननश्रवणाच्च 'मनः सर्वेन्द्रियाणि च' इति श्रुताविति । 'पूर्वं मनः समुत्पन्नं ततोऽन्येषां समुद्भवः । तदनुत्पत्तिवचनमल्पोपचयकारणात्' इति स्मरणाच्चेति चकारार्थः ॥

**'विष्णोः प्राणस्ततः श्रद्धा'** । उपरि **'अग्निस्ततोऽवरः'** इति पठितोऽवरशब्दः सर्वत्रान्वेति । **विष्णोरवरः प्राणः** । **ततोऽवरा श्रद्धा** भारतीत्यादि । **'ततः पर्जन्य**

उद्भूतः' इति पठित उद्भूतशब्दोऽपि यथासम्भवमन्वेति। **विष्णोः प्राण उद्भूतः**। **'तस्या रुद्रः'**। **तस्या अवरो रुद्रः**। अतस्तस्या अनन्तरमुद्भूतः। **तस्याः** सकाशाच्च। तथाहि ब्रह्माण्डे– 'यस्याः सकाशात् परमं विदन्ति शेषः सुपर्णो गिरिशः सुरेन्द्रः। माता च यैषां प्रथमैव भारती सा द्रौपदी नाम बभूव भूमौ' इति ॥

**'प्रत्यवराः'** प्रत्येकमवराः। नैकोऽपि तत्र समबल इत्यर्थः। अत एवेन्द्रिय-देवतासु प्रधान इन्द्र एवात्रेन्द्रियात्मा गदितः। पूर्ववचने तु प्रत्यवरत्वविवक्षा नास्तीति 'इन्द्रियेशाः सूर्याद्याः' इत्युक्तम्। तेषु सूर्यसोमयमाः समानाः। वित्तपः पूर्वमुक्तोऽपि सूर्याद् वरुणाच्चावर इत्यादि। तेऽपि तरतम-भावेनैवानुसन्धेया इति ज्ञापयितुम्– **'विदित्वैवं परावरम्'** इत्युपसमहारि। निरदेशि च स्फुटं तरतमभावः– **'विष्णोः प्राणस्ततः श्रद्धा–'** इत्युत्तर-वचनेन। तदर्थमेव च द्वयमपि वचनमुदधारि भाष्यकारेणेति ॥ ४ ॥

समुद्रः अयन आश्रयो यासां ताः, समुद्रमयमाना वा, **'समुद्रायणाः'** समुद्रं प्रति सरन्त्यः **'समुद्रं प्राप्यास्तं गच्छन्ति'** अदर्शनं गच्छन्ति। **भिद्येते तासां नामरूपे**। भिन्नतया तिष्ठत एव। नतु नश्यतः। तद् यथा –'भिद्येते जीवेश्वरौ' ॥

नामरूपयोरविश्लेषं सूचयितुमेव 'नामरूपेऽविहाय' [आथ.३.२.८] इत्य-प्रगृह्याऽह। तद् यथा भगवान् सूत्रकारः– 'सम्भृतिद्युव्याप्त्यपि' [ब्र.सू. ३.३.२४]इति द्वित्वमविवक्षितमिति सूचयितुं द्विवचनमप्रगृह्यासूत्रयत्। 'भृतिव्याप्त्यादयो गुणाः' इति हि भाष्यवचनम्। यथा वा भगवत्पादः– 'कृत्वा भाष्यानुभाष्येऽहम्' इति भाष्यानुभाष्यकरणं स्वरूपभूतया सहजशक्त्येत्य-प्रगृह्याऽह। अत एव चात्रापि भाष्ये– **'भिद्येते चासां नामरूप इत्युक्तत्वात्'** इत्यप्रगृह्यैव पठ्यते प्राचीनादर्शेषु। आचार्यः स्वयं तथा पपाठ। अर्वाचीनास्तु सुखबोधाय प्रगृह्य पेठुः ॥

**'यत्र पूर्वे साध्याः सन्ति देवाः'** इति **प्राणादिदेवानां पूर्वकल्पवर्तिनामपि परमपुरुषाद् भिन्नत्वं प्रकटयति**। साध्यं मोक्षाख्यं साधितमेभिरिति **साध्या** मुक्ताः। **'स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा'** [छ.८.४.३]इति, **'सोऽश्नुते सर्वान् कामान्त्सह ब्रह्मणा'** [तै.उ.२.१] इति च **तदुपासनान्मोक्षं स्वेच्छयैव सञ्चरणादिकं सर्वकामभोगं च**। **स** मुक्तस्तत्र मुक्तस्थाने **पर्येति**। **'जक्षन्'** इत्येव प्राचीनः श्रुतिपाठः। अर्वाचीना व्याकरणमुखाः 'जक्षत्' इत्येव पाठं पठन्ति। ननु श्रुतिरनुसर्तव्या भवति व्याकरणेन। न श्रुत्या व्याकरणम्। **जक्षन्** स्वादु भक्षयन्, परिहासं कुर्वन् वा। 'जक्ष भक्षहसनयोः'। स्त्रीभिर्वा यानैर्वा जक्षन् क्रीडन् जक्षण-क्रीडनादिना मोदमानः। **'ऋचां त्वः पोषमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्करीषु**। ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां वि मिमीत उ त्वः' [ऋ.सं. १०.७१.११] इति **सर्वविद्याभिरपि भगवद्ध्यानं प्रकटयति**। तथाहि– आङ्गिरसो बृहस्पतिरनेन त्रैष्टुभेन मन्त्रेण मुक्तब्रह्मणां भगवद्ध्यान-प्रकारमाह। **त्वः** एको मुक्तब्रह्मा ऋचां पोषं भगवत्परतयाऽर्थपुष्टिं **पुपुष्वान्** वर्धयन् शंसन् **आस्ते**। **त्वः** अपरो ब्रह्मा **शक्करीषु** ऋक्षु **गायत्रं** साम **गायति**। त्वः अन्यो ब्रह्मा जातविद्यां इतिहासपुराणाख्यं पञ्चमवेदं मुक्तेभ्यः प्रवक्ति। उ त्वः पुनरन्यो ब्रह्मा यज्ञस्य मात्रां परिमितिम्, क्षयिष्णुफलताम्, भगवत्पूजात्वेन कृतस्य चानन्तफलतां च, वि मिमीते विवृणोति। स्वयं चानुष्ठायावगमयति। बहूनां ब्रह्मणां सहभावोक्तेः स्फुटं मुक्तविषयत्वम्। 'माङ् माने शब्दे च'। अथ च **स एव** भगवान् षोडशकलास्रष्टाऽपि तेन जीवस्य संसारप्रदोऽपि स्वयं **अकलोऽमृतो** भवति। अपि च **'स एषोऽकलोऽमृतो भवति'** य एवं वेद। अकलः पञ्चदशजडकलाभिः मुक्तः स्वयं षोडशी कला जीवस्वरूपं भवन्नमृतो भवति॥ ५॥

**'कलाः'** प्राणाद्याः **'यस्मिन् प्रतिष्ठिताः तं** सर्ववेदैः **वेद्यम्,** संसारान्मोक्षार्थं सर्वैरपि **वेद्यं** परम**पुरुषं** षोडशकलानां स्रष्टारं **वेदयथा** वेदयथ वेदयतेत्यर्थः।

लोडर्थे लट्। दैर्घ्यमवधारणे। षण्णामपि शिष्याणामुपसंहारे समष्टि-सन्देशोऽयम्। येन भगवद्वेदनेन **वो** युष्माकं मृत्यमयः संसारः, **मृत्युः** सर्व-संहर्ता वा भगवान्, परितो **व्यथाः मा** कार्षीत् इति। वेद यथा इति भिन्ने पदे इत्यपि व्याचक्षते– 'तं वेद्यं पुरुषं वेद विद्यात्। यथा वो युष्मान् मृत्युर्मा परिव्यथा मा परिव्यथयेत्' इति। अन्ये तु 'पुरुषं वेद मा वो मृत्युः परिव्यथाः' इति यथाशब्दरहितमेव श्रुतिपाठं पठन्ति। 'पुरुषं मुमुक्षुवेद्यं वेद वित्त' इति च व्याचक्षते। अस्मिन् श्लोके उत्तरार्द्धे द्वे अक्षरे अधिके इति स्वराडनुष्टुप्। यथाशब्दविरहिते पाठे केवलाऽनुष्टुप्॥ ६॥

**नातः परं** मया विदित**मस्ति**॥ ७॥

**'त्वं हि नः पिता'**। 'विद्यातस्तं जनयति। तच्छ्रेष्ठं जन्म' इति वचनात्। इति **तमर्चयन्तः** पूजयन्तः स्तुवन्तो बभूवुरिति। **नमः परमऋषिभ्यः** प्रधानज्ञान-रूपेभ्यो भगवद्रूपेभ्यः, भगवज्ज्ञानिभ्यस्तपस्विभ्यश्च पिप्पलादादिभ्यः। **'नमः परमऋषिभ्यः'** इति द्विरुक्तिरवधारणार्था पिप्पलादोपदेशपरि-समाप्तिद्योतिका च। भाष्ये **उत्तमोत्तम** इति। अयमस्मादुत्तमः, अयमस्मादुत्तम इत्युत्तमपरम्परायाः परा काष्ठा॥ ८॥

**रमेशे**ऽर्पणबुद्ध्या **कृतवान्**॥ ❋॥ **ज्ञानानन्दादी**ति भाष्यमङ्गलपद्यानुस-रणम्। निर्दोषाः सम्पूर्णा ज्ञानानन्दादयो गुणा एव विग्रहोऽस्येति। एतेन भाष्यमङ्गलपद्यं व्याख्यातम्। तथाहि– निर्दोषतया परावुत्तमौ मानन्दौ ज्ञाना-नन्दौ। तयोः सन्दोहः सम्पूर्तिः। ज्ञानानन्दाविति सर्वगुणोपलक्षणम्। तदिद-मुक्तम्– **ज्ञानानन्दादिनिर्दोषसम्पूर्णगुणे**ति। सन्दोह एवाऽनन्दमयं वपुरस्येति तादृशाय हरये नारायणाय। संसारं हरतीति हरिः। नारं निर्दोषं मोक्षमाययतीति नारायणः॥ ❋॥ श्रीमदानन्दतीर्थ एव प्रज्ञः पूर्णप्रज्ञाचार्यः। नामैकदेश-ग्रहणम्। प्रकृष्टं भगवन्तं जानन् वा प्रज्ञः। 'अकयप्रविसम्भूमसखहा विष्णुवाचकाः' इति ह्युक्तम्। **अनिशं वन्दारवे नित्यशो नमोऽस्तु**॥ ❋॥

**परमेभ्यो गुरुभ्यो नः**, त्रिविक्रमपण्डिताचार्येभ्यः । ततः **परं एभ्यो गुरुभ्यः** नारायणपण्डिताचार्येभ्यश्च ॥ ※ ॥

प्राणं श्रद्धां मनोऽथेन्द्रियगणमपि चान्नं ततो वीर्यमेवं
चिन्तारूपं तपः खं पवनमपि ततः पावकं लोकजातम् ।
मन्त्रव्रातं सलीलं सलिलमथ च नामानि भूमिं च कर्मा-
ण्येकश्चक्रे सकलमकलं तं प्रपद्येऽखिलेशम्[1] ॥ ※ ॥

इति किल विववार प्रश्नषट्कं मनोज्ञं
बुधजनपरितुष्ट्यै पिप्पलादः पुरेदम् ।
तदु पुनरपि मध्वस्तद्वचो वामनार्यो
विविवरिषति कश्चित् तानि तेषां वचांसि ॥ ※ ॥

इमामाचार्यगोविन्दः प्रमृष्टां शब्दतोऽर्थतः ।
वितेने विमलां टीकां विनेयजनवाञ्छया ॥ ※ ॥

**इत्याचार्यगोविन्दस्य कृतिषु**
**श्रीषट्प्रश्नोपनिषद्भाष्यटीकापञ्चिका**
**भावचन्द्रिका समाप्ता**

—०—

१. स्रग्धरामन्दाक्रान्तयोः संसर्गेणोपजातिः स्रग्धराक्रान्ता । मरभनैर्यत्रयेण चैकविंशत्यक्षरा स्रग्धरा । मभनैस्तद्वयेन गद्वयेन च सप्तदशाक्षरा मन्दाक्रान्ता । स्रग्धरा चतुरशीत्यक्षरा प्रकृतिश्छन्दः । मन्दाक्रान्ताऽष्टषष्ट्यक्षराऽत्यष्टिश्छन्दः । तयोः संसर्गजातेयमुपजातिरशीत्यक्षरेति कृतिर्नाम च्छन्दः ।



ध्यायन् नारायणं देवं प्रणवेन समाहितः ।
मण्डूकरूपी वरुणस्तुष्टाव हरिमव्ययम् ।।




श्रीवामनपण्डिताचार्यविरचितया श्रीमद्भाष्य-
टीकया, आचार्यगोविन्दकृतया उपनिषद्-
भावचन्द्रिकाख्यया तत्पञ्चिकया च समेता



॥ हरिः ओ३म् ॥

भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितंय्यदायुः ॥

स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

## भाष्यम्

ओ३म् ॥ पूर्णानन्दज्ञानशक्तिस्वरूपं नित्यमव्ययम् ।
चतुर्द्धा सर्वभोक्तारं वन्दे विष्णुं परं पदम् ॥ * ॥

## टीका

वन्दे विष्णुं [1]सदानन्दज्ञानशक्त्यादिरूपिणम् ।
जाग्रदादिप्रणेतारं चतूरूपं रमापतिम् ॥ * ॥

श्रीमदानन्दतीर्थाख्यं[2] त्रैलोक्याचार्यमञ्जसा ।
सहस्रज्ञानकिरणं वन्दे विष्णुपदास्पदम् ॥ * ॥

त्रिविक्रमार्यान् परमान् गुरून् सत्तत्वदीपकान्[3] ।
त्रैविक्रमार्यांश्च गुरून् वन्दे सर्वांश्च वैष्णवान् ॥ * ॥

माण्डूकोपनिषद्भाष्यं श्रीमन्मध्वकृतं परम् ।
व्याख्यास्यामो यथाप्रज्ञं[4] प्राज्ञौघोऽत्रानुमोदताम् ॥ * ॥

---

१. 'सदानन्दम्' ख.
२. '–तीर्थाख्यत्रैलो–' ख.
३. 'परमान् वन्दे तत्वप्रदीपकान्' ख.
४. 'यथाबोधं' क.

अथ ग्रन्थकर्ता भगवान् मङ्गलाचरणाद्यर्थं विष्ण्वाख्यां[१] मुख्येष्टदेवतामभिवन्दते– 'पूर्णानन्द–' इत्यादिना श्लोकेन। 'विष्णो त्वं नो अन्तमः' इत्यादिश्रुतेर्विष्णुरेव हि मुख्येष्टः सर्वेषाम्। तथा हि– अन्ते हृदयदेशे मीयत इत्यन्तमो हृदयङ्गमः प्रियतम इत्यर्थः। सर्वस्यान्ते [२]मितत्वादन्तमः सर्वोत्तमो वा। अपि चान्तम इति[३] निर्णयज्ञस्तज्ज्ञापकश्चोच्यते। अतस्तद्विशेषणसामर्थ्याद् गुरुरप्युक्तो भवति[४]। **'ज्ञानशक्तिस्वरूपम्'** इति स्पष्टं च। तस्माद् गुरुवन्दनमप्यत्राभिप्रेतं भवति ॥ ❀ ॥

[५]अत्र पुनर्माण्डूकोपनिषत्पठितान्यपि विशेषणानि सङ्क्षेपादुच्यन्ते। तस्मात् तद्भाष्यमिदमारभ्यत इति वस्त्वप्यर्थतो निर्दिष्टमेव स्यात्। तथाहि **'पूर्णानन्द–'** इत्यादिविशेषणेन हि, 'आनन्दमयो ह्यानन्दभुक् चेतोमुखः', 'एष सर्वेश्वर एष सर्वज्ञः' [६]इत्यादिनोक्तमहानन्दज्ञानादिस्वरूपत्वमुपन्यस्तम्। विश्वादिचतूरूपत्वेन जाग्रदादिप्रवर्तकत्वं च– **'चतुर्धा सर्वभोक्तारम्'** इत्युक्तम्। ओङ्कारार्थस्तु विष्णुशब्देन सुव्यक्तमुक्तः[७]। 'ओमात्मा भगवान् विष्णुः' इति तत्पर्यायत्वश्रवणात्। [८]सर्वदेशेष्वेतस्यैव व्याप्तत्वाच्च। अक्षरत्वं **'नित्यम्'** इत्यनेनोक्तम्। यत्तु पादादिकं[९] तत् **'परं पदम्'** इत्यनेनोक्तम्[१०] ॥

अत्रैवाधिकारिविषयादयश्च सूचिता भवन्ति। वन्दकवन्द्यावधिकारिविषयौ। तस्य तत्प्राप्तिः पदशब्देन फलं सूचितम्। अथ तयोर्वक्तृवाच्यभावः सम्बन्धोऽपि ॥ ❀ ॥

## भावचन्द्रिका

**तं विश्वतैजसप्राज्ञतुरीयात्मानमच्युतम्।**
**प्रच्युतं सर्वदोषैश्च वन्दे विष्णुं परावरम् ॥ ❀ ॥**

---

१. 'विष्ण्वाख्यमुख्येष्ट' ख.	२. 'स्थितत्वादन्त–' ख.	३. 'चान्तमो निर्णय–' ख.
४. ख. पाठे इतः परम्– 'ज्ञानशक्ती स्वरूपमस्येति च तथोक्तश्च। तस्माद्–' इति पठ्यते।
५. 'किञ्चात्र माण्डूको–' ख.	६. इत्यादावुदितमहा–' क.
७. '–शब्देन मुख्यत उक्तः' क.	८. 'सर्ववेदे–' ख.
९. 'यत् तुर्यादिकं' क.	१०. 'इत्युक्तम्' क

भगवन्तं भाष्यकारं पूर्णप्रज्ञं महामुनिम् ।
प्रणम्य नौमि तद्दासं त्रिविक्रमविपश्चितम् ॥ * ॥

सर्वान् पूर्वगुरून् नत्वा नत्वा तत्वाभिमानिनः ।
माण्डूकोपनिषद्भाष्यटीकाभावो वितन्यते ॥ * ॥

मङ्गलमाचरन्नेव मूलमङ्गलपद्यं व्याख्याति– **वन्दे विष्णुम्**। **'विष्णो त्वं नो अन्तमः** शर्म यच्छ सहन्त्य । प्र ते धारा मधुश्चुत उत्सं दुह्रते अक्षितम्' [तै.सं.३.१.१०.३] इति समग्रो मन्त्रः।'अन्तमः अन्तिकतमः' इति व्याचक्षते। किं नश्छिन्नम्। प्रियतम इत्येवावसितम्। सहन्त्य भक्तापराधमर्षणशील, असुरैरनभिभाव्य, नः शर्म यच्छ । मनआख्यस्य सोमस्य यास्त्वद्विषयाः स्मृतिधाराः, ध्यानानि, आनन्दस्राविण्यः सत्यः, अक्षितं निरन्तरमुत्सं ज्ञानोत्सेकं दुह्रत इति। अक्षयं उत्सिक्तज्ञानं दुह्रते वा ॥

**व्याप्तत्वाच्चेति**। ओतो हि व्याप्तः। ओतत्वादोम्। व्याप्तत्वाद् विष्णुः। विष्लृ व्याप्तौ। ओङ्कारार्थस्यैव विस्तारः सर्वे वेदाः। 'एष एव हि सर्वेषां वेदानामर्थ ईरितः। विष्णुनामोदितो योऽर्थस्तद्व्याख्याऽन्यद् वचोऽखिलम्' इत्यैतरेयसंहितावचनम्। **वक्तृवाच्यभावः**। वन्दको वक्ता। वन्द्यो वाच्यः ॥ * ॥

**(भा.) मण्डूकरूपिणा वरुणेन चतूरूपो नारायणः स्तूयते ।**
**'ध्यायन् नारायणं देवं प्रणवेन समाहितः ।**
**'मण्डूकरूपी वरुणस्तुष्टाव हरिमव्ययम्' इति पाद्मे ॥ * ॥**

**(टी.)** एवं चेदस्यां शाखायां केन किमुच्यते। उक्तिश्च कीदृशीत्याकाङ्क्षायां भगवान् भाष्यकार आह– **'मण्डूकरूपिणा'** इति। अत्र मण्डूकरूपी वरुणो वक्ता। विश्वादिरूपो नारायणो वाच्यः। वचनं तु [1]स्तुतिरूपमिति भावः। तदेतत् पाद्मवचनेन प्रत्याययति– **ध्यायन्निति । वरुणो नारायणं** मनसा **ध्यायन् प्रणवेन तुष्टाव**। 'ओमित्येतदक्षरम्' इत्याद्युपनिषदेत्यभिप्रायः॥ * ॥

१. 'श्रुतिरूप–' ख.

**(भा.चं.)** अस्यामुपनिषद्रूपायां शाखायाम्। वरुण ऋषिः। नारायणो देवता। गद्येषु न च्छन्दोविचितिः। मण्डूकदृष्टानि च गद्यानि। ब्रह्मदृष्टानि पद्यानि। तानि चानुष्टुब्बद्धानि। सरस्वती रोहिणी चानुष्टुब्देवते॥

समुद्रमानी किल वरुणः समुद्रशायिनं नारायणं तुष्टावेति रमणीयम्। नारं नीरमयनमस्येति हि नारायणः। 'नारायणं ध्यायन् हरिं तुष्टाव'। नारायणमेव हि ध्यायन् तमेव तुष्टावेत्यर्थः। भगवानेव हि नारायणो हरिः कृष्ण इति त्रयोऽपि धर्मतनयाः। अपि च जीवस्य जाग्रदाद्यवस्थासु चतुसृषु विश्वादिचतूरूपः सन् विहरतीति हरिरिति तं तुष्टाव। वक्ष्यति हि 'प्राज्ञो हरिः स्वयम्' इति, 'तैजसः स्वप्नकृद्धरिः' इति च 'ओं तस्माद् भगवान् हरिः' इति च॥ ✻ ॥

**ओ३म्॥ ओमित्येतदक्षरम्। इदं सर्वम्। तस्योपव्याख्यानं भूतं भवद् भविष्यदिति। सर्वमोङ्कार एव। यच्चान्यत् त्रिकालातीतं तदप्योङ्कार एव॥ १॥**

**(भा.)** 'ओमित्युक्तं तु यद् ब्रह्म तदक्षरमुदाहृतम्।
'ओतमत्र जगद् यस्मादों तस्माद् भगवान् हरिः॥

'तदिदं गुणपूर्त्यैव सर्वमित्येव शब्दितम्।
'भाविभूतभवत्कालेष्वेकरूपतया हरिः।
'सर्वदा नित्य इत्येषा व्याख्योङ्कारस्य कीर्त्तिता'

इति बृहत्संहितायाम्॥

'ओमित्याक्रियते यस्मादोङ्कारोऽसावतः परः।
'सर्वत्वमिति पूर्णत्वं तन्नान्यस्य हरेः क्वचित्'

इति नैर्गुण्ये॥

सर्वमोङ्कार एवेत्यन्यस्य पूर्णत्वनिवारणम्। त्रिकालातीतत्वं च तस्यैव। प्रकृतेरपि त्रिकालातीतत्वं विद्यत इति अन्यदिति विशेषणम्॥ ✻ ॥

**(टी.)** 'ओम्' इत्याद्युपनिषद्वाक्यानि **'ओमित्युक्तम्–'** इत्यादिना बृहत्संहितावचनेन व्याख्याति। **'ओमिति' उक्तं** विष्ण्वाख्यं **ब्रह्म**। **'एतत्'** अविनाशित्वात् **'अक्षरं'** इत्युक्तम्। **'इदं'** पूर्णत्वात् सर्वनामकम्। एवमेकप्रकारतयैव त्रिकालेष्वोतत्वादोङ्कार [1]इत्योङ्कारस्यानुकूलं व्याख्यानम्[2]। ब्रह्मव्यतिरिक्तं तु ब्रह्मण्योतमप्यनोङ्कार एव। विकारविशेषेण नित्यैकप्रकारत्वाभावात्[3]॥

**'सर्वमोङ्कार एव'** इत्येतद् वाक्यं विवृणोति– **'ओमित्याक्रियते–'** इत्यादिनैर्गुण्यवचनेन। अत्र सर्वशब्देन पूर्णत्वं किमिति [4]पुनरुक्तमित्यत आह– **'सर्वम्–'** इत्यादिना। ओङ्काराख्यं ब्रह्मैव पूर्णं नान्यदित्यन्यस्य पूर्णत्वनिवारणायेत्यर्थः। **'यच्च–'** इत्यादिवाक्यं व्याख्याति– **त्रिकालातीतत्वमिति**[5]। पूर्वमध्योत्तरकालवशात् क्लृप्तानामुत्पत्त्यादिधर्माणामत्ययेन[6] नित्यत्वं त्रिकालातीतत्वम्। तदप्योङ्कारस्य भवति नान्यस्य। **'यच्चान्यत्'** इत्यन्यशब्दस्य कृत्यमाह– **प्रकृतेरपीति**। **प्रकृतेरपि त्रिकालातीतत्वं** ज्ञापयितु**मन्यदिति विशेषणम्**। अन्यथा **'यच्च त्रिकालातीतम्'** इत्येव पूर्णत्वादन्यशब्दवैयर्थ्यं स्यात्॥ १॥

**(भा.चं.) जगदत्र ओतम्**। आ समन्तादूतं सन्ततम्। 'ऊयी तन्तुसन्ताने'। केवलसन्तानेऽपि भवति। तद्यथा 'मन्त्रि गुप्तपरिभाषणे'। केवलभाषणेऽपि भवति। आश्रितत्वेन वा ऊतमोतम्॥

**यत् ओमित्युक्तम्, तदेतदक्षरम्; तदिदं सर्वम्**। न क्षरतीत्यक्षरम्। 'क्षर विनाशसन्ततदानयोः'। 'सञ्चलने' इत्यार्वाचीनाः। इदमेव च **तस्योपव्याख्यानम्– 'भूतं भवद् भविष्यत्' इति**। सर्वकालेष्वोतत्वादोम्। गुणपूर्णत्वात् सर्वम्। सर्वगुणैरोतत्वादोम्। 'ओतत्ववाची ह्योङ्कारो वक्त्यसौ

---

१. **'–दोङ्कार इत्यनुकूलं व्याख्यानम्। अतो व्यति–'** ख.

२. एतेन संशय्यते– **'तस्यानुव्याख्यानम्'** इति टीकाकृत्सम्मतः श्रुतिपाठः स्याद्वेति।

३. **'–प्रकारस्वरूपत्वाभावात्'** क.

४. **'किमिति न पुन–'** ख.

५. **'त्रिकालेति।'** क.

६. **'–मत्यय एव नित्य–'** क.

तद्गुणोतताम्'[१.१.९]इति ह्यनुव्याख्याने । सर्वत्रवस्तुष्वयमोतः, सर्वं चास्मिन्नोतमिति सर्वगतत्वाच्च स ओम्। तदेवं त्रिविधमानन्त्यमुक्तं भवति। आ सम्यक् निर्विकारतयोतत्वस्य विवक्षणान्न जगत् तस्मिन्नोतमप्योमित्याक्रियते ॥ ❊ ॥

अपिच गुणपूर्णतामनेकधा वर्णयत्योङ्कारः। तथाहि 'अव रक्षे'। अवति सर्वं जगदित्योम्। अव्यते निगूढं हृदयगुहायां ज्ञानिभिरिति योगिध्येयत्वाच्च। 'अव गतौ'। धावति भक्तानां रक्षायै गजेन्द्रादीनामिवेति भक्तवत्सलत्वादोम्। भक्तैरेव गम्यत्वाच्च। 'अव प्रीतौ'। भक्त्याऽर्पितेन पत्रपुष्पमात्रेणापि प्रीयत इत्योम्। आवयन्ति प्रीणयन्ति भक्ता एनमेष च भक्तानिति च। 'अव तृप्तौ'। नित्यतृप्तत्वादोम्। तर्पयति भक्तानिति च। 'अव अवगमे'। सर्वज्ञत्वादोम्। सर्वज्ञापकत्वाच्च। ज्ञायते भक्त्यैवेति च। 'अव प्रवेशे'। सर्वान्तर्यामित्वादोम्। सर्वमत्र प्रविशति च। 'अव श्रवणे'। सर्वश्रोतृत्वादोम्। सर्वैः श्रुतत्वाच्च। 'अव सामर्थ्ये' सर्वसमर्थत्वादोम्। इतरेषां तत्तत्सामर्थ्यं ददातीति च। 'अव याचने'। याच्यते भक्तैरित्योम्। याचयति दुष्कृतिन इति। स्वयं च वामनादिरूपेण याच्ञया लोकान् विडम्बयतीति च। 'अव क्रियायाम्'। सर्वकर्तृत्वादोम्। सर्वकारयितृत्वाच्च। 'अव इच्छायाम्'। सर्वेष्टत्वादोम्। सत्यकामत्वाच्च। भक्तानां हितमयमिच्छतीति च। 'अव दीप्तौ'। तेजोमयत्वादोम्। सूर्यादिभासकत्वाच्च। वेदादिशास्त्रैर्दीप्यत इति च। 'अव अवाप्तौ'। सर्वत्र व्याप्तत्वादोम्। अवाप्तसकलकामत्वात्, सकलाभीष्टप्रापकत्वाच्च। 'अव आलिङ्गने'। सर्वं जगद् बहिर्व्याप्यालिङ्गतीत्योम्। सुप्तौ जीवमालिङ्ग्य स्वापयतीति च। उपगूढः श्रियैकयेति च। 'अव हिंसायाम्'। जगत्संहर्तृत्वादोम्। रुद्रादिभिः संहारयतीति च। 'अव दाने'। सर्वाभीष्टदानादोम्। दापयति च सर्वं तत्तद्देवताद्वारेति च। एतदर्थमेव हविरादिकं सर्वं दीयत इति च। 'अव भागे'। विभाजयति जीवांस्तरतमभावेनेत्योम्। अविभक्तमपि

अनन्तरूपतया विभज्य भक्ता भजन्तीति च। 'अव वृद्धौ'। नित्यवृद्धत्वा-दोम्। स्वभक्तान् ज्ञानादिपूरणेन वर्द्धयतीति च। 'बृहति बृंहयति च' इति श्रुतेः ॥ ॐ ॥

अथ च अवति प्रळयसलिलान्तः प्रविशतीति मत्स्य ओङ्कारः। मन्दरोद्धरणाय प्रविशति क्षीरोदधिमिति कूर्म ओङ्कारः। हिनस्ति हिरण्याक्षं हिरण्यकशिपुं चेति वराहनरसिंहावोङ्कारौ। याचति बलिमिति वामन ओङ्कारः। हन्ति दुष्ट-क्षत्रियजातमिति परशुराम ओङ्कारः। हन्ति रावणकुम्भकर्णाविति राम ओङ्कारः। वसुदेवं निगळादुन्मोच्य रक्षति, व्रजं गच्छति, स्वेच्छया तत्र विहरति, तेन नन्दादीन् प्रीणयति, गोपीश्च तर्पयति, काळियपीडामवगत्य ह्रदं विशति, दवानलपीडितान् गोपबालान् श्रुत्वा दवानलपानेन स्वसामर्थ्यं प्रकटयति, वेणुनादं श्रावयति, नवनीतं याचति, वसनहरणादिलीलाः करोति, कंसहननेन दीप्यत इति कृष्ण ओङ्कारः। त्रिपुरान् हन्तीति बुद्धः, तामसानन्ते हन्तीति कल्की च। ज्ञानप्रदानेन व्यासकपिलदत्तात्रेयादयः। अमृतरक्षणेन दानेन च धन्वन्तरि-मोहिन्याविति। दिङ्मात्रमेवैतत्। एवं परःशता अर्थविशेषा यथासम्भव-मनुसन्धेयाः। ओङ्कारस्य च भगवत्येव विद्वद्रूढिरिति तदनुगुणतयैव च सर्वं निर्वचनमिह प्रवर्तते ॥ ॐ ॥

मया **'ओमिति'** उपास्यमानं ब्रह्म **'एतत्'** मन्निकट एवान्तर्हृदये वर्तते इत्य-नुसन्धत्ते वरुणः। 'तदेवान्तिकमन्तिकात्' इति हि भगवत्पादवचनम्। तदेव साक्षात्कुर्वन्नाह – **'सर्वं'** परिपूर्णं तद् ब्रह्म **'इदम्'** मयेदानीं प्रत्यक्षमनुभूयत इति। पुनः क्षणादन्तर्हितं तत् परोक्षतः स्तौति– **तस्योपव्याख्यानमिति**। कथमुपव्याख्यानम्? एकप्रकारत एव कालत्रये चोतत्वादोङ्कार इति। शब्दा-र्थयोरानुगुण्येन व्याख्यानं **'अनुकूलं व्याख्यानम्'**। उपपन्नं व्याख्यान-मित्येतत्। उपेत्यस्योत्कर्षवाचित्वादुत्कृष्टं वा व्याख्यानमुपव्याख्यानम्। यथा त्रिकालातीत्वमन्यत्र गतम्, न तथा सर्वत्वं नाम गुणपूर्णत्वमतिव्याप्नोति।

किन्तु **'सर्वमोङ्कार एव'** । ननु नित्यस्यापि कालत्रयसम्बन्धात् कथं त्रिकालातीतता? आह– **पूर्वमध्योत्तरकालवशात्**। ननु कथं **'त्रिकालातीत्वं च तस्यैव'**? प्रकृतिरपि त्रिकालातीता। सत्यम्। तथाऽपि प्रकृत्यन्यत्वे सतीति विशेषणान्न दोष इत्याह– **'यच्च'** प्रकृतेः **'अन्यत् त्रिकालातीतम्'** इति। अथच भाष्यस्यार्थान्तरम्– यद्यपि सर्वत्वमिव त्रिकालातीतत्वमपि नारायणस्यैव मुख्यतः। अथापि तदधीनं त्रिकालातीतत्वं चेतनप्रकृतेरपि जडप्रकृतेरपि विद्यत इति तदप्यनुसन्धेयमिति ज्ञापयितुमन्यदिति विशेषणमिति । तथाहि स्मरन्ति– 'अपरं त्वक्षरं या सा प्रकृतिर्जडरूपिका। अक्षरं परमं श्रीस्तु परतः परमक्षरम्। वासुदेवः परानन्द इति त्रिविधमक्षरम्' इति ॥ १ ॥

**सर्वं ह्येतद् ब्रह्म। अयमात्मा ब्रह्म। सोऽयमात्मा चतुष्पात्[१] ॥ २ ॥**

**(भा.)** 'परमं यो महद् ब्रह्म', 'तदेव ब्रह्म परमं कवीनाम्', 'पूर्णमदः पूर्णमिदम्' इत्यादिषु प्रसिद्धं च ब्रह्मणः परिपूर्णत्वमित्याह– 'सर्वं ह्येतद् ब्रह्म' इति ।

श्रीब्रह्मरुद्रादिसकलदेहेषु स्थित्वाऽऽदानादिकर्त्ता योऽयं कश्चित् प्रतीयते, जीवानामस्वातन्त्र्यदर्शनात्, सोऽपि स एवेति दर्शयति– 'अयमात्मा ब्रह्म' इति ।

'पूर्णस्तु हरिरेवैको नान्यत् पूर्णं कदाचन ।
'विना च प्रकृतिं नान्यत् कालातीतं परात्मनः ॥

'कालश्चैव दिशो वेदाः प्रकृत्यात्मान ईरिताः ।
'अभिमानात्तु जीवानां न कालातीतता भवेत् ॥

'मुक्तानामपि पूर्वत्र कालसम्बन्ध ईरितः ।
'पूर्णत्वं च सदा विष्णोः प्रसिद्धं सर्ववेदतः ॥

---

१. रङ्गरामानुजरीत्याऽत्र प्रथमखण्डपूर्तिः।

'सोऽयं विष्णू रमाब्रह्मरुद्रानन्तादिगः सदा ।
'आदानादनकर्त्तृत्वादात्मा तेषामगोचरः ।
'इति मण्डूकरूपी सन् ददर्श वरुणः श्रुतिम्'

इति हरिवंशेषु ॥ * ॥

**(टी.)** ननु **'इदं सर्वमोङ्कार एव'** इत्ययोगान्ययोगव्यवच्छेदेन पूर्णत्वं ब्रह्मणः प्रागुक्तम् । अतः **'सर्वं ह्येतद् ब्रह्म'** इति पुनरुक्तिरेवेत्याशङ्क्याऽह– **'परमम्–'** इति । यदत्र ब्रह्मणः परिपूर्णत्वमुक्तं तत् **'परमं यो महद् ब्रह्म'** इत्यादिष्वागमान्तरेष्वपि प्रसिद्धमेवेत्याह– **'सर्वं ह्येतद् ब्रह्म'** इत्यनेन वाक्येन । हिशब्दस्य प्रसिद्धार्थत्वात्[१] । अतो नात्रापि पुनरुक्तिः ॥

**'अयमात्मा ब्रह्म'** इत्येतद् वाक्यं विवृणोति– **श्रीब्रह्मरुद्रादीति** । श्रीब्रह्मरुद्रादीनां सकलजीवानां[२] च **देहषु** इन्द्रियेषु च **स्थित्वा** निरन्तरमा**दानादिकर्ता योऽयं कश्चिद**नुभवतः **प्रतीयते**, तेषामस्वातन्त्र्यानुभवात्, **सोऽपि** ब्रह्माख्यो विष्णुरेवेति भावः ॥

योऽयमिह प्रपञ्चितोऽर्थस्तं **'पूर्णस्तु–'** इत्यादिना हरिवंशवाक्येन[३] दृढयति । **हरिरेक एव पूर्णः । अन्यत्** प्रकृत्यादिकमपूर्णम् । त्रि**कालातीतं** तु परमात्मनः **अन्यत् प्रकृतिं विना न** किञ्चिदस्ति । अनयोरेव नित्यत्वात् । 'द्वावेवानादिनित्यौ'[४] इति श्रुत्यन्तरम् । कालादीनां नित्यत्वेऽपि प्रकृत्यात्मकत्वान्न वस्त्वन्तरतापत्तिरित्याह– **कालश्चैवेति** । जीवानां च स्वरूपनित्यत्वेऽपि देहाद्यभिमानेन कालसम्बन्धोऽस्त्येव । कालाधीनत्वादेव देहाभिमानस्य । मुक्तानामपि पूर्वत्र कालसम्बन्धोक्तेरुभयकालातीतत्वमेव स्यात् । रमादिषु स्थित्वा तेषामादानमन्नादीनामदनं च करोतीति **तेषामात्मा** भगवानिति[५] वादिनीं **श्रुतिं** ओमित्यादिकामुपनिषदं **वरुणो ददर्श** ॥ २ ॥

---

१. 'प्रसिद्धयर्थत्वात्' क. २. '–ब्रह्मादीनां सकलजीवानां देहेषु' क.

३. '–वंशवचनेनापि दृढ–' क. ४. 'द्वावेतावनादिनित्यौ' ख. ५. तेषामयमात्मेति वादिनीं' क.

**(भा.चं.)** ननु 'समना चासृत्युपक्रमात्–' [ब्र.सू.४.२.७] इति प्रकृतेरपि परमपुरुषतुल्यत्वात् तस्या अप्यस्ति पूर्णत्वमिति माऽतिशङ्कि। यतः परमपुरुषस्यैव निरवकाशं पूर्णत्वं सर्वशास्त्रसम्मतम्– **'हि'** प्रसिद्धमिति। पूर्णगुणं हि ब्रह्म। 'अथ कस्मादुच्यते ब्रह्मेति। बृहन्तो ह्यस्मिन् गुणाः' इति श्रुतेः। **'परमं यो महद् ब्रह्म'** परममुख्यवृत्त्या ब्रह्मशब्दवाच्यमित्यर्थः। भारतवचनमेतत्, विष्णुसहस्रनामप्रस्तावे– **'परमं यो महद् ब्रह्म** परमं यः परायणम्। पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम्' इति। 'तदेवर्तं तदु सत्यमाहु**स्तदेव ब्रह्म परमं कवीनाम्'** इति नारायणोपनिषदि। 'पूर्णमदः पूर्णमिदम्'[७.१] इति बृहदारण्यके। शान्तिमन्त्रश्चायं वाजसनेयिनाम्॥

तथाच पूर्णत्वमोङ्कारवाच्यस्य ब्रह्मणो लक्षणम्। प्रकृत्यन्यत्वे सति त्रिकालातीतत्वं च। प्रकृतिरिति जडप्रकृतिरपि। **'कालश्चैव दिशो वेदाः प्रकृत्यात्मानः'** इति वचनात्। **देहेषु इन्द्रियेषु च स्थित्वा**। जीवशरीरमाप्नोतीत्यात्मा। आदत्त इत्यात्मा। अत्तीत्यात्मा। 'यच्चाऽप्नोति यदादत्ते यच्चात्ति विषयानिह। यच्चास्य सन्ततो भावस्तस्मादात्मेति भण्यते' इति स्मरणात्। तदेतत् स्फुटं हरिवंशवचने– **'आदानादनकर्तृत्वादात्मा'** इति। कथं प्रतीयते? **अनुभवतः प्रतीयते**। ननु कोऽयं भगवदनुभवः? आह– **तेषामस्वातन्त्र्यानुभवात्**। स्वंस्वं ह्यस्वतन्त्रं सर्वोऽप्यनुभवति। तदेवं सर्वेषामयमस्वातन्त्र्यानुभवः कश्चिदन्यं स्वतन्त्रमादातारमत्तारं चानुभावयतीति। नचाऽत्मत्वेऽपि प्रकृत्यन्यत्वे सतीति विशेषणीयमित्याह भाष्यकारः– **श्रीब्रह्मरुद्रादीति**। **'रमाब्रह्मरुद्रानन्तादिगः'** इति च प्रमाणवचनम्। **'आदानादनकर्तृत्वादात्मा'**। रमादिषु स्थित्वा नियन्तुं तेषामादानम्, तत्र शब्दादीनां विषयाणामादानम्, अन्नादीनां विषयाणामदनं वा करोतीति॥ २॥

**जागरितस्थानो बहिःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुग् वैश्वानरः प्रथमः पादः॥ ३॥**

(भा.) 'चतुर्द्धाऽवस्थितो देहे परमात्मा सनातनः ।
'वैश्वानरो जागरितस्थानगो गजवक्त्रकः ॥

'निर्म्माता बाह्यसंवित्तेर्ज्जीवानां तदगोचरः ।
'अष्टादश मुखान्यस्य पुमाकाराणि सर्वशः ॥

'मद्ध्यमं तु गजाकारं चतुर्बाहुः परः पुमान् ।
'पादौ हस्तिकरो हस्ता इति सप्ताङ्ग ईरितः ॥

'स्थूलान् भोगानिन्द्रियैः स शुभान् भुङ्क्ते नचाशुभान् ।
'विश्वं स्थूलं समुद्दिष्टं सर्वगम्यत्वहेतुतः ।
'तत्सम्बन्धी नरोऽनाशाद् वैश्वानर उदाहृतः ॥

'विनायकस्तु विश्वस्य द्ध्यानादैद् गजवक्त्रताम् ।
'तथैव तैजसद्ध्यानात् त्रिद्ध्यानादिन्द्र इन्द्रताम् ॥

'चतुर्द्ध्यानाच्च रुद्रत्वं रुद्र आप जनार्द्दनात् ।
'एवम्भूतगुणो विष्णुश्चतुरात्मा परात् परः'

इति महायोगे ॥ * ॥

(टी.) **'सोऽयमात्मा चतुष्पात्'** इत्यादेरर्थं **'चतुर्धा–'** इत्यादिना महायोगवचनेन व्याख्याति। **'सोऽयं' परमात्मा** सर्वजीवशरीरेषु जाग्रदादिचतुरवस्थाप्रेरकत्वेन विश्वादिचतूरूपः संस्थितः । पादशब्देन स्वरूपांशग्रहणात् । तत्र प्रथमांशो विश्वनामा जाग्रदवस्थायां स्थित्वा बाह्यार्थज्ञापकः। **अस्य** वैश्वानराख्यस्य विश्वस्य दक्षिणानि नव सव्यानि च तावन्तीति **अष्टादश मुखानि** पुम्मुखाकाराणि[१] । एषां मध्यगं तु मुखं गजमुखाकारम्[२] । एतद्विवक्षया **'गजवक्त्रकः'** इत्युक्तम्। इति **'एकोनविंशतिमुखः'** । **पादावित्यादिना** सप्ताङ्गत्वं व्युत्पादयति । **विश्वमित्यादिना** वैश्वानरपदं निर्वक्ति । विश्व-

१. 'पुमाकाराणि' क.   २. 'गजाकारम्' क.

सम्बन्धित्वाद् वैश्वः, स चासावा[1] समन्तादनाशादानरश्चेति[2] वैश्वानरः। **त्रि-ध्यानाद्** विश्वतैजसप्राज्ञध्यानात्। विश्वादितुर्यपर्यन्तानां रुद्रः ॥ ३ ॥

**(भा.चं.)** भाष्योदाहृतेन प्रमाणवचनेन 'चतूरूपब्रह्मपरत्वे किमपि गमकं नास्ति' इति वदन्तः परास्ताः। नैष स्थाणोरपराधः, यदेनमन्धो न पश्यति। **परमात्मा देहे चतुर्धाऽवस्थितः इति सनातनः**, नादेन सहित इति सनादनः, श्रुतिगदित इत्यर्थः। सनादन एव सनातनः। **'पादौ हस्तिकरः'** शुण्डा **'हस्ताः'** चत्वारः **'इति सप्ताङ्गः'**। **'विश्वं स्थूलं समुद्दिष्टम्'**। विश्वयति अवगच्छति स्थूलदृगपीति विश्वम्। स्थूलतया वृद्धं वा। 'टुओश्वि गतिवृद्ध्योः'। न रीयत इति **'नरोऽनाशात्'**। **आ समन्तादनाशादानरः**। यद्यपि 'नरे सञ्ज्ञायाम्' [६.३.१२९] इति दैर्घ्यमिति शक्यं समाधातुम्– वैश्वश्चासौ नरश्चेति वैश्वानर इति। तथाऽपि नान्ततो व्याकरणमादरणीयमिति निर्वचनान्तरमाह। अर्थविशेषलाभाय च। चतुर्विधनाशाभावो ह्याङोऽर्थः। अत एव 'विश्वस्य आ समन्तान्मित्रं विश्वामित्रः' इत्यपि व्याचक्षते। यास्कोऽप्याह– 'विशयवत्यो हि वृत्तयो भवन्ति। न तासु विश्वसेत्' इति। **विश्वस्य ध्यानात्** तैजसस्य च **ध्यानात् गजवक्त्रतामैत्** अगच्छत्। 'इण् गतौ'। विश्वतैजसयोर्मध्ये गजवक्त्रताध्यानादिति यावत्। **'तथैव'** इति समुच्चये। **'तथैव'** गजवक्त्रत्वेनैव ध्यानादिति वा। **त्रिध्यानात्** त्रिलोकपतिरिन्द्रो बभूव। तिसृष्ववस्थासु च तस्य सञ्चारः। रुद्रस्य तुरीयावस्थायामपि ॥ * ॥

अत्र मायावादशरणा व्याचक्षते– 'छन्दोगोपनिषदि पञ्चमाध्याये वैश्वानर-विद्यायां श्रूयमाणानि– 'वैश्वानरस्य मूर्धैव सुतेजाः, चक्षुर्विश्वरूपः, प्राणः पृथग्वर्त्मा, आत्मा सन्दोहो बहुलः, वस्तिरेव रयिः, पृथिव्येव पादौ' इति मूर्धचक्षुःप्राणमध्यदेहाधोजठरपादाः षडङ्गानि, उपरिष्टादग्निहोत्रशेषत्वेन 'आस्यमाहवनीयः' इत्युच्यमानं मुखं चेति सप्ताङ्गानि' इति ॥

१. **'वैश्वश्चायमा समन्ता–'** क. २. **'–दानर इति'** ख.

अर्चावतारवादिनोऽपि द्विविधाः– प्रियमायावादाः प्रियतत्ववादाश्चेति। प्रियतत्ववादाः प्रामाणिकमेवार्थं निर्वर्णयन्तीति न तत्र विवादः। प्रियमायावादास्तु मायावादिभिरुक्तमेवार्थं प्रतिपदमनुसरन्तः सप्तमं मुखं किञ्चिदिवान्यथयन्ति। तथाहि व्याचक्षते– 'मूर्धचक्षुःप्राणमध्यकायमूत्राशयपादरूपैः षड्भिरङ्गैर्जाग्रता जीवेन च सप्ताङ्गत्वम्' इति ॥

तदिदं सर्वमसङ्गतम्। चत्वारि हि वैश्वानरनामानि रूपाणि श्रुतिषु पठ्यन्ते। एकं तावत् सूर्यगतं भगवद्रूपम्। तदिदं षट्प्रश्नोपनिषदि श्रुतम्– 'वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते' इति। द्वितीयं बाह्याग्निगतम्। तदिदं छन्दोगोपनिषदि वैश्वानरविद्यायां श्रुतम्– 'तस्य ह वा एतस्याऽत्मनो मूर्धैव सुतेजाः–' इत्यादि। तृतीयं शारीराग्निगतम्। तदिदं काठके पठितम्– 'वैश्वानरः प्रविशत्यतिथिः–' इत्यादि। 'विद्धि त्वमेतं निहितं गुहायाम्' इति च। 'अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे' [७.११.१] इति बृहदारण्यके च। 'अहं वैश्वानरो भूत्वा–' [१५.१४] इत्यादि च गीतायाम्। चतुर्थमत्रोच्यमानं दक्षिणाक्षिगतम् ॥

यद्यप्येकरूपो भगवान्। अथापि लीलयोपासनाभेदार्थं च बहुरूपो भवति। तदिदमुपासनासाङ्कर्यं यदेकस्य रूपस्यान्यरूपलक्षणैरुपासनम्। नहि चक्रपाणिरिति राम उच्यते। नापि कोदण्डपाणिरिति कृष्णः। नहि द्वारकानाथ इति रामः। अयोध्यापतिरिति कृष्णः। तदिदमुपासनासूक्ष्मभेदानभिज्ञानां लोकवैयाकुल्यमेव यदग्निहोत्रिभिरुपास्यतयोक्तानां बाह्याग्निगतभगवद्रूपस्याङ्गानां दक्षिणाक्षिगतभगवद्रूपाङ्गतानिरूपणम् ॥

अपिच विश्वस्मिन् व्याप्तं तद् रूपम्। युक्ततमं तस्य स्वरादिपृथिव्यन्तावयवरूपणम्। इदं तु दक्षिणाक्षिगतमणोरणीयो रूपमुपास्यं विधीयते। तस्मान्न युक्तमत्र 'मूर्धैव सुतेजाः–' इत्याद्युपासनम् ॥

किञ्च तत्र न केवलं सप्ताङ्गान्युच्यन्ते। किन्त्वेकादशाङ्गानि। तथाहि श्रूयते– 'मूर्धैव सुतेजाः, चक्षुर्विश्वरूपः, प्राणः पृथग्वर्त्मा, आत्मा सन्दोहो बहुलः,

वस्तिरेव रयिः, पृथिव्येव पादौ, उर एव वेदिः, लोमानि बर्हिः, हृदयं गार्हपत्यः, मनोऽन्वाहार्यपचनः, आस्यमाहवनीयः' इति। तत्र न किञ्चित् विशिष्य कारणं सप्तानामेव ग्रहणे, अवशिष्टानां त्यागे च। प्रियमायावादानां च षण्णामेव ग्रहणे, तत्रानुक्तस्य जीवस्यानुप्रवेशेन यथाकथाच सङ्ख्यापूरणे च। नहि स्वेच्छातन्त्रा मन्त्रार्था भवन्ति ॥

तर्हि कानि सप्ताङ्गानि? यानि प्रमाणप्रमितानि। कानि प्रमाणप्रमितानि? आह– **'पादौ हस्तिकरो हस्ता इति सप्ताङ्ग ईरितः'** इति प्रमाणवचनम्। अनेन प्रमाणोदाहरणेनैव प्रमाणविरुद्धं परेषामपव्याख्यानमपहस्तितं भवतीति नात्र पुनः प्रयतितव्यमिति भाष्यकृदाशयः ॥

ननु शक्यमन्यथाऽपि व्याख्यातुम्– दक्षिणाक्षिगताः सप्त देवता अङ्गभूता एनमुपतिष्ठन्त इति सप्ताङ्ग इति। तथाहि बृहदारण्यके चतुर्थाध्याये शिशुब्राह्मणे श्रूयते– 'तमेताः सप्ताक्षितय उपतिष्ठन्ते, तद् या इमा अक्षन् लोहिन्यो राजयस्ताभिरेनं रुद्रोऽन्वायत्तः, अथ या अक्षन्नापस्ताभिः पर्जन्यः, या कनीनिका तयाऽदित्यः, यत् कृष्णं तेनाग्निः, यच्छुक्लं तेनेन्द्रः, अधरयैनं वर्तन्या पृथिव्यायत्ता, द्यौरुत्तरया' इति। 'विश्वरूपं यशश्चेति नाम्ना विष्णू रमा तथा। वायुश्च संस्थिता नित्यं सर्वेषां दक्षिणाक्षिगाः' इति च भाष्यम्। तत् किमेवं न व्याख्यायत इति ॥

पञ्चभिः कारणैर्न तथा व्याख्यायत। प्रमाणवचने नायमर्थोऽभिहित इति, देहावयवनिरूपणप्रसङ्गे परिवारदेवतानिरूपणं नातीव सङ्गतमिति, एते सप्त देवा दक्षिणाक्षिगता इति न तैजसस्याङ्गभूता इत्युभयोरप्यनुगतं सप्ताङ्गत्व-मन्यदेव वक्तव्यमिति, रूपविशेषस्यानुसन्धानं चोपासकस्य सुकरं यथा स्यादिति, तेनापूर्वार्थता च मन्त्रस्योक्ता स्यादिति ॥

एवमेकोनविंशतिमुख इत्येतदप्यन्यथा व्याचक्षत उभयेऽपि मायावादिनश्च प्रियमायावादाश्च– 'पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, पञ्च प्राणाः, मनो बुद्धिरहङ्कारश्चित्तं चेत्येकोनविंशतिर्मुखानीव मुखान्युपलब्धिद्वाराणि' इति ॥

तदिदमप्यसङ्गतम् । भगवदङ्गानामुपासनार्थं निरूपणप्रसङ्गे जीवाङ्गानामनवसरात् । ज्ञानकर्मेन्द्रिययोर्जाग्रद्दशायामुपलब्धिद्वारत्वेऽपि स्वप्ने तदभावात् तैजसस्य तन्मुखत्वोक्त्यनुपपत्तेः । नच पञ्चप्राणानां साक्षादुपलब्धिद्वारत्वं जाग्रद्दशायामपि । अन्यथा पञ्चभूतान्यप्युपसङ्गृह्येरन् । स्वप्नदशायां चेतनाया अप्युपलब्धिमुखत्वमस्तीत्यन्तःकरणचतुष्टयस्यैव तत्र ग्रहणमपि नोपपन्नम् । स्फुटश्च प्रमाणवचनविरोधः ॥

तर्हि कान्येकोनविंशतिमुखानि? यानि प्रमाणप्रमितानि । कानि प्रमाणप्रमितानि? आह– **'अष्टादश मुखान्यस्य पुमाकाराणि सर्वशः । मध्यमं तु गजाकारम्'** इति ॥ ३ ॥

**स्वप्नस्थानोऽन्तःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः प्रविविक्तभुक् तैजसो द्वितीयः पादः ॥ ४ ॥**

**(भा.)** 'जाग्रद्दर्शनसंस्काररूपत्वात् स्वप्नगं तु यत् ।
'प्रविविक्तं तु तज्ज्ञानकारणोऽन्तर्ज्ञ उच्यते'
इति वाराहे ॥ * ॥

**(टी.)** **'स्वप्नस्थान'** इत्यादिना द्वितीयपादमाह । [1]स्वप्नस्थानगतस्तत्प्रेरकः **तैजसो** द्वितीयांशः । अस्य पुनः **'जाग्रद्दर्शन–'** इत्यादिना वाराहवचनेन स्वप्नलक्षणमुक्त्वा तन्नियन्तृत्वं व्युत्पादयति । [2]मानसवासनाजन्यं हि स्वाप्नं वस्तु । एवं चेद[म]न्तर्ज्ञानरूपत्वेन बाह्यार्थात् प्रकर्षेण विविक्तमित्युक्तम् । आन्तरत्वात् । [3]अतस्तज्ज्ञानकारणत्वादन्तःप्रज्ञः स उच्यते । स्वाप्नविषयानुभवात् **प्रविविक्तभुक्**[4] । जीवाय किञ्चित् प्रदर्शयति[5] स्वप्नम्, स्वयं तु सम्यक् पश्यतीति भेदः ॥ ४ ॥

---

१. 'स्वप्नस्थानगस्तैजसो–' ख. २. 'मानसज्ञानवासना–' क.
३. 'अन्तस्तज्ज्ञानकारणभूतत्वादन्तः–' ख. ४. '–भुक्त्वम् ।' क. ५. 'प्रदर्शयति, स्वयं तु' क.

**(भा.चं.)** यथा वैश्वानरस्तथाऽयमपि **'सप्ताङ्गः एकोनविंशतिमुखः'** । **आन्त-रत्वादिति** । विश्वं स्थूलम्, यत् स्वयमपि पश्यति । परोऽपि पश्यति । स्वप्नं त्वान्तरत्वात् स्वयमेव पश्यति, न परः । अतः प्रकर्षेण विविक्तमसम्पृक्तं रहश्च । 'विविक्तं त्रिष्वसम्पृक्ते रहःपूतविवेकिषु' इत्यभिधानम् । कारण इति त्रिलिङ्गम् । कारणः कारणी कारणम् । यथा वा– प्रमाणः प्रमाणी प्रमाणम् । 'अनुमानश्चतुष्टयम्', 'कोऽयमनुमानो नाम' इत्यादि च ॥ ४ ॥

**यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत् सुषुप्तम् । सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवाऽनन्दमयो ह्यानन्दभुक् चेतोमुखः प्राज्ञस्तृतीयः पादः ॥ ५ ॥**

**(भा.)** 'सुषुप्तं तु तमो ज्ञेयं हरिं प्राप्य तदावृतः ।
'न कामयेन्नैव पश्येज्जीवः स्वात्मतमो विना ॥

'कालं च तस्य स्थानस्य पतिः प्राज्ञो हरिः स्वयम् ।
'चित्तस्थो दर्शयेद् यस्मात् तैजसः स्वप्नकृद्धरिः ॥

'न बाह्यं ज्ञापयेद् यस्मात् प्राज्ञस्तेन जनार्दनः ।
'एकीभावं व्रजेतां च तेन विश्वश्च तैजसः ॥

'एकीभूतस्त्वतः प्राज्ञो घनो जीवस्तमोवृतः ।
'तन्मात्रस्य सकालस्य घनप्रज्ञः प्रकाशनात्'

इति प्रकाशिकायाम् ॥

**(टी.)** **'यत्र सुप्तः'** इत्यादिना तृतीयपाद उच्यते । तदभिप्रायं **सुषुप्त**मित्यादिना प्रकाशिकावचनेन प्रकाशयति । **यत्र** सषुप्त्यवस्थायां[१] **कञ्चन** विषयं **सुप्तो** जीवो **न कामयते** न च **पश्यति**[२] **तद्धि सुषुप्तं** नाम स्थानम् । तत्स्थानगः[३] **प्राज्ञ**नामा **तृतीयः पाद** उक्तः । तदेतत् **सुषुप्तं** किमात्मकमित्याकाङ्क्षायामाह– **सुषुप्तं तु तमो**

१. 'सुप्तावस्थायाम्' क. २. 'न पश्यति च' क. ३. 'सुषुप्तं नाम । तत्स्थानगः' क.

**ज्ञेयमिति** । **जीवस्तु** प्राज्ञनामकं **हरिं** प्रविश्य[१] **तदावृतः** तेन तमसा प्रावृतः सुषुप्त इत्युच्यते । तदा न किञ्चिज्जानाति[२] । बाह्यं जाग्रद्विषयमान्तरं स्वप्नविषयं चेत्युभयमपि न जानाति । नच तावता तस्य जडत्वापत्तिः स्वरूपनाशो वा निरूपणीयः । अहमिति स्वात्मग्रहणात् । अज्ञोऽस्मीति अज्ञानस्यापि सकालस्य ग्रहणात् । तमःप्रावृतस्यापि स्वयम्प्रकाशत्वेन स्वरूपग्रहणोपपत्तेः । मोहावस्थायामप्यहं दुःखीत्यनुभवदर्शनात् । स्वरूपादिषु भगवज्ज्ञानं तु सर्वज्ञभगवद्दर्शिनामेव भवति । स्वपराच्छादिकयोः प्रकृत्योर्विनाशे भेदसिद्धेः । सेयं सुषुप्त्यवस्था सुषुप्तस्थानमित्युच्यते । **तस्य पतिः**[३] प्राज्ञाख्यो **हरिः** । स हि प्रभूतं[४] स्थूलं बाह्यशब्दितमैन्द्रियकं न ज्ञापयतीति[५] **प्राज्ञ** उक्तः । स तु निद्रावस्थायां विश्वतैजसाभ्या**मेकीभूतो** हरिः[६] । **घनो जीव** इत्यादिना **'प्रज्ञानघनः'** इति विशेषणं व्याख्याति । सुषुप्ताख्येन तमसा प्रावृतो **जीवो घन** इत्युच्यते । तन्मात्रं सकालं हरिस्तस्मै प्रकाशयति[७] । तस्मात् स **प्रज्ञानघनो**[८] घनप्रज्ञ इत्युच्यते ॥

**(भा.चं.) न कश्चन** काम्यं **विषयं कामयते** । **न कश्चन** स्वाप्नं विषयं **पश्यति** । ननु तदाऽऽत्मत्वमेव न स्यात् । विजानन् हि चेतनो भवति । अत आह– **'स्वात्मतमो विना कालं च'** इति । तद् व्याख्याति– **अहमिति स्वात्मग्रहणात्** । **अज्ञोऽस्मीति अज्ञानस्यापि सकालस्य ग्रहणात्** । ननु कथं निद्रायामज्ञोऽस्मीत्यनुभवः? उत्तरकाले 'न किञ्चिदवेदिषम्' इति परामर्शादिति गृहाण । स्वरूपादिषु स्थितस्य भगवतः पृथक्त्वेन ज्ञानं तु साक्षात्कृतब्रह्मणामेव भवति । तावत्पर्यन्तं स्वपराच्छादिकयोर्माययोः प्रावरणनैयत्यात् । **'प्राज्ञस्तेन जनार्दनः'** प्राज्ञनामा हरिः **जनार्दन** इति चोच्यते । कथम्? बाह्यं दुःखं न ज्ञापयतीति प्राज्ञः । जं देहाभिमानेन जातं जीवं सुप्तौ बाह्यदुःखेन नार्दयतीति जनार्दनः ॥ ❋ ॥

---

१. **'प्राप्य तदा–'** क.
२. **'–ज्जानाति । तेनायं जाग्रद्वि–'** ख.
३. **'तस्य च नियामकः प्राज्ञा–'** क.
४. **'प्राकृतं'** ख.
५. **'न प्रज्ञापयतीति'** क.
६. **'–भूतो भवति ।'** क.
७. **'प्रदर्शयति'** क.
८. **'तत् प्रज्ञानघनो–'** ख.

**(भा.) आनन्दमयः पूर्णानन्दः। चेतोमुखः ज्ञानस्वरूपमुखः। प्रज्ञानघन इति विपरीतसमासः। घनप्रज्ञ इति वक्ष्यमाणत्वात्। विषयभोगं विनाऽऽनन्दमात्रभुक्त्वादानन्दभुगिति विशेषः ॥**

**(टी.)** अस्य भगवतो विशेषणान्यनूद्य व्याख्याति– **आनन्दमय** इत्यादिना। नच **घनप्रज्ञ** इति विपरीतसमासः कल्प्यः। इत्थमेवेति निर्णीतार्थत्वेन बलवत्प्रमाणत्वात्। पुनरुक्तिदोषमाशङ्क्य परिहरति– **विषयेति**। स्थूलप्रविविक्तानां जाग्रत्स्वप्नविषयाणां भोगाभावेऽपि स्वरूपानन्दमात्रं भुङ्क्ते। तेन पूर्णत्वं च ॥ ※ ॥

**(भा.चं.)** ननु प्रज्ञानघन इति पूर्ववचनानुसारेण वक्ष्यमाणस्य घनप्रज्ञपदस्यैव 'प्रज्ञया घन' इति विपरीतसमासः किं न स्यात्? इदमेव नाद इति किं निर्णायकम्? एतामाशङ्कामुद्भाव्य परिहरति– **नचेति**। **'घनो जीवस्तमोवृतः। तन्मात्रस्य सकालस्य घनप्रज्ञः प्रकाशनात्'** इति प्रकाशिकावचनेन **निर्णीतार्थत्वेन** निरवकाशत्वात् ॥ ※ ॥

**(भा.) आनन्दमयचेतोमुखसर्वज्ञत्वसर्वेश्वरत्वादि चतुष्टयेऽपि समम्। अन्यत्रातिदेशार्थमेकत्राऽनन्दमयत्वं चेतोमुखत्वं चोक्तम् ॥ ※ ॥**

**(टी.)** एवं चेद्[१] विषयभोगिनोर्विश्वतैजसयोस्तद्विच्छेदसमये सुखपूर्णत्वादिकं नास्ति, अभोगिनस्तुरीयस्य चेत्यत आह– **आनन्दमयेत्यादि**। आनन्दपूर्णत्वादिकं चतुर्णामप्यस्ति। स्वातन्त्र्याधिक्यात्। अन्यत्रातिदेशो रूपान्तरेऽपि तदाधिक्येन निर्देशः ॥ ५ ॥

**(भा.चं.)** भाष्ये उत्तरत्र श्रूयमाणस्त्वप्रत्ययः पूर्वत्राप्यन्वेति– **आनन्दमयत्वचेतोमुखत्वसर्वज्ञत्वसर्वेश्वरत्वादीति**। आदिपदेनान्तर्यामित्वं सर्वयोनित्वं भूतानां प्रभवाप्ययहेतुत्वं च। एकत्र प्रयुक्तस्यान्यत्राप्यनुवृत्तिरतिदेशः। देशनस्यात्ययः, अतिशयेन देशनं च ह्यतिदेशः। पूर्वरूपे इवायमप्यानन्दमय एव। अथापि विषयभोगं विनाऽऽनन्दमात्रभुक्त्वादानन्दभुगिति हि विशिष्योच्यते। पूर्वरूपे

---

१. **'विषयभोगभोगिनो–'** क.

इवायमपि चेतोमुख एव। अतः स्वयं प्राज्ञ इत्युच्यते। स्वयं प्रकर्षेण जानन्नपि जीवं प्रकर्षेण न ज्ञापयतीत्यपि। नत्वचेतोमुखत्वादिति श्रुतेराशयः। स्वरूपानन्दं भोजयतीति चाऽनन्दभुगुच्यते ॥ ५ ॥

**एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्यामी। एष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम् ॥ ६ ॥**

**(भा.)** एष चतूरूप आत्मा सर्वज्ञत्वसर्वेश्वरत्वादिलक्षणः[1]—

'परमात्मा चतूरूपः सर्वप्राणिशरीरगः।
'विश्वश्च तैजसः प्राज्ञस्तुरीयश्चेति कथ्यते ॥
'तानि रूपाणि सर्वाणि पूर्णानन्दमयानि तु।
'चेतोमुखानि सर्वाणि पूर्णज्ञानस्वरूपतः ॥
'मुखशब्दस्तु सर्वस्य देहस्याप्युपलक्षणः।
'तथाऽपि मुखशब्दोऽयं पूर्णत्वं सूचयेद् विभोः।
'ज्ञानस्य मुख्यवाचित्वान्मुखवाच्यपि सन् स्वतः'

इति मार्कण्डेये ॥

'पूर्णानन्दस्वरूपस्य क्रीडा भोगो नचान्यथा।
'यथाऽऽदित्यस्य दीपेन न विशेषोऽस्ति कश्चन'

इति ब्रह्मतर्के ॥ * ॥

**(टी.)** **'एष'** इत्यादिवाक्यस्यार्थमाह— **एष चतूरूप** इत्यादिना। **'सोऽयमात्मा चतुष्पात्'** इति पूर्वप्रस्तुत एव परमात्माऽत्राप्येष इति पुनरुच्यते सर्वज्ञत्वादिविशेषलक्षणवचनार्थम्। न ह्यत्र प्राज्ञमात्रविवक्षा, [प्रमाणविरोधादित्याह[2]]— **परमात्मा चतूरूप** इत्यादिना[3]। **चेतोमुखानि** पूर्णज्ञानस्वरूपदेहानीत्यर्थः ॥

---

१. अस्य भाष्यवाक्यस्य, '—सर्वेश्वरत्वादि चतुष्टयेऽपि' इति पूर्ववाक्यस्य च पर्यालोचनया सम्भाव्यते— **'एप सर्वज्ञ एष सर्वेश्वर एपोऽन्तर्यामी'** इत्यपि श्रुतिपाठः स्यादिति।

२. [ ] एतदन्तर्गतं वाक्यमादर्शे न पठ्यते। ३. **'इत्यादिना मार्कण्डेयवचनेन'** इति मूलपाठः सम्भाव्यते।

ननु यदि विश्वतैजसयोरपि स्वत एव पूर्णानन्दत्वमभिप्रेयते तर्ह्युभयोर्विषयभोगः किमर्थमुच्यत[1] इत्याशङ्कां परिहरति– पूर्णानन्देत्यादिना[2] ब्रह्मतर्कवचनेन। चतूरूप आत्मा **सर्वस्य** जन्तोः, जाग्रदाद्यवस्थानस्य च **सर्वस्य योनिः** कारणमित्युच्यते। सर्वभूतानां प्रभवाप्ययकर्तृत्वात् ॥ ६ ॥

**(भा.चं.)** 'मुखशब्दोऽयं मुख्यवाचित्वात् ज्ञानस्य पूर्णत्वं सूचयेत्'। 'मुखवाची' च 'सन् सर्वस्य देहस्याप्युपलक्षणः'। तेन चेतोमुख इति पूर्णज्ञानस्वरूपदेहः। 'जाग्रदाद्यवस्थानस्य च' सृष्ट्याद्यष्टकस्य च 'सर्वस्य' ॥ ६ ॥

अत्रैते श्लोका भवन्ति–

बहिःप्रज्ञो विभुर्विश्वो ह्यन्तःप्रज्ञस्तु तैजसः।
घनप्रज्ञस्तथा प्राज्ञ एक एव त्रिधा स्मृतः ॥ ७ ॥ १ ॥

दक्षिणाक्षिमुखे विश्वो मनस्यन्तस्तु तैजसः।
आकाशे च हृदि प्राज्ञस्त्रिधा देहे व्यवस्थितः ॥ ८ ॥ २ ॥

विश्वो हि स्थूलभुङ् नित्यं तैजसः प्रविविक्तभुक्।
आनन्दभुक् तथा प्राज्ञस्त्रिधा भोगं निबोधत ॥ ९ ॥ ३ ॥

स्थूलं तर्पयते विश्वं प्रविविक्तं तु तैजसम्।
आनन्दश्च[3] तथा प्राज्ञं त्रिधा तृप्तिं विजानथ ॥ १० ॥ ४ ॥

त्रिषु धामसु यद् भोग्यं[4] भोक्ता यश्च प्रकीर्त्तितः।
वेदैतदुभयं यस्तु स भुञ्जानो न लिप्यते ॥ ११ ॥ ५ ॥

प्रभवः सर्वभावानां सतामिति विनिश्चयः।
सर्वं जनयति प्राणश्चेतोंऽशून् पुरुषः पृथक् ॥ १२ ॥ ६ ॥

---

१. 'किमुच्यत–' ख.
२. '–त्यादिब्रह्मतर्क–' ख.
३. 'आनन्दं च तथा प्राज्ञम्' इति पाठान्तरम्।
४. 'भोज्यम्' इति प्रचुरः पाठः।

विभूतिं प्रसवं त्वन्ये मन्यन्ते सृष्टिचिन्तकाः ।
स्वप्नमायासरूपेति सृष्टिरन्यैर्विकल्पिता ॥ १३ ॥ ७ ॥

इच्छामात्रं प्रभोः सृष्टिरिति सृष्टौ विनिश्चिताः ।
कालात् प्रसूतिं भूतानां मन्यन्ते कालचिन्तकाः ॥ १४ ॥ ८ ॥

भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे ।
देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहेति ॥ १५ ॥ ९ ॥

इति प्रथमः खण्डः

—०—

**(भा.)** 'प्रमाणस्य प्रमाणं च बलवद् विद्यते मुने ।
'ब्रह्मदृष्टान् यतो मन्त्रान् प्रमाणं सलिलेश्वरः ।
'अत्र श्लोका भवन्तीति चकारैव पृथक्पृथक्' इति गारुडे ॥
खण्डचतुष्टये ॥ ※ ॥

**(टी.)** अत्र श्रुत्युदितार्थे श्रुतिद्रष्टा वरुणः[१] परदृष्टान् श्रुतिमन्त्रान् प्रमाणीकरोति– **अत्रैत** इत्यादि[२] । एते 'बहिःप्रज्ञः–' इत्यादयः । ननु यद्यपि सन्दिग्धे प्रमाणान्तरमपेक्षणीयम् । तथाऽपि निर्णीतप्रमाणस्य तदन्तरं किमितीत्याशङ्क्याऽह– **प्रमाणस्येति** । निर्णीतप्रमाणस्यापि ततो **बलवत्** प्रमाणान्तरं **विद्यते** । दृढनिर्णयार्थत्वादित्यविरोधः[३] । **पृथक्पृथक्** विश्वादिषु प्रत्येकमपि **ब्रह्मदृष्टान् मन्त्रान्**[४] **प्रमाणं चकार**ेत्यर्थः । इति **गारुडे** उक्तमिति शेषः । [५]कुत्रकुत्रेति चेत् **खण्डचतुष्टये** ॥ ※ ॥

**(भा.चं.)** **'अत्रैते श्लोका भवन्ति'** । वेदसम्प्रदायानभिज्ञा अर्वाचीना मायावादिन आचक्षते– 'नैते श्लोका वैदिकाः । किन्तु गौडपादकृताः कारिकाः' इति । गारुडवचनादेवैते निरस्ता इति न किल सतां चेतसि शङ्का पदं

१. '–श्रुत्युदितार्थे वरुणः' ख. २. '–दृष्टान् मन्त्रान् प्रमाणं करोति– अत्रैत इति' ख.
३. '–त्वादविरोधः' ख. ४. 'ब्रह्मदृष्टमन्त्रान्' क. ५. 'तत्र कुत्रेति' ख.

प्रसारयति। येऽपि प्रज्ञावादबला अर्वाञ्चस्तेषामपि मुखं मुद्रयति स्वयं मायावादिं-नामग्रणीर्ब्रह्मानन्दसरस्वती। स किल स्वकृतायामद्वैतसिद्धिव्याख्यायां गुरु-चन्द्रिकायाम्, 'अनादिमायया सुप्तः' इत्यादिमन्त्रानधिकृत्यैवमाह– 'माण्डूकोप-निषद्व्याख्यानरूपगौडपादाचार्यग्रन्थस्थप्रथमप्रकरणस्थश्लोकेभ्यः श्रुतित्वेन वैदिकप्रसिद्धेभ्यः' इत्यादि। 'अनादिमायया सुप्त इत्यादिश्रुतेः' इति चाद्वैतसिद्धौ मधुसूदनसरस्वती। एतेन ये पुनरेतेषां श्रुतित्वं नाभ्युपयन्ति, अवैदिकास्त इति मायावादिभिरेवाङ्गीकृतमिति स्थितम्॥ * ॥

अथाप्यर्चावतारवादाः सन्दिहते। तेष्वपि प्रियतत्ववादाः कूरनारायणप्रभृतय एतेषामुपनिषच्छेषत्वमङ्गीचक्रुः, व्याचक्रुश्च तत्ववादभाष्यानुसारेण। ये प्रियमायावादा रङ्गरामानुजप्रभृतयस्तु नैते मन्त्रा उपनिषद्गता इति मन्वानाः परितत्यजुरेव। अहो भगवान् सन्देह एव शरणं तदनुयायिनामित्य-नुकम्प्यास्ते। कस्तर्हि तत्ववादिनां निर्णयः? आह– **'ब्रह्मदृष्टान् यतो मन्त्रान् प्रमाणं सलिलेश्वरः। अत्र श्लोका भवन्तीति चकारैव पृथक्पृथक्'** इति। **कुत्रकुत्र पृथक्पृथगेव चकार इति चेत्** उपनिषदः **खण्डचतुष्टये**। एतेन श्लोक-पूर्तौ खण्डसमाप्तिरिति सूचितम्। अस्यामुपनिषदि खण्डविभाग एव नास्ति, आन्तमेकं प्रकरणमिति मायावादिनः। 'सोऽयमात्मा चतुष्पात्' इतीयान् प्रथमः खण्डः। 'स आत्मा स विज्ञेयः' इत्यन्तो द्वितीयः खण्डः। 'अपीतिश्च भवति य एवं वेद' इत्यन्तस्तृतीयः। तत एकं वाक्यं चतुर्थः खण्ड इति रङ्गरामानुज-प्रभृतयः। तदेतत् सर्वं निर्मूलमित्यनेन सूचितम्॥ * ॥

**(टी.)** बहिःप्रज्ञादयश्च जाग्रत्स्वप्नसुषुप्तिप्रवर्तकाः। **एको** विष्णुरे**वे**त्थं विश्वादिरूपेण **त्रिधा स्मृतः** ज्ञानिभिश्चिन्तितः॥ ७॥ तस्य स्थितिविशेषमाह– **दक्षिणाक्षीति** ॥ ८ ॥ जीवशरीरे त्रिधाऽवस्थितस्य भोगोऽपि त्रिधैवेत्याह– **विश्वो ही**ति। स्थूलादिभोगो जाग्रदाद्यर्थदर्शनम्[1] ॥ ९ ॥ त्रिधा भोगे तृप्तिश्च

१. '–द्यर्थदशयः' ख.

त्रिविधैवेत्याह– **विश्वमित्यादि**[१] ॥ १० ॥ एवं त्रिरूपस्य हरेरुपास्तिप्रकारं तत्फलं चाऽह– **त्रिष्विति** । दक्षिणाक्ष्यादिस्थानानि त्रीणि धामानि । **भोग्यं** स्थूलादित्रयम् । **भोक्ता** विश्वादित्रिरूपः । **एतदुभयं** वेत्ता[२] यथेष्टभोगान् **भुञ्जानो**ऽपि तद्दोषेण **न लिप्यते** ॥ ११ ॥

**(भा.चं.)** **'विभुः'** सर्वसमर्थोऽपि विश्वाख्येन रूपेण बहिरेव प्रज्ञापयति लीलया । **'अन्तःप्रज्ञस्तु'** । स्वरूपतो न भिन्नः । प्रवृत्तिस्तु भिन्नेति तुशब्दार्थः । एवमुत्तरत्रापि ॥ ७ ॥ **'मनस्यन्तस्तु तैजसः'** । ननु मनोऽपि हृदय एव तिष्ठति । तत् कोऽयं स्थितिविशेषः? एवं विदो विदन्ति– आज्ञाचक्रे किञ्चिद् दक्षिणतो दक्षिणाक्षिमुखे विश्वस्तिष्ठति । **मनस्यन्तर्नियमयंस्तैजसः** स्वप्नस्थाने विशुद्धिचक्रे इन्द्रयोनिनाम्नि तालुमूले तिष्ठति । हृदयाकाशेऽनाहतचक्रे प्राज्ञ इति ॥ ८–९ ॥ **'विजानथ'** विजानीत । **'निबोधत'** इति पूर्ववचनानुगुण्यात् ॥ १० ॥ भोग्यं भोक्तारं चेति **उभयम्** । यद् भक्ष्यते तद् भोज्यम् । यदनुभूयते तद् **भोग्यम्** । **भुञ्जानः** अनुभवन् ॥ ११ ॥

**(भा.)** **'प्रभवः सर्वभावानां विष्णुरेव न संशयः ।**
**'इत्थं सतां निश्चयः स्यादन्यथा त्वसतां भवेत् ॥**

**'सर्वस्य हि प्रणेतृत्वात् प्राणो नारायणः परः ।**
**'तां सृष्टिं बहुधा प्राहुर्ज्ञानिनोऽज्ञानिनस्तथा ॥**

**'विष्णुर्विकृतिमायाति महदादिस्वरूपिणीम् ।**
**'तत्तद्विविधभूतिस्तु सृष्टिः प्रोक्ता ह्यपण्डितैः ।**
**'स्वप्नमायासरूपां च केचिदज्ञा जना विदुः ॥**

---

१. **'त्रिविधभोगात् तृप्तिश्च त्रिविधेत्याह– विश्वमिति'** क. यद्यपि सम्प्रति **'स्थूलं तर्पयते विश्वम्'** इति श्रुतिपाठः पठ्यते । तदात्वे तु **'स्थूलमिति'** इति प्रतीकग्रहणं स्यात् । तेन सम्भाव्यते– **'विश्वं तर्पयते स्थूलम्'** इत्येव प्राचीनः श्रुतिपाठः स्यादिति, यदि लिपिकृतो न प्रामाद्यन् ।  २. **'–दुभयवेत्ता'** ख.

'अविकारस्य चिन्मात्रस्येच्छयैवाखिलं जगत् ।
'उत्पद्यत इति प्राज्ञाः प्राहुर्ब्रह्मादयोऽखिलाः ॥

'पूर्ण्णशक्तेः कुतो माया सार्वज्ञ्यात् स्वप्नवत् कुतः ।
'सर्वदोषव्यतीतस्य विकारः कुत इष्यते ॥

'तस्मादेवाविकारस्य विष्णोरिच्छावशादिदम् ।
'यथार्त्थमेव सम्भूतमिति वेदवचोऽखिलम् ॥

'केचित् कालत एवैतां सृष्टिमाहुरकोविदाः ।
'केचिद् रुद्राद् ब्रह्मणश्च प्रधानादिति चापरे ॥

'विमूढाः सर्व एवैते यतो नारायणः परः ।
'सर्वकर्त्ता सर्वशक्तिरेक एव नचापरः ।
'प्रधानकालब्रह्मेशमुखाः सर्वेऽपि तद्वशाः ॥

'तस्यापि विष्णोः सृष्टिं तु केचिदाहुरनैपुणाः ।
'अतृप्तस्यैव भोगार्त्थं क्रीडार्त्थं तु विपश्चितः ।
'सा च क्रीडा स्वभावोऽस्य कुतोऽतृप्त्या स्पृहा विभोः'
इति हरिवंशेषु ॥ * ॥

**(टी.)** न केवलं जीवानां जाग्रदादिप्रवर्तको भगवान्, किन्तु चराचरस्य जगतः सृष्ट्यादिकर्ता चेत्याह– **'प्रभवः–'** इत्यादिश्लोकैः[1] । तेषामभिप्रायं **'प्रभवः–'** इत्यादिना हरिवंशवाक्येन[2] विवृणोति । **'प्रभवः'** उत्पादनादिकर्ता । **'अन्यथा त्वसतां भवेत्'** रुद्रादिरेव जगत्कर्तेति दुर्जनानां निश्चयो भवेत् । तत्रापि [सृष्टिः][3] भ्रान्तिनिमित्ताऽसत्येवेति केषाञ्चिन्निश्चयः । **'सर्व-**

१. **'श्लोकैः पञ्चभिः'** इति ख. पाठे पठ्यते । प्रमादपतितमेतत् । चत्वार एव हि श्लोकाः श्रुतौ पठ्यन्ते ।
२. **'–वंशवचनेन'** ख.
३. आदर्शेष्वस्फुटः पाठः । अर्थानुगुणतयाऽयमायोजितः पाठः ।

**भावानां प्रभवः–**' इत्युक्ते कोऽभिप्राय इत्यत आह–'**सर्वं जनयती**'ति। चेतोंऽशवः साक्षाच्चेतनरूपस्य विष्णोः प्रतिबिम्बभूतांशत्वाद् [1]ब्रह्मादय उच्यन्ते। तान् **चेतोंशून्** ब्रह्मादीन् स्वस्मात् मिथो जडेभ्यश्च[2] **पृथग्** भेदेनैव **जनयति**। नत्वभेदेन। नापि भेदाभेदेनेत्यर्थः[3]। [4]'पृथगुपदेशात्' इत्यादेः॥ १२॥

**(भा.चं.)** प्रभवति सृष्ट्यादाविति '**प्रभवः**', प्रभवत्यस्मादिति वा। प्रथमत उपलभ्यत इत्यर्थः। उत्पद्यत इति पर्यवसितम्। 'भुवः प्रभवः' [अष्टा.सू.१.४.३१] इति हि स्मरन्ति। तदाह– **प्रभव उत्पादनादिकर्ता**। '**सर्वभावानां**' सर्वजीवानाम्। अंशुरित्यंश उच्यते। '**चेतोंशून्**' चेतोंऽशान्। '**पृथगुपदेशात्**' [२.३.२८] इति बादरायणसूत्रम्। 'भिन्नोऽचिन्त्यः परमो जीवसङ्घात् पूर्णः परो जीवसङ्घो ह्यपूर्णः। यतस्त्वसौ नित्यमुक्तो ह्ययं च बन्धान्मोक्षं तत एवाभिवाञ्छेत्' इति पृथगुपदेशात् कौशिकश्रुतौ। 'अचिन्त्यः स्वरूपतः शक्तितश्च। परमो निर्दोषत्वेन। पूर्णो गुणैः। प्रमेयत्वाप्रमेयत्वे, सर्वशक्तित्वाल्पशक्तित्वे, परत्वावरत्वे, पूर्णत्वापूर्णत्वे, नित्यमुक्तत्वबद्धत्वे, स्वातन्त्र्यपारतन्त्र्ये, जीवानामन्योन्यभेदश्चेत्युपपत्तयः श्रुत्युपदर्शिताः। तत्प्रसादादेव मोक्षवचनान्मोक्षेऽपि पारतन्त्र्यमवसीयते। अतो मुक्तावपि परतन्त्रत्वाद् भिन्न एव जीवः परमेश्वरात् सर्वदेत्यभिप्रायः' इति हि तत्वदीपिका। प्रकर्षेण तांस्ताना समन्तात् तत्तत्कार्येषु नयतीति प्राणनामा **पुरुषः** विष्णुः **सर्वभावानां प्रभवः** इति **सतां विशिष्य निश्चयः**। सतामेव निश्चयः। निश्चयवन्त एव च सन्तः। येऽन्यथा निश्चिन्वन्ति, असन्तस्ते। असतामेवान्यथानिश्चयः। अन्यथानिश्चयवन्त एव चासन्तः। यत्र क्वचित् सतामप्यन्यथाभावः स औपाधिकस्तात्कालिकश्च। न स्वाभाविक इति॥ १२॥

---

१. '**ब्रह्मादयः। तान्**' ख. २. '**मिथो जीवेभ्यश्च**' ख. ३. '**भेदाभेदेनेत्यप्यर्थः**' ख.

४. अत्राऽदर्शेषु '**अन्यैः पृथगुपदेशात्**' इतीव पठ्यते। क्वचिदस्फुटश्च पाठः। '**अन्यैरङ्गोप–**' इतीव क्वचित्। पूर्वोत्तरटीकावाक्यसाङ्कर्येण लिपिकृतां प्रमादोऽयम्।

**(टी.)** अथ **'विभूतिम्–'** इत्यादिना **तां सृष्टिं** वादिनो **बहुधा प्राहु**-रित्याह । महदादिरूपेण विकृतिर्हि विभूतिर्नाम । सैव विष्णोर्जगत्सृष्टि-रिति **अन्ये** केचिदज्ञाः प्राहुः । ब्रह्मोपादानकं जगदिति मन्वाना इत्यर्थः । **'अन्यैः'** अज्ञैर्जगन्मिथ्यात्ववादिभिस्तत्सृष्टिः स्वप्नादिवत् कल्पितेति विप-रीतकल्पना कृता ।। १३ ।।

अथ ज्ञानिनः कथमेतां सृष्टिं सम्यगाहुरित्याकाङ्क्षायामाह– **इच्छामात्रमिति** । इच्छामात्रनिमित्तकं विष्णोर्जगत्सृष्टिकर्तृत्व**मिति**[१] **सृष्टौ** निर्णयज्ञा ब्रह्म-रुद्रादय आहुः । तदाह– **अविकारस्येति** । अथाज्ञप्रलपितमतं युक्तितो[२] दूषयति– **पूर्णशक्तेरिति** । स्वस्याशक्तिसङ्गूहनरूपिणी हि माया नाम । सा चेश्वरे निर-वकाशा पूर्णशक्तित्वादिति । अतस्तस्य जगत्सृष्टिः कुतो मायया प्रकल्पिता स्यात् । नापि स्वप्नादिवत् भ्रान्तिकल्पिता । सर्वज्ञस्य भ्रान्तेरेवासम्भवात् । अस्तु तर्हि [३]मृदादिवद् विकारः कार्यरूपेणेत्यत आह– **सर्वदोषेति** । जाड्यादि-दोषव्यपेतत्वाद् विकारोऽपि निरवकाशः । उक्तार्थं निगमयति– **तस्मादिति** । **वेदवचोऽखिलं** वेदयतीति शेषः । **'इच्छामात्रं प्रभोः सृष्टिः'**, 'याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः', 'सत्यं ह्येवेदं विश्वमसौ सृजते', 'सत्या सत्यस्य करणानि वोचम्' इत्यादिक**मखिलं वेदवचः** ।।

अथाप्यज्ञमतं बहुप्रकारेणास्तीति[४] ज्ञापयन् **केचित् कालत** इत्यादिना **'कालात्** [५]**प्रसूतिम्–'** इत्यस्याभिप्रायमाह । यद्यपि सृष्टिः सत्या भवितुमर्हति । तथाऽप्येतां केचिदज्ञाः कालादिभ्य इति **मन्यन्ते** । नच तद् युज्यते । कालादीनां पर-तन्त्रत्वात् । 'द्रव्यं कर्म च कालश्च' इत्यादिश्रुतेः । तस्माद् विष्णुरेव स्रष्टेति[६] सत्सिद्धान्त इत्याकूतम् ।। १४ ।।

---

१. **'–जगत्सृष्टिकर्मेति'** क.
२. **'–मन्तर्युक्तितो–'** ख.
३. **'तर्हि महदादिवत्'** क.
४. **'–प्रकारेणेति'** क.
५. **'प्रसूतिमित्यादेरभि–'** क.
६. **'स्रष्टेत्येतत्सि–'** ख.

**तस्यापि विष्णोरित्यादिना** भोगार्थं सृष्टिरित्यादिनोक्तमसन्मतत्वेनेदं व्याख्याति । अयमर्थः– विष्णोरेव जगत्सृष्टिः सुनिर्णीता । सा च तस्य **स्वयमतृप्तस्य** तृप्तिसिद्धये **भोगार्थं** भवितुमर्हति, अन्यथा किमिति कुर्यादित्य-निपुणधियो **मन्यन्ते,** असूक्ष्मज्ञानित्वात् । **अपरे** निपुणधियः **क्रीडार्थमित्येव** ब्रूयुः । निश्चयज्ञत्वात् । **सा च क्रीडा** विष्णोः **स्वभाव** एव, नतु भिन्नं प्रयोजनम् । नह्याप्तकामत्वेन नित्यतृप्तस्य प्रयोजनस्पृहावकाशः । नच सृष्टिः केवललीलयेत्युक्तिविरोधः[१] । सृष्टिक्रियाया अपि स्वाभाविकत्वात् । तथा च योजना– **सा च क्रीडा स्वभावः** अस्य **सा** सृष्टिश्च **क्रीडा** भवति । तस्मादुभे अपि स्वभाव एवास्येति । एवं चेद् भोगार्थमित्यपि [२]सन्मतमेवास्तु, भोग-स्यापि स्वाभाविकत्वस्वीकारोपपत्तेरिति चेत्, तथा सति किं नश्छिन्नम्? अतृप्तस्य भोगार्थत्वस्यैवासन्मतत्वोक्तेः[३] । तस्य च स्वाभाविकत्वासम्भवात् । सृष्टिश्च क्रीडा च स्वभाव एवास्येति ह्युक्तम् । स च स्वभावः कीदृशः इत्याकाङ्क्षायामाह– **एष** इति । आ समन्तादिष्ट इत्यर्थः । इष इच्छायामिति धातोः । **सा च** तदिच्छा[४] तादृक् **स्वभाव** एव ।। १९ ।।

**(भा.चं.)**विकृतिर्विविधतया भवनं विभूतिर्नाम । '**प्र घा न्वस्य महतो महानि सत्या सत्यस्य करणानि वोचम्**' इत्यृग्वेदे [२. १५.१] । गृत्समदस्त्रैष्टुभेन तुष्टावेन्द्रम्– महतः सत्यस्यास्येन्द्रस्य सर्वसमर्थस्य नारायणस्य महान्ति सत्यानि जगत्सृष्ट्यादिकर्माणि प्रवच्मीति । तथाच वक्ष्यति– 'अवंशे द्यामस्तभायद् बृहन्तमा रोदसी अपृणदन्तरिक्षम् । स धारयत् पृथिवीं पप्रथच्च सोमस्य ता मद इन्द्रश्चकार' [२.१५.२] इति । अवंशे आकाशे द्युलोकं निश्चलमस्थापयत् । बृहत् अन्तरिक्षं रोदसी द्यावापृथिव्यौ च भोगसाधनैः स्वसामर्थ्येन वा अपृणत् अपूरयत् । स एव पृथिवीं धारयति प्रथयति च । तानीमानि कर्माणि सोमस्य पवमानस्य मदे आनन्दभोगार्थं चकारेन्द्रः परमेश्वरो नारायण इत्यादि ।।

---

१. '**–लीलेत्युक्ति–**' क.
२. '**सम्मतमेवास्तु**' क.
३. '**–स्यैवासम्मतत्वेक्तेः**' क.
४ '**सा चेच्छा**' क.

काल इति कालनाद् रुद्रोऽपि । 'संवत्सरो वै प्रजापतिः' इति कालमानी ब्रह्माऽपि । प्रधानपदगदिता कालमानिनी दुर्गाख्या चित्प्रकृतिरपि । तदेतदुक्तम्– **'केचिद् रुद्राद् ब्रह्मणश्च प्रधानादिति चापरे'** । न विद्यते नैपुणं धीषु येषां ते **'अनैपुणाः'** । **अनिपुणधियः** । **'एषः स्वभावोऽयम्'** इत्यपौनरुक्त्यायाऽह– **आ समन्तादिष्ट** इति । अयं भावः । नायमेतच्छब्दः । येन पुनरिदंशब्देन पुनरुक्तता स्यात् । किन्तर्हि? एषशब्दोऽयम् । एष एषौ एषा इति । 'विष्णोरेषस्य प्रभृथे' इति प्रयोगाच्छ्रुतौ । भगवतः क्रीडा स्वरूपेच्छामयीत्यर्थः । भक्तानामिष्ट इति च । तथाहि 'लोकवत्तु लीलाकैवल्यम्' [ब्र.सू.२.१.३४] इति सूत्रव्याख्याने तत्वप्रदीपाचार्यः– 'लीलाकैवल्यं लीलामात्रत्वम् । सृष्ट्यादेर्नाण्वपि प्रयोजनमीश्वरस्य । एषः स्वभावः । आ समन्तादिष्टः स्वभावः । का स्पृहा का फलस्पृहेत्यर्थः । 'इच्छामात्रं प्रभोः सृष्टिः' इति निश्चितसिद्धान्तकथनान्नेच्छामात्रविरोधः' इति ॥ १३–१५ ॥

—०—

## [अथ द्वितीयः खण्डः]

**नान्तःप्रज्ञं नबहिःप्रज्ञं नोभयतःप्रज्ञं नप्रज्ञानघनं नप्रज्ञं नाप्रज्ञमदृष्ट[1]मव्यहार्यमलक्षणमचिन्त्यमव्यपदेश्यमैकात्म्य[2]-प्रत्ययसारं प्रपञ्चोपशमं[3] शिवमद्वैतं चतुर्थं मन्यन्ते । स आत्मा स विज्ञेयः ।। १ ।।**

**(भा.)** 'विष्णुस्तुरीयरूपेण द्वादशान्ते व्यवस्थितः ।
'मुक्तानां प्राप्यरूपोऽसौ व्यवहारे न दृश्यते ।।

'सम्यक् समाहितानां तु प्राप्तानां षोडशीं कलाम् ।
'अपरोक्षदृशां क्वापि तुरीयं दृश्यते पदम् ।।

'अन्तर्बहिश्च सौप्तं च समाधिज्ञानमेव च ।
'बहिः शब्दादिकं जानन् पश्यन् स्वप्नं तथैव च ।
'यदा भवति साऽवस्था ह्युभयज्ञानशब्दिता ।।

'एतत् सर्वं तुरीयेण रूपेण न करोत्यजः ।
'सर्वज्ञानप्रदश्चापि मुक्तस्यैव तुरीयकः' इति ब्रह्माण्डे ।।

**(टी.)** अथ **'नान्तःप्रज्ञम्–'** इत्यादिना परमात्मनश्चतुर्थपादं लक्षयति[3] । एतद्-वाक्याभिप्रायं **'विष्णुस्तुरीय–'** इत्यादि[4] ब्रह्माण्डवचनेन विस्पष्टं व्याचष्टे । **द्वादशान्ते** उपासकानां शिरोमध्यादुपरि भागे द्वादशाङ्गुलप्रदेशान्तस्थाने । अ-दृष्टमित्यादिविशेषणपञ्चकं सामान्यतो व्याख्याति– **व्यवहारे न दृश्यत** इति ।

---

१. **'–मव्यवहार्यमग्राह्यमलक्षण–'** रङ्गरा.पा. । **'–मदृश्यमव्यवहार्यमलक्षण–'** शं.पा. ।

२. **'–मेकात्म–'** शं.पा. ।

३. **'–शमं शान्तं शिव–'** रङ्गरा. पा. ।

३. **'–पादलक्षणं लक्षयति'** क.

४. **'इत्यादिना ब्रह्माण्ड–'** ख.

अमुक्तानामहरहर्जाग्रदादिव्यवहारे **न दृश्यते**।[1]तदकर्तृत्वात् तस्य। षोडशी कला[2] जीवस्वरूपम्। पञ्चदश कला नामादिप्राणपर्यन्ताः। तास्वन्याधीनमहिमानं त्यक्त्वा केवलचैतन्यस्वरूपं प्राप्तवता**मपरोक्षदृशां** च सतां **क्वापि तुरीयं पदं दृश्यते**[3]। एतद्वचनं तु **नाप्रज्ञमिति**[4]विशेषणाभिप्रायशेषव्याख्यानरूपं भवति। **'अन्तर्बहिश्च–'** इत्यादिना नान्तःप्रज्ञमित्यादिविशेषणषट्कं व्याख्याति। **नान्तःप्रज्ञं** सन्तं **नबहिःप्रज्ञमि**त्यादिविशेषणैर्विशिष्टं परमात्मनश्चतुर्थपादं[5] **मन्यन्ते**। अन्तर्ज्ञानं स्वप्नः। न तत् करोति जीवस्येति नान्तःप्रज्ञः सः। बहिर्ज्ञानं जाग्रदवस्थानुभवः। **'बहिः शब्दादिकम्–'** इत्यादिना तदुभयरूपं ज्ञानमाह। सौप्तज्ञानं[6] निद्रानुभवः। अत्रापि प्रज्ञानघनो घनप्रज्ञ एव। प्रज्ञा तु प्रकृष्टज्ञानत्वात् समाधिज्ञानम्। **एतत् सर्वं** अन्तर्ज्ञानादिज्ञानपञ्चकं तुरीयो **न करोति** जीवाय न ददातीत्यर्थः। **'सर्वज्ञानप्रदश्च–'** इत्यनेन **'नाप्रज्ञम्'** इति विशेषणं व्याख्याति॥ ❊ ॥

**(भा.चं.)** **'व्यवहारे न दृश्यते'**। तस्माद**दृष्टमव्यवहार्यमलक्षणमचिन्त्यमव्यपदेश्यमि**ति सामान्यतो व्याख्यानम्। यो न व्यवहारगोचरः, स कथं दृश्येत? तेन कथं व्यवह्रियेत? स कथमित्थमिति लक्ष्येत चिन्त्येत व्यपदिश्येत वा। विशेषव्याख्यानं तूपरिष्टाद् भवति॥

**नामादिप्राणपर्यन्ता** इति। अतद्गुणसंविज्ञानोऽयम्। प्राणः पर्यन्ते येषां ते नामादिश्रद्धान्ता इत्यर्थः। अन्तः प्रज्ञापयतीति अन्तःप्रज्ञः। स न भवतीति नान्तःप्रज्ञः। न भवत्यन्तःप्रज्ञा येनेति वा। बहिः प्रज्ञापयतीति बहिःप्रज्ञः। स न भवतीति नबहिःप्रज्ञः। न भवति बहिःप्रज्ञा येन रूपविशेषेणेति वा। उभयतः प्रज्ञापयतीत्युभयतःप्रज्ञः। स न भवतीति नोभयतःप्रज्ञः। न भवति उभयतःप्रज्ञा येनेति वा। घनं प्रज्ञापयतीति प्रज्ञानघनः। स न भवतीति नप्रज्ञानघनः। न

---

१. 'अतदर्थत्वात्' क.
२. 'षोडशीं कलाम्' ख.
३. 'तुरीयं च दृश्यते' ख.
४. 'नप्रज्ञमित्यादिवि–' ख.
५. 'परमात्मानं चतुर्थपादम्' ख.
६. 'सुप्तज्ञानं' ख.

भवति घनप्रज्ञानं येनेति वा नप्रज्ञानघनः । प्रज्ञापयतीति प्रज्ञः । स न भवतीति नप्रज्ञः । न भवति प्रज्ञा येनेति वा । न प्रज्ञापयतीत्यप्रज्ञः । स न भवतीति नाप्रज्ञः । न भवत्यप्रज्ञा येनेति वा ॥ ॐ ॥

(भा.) 'अमुक्तस्य त्वदृश्यत्वात् षोडशीं वा कलामृते ।
'तुरीयोऽदृष्ट इत्युक्तो ग्रहणादेरगोचरः ।
'विना मुक्तिं यतस्तेनाव्यवहार्य इतीरितः ॥

'जाग्रदादिप्रवृत्तिस्तु लक्षणं ह्यनुमापकम् ।
'अलक्षणस्तद्राहित्यादचिन्त्यस्तत एव च ॥

'अत एव ह्यनिर्देश्यश्चिदानन्दैकलक्षणः ।
'मुक्तस्य सर्वव्यापारहेतुरेव तुरीयकः ॥

'एकः प्रधान उद्दिष्ट आत्मा पूर्णत्वतः श्रुतः ।
'तदेवास्य स्वरूपं यदैकात्म्यं तेन कीर्तितः ॥

'प्रत्ययो ज्ञानरूपत्वात् सार आनन्दरूपतः ।
'उत्कृष्टानन्दरूपत्वादुपशब्दः प्रकीर्तितः ॥

'प्रपञ्चं देहबन्धाख्यं तुरीयः शमयेद् यतः ।
'प्रपञ्चोपशमस्तेनाप्युक्तः स भगवान् प्रभुः ।
'निर्दुःखसुखरूपत्वाच्छिवशब्दः श्रुतौ श्रुतः ॥

'अन्यथाप्रत्ययो द्वैतं शमयेत् तं यतो हरिः ।
'अद्वैतस्तेन चोद्दिष्टस्तुरीयः पुरुषोत्तमः' इति माहात्म्ये ॥

'अपेक्ष्य वस्तुयाथार्थ्यं द्वित्वमन्यस्वरूपता[1] ।
'इण् गताविति धातोश्च तज्ज्ञानं द्वैतमुच्यते' इति सङ्कल्पे ॥

---

१. मूलादर्शे–'आपेक्ष्यवस्तुयाथार्थ्यवित्त्वमन्यस्वरूपता' इति पठ्यते । अर्थस्तु न स्फुटः ।

**(टी.)** **'अदृष्टमि'**त्यादिविशेषणानि **'अमुक्तस्य–'** इत्यादिमाहात्म्यवचनेन विवृणोति । सम्यगमुक्तस्य केवलचैतन्यस्यापि क्वचिद् दृश्यमानत्वात् **षोडशीं कलामित्यपवादः** । **वा**शब्दात् तस्या अपि नित्यं न दृश्यत इत्यर्थः । ग्रहण-गमनादेरगोचरत्वादुपादानहानादिव्यवहाराविषयः । अनुमाने लिङ्गभूतलक्षणा-भावादलक्षणः[१] । अत एवेत्थम्भूत इति चिन्तयितुं व्यपदेष्टुं वा न शक्यः[२] । नन्वेवं सत्यशेषविशेषलक्षणनिषेधेन लक्ष्यमस्मदीयमद्वितीयं[३] ब्रह्मेति [४]सन्मतमिति शङ्कानिवृत्त्यर्थं **'ऐकात्म्यप्रत्ययसारम्'** इति विशेषणार्थं द्योतयति– **चिदानन्दैक-लक्षण** इति । ज्ञानानन्दादिप्रधानलक्षणविशिष्टं[५] तत् । तन्न सन्मत-मित्यभिप्रायः । अपरथा नाप्रज्ञमित्यादिपूर्वोक्तविरोधश्च[६] स्यादित्याह– **मुक्तस्येति** । 'एतं सेतुमाप्यैतेन सेतुना मोदते प्रमोदत आनन्दीभवति' इति च श्रुतिः । ऐकात्म्यादिविशेषणं चिदानन्दैकलक्षणत्वं[७] कथं वक्तीत्या-शङ्कायामाह– **एक** इति । ऐकात्म्यं प्रधानपूर्णरूपः[८] । प्रत्ययसारस्तु ज्ञाना-नन्दादिपूर्णस्वरूपः । एवं च प्रधानपूर्णज्ञानानन्दादिस्वरूपलक्षण इत्यर्थः । तस्मादलक्षणमित्युक्ते स्वरूपशून्यत्वं[९] स्यादित्यपि नाऽशङ्क्यम् । उक्तभङ्ग्या तदभावात् । विस्तृतश्चायमुत्कृष्टानन्दरूपश्चेति प्रपञ्चोपशमः । अयमुपशब्दः[१०] सामान्यतः समीपवाची सन्नपि प्रकरणवशात् उत्कर्षादिविशेषविषयोऽपि भवति । उपाध्यायः पूजार्हः, उपनीतोऽध्ययनार्ह इत्यादिवत् । देहबन्धमुप-शमयतीति वा प्रपञ्चोपशमः । भक्तानामन्यथाज्ञाननाशनात् स्वस्मिन् भेदानापादनाच्च[११] अद्वैतः । द्वैतशब्दः कथमन्यथाप्रत्ययवाचक[१२] इत्याशङ्क्याऽह– **अपेक्ष्येति** । यथास्थितात् वस्तुतत्वात् **अन्यस्वरूपता द्वित्वम्** इति उच्यते[१] ।

---

१. '–भावादनुत्प्रेक्ष्यः' ख.
२. '–देष्टुं चाशक्यः' ख.
३. '–दीयमद्वन्द्वं ब्रह्मेति' ख.
४. 'सम्मतमित्याशङ्का–' क.
५. '–लक्षणवैशिष्ट्यान्न तत् सम्मत–' क.
६. 'नप्रज्ञमिति विरोधश्च' क.
७. '–लक्षणं कथं व्यनक्तीत्या–' क.
८. 'एकात्मा प्रधानपूर्णस्वरूपः' ख.
९. 'स्वरूपतुच्छत्वं स्यादित्यपि' ख.
१०. '–शब्दः समीप–' ख.
११. 'स्वम्मिन् द्वैताभावाच्च' क.
१२. 'कथमन्यथाज्ञानवाचक–' क.

द्विशब्दस्य भिन्नार्थवाचकत्वात्[२] । द्वित्वज्ञानं तु द्वैतशब्दितं भवत्युक्त-हेतोरेव । अतः **तज्ज्ञानं** अन्यस्वरूपताज्ञानं **द्वैतमित्यु**च्यते । इतं ज्ञातं ज्ञान-मिति भवेत् । क्तप्रत्ययस्य तु भावेऽपि प्रवृत्तेः ॥ * ॥

**(भा.चं.) 'अद्वैतस्तेन चोद्दिष्टः'** । स्वस्मिन् द्वैताभावाच्च । द्वित्वेन वस्तुतत्वादन्यस्वरूपतया इतं इतिरवगतिः, द्वीतं अन्यथाज्ञानम् । । द्वीतमेव द्वैतम् । यद्वा द्वितीयेन प्रकारेणेतमवगतं द्वीतम् । तस्य भावो द्वैतम् । एकः प्रधानः आत्मा पूर्णश्चेति एकात्मा । ऐकात्मैव **ऐकात्म्यं प्रधानपूर्णरूपः** । अन्येऽपि पूर्णा भवन्ति स्वस्वयोग्यतानुसारेण, अयं तु निरवधिकपूर्ण इत्यर्थः । यद्वा एकात्मा **प्रधानपूर्णरूपः** । तस्य भावः **ऐकात्म्यम्** । तेन प्रधानपूर्णत्वेन स्वरूपेणायं प्रत्ययः ज्ञानरूपः । सारः आनन्दरूपश्च । पुनरानन्दरूपत्वं विशिष्योपास्यतयोच्यते– **प्रपञ्चोपशमम्** । शमिति शम इति शान्तिरिति च परमानन्द उच्यते । प्रपञ्चः विस्तृतः, 'पचि विस्तारवचने', विस्तारस्य अनन्तत्वं प्रशब्देनाऽह । अनन्ततया विस्तृतः निरवधिक इत्यर्थः । उप उत्कृष्टः सर्वाधिकः शम आनन्दोऽस्य स्वरूपमिति । अथवा प्रपञ्चः देशतः कालतश्च प्रततः । स चासावुपशम आनन्दरूपश्चेति प्रपञ्चोपशमः । **उत्कृष्टानन्दरूपत्वात्** श्रुतौ शमविशेषणतया **उपशब्दः प्रकीर्तित** इत्यर्थः । उत्कृष्टमध्ययनमस्येति उपाध्यायः । अत्रोपशब्द उत्कर्षवचन इति स्फुटयितुं **'पूजार्हः'** इति विशेषणम् । उपरि नीत उत्कर्षं नीतो वा **उपनीतः** । उपरि नयनं चोपनयनमिति । एवमुपवासोऽपि । सर्वोत्कृष्टे भगवति मनसो वासः । तदर्थं चानशनम् । एवं सामान्यतः समीपवाची सन्नपि मुख्यत उत्कर्षवचन एवायमुपशब्दः । अत एव ह्युपरीति उपर इति चोर्ध्ववचनः शब्द उदपद्यत । अथवोपशमो नाम निवृत्तिः । 'उपशान्त आमयः' इति यथा । तथाच प्रपञ्चं स्वदर्शनेन निवर्तयति भक्तानामिति प्रपञ्चोपशमः । अतिशयितं शं सुखं

---

१. 'द्वित्वमुच्यते' ख. २. 'भिन्नार्थकत्वात्' ख.

शीत्युच्यते। निर्दुःखत्वमेवातिशयो नाम। तादृशं सुखं वात्यनुभवतीति शिवम्। तदेतदाह– **'निर्दुःखसुखरूपत्वाच्छिवशब्दः श्रुतौ श्रुतः'** इति। निर्दुःखसुखात्मकत्वात् परममङ्गलस्वरूप इत्यर्थः। 'मङ्गलानां च मङ्गलम्' इति हि स्मरन्ति। तदेवमैकात्म्यप्रत्ययसार इति प्रपञ्चोपशम इति शिव इति त्रीण्यपि विशेषणानि सतात्पर्यमानन्दरूपत्वं बहुधा विदधते। प्रथमं सार इत्यानन्दरूपत्वमुक्तम्। उपशम इति तस्य सर्वोत्कर्षः सनिघातमुक्तः। पुनः शिव इति तस्य निर्दुःखत्वं विशिष्योक्तमिति। एतेषां विशेषणानामर्थान्तरेऽपि तात्पर्याच्च नान्ततः पौनरुक्त्यमिति ॥ * ॥

**(भा.) 'स आत्मा स विज्ञेयः' इति सोऽयमात्मा चतुष्पादिति चतुर्द्धा विभक्त उच्यते उपसंहारार्थम्। 'सोऽयमात्माऽध्यक्षरम्' इति पृथगारम्भात्।**

**'विश्वादिरूपो यस्त्वात्मा स विज्ञेयो मुमुक्षुभिः।**
**'निर्विशेषोऽपि भगवांश्चतुर्द्धा समुदीरितः' इति प्रत्यये ॥ * ॥**

**(टी.)** [१]एवमद्वैतान्तविशेषणविशिष्टं **'चतुर्थं'** पादं **'मन्यन्ते'**। इत्येते चत्वारः पादा वेदितव्याः। आदावुपक्रान्तस्यार्थस्य[२] उपसंहारार्थकमुत्तरवाक्यमित्याह– **स** इत्यादिना। **'स आत्मा स विज्ञेयः'** इत्यनेन वाक्येन **'सोऽयमात्मा चतुष्पात्'** इत्युपक्रमे **चतुर्धा** विभक्तत्वेनोक्तो मूलरूप **उच्यते**, उपक्रान्तस्योप**संहारार्थम्**। अपरथा **'सोऽयमात्माऽध्यक्षरम्'** इत्युत्तरत्र पृथगारम्भासम्भवात्। अतो नैतदाशङ्कनीयं **'चतुर्थं मन्यन्ते'** इत्युक्त्वा **'स आत्मा'** इति वचनादात्मत्वादिविशेषणं तस्यैवेति। [३]अन्येषामप्येतदुपपत्तेः। तदेतत् **विश्वादिरूप** इत्यादिप्रत्ययवचनेन प्रत्याययति। **निर्विशेषोऽपि** निर्भेदोऽपीत्यर्थः ॥ १ ॥

---

१. 'एवमनेकविशेषण–' ख.
२. '–र्थस्योपपादकमुपसंहारकमुभयवाक्य–' ख.
३. 'अन्येष्वप्येत–' क.

**(भा.चं.)** ननु भगवतस्तद्गुणानां च सविशेषो ह्यभेद इष्यते । अत एव 'आनन्दो ब्रह्म' इति 'आनन्दं ब्रह्मणः' इति द्वेधाऽपि प्रयोगो युज्यते । तत् कथमुच्यते '**निर्विशेषोऽपि**' इति? आह– **निर्भेदोऽपीत्यर्थ** इति ॥ १ ॥

**अत्रैते श्लोका भवन्ति–**

निवृत्तेः सर्वदुःखानामीशानः प्रभुरव्ययः ।
अद्वैतः सर्वभावानां देवस्तुर्यो विभुः स्मृतः ॥ २ ॥ १ ॥

कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ ।
प्राज्ञः कारणबद्धस्तु द्वौ तु तुर्ये न सिद्ध्यतः ॥ ३ ॥ २ ॥

नाऽत्मानं न परांश्चैव न सत्यं नापि चानृतम् ।
प्राज्ञः किञ्चन संवेत्ति तुर्यं तत् सर्वदृक् सदा ॥ ४ ॥ ३ ॥

द्वैतस्याग्रहणं तुल्यमुभयोः प्राज्ञतुर्ययोः ।
बीजनिद्रायुतः प्राज्ञः सा च तुर्ये न विद्यते ॥ ५ ॥ ४ ॥

स्वप्ननिद्रायुतावाद्यौ प्राज्ञस्त्वस्वप्ननिद्रया ।
न निद्रां नैव च स्वप्नं तुर्ये पश्यन्ति निश्चिताः ॥ ६ ॥ ५ ॥

अन्यथा गृह्णतः स्वप्नो निद्रा तत्त्वमजानतः ।
विपर्यासे तयोः क्षीणे तुरीयं पदमश्नुते ॥ ७ ॥ ६ ॥

अनादिमायया सुप्तो यदा जीवः प्रबुद्ध्यते ।
अजमनिद्रमस्वप्नमद्वैतं बुद्ध्यते तदा ॥ ८ ॥ ७ ॥

प्रपञ्चो यदि विद्येत निवर्त्तेत न संशयः ।
मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥ ९ ॥ ८ ॥

विकल्पो विनिवर्त्तेत कल्पितो यदि केनचित्।
उपदेशादयं वादो ज्ञाते द्वैतं न विद्यत इति ॥ १० ॥ ९ ॥

इति द्वितीयः खण्डः

—०—

**(भा.)** सर्वदुःखानां निवृत्तेः कारणभूतस्तुरीयो देवः।

'हरिस्तुरीयरूपेण मोक्षदः सम्प्रकीर्तितः।
'देवः स सर्वजीवानां गम्यत्वात् समुदीरितः॥

'भावा जीवाः समुद्दिष्टा भवन्त्येते यतो विभोः।
'ईशानामपि मुक्तानामीशानः सोऽननाच्छ्रुतः'
इति प्रत्याहारे ॥ * ॥

**(टी.)** चतुर्धा विभक्त आत्मा चतुरवस्थाप्रेरक इत्यत्रापि वरुणो ब्रह्मदृष्टा मन्त्राः प्रमाणं भवन्तीत्याह– **अत्रेति**। **'निवृत्तेः–'** इत्यादिश्लोकार्थमाह– **सर्वदुःखानामिति**। अत्र पुनः **'हरिस्तुरीय–'** इत्यादिप्रत्याहारवचनं चाऽह। अयं भावः– **तुरीयो देवः** दुःखनिवृत्तिलक्षणस्य मोक्षस्य **'प्रभुः'** **कारणभूत** इत्यर्थः। ईशा इति मुक्ताः। तेषामप्यननकारणत्वा**दीशानः**। भगवदनुग्रहाद् भूतिमन्तो भवन्तीति **भावा** भक्तजना उक्ताः। [1]तेषामन्यथाज्ञाननिषेधनाद**द्वैतः**। अथ तेषां गम्यत्वाद् **देव**श्चायम्। दिवुधातोर्गत्यर्थेऽपि प्रसिद्धत्वात्। विशिष्टभूतिभावकत्वाद् **विभु**श्च स्मृतः ॥ २ ॥

**(भा.चं.)** **'सर्वदुःखानां निवृत्तेः प्रभुः'** इत्यन्वयमभिप्रेत्य भाष्यं प्रवृत्तमित्याह– **अयं भाव** इति। प्रभवत्यनेनेति **प्रभुः** प्रभवः **कारणभूत इत्यर्थः**। दीव्यते गम्यत इति **देवः**। 'दिवु क्रीडाविजयव्यवहारद्युतिस्तुतिकान्तिगतिषु'। **भावा जीवा** इति सज्जीवाः। **भूतिमन्तो भवन्तीति** निर्वचनात्। मुक्तानां

---

१. **'तेषामप्यन्यथा–'** ख.

पुनर्विविधा भूतीर्भावयतीति **विभुः** । **सर्वभावानां** सर्वचेतनानां मध्ये **अद्वैतः** असमाधिक इति चार्थः ।। २ ।।

**(भा.) 'कार्यकारणबन्धस्य तदधीनत्वतो विभुः ।**
**'विश्वादिरूपो भगवान् बद्ध इत्युच्यते श्रुतौ ।**
**'कुतो बन्धः परस्यास्य बन्धेशस्य चिदात्मनः' इति च ।।**

**(टी.) 'कार्य–'** इत्यादिना विश्वादीनां लक्षणभेदं दर्शयति । कारणं प्रकृतिः, कार्यं प्राकृतं च, अज्ञानान्यथाज्ञानात्मके । ताभ्यां जीवं बध्नीतो **विश्वतैजसौ** । जाग्रत्स्वप्नयोरुभयोरपि जीवस्याज्ञानान्यथाज्ञानदर्शनात् । प्राज्ञस्त्वज्ञानमात्रेण बध्नाति। सुषुप्तावज्ञानमात्रदर्शनात् । नहि तत्र भ्रमो दृश्यते । तुर्यस्तु द्वावपि बन्धौ न करोति। नहि मुक्तावज्ञानं भ्रमश्च स्याताम् । एवं बन्धस्वातन्त्र्याद् विश्वादीनां बद्धत्वमित्यर्थः । अथ बन्धानुभवाङ्गीकारे को दोष इत्यत आह– **कुत** इति । **परस्य** सर्वतो विलक्षणस्य बन्धानर्हत्वान्न बद्धत्वम् । बन्धनियामकस्य तदप्राप्तेश्च । सर्वचेतनाधिपतेर्बन्धकर्तुरभावाच्च । अतः सर्वथाऽपि न विष्णोर्बद्धत्वमित्यर्थः । **इति च** प्रत्याहारे ।। * ।।

**(भा.चं.)** ननु यो बध्नाति स बन्धको भवति । यो बद्ध्यते स बद्धो भवति । तत् कथं **'भगवान् बद्ध इत्युच्यते'**? न भोः । यो बद्ध्यते स बद्ध इत्युच्यते। येन प्रेरकेण बद्ध्यते सोऽपि बद्ध इत्युच्यते। 'राजा जिगाय' इत्याहुः । ननु सैनिका जिग्युः । 'राजाऽजीयत' इत्याहुः । ननु सैनिका अजीयन्त । राज्ञा प्रेरिताः सैनिका जिग्युरिति । अतो राजैव जिगाय । राज्ञा प्रेरिता अजीयन्तेति । अतो राजैवाजीयत । तथा येनायं बद्धः सोऽपि बद्धः । बन्धसम्बद्धो हि बद्ध उच्यते । सम्बन्धो हि द्विनिष्ठः । तेन बन्धानुयोगी च बद्धः । बन्धप्रतियोगी च । बन्धस्वामी च बद्धः । बन्धाश्रयश्च । अथापि राजैव मुख्यतो जयी । न सैनिकाः । तथाऽत्रापि बन्धस्वामी मुख्यतो बद्ध इति

विद्वद्भिरुच्यते। विद्वद्रूढिरियम्। अविद्वांसस्तु बन्धाश्रयं बद्धमाहुः। तदेतदाह– **बन्धस्वातन्त्र्याद् विश्वादीनां बद्धत्वमित्यर्थ** इति। **'परस्य' सर्वत** उत्तमस्य विलक्षणस्य च, अत एव **'बन्धेशस्य' बन्धनियामकस्य** बन्धाप्राप्तेश्च। चितश्चेतनानामात्मा स्वामीति चिदात्मा। तदेतदाह– **'चिदात्मनः' सर्वचेतनाधिपतेः**। तथाहि–'न भेदात्–' [ब्र.सू.३.२.१२] इति सूत्रव्याख्यानावसरे तत्वप्रदीपाचार्यः– 'कारणं प्रकृतिः। कार्यं देहेन्द्रियमनआदि। ताभ्यां बद्धो विश्वो जाग्रत्प्रवर्तकः, तैजसश्च स्वप्नप्रवर्तकः। कारणमात्रबद्धः प्राज्ञः सुषुप्तिनियामकः। तौ द्वावपि बन्धौ तुरीये मोचके न स्तः' इति। 'बन्धबन्धकबद्धसाक्षित्वाद् बद्धः। साक्षित्वं स्वातन्त्र्येण' इति च॥ ✻॥

**(भा.) 'स बद्धः स दुःखी स बन्धयति स दुःखयतीति। स जीवः स प्रकृतिः स जीवयति स प्रकरोतीति। सोऽवरः सोऽनित्यः सोऽवरयति सोऽनित्ययति' इति कौषारवश्रुतिः॥**

**(टी.)** एवमन्यत्रापि स बद्धः स दुःखीत्यादिशब्दा लोकतो[1] दोषवाचका अपि विष्णोः[2] स्वातन्त्र्यमेव वदन्तीति ज्ञापयन्नुक्तार्थं **'स बद्धः–'** इत्यादिकया कौषारवश्रुत्या[3] पुनरत्यन्तं दृढयति॥ ✻॥

**(भा.) 'विष्णोर्गुणोक्तिपरता मम नित्यं सुरेश्वराः।**
**'तदर्थमन्यद् वचनमतस्तस्य विरोधि यत्॥**
**'तन्ममार्त्थो न हि क्वापि साऽहं तत्सरणात् सदा।**
**'सरस्वतीति सम्प्रोक्ता तस्माज्ज्ञेया गुणा हरेः'**
**इति महोपनिषदि॥ ✻॥**

**(टी.)** तस्य निर्दोषगुणपूर्णत्वेनार्थाधिक्यात् तत्रैव श्रुतेस्तात्पर्याधिक्यमित्येतदपि महोपनिषदि प्रसिद्धमित्याह– **विष्णोरित्यादिना**। इदं वाक्यं हि

---

१. 'लोके दोष–' क. २. 'विष्णौ स्वा–' क.

३. 'इत्यादिकया विशेषश्रुत्या' ख.

वेदमूर्त्या सरस्वत्या स्वयमेव देवान्[१] प्रत्युपदिश्यमानमित्यर्थतोऽवगम्यते[२]। **अन्यद् वचनं** प्रकृत्यादिजगद्वचनम्। **तस्य विरोधि यत्** गुणोक्तितात्पर्यविरोधि यत् दोषित्वनिर्गुणत्वाल्पगुणत्वादि[३]। **तत्** अत्यन्ताल्पमपि[४] अनन्तवेदात्मनो **मम क्वापि** एकस्मिन्नपि वाक्ये[५] पदे स्वरादौ वा विवक्षितार्थो **न** भवति। किन्तु तदविरोध्येवार्थः स्यात्। तच्च तत्स्वातन्त्र्यादि[६] दोषशब्देषु। हिशब्दात् 'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते' इत्यादौ भगवच्छब्देन समग्रैश्वर्यादिगुणवत्त्वप्रसिद्धेश्च। **साऽहं** तद्गुणोक्त्या **तत्सरणात् सरस्वतीत्युक्ता**। नत्वन्यस्मात्। **तस्मात्** एतैः शब्दैरपि **गुणा** एव **हरेरुक्ता ज्ञेयाः** ॥ ३ ॥

**(भा.चं.) अर्थतोऽवगम्यते**। **'अहं सरस्वतीति सम्प्रोक्ता'** इति स्ववचनात्। **'विष्णोर्गुणोक्तिपरता मम'** इति तल्लिङ्गाच्च। **'सुरेश्वराः'** इति सम्बोधनाच्च। **तच्च तत्स्वातन्त्र्यादीति**। धनस्वामी हि धनीत्युच्यते। न धनवान्। धनिकस्य धनं कोशागारे तिष्ठति। न तद् धनीत्युच्यते। सेवकजनेषु वा भवति। न ते धनिन उच्यन्ते। यतस्तद्वन्तोऽपि ते न तेषां तत् स्वम्। एवं दुःखस्वामी मुख्यतो दुःखीत्युच्यते। न दुःखपात्रम्। सरो गुणोक्त्या भगवत्सरणम्। तद्वती **'सरस्वती'**। **एतैः** दोषवाचकतया प्रतीयमानैः, लोकेषु दोषवाचकैः, **शब्दैरपि गुणा एव ज्ञेया हरेः** ॥ ३ ॥

**(भा.)** 'नाऽत्मानं न परांश्चैव न सत्यं नापि चानृतम्।
'प्राज्ञः संवेदयेत् किञ्चिज्जीवकालतमो विना ॥

'सुप्त्यवस्थां सुखं वाऽपि विना नान्यत् प्रदर्शयेत्।
'सर्वं तु दर्शयेन्मुक्तौ तुरीयः परमेश्वरः' इति प्रत्यये ॥

---

१. 'सरस्वत्या सर्वदेवान्' ख.
२. '–त्यर्थतो गम्यते' ख.
३. 'दोषित्वागुणत्वादि' ख.
४. 'तदत्यल्पमपि' ख.
५. 'वाक्ये वेदाक्षरादौ वा विवक्षितं न' ख.
६. 'तच्च स्वातन्त्र्यादिकं' ख.

**(टी.)** प्राज्ञः कारणबन्धनियामक इति यदुक्तं[1] तत् **'नाऽत्मानम्–'** इत्यादि-श्लोकार्थवादिप्रत्ययवचनेन प्रपञ्चयति। **'प्राज्ञो'** भगवान् आत्मस्वरूपादिकं **'किञ्चन'** वस्तु न संवेदयति जीवायेत्यर्थः। जीवस्वरूपादिकं संवेदयति। तथाच योजना– ज्ञानादिकं **किञ्चन** स्वल्पं जीवाय संवेदयति। यत् पुनरात्मपरादिकं[2] बहुलं वस्तु तन्न संवेदयतीति। अथ यत् तुरीयं पदं **तत् सर्वदृक्** स्वात्मानं सकालं जीवं सत्यानृते पुण्यपापे स्वर्गनरके सुख-दुःखे अतीतानागते इत्यादिकं सर्वमपि मुक्त्यवस्थायां सम्यगेव दर्शयत्य-नन्तकालम्॥ ※॥

**(भा.चं.)** मूले **'नाऽत्मानं'** न परमात्मानम्। **'न सत्यं नापि चानृतम्'**। जाग्रत्स्वप्नयोरेव हि यथार्थमयथार्थं वा गृह्णाति। तस्मात् प्राज्ञः ज्ञानं विपरीतज्ञानं वा न ददाति। केवलमज्ञानं ददाति। तस्यापवादमाह– **'प्राज्ञः किञ्चित् संवेदयेदि'**ति। किं तत् किञ्चित्? जीवस्वरूपकालतमांसि सुप्त्यवस्थां सौप्तं सुखं च। अत एतानि **विनाऽन्यत्** किमपि **न प्रदर्शयेत्**। अथ च सत्यानृतपदे बहुधा व्याख्याति– **पुण्यपापे, स्वर्गनरके, सुखदुःखे, अतीतानागते** इति। **स्वात्मानं** स्वान्तर्यामिणं परमात्मानम्। 'एष त आत्माऽन्तर्यामी' इति श्रुतेः। स्वमाप्नोतीति ह्यात्मा। **'सदा' अनन्तकालम्**॥ ※॥

**(भा.) 'स्वतन्त्रे कर्त्तृशब्दः स्यात् प्राज्ञस्यावेदनं यथा।**
**'सर्वप्रदर्शके चैव तुरीये सर्ववेदनम्' इति ब्रह्मतर्के॥**

**(टी.)** ननु **'प्राज्ञो न संवेत्ति'**, **'तुर्यं तत् सर्वदृक्'** इति कर्तृशब्दश्रवणात् अज्ञत्वज्ञत्वे एव श्रुत्युक्ते[3]। नहि तत्स्वातन्त्र्यादिकम्, [4]प्रमाणाभावादित्येता-माशङ्कां **'स्वतन्त्रे–'** इत्यादिना ब्रह्मतर्कवचनेन[5] परिहरति। कारयितरि **स्वतन्त्रे**[6] कर्तृशब्दप्रयोगः सुघटः **स्यात्**। यथा **प्राज्ञस्य** हरेः **न संवेत्ति**

---

१. 'इत्युक्तं तत्' ख. २. '–रात्मस्वरूपादिकं' क. ३. 'एवात्रोक्ते' क.
४. 'प्रत्ययाभावा–' क. ५. 'इत्यादिब्रह्मतर्कवाक्येन' ख. ६. 'स्वतन्त्रेऽपि' क.

इत्युक्तम**अवेदनं** न संवेदयतीति स्वतन्त्र एव शुश्रुम[१]। नहि प्राज्ञस्याज्ञत्वं तत्राभिप्रेतम्। उत्तरत्र **तुरीये 'सर्वदृक्'** इति[२] पठितं सर्वदर्शनं च **सर्वप्रदर्शके** स्वतन्त्र एव भवति ॥ ※ ॥

**(भा.चं.) 'स्वतन्त्रे कर्तृशब्दः स्यात्'**। यथा लोके कारयिता गृहपतिराह– 'मयेदं निर्मितं गृहम्' इति ॥ ※ ॥

**(भा.) 'निद्रायुतास्तु विश्वाद्यास्तदधीना यतो हि सा।**
**'यथा भृत्ययुतः स्वामी नह्यज्ञानं परात्मनः' इति च ॥**

**(टी.)** [३]ननु यद्यप्यत्र ज्ञानादिस्वातन्त्र्यं विश्वादीनां साधितम्। तथाऽप्युत्तरत्र स्वप्ननिद्रादिसाहित्यश्रवणादज्ञत्वमपि दुर्निवारमित्यत आह– **निद्रेति**। **'न ह्यज्ञानं परात्मनः'** इति वचनाद् विश्वतैजसयोः स्वप्नयुतत्वादिकमुक्तमपि तन्नियन्तृत्वमेव। कुतः? स्वप्नस्याप्यज्ञानमूलत्वात्। [४]**इति च** इत्यत्र ब्रह्मतर्क इति शेषः ॥ ※ ॥

**(भा.चं.)** चकारोऽव्यवहितपूर्वप्रस्तुतमनुकर्षतीत्याह– **इति चेत्यत्रेति**। एवमुत्तरत्र च ॥ ※ ॥

**(भा.) 'अभेदमपि तद् ब्रह्म बहुरूपं विशेषतः।**
**'करोति न करोतीति व्यवहार्यं स्वशक्तितः' इति च ॥**

**(टी.)** अथाप्यत्र संशयः। किं विश्वादीनां भेद आहोस्विदभेद इति। भेदश्चेदेकव्यतिरिक्तानामज्ञत्वमस्वातन्त्र्यं च स्यात्। अभेदश्चेज्जीवानां बन्धं मोचनमज्ञापनं ज्ञापनं चैकः करोत्यन्यो न करोतीति व्यवहारासम्भव इति। अत्र **'अभेदमपि–'** इत्यादिब्रह्मतर्कवाक्येन[५] परिहरति। तस्मादज्ञानादिस्वातन्त्र्यमेवात्र भगवतोऽभिप्रेतम् ॥ ※ ॥

---

१. **'शुश्रुमः'** इति सर्वत्राऽऽदर्शेषु पठ्यते। लिपिकृत्प्रमादः।

२. **'इति सर्वदर्शनं पठितं च'** ख.

३. ख.पाठे **'ननु'** इति न पठ्यते।

४ अत्र ख.पाठे **'इति ह्यस्य ब्रह्मतर्कवचनस्याभिप्रायः। एष इति शेषः'** (?) इति पठ्यते।

५. **'–तर्कवचनेन'** ख.

**(भा.चं.)** अभेदमपीत्यादिब्रह्मतर्कवाक्येनेति। इदं प्रत्ययवचनमिति तत्वप्रदीपे [ब्र.सू.३.२.१३] स्थितम्। अत्रैतद् विमृष्टव्यं भवति। उभयत्राप्येतद् वचनं स्यात् पठितम्। प्रत्यय इति ब्रह्मतर्कस्यैव वा स्यात् प्रकरणान्तरम्॥ * ॥

**(भा.) न संवेदयतीत्यस्वीकारे 'तुर्यं तत् सर्वदृक् सदा', 'द्वैतस्याग्रहणं तुल्यमुभयोः प्राज्ञतुर्ययोः' इति च विरुद्धम्। द्वैताग्रहणकारणत्वं तुल्य-मित्यर्थः॥ * ॥**

**(टी.)** [१]न चेत् प्रकरणविरोधोऽपि स्यादित्याह–नेत्यादिना। तत्र प्राज्ञो न संवेदयतीत्यर्थानङ्गीकारे तुर्यं[२] सर्वज्ञापकमिति तुर्यस्य[३] प्राज्ञवैलक्षण्यकथनं प्रकरणविरुद्धं स्यात्। न संवेदयतीति स्वीकारेऽपि एतद्वैलक्षण्यं सर्वत्र[४] विरुद्धमिति चेत् तर्हि प्राज्ञस्याज्ञत्वं स्वत एव [५]विरुद्धमित्युत्तरम्। अतो न संवेदयतीत्येव स्वीकर्तव्यम्[६]। अन्यथा द्वैतं न ग्राहयतीत्येतदुभयोस्तुल्यं लक्षणमिति वचनं च विरुद्धम्[७]। एवं चास्य परस्याज्ञानानुभवो नैवाऽशङ्क्य इत्यर्थः। अनयोर्द्वैतस्याग्राहकत्वं कुतस्तुल्यमिति[८] चेत् कार्यबन्धनिषेधस्यापि तुल्यत्वात्॥ ४॥

**(भा.चं.)** ननु ब्रह्मतर्के **'स्वतन्त्रे कारयितर्यपि कर्तृशब्दः स्यात्'** इति स्वोक्तिसमर्थनाय दृष्टान्तोऽभ्यधायि– **'प्राज्ञस्यावेदनं यथा'** इति, **'सर्वप्रदर्शके च सर्ववेदनं यथा'** इति च। ननूभयसम्मतो हि दृष्टान्त एष्टव्यः। न वयं जातु स्व्यकरवाम 'न संवेत्ति' इत्यस्य 'न संवेदयति' इत्यर्थम्। तस्मान्नायं दृष्टान्तः साधीयानिति। सत्यमुभयसम्मतो दृष्टान्त एष्टव्यो भवतीति। अत्रापि भवता सम्मन्तव्यं भवति। यदि नाङ्गीकरोषि नूनमङ्गीकारयिष्यस इत्याह– **प्राज्ञो न**

---

१. 'नो चेत्' ख.
२. 'तुरीयम्' ख.
३. तुरीयवैलक्षण्यकथनप्रकरण–' ख.
४. 'सर्वविरुद्ध–' ख.
५. 'स्ववचनविरुद्ध–' क.
६. '–त्येवाङ्गीकर्तव्यम्' क.
७. आदर्शेषु किञ्चिदिवास्तव्यस्तं वाक्यमित्यर्थानुगुणतयाऽत्रैवं संयोजितम्।
८. 'कुतः सिद्धमिति चेत्' ख.

**संवेदयतीत्यर्थानङ्गीकारे** । 'न संवेत्ति' इति श्रौतप्रयोगस्य 'न संवेदयति' इत्यर्थमनङ्गीकुर्वन् तपस्वी प्रष्टव्यः। किं 'संवेत्ति' इत्यत्रैव भवतो विवादः? उत 'तुर्यं तत् सर्वदृक्', 'द्वैतस्याग्रहणं तुल्यम्' इत्युत्तरवाक्ययोरपि? सर्वत्रापि यथाश्रुत एवार्थः । न क्वापि ण्यन्तार्थता । अन्यथा प्रकरणविरोधश्च स्यात्, प्रायपाठश्च कुप्यतीति । ननु स्मर ते वचनस्य, मा स्म विस्मरः,तेनैव मास्म पराजीयथाः ॥

तर्हि सर्वदृगिति सर्वज्ञत्वमुच्यते। द्वैतस्याग्रहणमित्ययथार्थज्ञानविरह उच्यते। सत्यमुच्यते। किं तेन? तल्लक्षणं हि ब्रह्म भवतामपि सम्मतम्। अयि विस्मरणवीर, नात्र ब्रह्मणो लक्षणमुच्यते। किन्तु विश्वादीनां परस्परं व्यावर्तको धर्मः। यदि सर्वज्ञत्वं तुरीयस्य धर्म इत्युच्यते, अव्यावर्तकं तद् भवति। सर्वाणि हि रूपाणि सर्वदृंशि। यदि सर्वदर्शकत्वमुच्यते तुरीयरूपेणैव मुक्तानां सर्वं दर्शयति नान्येन रूपेणेति भवति व्यावर्तकं तत् ॥

एवं द्वैतस्याग्रहणमिति यद्ययथार्थज्ञानविरह उच्यते कथमङ्ग तद् व्यावर्तकं स्यात्? सर्वाण्यपि हि भगवद्रूपाणि अयथार्थज्ञानविरहवन्ति भवन्ति। अत एवं वक्तव्यम्– 'प्राज्ञतुर्यौ विपरीतज्ञानं न जनयत इति। तदा तयोर्भवति तुल्य-धर्मत्वम्। भवति च विश्वतैजसाभ्यां व्यावृत्तिः। तेनानिच्छताऽप्यङ्गीकर्तव्य-मापतितम्– यदन्तर्गतण्यर्थोऽयं प्रयोग इति ॥

तर्हि तत्प्रकरणपठितस्य 'संवेत्ति'पदस्यापि ण्यर्थगर्भताऽवश्यमभ्युपेया। अन्यथा ननु प्रकरणविरोधश्च स्यात्, प्रायपाठश्च कुप्येत्। अपिच, अवेद-नस्येतरव्यावर्तकत्वेऽपि सर्ववेत्तुर्भगवतः कथमवेदनं धर्म इति वचः शोभते? स्वयं प्रकर्षेण जानन्, जीवं च प्रकर्षेण न ज्ञापयन् हि प्राज्ञ इष्यते। नह्यज्ञं कोऽपि प्राज्ञमभिधत्ते । तस्मात् सूक्तमुक्तं ब्रह्मतर्के– **'स्वतन्त्रे कर्तृशब्दः स्यात् प्राज्ञस्यावेदनं यथा'** इति ॥

'न संवेदयति–' इत्यादिभाष्यवाक्यं केचिदन्यथा व्याचक्षते– 'सर्वदृगिति सर्वज्ञानमुक्त्वा पुनरग्रहणमिति यज्ज्ञानराहित्यमुच्यते तद्विरुद्धम्' इति ।

गजनिमीलिकैवेयम्। द्वैतस्याग्रहणमित्ययथार्थज्ञानविरहो हि पूर्वपक्षिणा विवक्ष्यते, न यथार्थज्ञानविरहः । तत् कथं सार्वज्ञ्यं विरुणद्धि । नह्ययथार्थज्ञानं नास्ति भगवत इति न स सर्वज्ञो भवति ।। ४ ।।

**(भा.) 'द्वैतं न ग्राहयेत् तुर्यो नच प्राज्ञः कथञ्चन ।**
**'द्वैतग्रहणवीजं तु निद्रा प्राज्ञं समाश्रिता'**

इति प्रकटश्रुतिः ।। ❋ ।।

**विपरीतज्ञानादपि विपरीतज्ञानान्तरं जायते ।। ❋ ।।**

**(टी.) 'द्वैतस्य–'** इति श्लोकार्थं पुनश्च **द्वैतमित्यादि** प्रकटश्रुत्याऽपि प्रकटयति । द्वैतमन्यथाज्ञानमिति प्रागेवोक्तम् । [1]तद्ग्रहणे कारणभूता निद्रा **बीजनिद्रा** । तया संयुतः **प्राज्ञः** । तदाश्रयभूत इत्यर्थः । इदमेव कारणबन्धस्वातन्त्र्यमित्युक्तम् ।। ५ ।।

कार्यं कारणं च किमात्मकमित्याकाङ्क्षायामाह– **स्वप्नेति**। कार्यं स्वप्नात्मकम्, कारणं निद्रात्मकमिति । तत्साहित्यं तु तन्नियामकत्वमेवेति[2] सविस्तरमुक्तम् । **निश्चिताः** निश्चयज्ञानिनः ।। ६ ।।

यदि च विश्वादिः [3]स्वप्नादेर्नियामकः, तर्हि [4]तदनुभवः कस्येत्याशङ्कायामाह– **अन्यथेति** । योऽयमजागरितेऽपि इदं जागरितमित्यन्यथा [5]गृह्णाति तस्य हि संसारिणो जीवस्य स्वप्नानुभवः सम्भवी । नहि सर्वज्ञेश्वरस्य । निद्रा च तत्तद्वस्तु**तत्वमजानतः** तस्यैव भवति । [6]कदा तस्य संसारिणो मोक्ष इत्याशङ्कायामाह– **विपर्यास** इति । अत्र त्वन्यथाज्ञानरूपो हि स्वप्नः[7] । तत्वाज्ञानरूपिणी हि निद्रा । **तयोः** सकाशात् जायमानेऽपि[8] विपरीतज्ञाने तत्वज्ञानसामर्थ्यात् **क्षीणे** सति [9]तुरीयपदप्राप्तिरूपो मोक्षस्तस्य स्यात् ।।

---

१. 'तद्ग्रहणकारण–' क.
२. 'तन्नियमनमेवेति' क.
३. 'स्वप्नादिनियामकः' ख.
४. 'तर्हि भेदानुभवः कस्येत्याकाङ्क्षया–' ख.
५. '–न्यथाग्राही जीवस्तस्य स्वप्ना–' क.
६. 'भवति। संसारिणः कदा मोक्षः' ख.
७. '–रूपः स्वप्नोऽभिप्रेतः' क.
८. 'उत्पद्यमानेऽपि' ख.
९. 'तुरीयप्राप्ति–' क.

यद्यपि तत्वाज्ञाननिमित्ता विपरीतज्ञानोत्पत्तिः शुक्त्यादावपि सम्मता। तथाऽपि विपरीतज्ञानात् न तदन्तरं जायत इत्यत आह– **विपरीतेति**। **विपरीतज्ञानादपि विपरीतज्ञानान्तरं**[१] **जायत** एव। स्वप्न एव स्वप्नान्तरोत्पत्तिदर्शनात्। नहि स्वप्नभ्रममन्तरेण तद्गतस्वप्नान्तरभ्रमानुभवो युज्यते। तद्भ्रमवासनाजनितत्वादेतद्भ्रमस्य[२]। तस्मादुभयात्मकेऽपि विपरीतज्ञाने क्षीणे सति विमुक्तिरिति[३] सुयुक्तम्॥ ७॥

**(भा.चं.)** ननु स्वप्नोऽपि यथार्थः। दर्शनमपि यथार्थम्। अहमिमं स्वप्नमपश्यमित्युत्तरत्र परामर्शात्। तत् कथमुच्यते अन्यथा गृह्णतः स्वप्न इति? आह– **योऽयमजागरितेऽपि**। **विपर्यासे** विपरीतज्ञाने। **तयोः** अज्ञानविपरीतज्ञानयोः **सकाशात् जायमाने**। **स्वप्न एवेति**। 'अन्यथा गृह्णतः स्वप्नः' इति वचनानुसारेणेदमुदितम्। जागरितेऽपि दृश्यते। चैत्रं मैत्रं भ्रमन् चैत्रपुत्रं मैत्रपुत्रत्वेन भ्रमति। ननु चैत्रपुत्रस्य तत्त्वाज्ञानमेव तत्र भ्रमकारणम्। तदपि कारणं स्यात्। एतदपि भवति। चैत्रपुत्रत्वाज्ञानस्यापि चैत्रे मैत्रत्वभ्रम एव हि कारणम्॥ ५–७॥

**(भा.) 'अनादिमायया विष्णोरिच्छया स्वापितो यदा।**
**'तया प्रबोधमायाति तदा विष्णुं प्रपश्यति'**

**इति प्रकाशिकायाम्॥ ❊॥**

**(टी.)** एवं सति स्वप्ननिद्रापरस्य जीवस्य कदा केन प्रबोधः? येन कृत्स्नविपर्यासक्षयेण[४] तुरीयावगतिस्तद्गतिश्च[५] स्यादित्यत आह– **अनादीति**। अनुत्पत्तिमत्त्वादनादिर्विष्णुः। तस्यैवानादीच्छया **स्वापितो**ऽयं जीव इति यत् अतस्तयैवास्य प्रबोधः स्यात्। यदा च प्रबुद्ध्यते **तदा**[६] तयैव भगवन्तं **प्रपश्यति**[७] **'अद्वैतम्'** अन्यथाज्ञाननाशनम्[८]। अनादित्वेऽप्युत्तरकाले कदाचिच्चास्य [जनिः]

१. '–ज्ञानान्तरं कचिज्जायत एव' क. २. '–जनित्वात् तद्भ्रमस्य' ख. ३. 'सति मुक्तिरिति' क.
४. '–पर्यासे क्षीणे सति' ख. ५. 'तुरीयावगतिः स्यादि–' क. ६. 'तदा च तथैव' ख.
७. '–वन्तं स पश्यति' ख. ८. '–नाशेन' ख.

स्यादित्यत आह– **अजमिति** । नापि[१] जीवस्येव निद्राद्यनुभवस्तस्य शङ्क्य इत्याह– **अनिद्रमस्वप्नमिति** ।। ८ ।।

**(भा.चं.)** अनादेर्विष्णोरनाद्या मायया इच्छया **'सुप्तः'** **स्वापितः । अनादिमाययैव प्रबुद्ध्यते । अजमनिद्रं बुद्ध्यते प्रपश्यति** चानादिमाययैव ।। ८ ।।

**(भा.)** **'तन्वाः स्वस्वामिसम्बन्धः प्रपञ्चोऽस्य शरीरिणः ।**
**'वस्तुतोऽसौ नचैवास्ति परमस्य वशे यतः ।।**

**'तन्वादिकस्तथाऽप्येष ह्यभिमानात् प्रदृश्यते ।**
**'अतः स विद्यत इति त्वङ्गीकारो भवेद् यदि ।**
**'अथापि भगवज्ज्ञानात् स निवर्त्तेदसंशयम्' इति ब्रह्मतर्के ।।**

**(टी.)** एवं च भगवदिच्छया प्रबुद्धस्य तत्प्रसादादेव तद्दर्शनेन किं स्याज्जीवस्येत्याकाङ्क्षायां साक्षाद् बन्धमोक्षस्तत्फलमित्याह– **'प्रपञ्चः–'** इति । अत्र प्रपञ्चस्वरूपं प्रवृत्तिप्रकारं निवृत्तिं चास्य प्रपञ्चयति– **'तन्वाः–'** इत्यादिब्रह्मतर्कवाक्येन । येयं **अस्य शरीरिणः** संसारिजीवस्य प्राकृतिकी[२] भौतिकी वा तनुः तस्याः स्वस्वामिना जीवेन सम्बन्धो योऽयमनादितो दृष्टः स तु प्रपञ्च इत्युच्यते प्रकृतिपञ्चभूतात्मकधर्मात्मकत्वात्[३] । **असौ च प्रपञ्चो वस्तुतो नैवास्ति** । [४]जीवाख्यवस्तुस्वरूपेण न विद्यते । जडधर्मत्वात् । तावता तदभावः कुतः इति चेत्, तन्वादिकस्य वस्तुनः[५] परमपुरुषवशत्वात् । जडधर्माणां जडैरैक्यमेव तन्नियतम् । न चेतनैक्यम् । [६]चेतनधर्माणामेव चेतनैक्यमित्यर्थः । तथाऽप्येष प्रपञ्चो देहाद्यभिमाननिमित्ताज्जीवस्य[७] स्वरूपवत् **प्रदृश्यते**, अपरोक्षज्ञानाभावात्, **अतः** प्रपञ्चो विद्यत इत्यङ्गीकारेऽपि भगवज्ज्ञानान्निश्चयात् **'निवर्तेत'**[८] । अनादित्वेऽपि स्वरूपवदनिवृत्तिसंशयो[९] मा भूदिति भावः ।।

१. 'नहि जीववन्निद्रा–' क.
२. 'प्राकृती' ख.
३. 'धर्मत्वात्' ख.
४. 'जीवस्य वस्तु–' क.
५. 'तस्य वस्तुनः' ख.
६. 'न चेतनधर्माणामचेतनैक्यमित्यर्थः' ख.
७. 'जीवस्य प्रदृश्यते । आत्मापरोक्षदर्शनाभावात्' ख.
८. '–यान्निवर्तते' ख.
९. '–त्वेऽप्यनन्तत्वसंशयो–' ख.

**(भा.चं.)** स तु प्रपञ्च इत्युच्यते। तेन हि बन्धो विस्तीर्यते। सम्बन्धश्च। अयं पितेयं मातेदं मित्रमयं शत्रुरित्यादि। 'पचि विस्तारवचने'। 'पचि व्यक्तीकरणे' वा॥ ॐ॥

**(भा.) अद्वैतमनन्यथाज्ञातं परब्रह्मादिवस्तु। द्वैतं द्विधा ज्ञातमन्यथा ज्ञातमज्ञैः। परमार्थतः परमेश्वरात्। तस्यैव मायामात्रं तदिच्छया निर्मितं तदन्यथाज्ञानम्। तस्मात् तदिच्छयैव निवर्त्तते॥**

**(टी.)** **मायामात्र**मित्यादिकं वाक्यशेषं तु **अद्वैत**मित्यादिभाष्यवाक्येन[1] व्याख्याति। परमार्थः परमेश्वरः। तेनैवेदं परब्रह्मादिवस्तु[2] **अद्वैतं** भवति सम्यगेव ज्ञातं भवति। ब्रह्मादिभिस्तु तदनुग्रहादेव हि सम्यग् ज्ञायते। इदमेव[3] **द्वैतम**पि भवति। **अन्यथाज्ञातं** भवति **अज्ञै**रित्यर्थः। तत् 'इदं' **अन्यथाज्ञानं** भगवतो **मायामात्रम्। तदिच्छयैव निर्मितम्। तस्मात्** तयैव **निवर्तत** इति भावः॥ ॐ॥

**(भा.चं.)** यदेव **परमार्थतः** परमेश्वरानुग्रहात् ज्ञानिभिरद्वैतं तदेव **द्वैतमज्ञैः**। तदपि **परमार्थतः** परमपुरुषस्य मायया इच्छया निर्मीयत इति **मायामात्रम्**। माया मात्री निर्मात्री यस्य तदिति वा॥ ॐ॥

**(भा.)** **'परेण ब्रह्मणा यत्तु द्विधा न ज्ञातमञ्जसा।**
**'तदद्वैतं परं ब्रह्म तदेव ज्ञातमन्यथा॥**

**'जीवेन द्वैतमुद्दिष्टं मिथ्याज्ञानं तदेव च।**
**'परमार्थात् पराद् विष्णोर्ज्ञातमिच्छावशादनु॥**

**'मायेतीच्छा समुद्दिष्टा मायामात्रं तदुद्भवम्।**
**'उत्तमत्वात् परार्थोऽसौ भगवान् विष्णुरव्ययः' इति च॥**

---

१. '–त्यादिभाष्येण' ख. २. '–दिकं वस्तु' ख.

३. '–मेव तु द्वैत–' क.

**(टी.)** अत्रापि **'परेण–'** इत्यादि ब्रह्मतर्कवचनमाह[१]। [२]भगवदिच्छापरपर्याया मायैव निर्मातृ कारणं यस्य तद्धि मायामात्रम्। श्रोतृत्वाच्छ्रोत्रमितिवत्। अतो **मायामात्रं परमार्थतो** विष्णोरिच्छानुसारेण जातम्। [३]नत्वज्ञानकल्पितम्। सर्वथा शुद्धस्याज्ञानासम्भवात्[४]। नच जीवाज्ञानकल्पितम्। ब्रह्मव्यतिरिक्तस्य जीवस्यैवाभावात्[५]। नचाज्ञानमपि तत्पक्षे सुग्रहम्। सत्यत्वेऽद्वैतहानेः। मिथ्यात्वे तदप्यज्ञानान्तरकल्पितं तदपि तथेत्यनवस्थानात्। अतो नाज्ञानाद्यात्मको[६] बन्धो मिथ्या ॥ ※ ॥

**(भा.चं.)** **'अद्वैतं परमार्थतः'** इत्यस्य व्याख्यानम्– **'परेण ब्रह्मणा द्विधा न ज्ञातम्'** इति। तृतीयार्थे तसिः। परेण ब्रह्मणा यथावदेव ज्ञातं **परं** च **ब्रह्म परं** च विश्वम्। अथच **परेण ब्रह्मणा** तदिच्छयैव जीवेन सात्विकेन **द्विधा न ज्ञातम्**। किन्तु यथावदेव ज्ञातम्। **परेण ब्रह्मणा** तदिच्छयैव च **जीवेन** तामसेन **'तदेव ज्ञातमन्यथा'**। अथ षष्ठ्यर्थे तसिः। तदिदमन्यथाज्ञानं **परमार्थतः** परमेश्वरस्य विष्णो**र्मायामात्रम्**। मायया निर्मितम्। अथ पञ्चम्यास्तसिः। यतस्तदिच्छानिर्मितम् अतः, **परमार्थतः** परमेश्वरात्, तदनुग्रहादेव **अद्वैतं** यथावज्ज्ञातं भवेदित्यादि। अत्र कश्चिदाह– 'मायापदस्येच्छार्थकत्वमसम्भावितम्' इति। स तु 'मायेतीच्छा समुदिष्टा' इति ब्रह्मतर्कवचनादेव परास्तः। **'इच्छावशात्'** इत्यस्यैव विवरणम् **'अनु'** इति। **इच्छावशात्** इच्छाधीनतया, इच्छामनुसृत्य जातमिति ॥ ※ ॥

**(भा.) अनन्यथा इतमवगतमद्वैतम्। वस्तुस्वरूपापेक्षया द्विधा ह्यन्यथाज्ञानमित्यर्थः ॥ ※ ॥**

---

१. 'वचनं चाऽह' क.
२. 'भगवत्प्रज्ञापर–' ख.
३. 'नाज्ञान–' ख.
४. 'सर्वज्ञस्याज्ञानस्यासम्भवात्' क.
५. 'जीवस्यैवासम्भवात्' ख.
६. 'नाज्ञानात्मको–' ख.

**(टी.) अद्वैतमनन्यथा ज्ञातमिति** यदुक्तं तत् कथं तथाऽर्थः स्यादित्यत आह–**अनन्यथेति**। **अनन्यथा**[१] यथावत् **इतमवगतमिति अद्वैतम्**। तथाहि– यथार्थतो[२] **वस्तुस्वरूपापेक्षया द्विधा ह्यन्यथाज्ञानम्** । एवं च द्वैतं नाम [३]द्विधेतत्वादन्यथाज्ञातम्। अद्वैतमनन्यथाज्ञातमित्यर्थः ।। ९ ।।

**(भा.चं.)** द्विधा अन्यथा इतं द्वीतमेव द्वैतम्। अद्विधा अनन्यथा इतमद्वीतमेवाद्वैतम् ।। ९ ।।

**(भा.) अतो विकल्पः शरीरादिसम्बन्धः केनचिदज्ञानादिना कारणेन कल्पितोऽप्युपदेशान्निवर्त्तते । अयं सतां वादः– ज्ञाते सति ब्रह्मणि द्वैतमन्यथाज्ञानं निवर्त्तत इति ।।**

**(टी.)** योऽयं जीवप्रतियोगिको देहसम्बन्धः स जीवस्य न स्वाभाविकः। तथाऽपि तथा प्रतीतिर्भगवदनुग्रहान्निवर्तत इति ह्युक्तम्। अथ देहप्रतियोगिको जीवसम्बन्धः स्वाभाविकत्वान्न निवर्तत इत्याशङ्कानिवर्तकं **'विकल्पः–'** इत्यादिकं श्लोकं विवृणोति– **अत** इत्यादिभाष्येण। योऽयं महदादिविकारपुरस्सरः कल्पितत्वाद् विकल्पनामकः शरीरेन्द्रियसम्बन्धो जीवस्यानादेः कल्पितः स तदुत्तमतत्वाज्ञानेन बलिष्ठकारणेन कर्मणा च **कल्पितः** सृष्ट एव भवतीश्वरेच्छया। नत्वध्यस्तः। अतोऽस्वाभाविकत्वात् तस्य[४] निवृत्तिर्युक्ता। तथाऽप्यस्य भ्रान्तिकल्पितत्वानङ्गीकारे सकृन्निवृत्तावप्यज्ञानतः पुनःपुनरुत्पत्तेः कृत्स्ननिवृत्तिर्न स्यादिति चेन्मैवम् । भ्रान्तिकल्पितत्वे सकृदप्यनिवृत्तेः । ज्ञानोदये[५] निवृत्तिः स्यादिति चेत्, तदप्याशामात्रम्। नहि तत्पक्षे ज्ञानोदयसम्भवः[६]। ज्ञातृज्ञेयाद्यसम्भवात्[७] । उपदेष्ट्राद्यभावाच्च। सत्यत्वपक्षे जीवस्य

---

१. '–न्यथा सम्यक् इतमवगतमिति ह्यद्वैतशब्दार्थः।' ख.

२. 'यथा वस्तुस्वरूपापेक्षया द्विधाऽन्यथा–' ख.

३. 'द्विधेतत्वादन्यथाज्ञातमसम्यग् ज्ञातमित्यर्थः' क.

४. 'तन्निवृत्ति–' ख.

५. '–दयेन निवृ–' क.

६. 'ज्ञानोदयः सम्भवेत्' ख.

७. '–द्यभावात्' क.

देहेन्द्रियसम्बन्धलक्षणं जननं [१]तत्वाज्ञाननिमित्तमपि गुरूपदेशात् तज्ज्ञानोदयेन तदज्ञाननाशपूर्वकं **निवर्तते**। संसारो विनश्यतीत्यर्थः। किञ्च [२]परमेश्वरे सम्यग् '**ज्ञाते**' **द्वैता**ख्य**मन्यथाज्ञानमपि** सर्वात्मना[३] **निवर्तत** इति '**अयं सतां**' वेदविदां '**वादः**' ॥

**(भा.चं.)** विकल्पो यदि केनचित् कल्पितः, विनिवर्तेतोपदेशात्। अयं हि **वादः**। ते किल वदन्ति ये विदन्ति। किमिति? तथ्ये **ज्ञाते** मिथ्याज्ञानं **न विद्यत** इति। अथच गुरूपदेशपरम्परयैव **अयं वाद**स्तत्ववादोऽवगन्तव्यः। **अज्ञाते** सति तत्ववादे जीवेशयोर्**द्वैतं** भेदो **न विद्यत** इति भ्रमो जायते। अथ च **ज्ञाते** सति **तत्ववादे** ज्ञायत एव जीवेशयोर**द्वैतं** ऐक्यं **न विद्यत** इति। अथ चाज्ञातगुरूपदेशानामेव भ्रमो जायते **अद्वैतं न विद्यत** इति विपरीतज्ञानहीनं निर्भेदं ब्रह्म न विद्यत इति। ब्रह्मणः स्वगतगुणक्रियादिभिरभेदो न विद्यत इति च। एवं चतुर्विधोऽपि पदपाठस्तत्ववादिनामनुकूलः– ज्ञाते द्वैतमिति, ज्ञाते अद्वैतमिति, अज्ञाते द्वैतमिति, अज्ञाते अद्वैतमिति ॥

**(भा.)** '**विकल्पो देहबन्धादिः केनचित् कारणेन तु।**
'**कल्पितोऽपि निवर्त्तेत गुरुवाक्यादसंशयम्॥**

'**एष एव सतां वादो ज्ञाते ब्रह्मणि तत्वतः।**
'**निवर्त्ततेऽन्यथाज्ञानं तत आनन्दमेत्यसौ' इति च ॥ * ॥**

**(टी.)** तदेतदाह– **विकल्पो देहबन्धादि**रिति ब्रह्मतर्कवचनेन। देहबन्धो देहाभिमानः। आदिशब्दात् दुःखाद्यनुभवः। सोऽयं बन्धादिः सत्यश्च स्यात्। **कल्पितः केनचि**दिति कार्यकारणभावेन सृष्टेरेव श्रवणात्। अतो नायं मिथ्या[४]। मिथ्यात्वे ह्यस्य कस्मिंश्चित् कल्पित इत्यधिष्ठानेऽन्यत्राध्यस्ततया

---

१. '**ईशाज्ञानादिनिमि–**' क. २. '**परब्रह्मणि**' ख. ३. '**निवर्तते सर्वात्मना**' ख.

४. '**न मिथ्या**' क. इतः परं च क. पाठेऽन्यैव वाक्यानुपूर्वी– '**नह्यत्र कस्मिंश्चित् कल्पितमित्यधिष्ठानतया भ्रान्तिकल्पितत्वं व्यपदिश्यते**' इति।

भ्रान्तिकल्पितत्वं व्यपदिश्येत। क्लृप्तिशब्दश्च सृष्टावेव प्रसिद्धः[१]– 'सञ्ज्ञामूर्तिक्लृप्तिः–' इत्यादौ। अतः सृष्ट्यादिकारणे **ब्रह्मणि** सम्यग् **ज्ञाते** जीवब्रह्मैक्यादिविषय**मन्यथाज्ञानं** निवर्तते। यदनन्तरमेव जीवः परिपूर्णानन्दं भगवन्तं सम्प्राप्य[२] तत्प्रतिबिम्बभूतं स्वानन्दं भुङ्क्ते ॥ १० ॥

—०—

**(भा.चं.) 'आनन्दमेति'** इति वचनं द्वेधा व्याचष्टे– **पूर्णानन्दं भगवन्तं** प्राप्नोतीति, **सम्प्राप्य स्वानन्दं भुङ्क्त** इति च ॥

विष्णुतत्वनिर्णये चैतत् किञ्चिदिवार्थभेदेन विवृतम्। तथाहि– 'प्रपञ्चो यदि विद्येत, भवेत, उत्पद्येत, तर्हि निवर्तेत। नच निवर्तते तस्मादनादिरेवायम्। प्रकृष्टः पञ्चविधो भेदः प्रपञ्चः। नचाविद्यामानोऽयम्; मायामात्रत्वात्। मायेति भगवत्प्रज्ञा, सैव मानं त्राणकर्त्री च यस्य तन्मायामात्रम्। परमेश्वरेण ज्ञातत्वाद् रक्षितत्वाच्च न द्वैतं भ्रान्तिकल्पितमित्यर्थः। नहीश्वरस्य भ्रान्तिः। तर्हि 'अद्वैतः सर्वभावानाम्' इति तस्य व्यपदेशः कथमित्यत आह–'अद्वैतं परमार्थतः' इति। परमार्थापेक्षयाऽद्वैतत्वम्। सर्वस्मादुत्तमोऽर्थः स एक एवेत्यर्थः। अन्यथा 'अद्वैतः सर्वभावानाम्' इति व्यर्थं स्यात्। सर्वभावानां मध्ये तस्यैकस्याद्वैतत्वमित्युक्ते समाधिकराहित्यमेवोक्तं स्यात्। अन्येषां सर्वभावानां च समाधिकभावः। 'विकल्पो विनिवर्तेत कल्पतो यदि केनचित्' इति वाक्यशेषाच्च न कल्पितत्वमस्येति विज्ञायते। निवर्तत इत्यर्थाङ्गीकारे 'निवर्तेत', 'विद्येत' इति च प्रसङ्गरूपेण कथनं यदिशब्दौ च न युज्यन्ते। 'विद्येत' इत्यस्य चोत्पत्त्यर्थानङ्गीकारे यद्यदस्ति तत्तन्निवर्तत इति व्याप्त्यभावात् निवर्तेतेति न युज्यते। अतः प्रपञ्चस्यानादिसत्यत्वपरमिदं वाक्यम्। अतः 'उपदेशादयं वादोऽज्ञाते द्वैतं न विद्यते' इत्याह। अज्ञात एव द्वैतं न विद्यते; अज्ञानिनां पक्ष एव द्वैतं न विद्यत इत्यर्थः' इति ॥

---

१ 'क्लृप्तिशब्दः सृष्टावपि सिद्धः' क.

२. 'भगवन्तमेति तत्प्रतिबिम्वभूतः' क.

'विद्येत भवेत उत्पद्येत' इति। यथा सत्तावचनो भूधातुरुत्पत्तिवचनोऽपि भवति एवं विदधातुरपि प्राचुर्येण सत्तां वदन् क्वचित्क्वचिदुत्पत्तिवचनोऽपि भवेदेवेति द्योतयितुमिदमुदितम् । ''विद उत्पत्तौ । भवतेः उत्पत्तावात्मनेपदम्' इत्यादिनोत्पत्तिवाचित्वमगम्यते' इति तत्वमञ्जरी। तत्रैव स्वोक्तार्थे परमश्रुतिं चोदाजहार भगवत्पादः– 'जीवेश्वरभिदा चैव जडेश्वरभिदा तथा। जीवभेदो मिथश्चैव जडजीवभिदा तथा। मिथश्च जडभेदो यः प्रपञ्चो भेदपञ्चकः। सोऽयं सत्यो ह्यनादिश्च सादित्वे नाशमाप्नुयात् । नच नाशं प्रयात्येष नचासौ भ्रान्तिकल्पितः। कल्पितश्चेन्निवर्तेत नचासौ विनिवर्तते। द्वैतं न विद्यत इति तस्मादज्ञानिनां मतम्। मतं हि ज्ञानिनामेतन्मितं त्रातं च विष्णुना। तस्मात् सत्यमिति प्रोक्तं परमो हरिरेवतु' इति ॥ ❋ ॥

अनुव्याख्याने चैवमेव व्याख्यातमेतामेव परमश्रुतिमुदाहृत्य भागशः– 'प्रपञ्चो यदि विद्येत निवर्तेत न संशयः। मायामात्रमिदं द्वैतमद्वैतं परमार्थतः। विकल्पो विनिवर्तेत कल्पितो यदि केनचित्। उपदेशादयं वादोऽज्ञाते द्वैतं न विद्यते। इत्यत्र यदिशब्दौ च निवर्तेतेति च द्वयम्। विश्वस्य सत्यतामाहुर्विद्येतोत्पत्तिमेव च । विदोत्पत्ताविति ह्यस्माद् धातोरुत्पत्तिरेव हि । निवृत्तिव्याप्तियुक् प्रायः प्रपञ्चो भेदपञ्चकः। जीवेश्वरभिदा चैव जडेश्वरभिदा तथा । जीवभेदो मिथश्चैव जडजीवभिदा तथा । मिथश्च जडभेदो यः प्रपञ्चो भेदपञ्चकः । सोऽयं सत्यो ह्यनादिश्च सादिश्चेन्नाशमाप्नुयात्। द्वैतं न विद्यत इति तस्मादज्ञानिनां मतम्। इति श्रुतेर्मितं त्रातं मायाख्यहरिविद्यया। उत्तमोऽर्थो हरिस्त्वेकस्तदन्यन्मध्यमाधमम्' इति। एतेन ज्ञाते ज्ञानिनां पक्षे पुनः जीवेश्वरयोरद्वैतं न विद्यत इति चार्थान्तरं सूचितम्॥ ❋ ॥

**'सञ्ज्ञामूर्तिक्लृप्तिस्तु** त्रिवृत्कुर्वत उपदेशात्' [२.४.२१] इति ब्रह्मसूत्रम्। सञ्ज्ञामूर्तिक्लृप्तिरिति नामरूपसृष्टिरिति ह्यर्थः। 'त्रिवृत्क्रिया यतो विष्णो रूपं च तदपेक्षया। रूपापेक्षं तथा नाम व्यवहारस्तदात्मकः। अतो नाम्नश्च रूपस्य

व्यवहारस्य चैकराट् । हरिरेव यतः कर्ता पिताऽतो भगवान् प्रभुः' इति च ब्रह्माण्डवचनम् । 'कृपू सामर्थ्ये' । रूपदानमेव च समर्थनं नाम ॥ * ॥

अत्र खण्डे ब्रह्मदृष्टौ चरमौ द्वौ मन्त्रौ ब्रह्मतर्कवचनेनात्र विवृतौ । अर्थान्तरं चानयोर्ब्रह्मतर्क एवाऽह श्रुतिवचनानां स्वतस्त्र्यर्थतां द्योतयन् । तानि च ब्रह्मतर्कवचनानि भाष्यकारेणैवोद्धृतानि च्छन्दोगभाष्ये– 'जीवेश्वरगतो जीवेष्वथ जीवजडात्मनोः । जडेशयोर्जडेष्वेवं पञ्चभेदः प्रपञ्चकः । प्रकृष्टमोक्षहेतुत्वात् तज्ज्ञाने प्रेति कथ्यते । प्रकृष्टपञ्चकत्वाद् वा प्रपञ्चोऽयं प्रकीर्तितः । यद्ययं सादिरेव स्यान्निवर्तेत कदाचन । न निवर्तते यतस्तेन नायं सादिर्भवेत् क्वचित् । मायेति विष्णुविज्ञानं तन्मितत्वाच्च न क्वचित् । भ्रान्तत्वमस्य यद् विष्णोर्नैव भ्रान्तिः कदाचन । रमते चात्र यद् विष्णुर्नहि भ्रान्तौ रमेद्धरिः । परमार्थे हरौ नैव भेदोऽस्ति जडजीववत् । यद्ययं कल्पितो भेदः कस्मान्नैव निवर्तते । तस्माद् भूतभविष्याख्यभवदाख्यपराभिधाः । तदन्ये चैक एवास्मिन्नोङ्काराख्ये जनार्दने । अज्ञातनामके तस्मिन्न भेदोऽस्ति कथञ्चन' [छं.२.४] इति ॥

तथाचायं मन्त्रद्वयार्थः– मोक्षजनकज्ञानगोचरतया प्रकृष्टः पञ्चविधो भेदः प्रपञ्चः । स यदि विद्येत उत्पद्येत, कादाचित्कतया जायेतेत्येतत् । 'विदि कादाचित्कस्वरूपलाभे' इति प्राचीनो धातुपाठः । तर्हि कदाचिन्निवर्तेतापि । नात्र संशयः । जनिमतो भावस्य नाशनैयत्यात् । कदाचिदपि न निवर्तते चायम् । ननु कथं जानीषे? जानीया न निवृत्तोऽभूदिति । जानीयाः सम्प्रति न निवृत्तो वर्तत इति । कथमथ जानीया न निवृत्तो भविष्यतीति । ये भूतमिव भविष्यन्तमपि पश्यन्ति तेषां वचनप्रामाण्यादिति गृहाण । तथाहि भगवद्वचनम्– 'नत्वे वाहं जातु नासं न त्वं नेमे जनाधिपाः । नचैव न भविष्यामः सर्वे वयमतः परम्' [भ.गी.२.१२] इति । ननु स्वयमनादिनिधना त्रिकालदर्शिना ब्रह्मणा दृष्टा श्रुतिरेव करुणया सावधारणमाह– न कदाऽपि निवर्तते । नात्र कोऽपि संशय इति । किमथापि संशेषे? तस्मात् तव संशय

इवानिवर्त्योऽयमनादिनित्यो भेदः । तदिदं द्वैतम्, सोऽयं पञ्चात्मा भेदः, भेदपञ्चकमित्येतत्, मायया भगवज्ज्ञानेन मातं विषयीकृतम्, रतं चेति मायामात्रम् । नह्यविद्यमानं भगवानस्तीति मन्यते । अभ्रान्तत्वात् तस्य । नाप्यसत्यज्ञानेन भगवान् रमते । तस्मात् सत्यमिदं द्वैतम् । तर्ह्यद्वैतस्य का गतिः? अद्वैतं परमार्थतः । सप्तम्यर्थे तसिः । षष्ठ्यर्थे वा । भगवद्विषय एवायमभेदवादः । परमार्थस्य परमात्मन एव स्वगुणक्रियादिभिरद्वैतमभेद इत्यर्थः । परमार्थत इति ल्यब्लोपनिमित्ता वा पञ्चमी । यत् क्वचिदद्वैतमुच्यते तत् परमार्थतः । परमात्मानं विवक्षित्वैव । तद्गुणक्रियाद्यपेक्षयेत्येतत् । नच जगद्गतोऽपि भेदः केनचित् ऐन्द्रजालिककल्पेनेश्वरादिना कल्पित इति न वास्तव इति मन्तव्यम् । यदि कल्पितः तर्हि निवर्तेत । तथा केनचित् कल्पितो निर्मित इति वा न मन्तव्यम् । यतस्तदा निवर्तेत । जातं हि ध्रुवं म्रियते । तस्माद् गुरूपदेशादयमेव यथार्थो वादः– स्वप्रसादं विना अज्ञाते, अकार-वाच्यत्वेन वा ज्ञाते भगवति केवलं स्वगतं द्वैतं भेदो न विद्यत इति । त एते ब्रह्मतर्कसूचिता अर्थाः । एवं द्वैतपदस्यार्थद्वयमपि पूर्वप्रस्तुतत्वात् प्रकरणा-नुगुणमित्यवगमयितुमेव श्रुतिपदं द्वेधा व्याख्यातं टीकायाम्–'**भक्तानामन्यथाज्ञाननाशनात् स्वस्मिन् भेदानापादनाच्चाद्वैतः**' इति । भाष्योदाहृतप्रमाणवचने चेदमर्थान्तरं समुदचीयत– '**अद्वैतस्तेन चोद्दिष्टः**' इति चकारेणेति सर्वं रमणीयम् ।। ❊ ।।

अथ प्रथममन्त्रे पूर्वार्द्धे न विशेषः । उत्तरार्द्धे किञ्चिदिवार्थन्तरम्– इदं द्वैतं भेदपञ्चकं विष्णोः मायया प्रज्ञया मीयते विषयीक्रियत इति मायामात्रम् । परमार्थत इति प्रथमार्थे । परमार्थो भगवानेव न विद्यते द्वैतं यत्र तदद्वैतं स्वगतभेदवर्जितं तत्वमिति । अथच द्वैतमिति द्वितीयम् । परमार्थो भगवानेव सर्वगुणपूर्णमद्वितीयं तत्वमित्यर्थः । एवमुत्तरमन्त्रेऽप्युत्तरार्द्धेऽयमर्थभेदः– उपदेशादयं वादः । कः? ज्ञाते ज्ञानिनां पक्षे अद्वैतं जीवजडगतं न विद्यत इति । तथाहि गीतातात्पर्ये श्रुतिवचनम्– 'जीवेश्वरभिदा चैव जडेश्वरभिदा

तथा । जीवभेदो मिथश्चैव जडजीवभिदा तथा । जडभेदो मिथश्चेति प्रपञ्चो भेदपञ्चकः । विष्णोः प्रज्ञामितं यस्माद् द्वैतं न भ्रान्तिकल्पितम् । अद्वैतः परमार्थोऽसौ भगवान् विष्णुरव्ययः । परमत्वं स्वतन्त्रत्वं सर्वशक्तित्वमेव च । सर्वज्ञत्वं परानन्दः सर्वस्य तदधीनता । इत्यादयो गुणा विष्णोर्नैवान्यस्य कथञ्चन । अभावः परमद्वैते सन्त्येव ह्यपराणि तु । विकल्पो विनिवर्तेत कल्पितो यदि केनचित् । अद्वैतं ज्ञानिनां पक्षे न तस्माद् विद्यते क्वचित्' इति ॥ १० ॥

—०—

[अथ तृतीयः खण्डः]

**सोऽयमात्माऽध्यक्षरमोङ्कारोऽधिमात्रं पादा मात्रा[1] अकार उकारो मकार इति। जागरितस्थानो वैश्वानरोऽकारः प्रथमा मात्रा ॥ १ ॥**

**(भा.)** अधिकं सर्वत अविनाशि चेत्यध्यक्षरम्। अधिका एव मात्रा अंशा यस्य तदधिमात्रम्। अ इत्यनेनाभिधानेनाऽक्रियत इत्यकारः। तत्र पूर्वोक्तो वैश्वानरः प्रथमा मात्रेत्याद्यनुवादः। अकार इत्यादिकं विधेयम् ॥ * ॥

**(टी.)** अथापि पूर्वप्रतिपादित एवोङ्कारो मात्राविशेषविवक्षया '**सोऽयमात्मा**' इति पुनरारभ्यते। अधिकमित्यादिना '**अध्यक्षरमि**'त्यादिविशेषणानि व्याख्याति। [2]सर्वेभ्यश्च सर्वगुणैरपि **अधिकम्**, अविनाशित्वादक्षरं चेत्यध्यक्षरं भवति **स** परमात्मा। **स ओङ्कार** एवा**धिमात्रम्**। **अधिकाः** पूर्णा एवाऽस्य **मात्राः** पादापरपर्याया **अंशाश्चेति**[3]। अकारादयो **मात्राः**। '**अ इत्यनेनाभिधानेनाऽक्रियत इत्यकार**' इति वचनात्। उकारमकारावपि तन्न्यायेन व्याख्यातौ। के पुनरकारादयो मात्रा इत्याकाङ्क्षायामाह– **तत्रे**ति। **तत्र** '**जागरितस्थानः–**' इत्यादिवाक्येषु। अयमन्वयभेदः। योऽसौ **पूर्वोक्तो** '**जागरितस्थानो वैश्वानरः**' प्रथमपादाख्यः स इहानूद्यते। '**अकारः**' इति विधीयते च। [4]आदिशब्दाभ्यामुत्तरवाक्ययोरप्यनूद्य विधिवचनमनेनैव[5]

१. 'पादा मात्रा मात्राश्च पादाः' इति शं.रङ्गरा.पा.।

२. 'अधिकं सर्वेभ्यश्च सर्वगुणैः, अविना–' क.

३. 'मात्रा अंशाश्चेति' क.

४. 'अत्र त्वादिशब्दा–' ख.

५. '–रप्यनुवाद्यविधेयभावोऽनेनैव' ख.

न्यायेनेत्याह । तद्यथा– यस्तु स्वप्नस्थानस्तैजसो द्वितीयांशस्तत्रोक्तः, स उकार इत्यत्रोच्यते । सुषुप्तस्थानः प्राज्ञस्तृतीयांशस्तु मकार इति । पूर्वोक्तिसिद्धमनूद्य[१] अन्यद् विधेयमित्यर्थः ।। १ ।।

**(भा.चं.) 'सर्वत'** इति **सर्वेभ्यः**। **'सर्वत'** इति **सर्वगुणैः**। **उकारमकारावपि व्याख्यातौ**। उ इति क्रियत आक्रियत इत्युकारः। म इति क्रियत इति मकार इति। **सोऽयमात्मा 'अध्यक्षरं'** इति पदवाच्यो भवति। **'अधिमात्रं'** इति च। **सोऽयमात्मा अध्यक्षरं** इत्युच्यते। यतः **ओङ्कारः**। ओङ्कारेणाधिकाक्षरेण चायं वाच्यः। सोऽयमेव भगवान् **अधिमात्रं** इत्यप्युच्यते। यतः अकार उकारो मकार इति तिसृभिर्मात्राभिर्भगवत एव तिस्रो मात्रा उच्यन्ते। कास्ता भगवतो मात्राः? आह– **पादा मात्राः**। पादाख्या भगवद्रूपविशेषा एव **मात्रा** इत्युच्यन्ते। ज्ञानिभिर्मीयन्ते त्रायन्ते च सर्वानिति– इति च मन्त्रवर्णान्वयो ज्ञातव्यः। नन्वध्यक्षरोऽधिमात्र इति वक्तव्यम्। आत्मविशेषणत्वात्। सत्यम्। अस्ति चात्र विवक्षाविशेषः। अक्षरं इति वर्ण उच्यते। तद् यथा अकार एकमक्षरमित्यादि। तद्धि नित्यं नपुंसकम्। तन्मुख्यतो भगवतो नामेति वक्तव्यम्। तथैव प्रक्रान्तम् 'ओमित्येतदक्षरम्' इति। तद् यथा 'विश्वं विष्णुः' इति। जगद्वाचि विश्वपदं मुख्यतो विष्णोरेव नामेति किल पदबोधः। विश्वो विष्णुरित्युक्ते न तथा बोधः सम्भवी। एवमत्र वर्णवाचि यदक्षरपदं तन्मुख्यतः परमात्मवाचीति विवक्षितम्। सोऽयमात्माऽध्यक्षर इत्युक्ते न तथा बोधः सम्भवी। तदानुगुण्याय चाधिमात्रमिति। यदेवाक्षरं तदेवाधिमात्रमिति। **'अधिकं सर्वत अविनाशि च'** इत्येव प्राचीनो भाष्यपाठः। नतु 'सर्वतोऽविनाशि' इति। तद्यथा– 'भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन' [भ.गी.११.५४] इति। सर्वतो वैलक्षण्यज्ञापनाय च विश्लिष्य प्रयोगः। चतुर्विधनाशाभावाद**विनाशि च**। 'अविनाशि

---

१. **'पूर्वोक्तमनूद्य विधेयमित्यर्थः'** क.

तु तद् विद्धि येन सर्वमिदं ततम्' [२.२७] इति हि गीतायाम्। 'अनित्यत्वं देहहानिर्दुःखप्राप्तिरपूर्णता। नाशश्चतुर्विधः प्रोक्तस्तदभावो हरेः सदा। तदन्येषां तु सर्वेषां नाशाः केचिद् भवन्ति हि' इति च तात्पर्ये महावराह-वचनम् ॥ १ ॥

**आप्तेरादिमत्त्वाद् वा। आप्नोति ह वै सर्वान् कामानादिश्च भवति य एवं वेद ॥ २ ॥**

**(भा.) प्राज्ञस्तैजसश्चादिरस्येत्यादिमान्। सुप्तेरुत्थाने प्राज्ञाद् विभक्तो भवति विश्वः। स्वप्नादुत्थाने तैजसात्। आदिश्चास्योपासकस्य भवति ॥ * ॥**

**(टी.)** [1]तेषामकारत्वादिविधौ प्रत्येकं युक्तिद्वयं तत्तदुपास्तिफलं चात्रोच्यते। **आप्तेरादिमत्त्वाच्च अकारो** विश्वः। स ह्याप्तिः। व्याप्नोति जीवं जागरित-विषयांश्चापयतीत्याप्तिः[2]। आदिमत्त्वं व्युत्पादयति– **प्राज्ञ** इत्यादिना। तदेव पुनर्विशिनष्टि– **सुप्तेरिति** ॥

**य एवम्भूतं** विश्वं[3] **वेद** स हि तदुपासकः **सर्वान् कामानाप्नोति** इह लोके, परलोके च स्वयं भगवान् **आदिश्चास्योपासकस्य** जीवस्य **भवति** स्वरूपा-भिव्यक्तिकारणत्वात् ॥ २ ॥

**(भा.चं.)** अभिव्याप्नोति जीवमित्याप्तिः। एवं बिम्बरूपादिसाधारणमर्थमुक्त्वा सम्प्रति अकारवाच्यस्य रूपविशेषस्य लीलाविशेषमाह– **आपयति जागरितविषयानित्याप्तिः** ॥

---

१. 'तेपामत्वादिविधौ प्रत्येकं युक्तिः, इत्थं तत्तदुपास्ति–' ख.

२. '–विपयानापयतीति ह्याप्तिः' क.

३. 'य एवं विश्वम्' क.

तं यथोपासते तथा भवतीत्याह– **आप्नोति ह वै सर्वान् कामान्**। एवं किञ्चित् सादृश्ययुक्तो भवति। तथाऽपि नाकारवाच्यत्वम्। सादृश्यस्य किञ्चिन्मात्रत्वात्। गोसदृशोऽपि गवयो न गौरुच्यते। अत्र पुनरसदृशोऽप्यसदृश एव साधकः। अकारेण सदृशोऽपि न सदृश इति। किञ्चिदिव सादृश्यम्। महच्च वैलक्षण्यमिति। तेन न भगवतोऽन्यत्र विद्वद्रूढिः ॥ २ ॥

**स्वप्नस्थानस्तैजस उकारो द्वितीया मात्रा। उत्कर्षादुभयत्वाद् वा। उत्कर्षति ह वै ज्ञानसन्ततिं समानश्च भवति नास्याब्रह्मवित् कुले भवति य एवं वेद ॥ ३ ॥**

**(भा.) शरीराभिमानादुत्थाप्य कर्षतीत्युत्कर्षः। निद्रा विषयानुभवश्चानेन क्रियत इत्युभयत्वम् ॥ * ॥**

**(टी.) तैजसस्तु उत्कर्षादुभयत्वाच्च उकार** उक्तः। स्वयं सर्वोत्कृष्टत्वात्, जीवं **शरीराभिमानादुत्थाप्य** स्वप्नविषये कर्षणाच्चोत्कर्षः। तत्र पुनर्जागरितविषये **निद्रा** च स्वाप्न**विषयानुभवश्चानेन**[1] कारणेन जीवैः **क्रियत इत्युभयत्वं** तस्य। **यस्तैजसमेवंभूतं वेद** स उपासकः स्वस्य भगवद्विषयां **ज्ञानसन्ततिमुत्कर्षति**[2]। अनन्तकालमनुवर्तयतीत्यर्थः। अपि च स जीवः स्वात्मानं देहादुच्चैराकृष्य **समानः** सर्वमोक्षिणां मध्यस्थो **भवति**। दोषाद्यभावमात्रेण भगवत्समश्च भवतीत्यर्थः। [3]ज्ञानस्वरूपत्वाज्जीवो ज्ञानसन्ततिरित्युच्यते। स हि स्वरूपमानन्दादिभिर्गुणै**रुत्कर्षति**[4] परिबृंहयति, यावत् स्वयोग्यतायाः **समानो भवति** तावत्पर्यन्तम् ॥ ३ ॥

**(भा.चं.)** कथमुकारः। **'उत्कर्षात्' स्वयं सर्वोत्कृष्टत्वात्**। नन्वकारोऽपि सर्वोत्कृष्टः। मकारोऽपि। सत्यम्। सर्वरूपेष्वपि भगवान् सर्वनामा सर्व-

---

१. '–श्चानेन जीवे क्रियत–' क.
२. '–मुत्कर्षयति' ख.
३. 'नित्यज्ञान–' क.
४. '–रुत्कर्षति परिवर्हयति। यावता योग्यतायाः' क.

गुणः । तेन युक्तमेतत् । उकारेण रूपेण क्रियमाणलीलाविशेषपरतयाऽपि शक्यमर्थो निर्वक्तुमित्याह– **स्वप्नविषये कर्षणाच्चोत्कर्षः**। **'समानः' मोक्षिणां मध्यस्थः**, दोषाभावादिना भगवत्समानश्चेत्युभयत्वम् । स्वरूपस्य परिबृंहणं योग्यतायाः परिपूर्तिरिति चोभयत्वम् ॥ ३ ॥

**सुषुप्तस्थानः प्राज्ञो मकारस्तृतीया मात्रा । मितेरपीतेर्वा । मिनोति हवा इदं सर्वमपीतिश्च भवति य एवं वेद ॥ ४ ॥**

**(भा.)** मितेरन्तर्गमनात् ॥ * ॥

**(टी.)** अथ **'प्राज्ञो मितेरपीतेर्वा मकार'** उच्यते । तत् कथम्? स हि जीवं निद्रावस्थायां स्वात्मनि **'मिनोति'** अन्तर्गमयति[1], अपीतिः बाह्यार्थज्ञान-लयकृच्चास्य भवति । यश्चैवमेनं **वेद** सोऽपी**दं सर्वं** स्वस्मादवरं स्वस्मिन् **मिनोति** व्याप्तिमात्रेणान्तर्गमयति । दुःखादेरप्ययकारित्वादपीतिश्च भवति ॥ * ॥

**(भा.चं.)** 'अपीतिः' बाह्यार्थज्ञानलयकृच्च । अपीतिर्हि मानमुच्यते । 'मानं ज्ञानं लयश्चैव' इति ह्यभिदधति । ज्ञानद्वारा **व्याप्तिमात्रेण** ॥ * ॥

**(भा.)** 'अधिकत्वाच्च नित्यत्वादध्यक्षरमुदाहृतम् ।
'येंऽशास्तस्य तु सर्वेऽपि पूर्ण्णाः प्रत्येकशो विभोः ॥

'अतोऽधिमात्रमुद्दिष्टो मात्रा अंशा उदाहृताः ।
'श्रुतः स विष्णुरोङ्कार ओमित्याक्रियते यतः ॥

'आद्यस्तदंशो ह्याप्तिः स्याद् विषयानापयेद् यतः ।
'जीवस्य तु यतः प्राज्ञात् तैजसाद् वा समुत्थितिः ॥

'अविभागोऽपि भगवानादिमांस्तेन कीर्त्तितः ।
'तस्मादुत्पद्यते मुक्तस्तज्ज्ञान्यानन्दलक्षणः ॥

---

१. 'मिनोत्यनुमिनोत्यन्तर्गमयति' क.

'आप्नोति विषयान् सर्वान् निद्राया विषयस्य च ।
'उभयोः कारणत्वेन ह्युभयस्तैजसः स्मृतः ॥

'देहाभिमानादुद्धृत्य कर्षति स्वप्नमण्डले ।
'उत्कर्षत्वं ततस्तस्य तज्ज्ञानी ज्ञाननित्यताम् ॥

'आप्नोति देहादुत्कृष्य स्वात्मानं सर्वमोक्षिणाम् ।
'मद्धयस्थश्च भवेत् स्नेहाद् दोषाभावाच्च सर्वशः ॥

'स्वात्मन्यन्तर्ग्गमयति मानमन्तर्ग्गतिः स्मृता ।
'जीवमन्तर्ग्गतं कृत्वा तज्ज्ञानलयकृद् यतः ॥

'प्राज्ञो मानमपीतिश्च तज्ज्ञोऽप्येवं विमुक्तिगः[१] ।
'व्याप्यान्तर्ग्गमयेत् सर्वं दुःखाद्यं च विलापयेत् ॥

'अणूनामपि जीवानां प्रकाशो व्यापको भवेत् ।
'अण्डमात्रे वहिश्चापि देवतानां यथाक्रमम् ।
'अतोऽन्तर्ग्गमनं मुक्तौ जीवेषु जगतो भवेत्'

इति ब्रह्मतर्के ॥ * ॥

**(टी.) अध्यक्षरमित्यादेः** [२]स्वाभिहितमर्थम्–**'अधिकत्वाच्च–'** इत्यादि-ब्रह्मतर्कवाक्येन दृढयति । **जीवस्य तु** जागरितविषयानापयती[३]त्याप्तिर्विश्वः । **अविभगोऽपि** अभिन्नोऽपीत्यर्थः । **निद्रायाश्च** स्वप्नस्थ**विषयस्य च** इति **उभयोः कारणत्वेन** । **मानमन्तर्गतिः** । माङ् अन्तर्गताविति धातोः ॥ ४ ॥

**(भा.चं.)** ज्ञानेन **सर्वं** विश्वं **व्याप्य** स्वस्य **अन्तर्गमयेत्** । **माङ् अन्तर्गताविति** । सम्प्रति तु नायं धातुपाठः पठ्यते । 'माङ् माने' इत्येव पठन्ति ॥ ४ ॥

---

१. प्राचीनादर्शे–**'विमुक्तिगम्'** इति पठ्यते । अर्थस्तु न स्फुटः ।

२. **'स्वाभिहितार्थम्–'** ख.

३. **'–विषयान् प्रापयती–'** ख.

अत्रैते श्लोका भवन्ति–

विश्वस्यात्वविवक्षायामादिसामान्यमुत्कटम्।
मात्रासम्प्रतिपत्तौ स्यादाप्तिसामान्यमेव च ॥५॥१॥

तैजसस्योत्वविज्ञान उत्कर्षो विद्यते ध्रुवम्।
मात्रासम्प्रतिपत्तौ स्यादुभयत्वं तथाविधम् ॥६॥२॥

मकारभावे प्राज्ञस्य मानसामान्यमुत्कटम्।
मात्रासम्प्रतिपत्तौ तु लयसामान्यमेव च ॥७॥३॥

त्रिषु धामसु यत् तुल्यं सामान्यं वेत्ति निश्चितः।
स पूज्यः सर्वभूतानां वन्द्यश्चैव महामुनिः ॥८॥४॥

अकारो नयते विश्वमुकारश्चापि तैजसम्।
मकारश्च पुनः प्राज्ञं नामात्रे विद्यतेऽगतिः ॥९॥५॥

इति तृतीयः खण्डः

—o—

**(भा.)** मात्रासम्प्रतिपत्तौ अंशध्याने। आदिमत्त्वं विश्वस्य विद्यते। तदुपासकस्यापि भवतीत्यादिसामान्यम् ॥ * ॥

**(टी.)** अत्रापि वरुणः 'विश्वस्य–' इत्यादिमन्त्रश्लोकानाह। अत्वविवक्षायां अकारत्वविवक्षायाम्। विश्वाख्यस्य विष्ण्वंशस्य तद्विवक्षायां अकारप्रतिपाद्यमादिमत्त्वं विद्यते[1]। अतस्तथा तद्ध्यानेन[2] तस्योपासकस्यापि तादृक् स्वयोग्यमादिमत्त्वं स्यादित्येतदेवाऽदिसामान्यम्। आप्तिसामान्यमपि तन्न्यायेनैव स्यात्। स्वयोग्यकामावाप्तेः ॥५॥

१. '–मत्त्वं यद् विद्यते' ख. २. 'ततस्तद्ध्याने कृते' क.

**तैजसस्य** तु उकारार्थभूतमुत्कर्षमुभयत्वं च ध्यातुः तत्प्रसादात् तादृक् फलं भवति ॥ ६ ॥

**प्राज्ञस्य** मकारत्वध्याने मानलयसामान्यमप्येवं स्यात् । **उत्कटमित्यादि**-विशेषणात् अधिकारिणः प्रयत्नानुसारेण प्रवृद्धं च तत् फलं स्यात् ॥ ७ ॥

**(भा.चं.) उत्कटमित्यादीति** । आदिना **ध्रुवमिति**। अधिकारिणां योग्यता-भेदेन, उत्तमानामुत्तमानामुत्कटमुत्कटं साम्यं भवति ॥ ५–७ ॥

**(टी.)** अत्र तदुपासकस्य तत्सामान्यं[1] विशिष्टफलं स्यादिति ह्युक्तम्[2] । अथ तस्य तत् स्यादिति वेत्तुरपि अन्यन्महाफलमस्तीत्युच्यते– **त्रिष्वित्यादिना**। **त्रिषु धामसु** जाग्रत्स्वप्नसुप्तिस्थानेषु[3] । विश्वादिषु **यत्** तु श्रुतं सामा-न्याख्यं फलम्, तन्निश्चयेन **यो वेत्ति सोऽपि सर्वभूतानां पूज्यो वन्द्यश्च** स्यात्[4] ॥ ८ ॥

**(भा.चं.)** फलवेत्ताऽपि महामुनिरुच्यते । किमुत भगवद्वेत्ता ॥ ८ ॥

**(भा.) अमात्रेऽप्यगतिर्न्न विद्यते। प्रतिदिवसं विभाग एकीभावश्च विद्यते विश्वादीनाम्। तुरीयस्य तन्न विद्यत इत्यमात्रः। विश्वादीनां व्यवहारकारणत्वं विद्यते तुरीयस्य तन्न विद्यते इत्यतो गम्यत्वमपि नास्तीत्याशङ्कां निवर्त्तयति– अगतिर्न्न विद्यत इति । 'आत्मानं संविशति' इति गतिवचनात् ॥**

**(टी.)** अ इत्यादीन्यभिधानान्यकारादय उच्यन्ते । ते तावद् भगवद्विष-यत्वाधिक्येन विशिष्टमन्त्रत्वात् जपादिना साधिता विश्वादीन् प्रापयन्ति । अकारादिमात्राणां तद्विषयत्वात् । तर्हि अमात्रे तुरीये गतिर्न विद्यते । प्रापकाभावात् । अस्तु तर्हि तस्यैतस्यागम्यत्वम् । मनोवागाद्यगोचरत्वात् । अतस्तद्भाव एव मोक्षो भवत्वित्यत आह– **अमात्रेऽप्यगतिर्न विद्यते**। तस्मिन्नपि

१. 'तत्साधर्म्यं' ख.
२. 'स्यादित्युक्तम्' क.
३. 'जागरितस्वप्नसुपुप्तस्थानेपु' ख.
४. 'वन्द्यश्च भवति' क.

गतियोग्यस्य गतिरस्त्येव। कुतः 'आत्मैव **संविशत्यात्मनाऽऽत्मानम्'** इति **गतिवचनात्**[१]। नच तस्यागोचरत्वम्। 'यस्तमेवं वेद' इति मनोगोचर-त्वोक्तेः। आत्मानमित्यात्मशब्दगोचरत्वोक्तेश्चोत्तरवाक्ये। नच जीवस्य ब्रह्मभावः सुग्रहः। **'आत्मानं संविशति'** इत्यादि कर्मकर्तृव्यपदेशात्। नहि कर्मकर्त्रोरैकत्वं तत्पक्षे युक्तम्। गतिनिषेधस्तु [२]संसारिणामेव। 'मुक्तानां प्राप्यरूपोऽसौ' इति ह्युक्तम्॥ ॐ॥

**(भा.चं.) अकारो नयते विश्वम्**। नात्राकार इति वाच्यो भगवानुच्यते। किन्तु वाचको वर्ण इत्याह– **अभिधानान्यकारादय** इति। **अमात्रे गतिर्न विद्यते** प्रत्यहम्, संसारे वा। अथापि मुक्तानां परमा गतिरयमिति **अगतिरपि न विद्यते**। तेन गतिरगतिरिति द्वेधाऽपि प्रतृण्णं भवति॥ ॐ॥

**(भा.) 'आदिमत्त्वेन सामान्यमुपास्येन भवेदिति।**
**'उपासकस्य सज्ञानन् सर्ववन्द्यो भवेत् पुमान्॥**

**'सामान्यत्रयमप्येतत् तुल्यं मुक्तिगतत्वतः।**
**'अमात्रत्वं तुरीयस्य त्वविभागाद् दिनेदिने।**
**'जाग्रदादेरकर्त्ताऽपि गम्योऽसौ ज्ञानिनां भवेत्' इति च॥**

**(टी.) 'त्रिषु धामसु'** इत्यादेरभिप्रायं **'आदिमत्त्वेन–'** इत्यादिब्रह्मतर्क-वाक्येनापि[३] प्रकाशयति। यत्तत् विश्वादित्रयसाधर्म्यं जीवस्योक्तं तदेतत् त्रयमपि नित्यत्वेन तद्धर्मतुल्यम्। [४]मुक्तावप्यनुवर्तमानत्वात्। **'अमात्रत्वम्'** इत्यादिना **'नामात्रे विद्यतेऽगतिः'** इत्यस्याभिप्रायं वक्ति। विश्वादीनां जाग्रदाद्याविष्करणार्थं दिनेदिने विभागादंशत्वम्। तदभावादमात्रस्तुरीयः॥ ॐ॥

---

१. 'इति वचनात्' ख.
२. 'संसारिणः। नैव मुक्तानाम्, प्राप्त्यभावादिति ह्युक्तम्' ख.
३. '–तर्कवचनेनापि' ख.
४. 'मुक्तावपि प्रवर्त–' ख.

**(भा.चं.)** तुल्यं सामान्यमिति किमेतदाम्रेड्यते। आह– **'साधर्म्यं नित्यत्वेन तद्धर्मतुल्यम्'** इति। **'अगतिर्न विद्यते'** इत्येतद् विवृतम्– **'गम्योऽसौ ज्ञानिनां भवेत्'** इति ॥ * ॥

**(भा.)** **'आदिमत्त्वादिसामान्यं तुल्यं मोक्षोपभोग्यतः ।**
**'अमात्रत्वं तुरीयस्याप्यविभागो दिनेदिने'**
इत्यात्मसंहितायाम् ॥ * ॥

—०—

**(टी.)** अत्र पुनस्तात्पर्याधिक्यादात्मसंहितावचनं चाऽह– **आदिमत्त्वादीति** ॥ ९ ॥

**(भा.चं.)** **'सामान्यत्रयमप्येतत्'** इत्यादिना ब्रह्मतर्कवचनेनोक्तमेव पुनरात्मसंहितावचनेनोच्यते **'आदिमत्त्वादिसामान्यम्'** इत्यादिना। तत् को हेतुः? नहि ब्रह्मतर्कवचने कश्चन सन्देग्धि । येन तदुपोद्बलनायाऽत्मसंहितावचनमादीयेत। अतस्तदभिप्रायमाह– **तात्पर्याधिक्यादिति**। **मोक्षोपभोग्यतः** मोक्षोपभोग्यत्वात्। अविभागादमात्रत्वमित्युक्तम्। अविभाग एव वाऽमात्रत्वमितीदानीमाह। मात्रा, अंशः, विभाग इति चैकार्थानि पदानि। न विद्यते मात्रा विभागः यस्यासावमात्रः **अविभाग** इति ॥ ९ ॥

—०—

[अथ चतुर्थः खण्डः]

**अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैत[1] ओङ्कार आत्मैव संविशत्यात्मनाऽऽत्मानं य एवं वेद[2] ॥ १ ॥**

**(भा.)** आत्मैव भूत्वाऽन्याभिमानं त्यक्त्वा परमात्मनैव परमात्मानं प्रविशत्युपासकः । अव्यवहार्यत्वादिकमत्र साम्यमिति दर्शयितुं पुनरप्युक्तमव्यवहार्यत्वादिकम् ।

'तुरीयं नादनामानं हरिं ज्ञात्वा परं पदम् ।
'तमेव प्रविशेच्छुद्धरूपी तत्सदृशात्मवान् ॥

'ज्ञानानन्दौ च शक्तिश्च तथाऽपि न समाः क्वचित् ।
'विमुक्तस्यापि जीवस्य पारतन्त्र्यं च नित्यदा ॥ * ॥

**(टी.)** अकारादिमात्राणां जाग्रदादिप्रवृत्तिप्रकारः प्रपञ्चितः । अथ नादात्मनस्तुरीयस्यांशस्य[3] मुक्त्यवस्थानियन्तृत्वमुच्यते– **अमात्र** इत्यादिना । एषां विशेषणानामर्थः पूर्वत्रोक्तः । **'आत्मैव'** इत्यादेरयमर्थः– केवलचिदात्मा **भूत्वा,** [4]स्वस्माद् भिन्नेषु प्राकृतदेहादिष्व**भिमानं त्यक्त्वा** इत्यभिप्रायः, परमात्मनैव नियामकेन **परमात्मानं प्रविशति** तदुपासको[5] जीवः । नह्यात्मा स्वयमेव स्वात्मानं प्रविशतीति शोभते । कर्तृकर्मविरोधात् ॥

अव्यवहार्यत्वादिकं कुतः पुनरुक्तमित्याशङ्क्याऽऽह– **अव्यवहार्यत्वादिकमिति** । विश्वादिष्वादिमत्त्वादिकं ह्युपास्तिफलसामान्यमुक्तम् । तुरीये तु **अव्यवहार्यत्वादिकं** तदिति **दर्शयितुं** तत् **पुनरप्युक्तम्** ॥

---

१. **'शिवोऽद्वैत एवमोङ्कार–'** इति शं.रङ्गरा.पा. ।

२. अत्र शां.पाठे द्विरुक्तिः पठ्यते–**'य एवं वेद य एवं वेद'** ।

३. **'–रीयस्य मुक्त्य–'** ख.

४. **'भूत्वा प्राकृतदेहादिषु स्वस्माद् भिन्नेष्वभि–'** ख.

५. **'तमुपासको–'** ख.

**'तुरीयम्–'**[१] इत्याद्यात्मसंहितावचनं चात्र प्रमाणमाह। अकारोकारमकाराणां[२] श्लिष्टोच्चारणसमये योऽयं ध्वनिः श्रूयते तद्वाच्यत्वात् तुरीयो नादनामा। 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' इत्युक्तप्रकारेण शुद्धस्वरूपी भूत्वा चतुर्भुजत्वादिना **तत्सदृशात्मवानपि** भवति। अस्य पुनर्ज्ञानानन्दादिगुणा अपि तद्गुणसदृशा भवन्ति। नच तावता सर्वप्रकारेण साम्यं जीवस्येशेन भवतीत्याह– **तथाऽपीति**। **क्वचित्** देशान्तरादिषु। कुत [३]एवम्? मुक्तावपि जीवस्य पारतन्त्र्यादिवैधर्म्याधिक्यात्॥ १॥

**(भा.चं.)** भाष्येऽपि स्वोक्तिदार्ढ्याय पुनरप्युक्तमव्यवहार्यत्वादिकम्। अवधारयितुं पुनरुक्तिमभिनीय दर्शयति– अव्यवहार्यत्वादिकमव्यवहार्यत्वादिकमिति। ननु ज्ञायन्तेऽकाराद्या वर्णाः। कोऽयं नादो नाम? आह– **अकारोकारमकाराणामिति**॥ १॥

**अत्रैते श्लोका भवन्ति–**

**ओङ्कारं पादशो विद्यात् पादा मात्रा न संशयः।**
**ओङ्कारं पादशो ज्ञात्वा न किञ्चिदपि चिन्तयेत्॥ २॥ १॥**

**युञ्जीत प्रणवे चेतः प्रणवो ब्रह्म निर्भयम्।**
**प्रणवे नित्ययुक्तस्य न भयं विद्यते क्वचित् ॥ ३॥ २॥**

**प्रणवो ह्यपरं ब्रह्म प्रणवश्च परं स्मृतः।**
**अपूर्वोऽनन्तरोऽबाह्यो न परः प्रणवोऽव्ययः ॥ ४॥ ३॥**

**सर्वस्य प्रणवो ह्यादिर्म्मद्ध्यमन्तस्तथैव च।**
**एवं हि प्रणवं ज्ञात्वा व्यश्नुते तदनन्तरम् ॥ ५॥ ४॥**

---

१. 'इत्यात्मसं–' ख. २. 'अकाराद्यक्षराणाम्' क. ३. 'कुत एतत्' क.

प्रणवं हीश्वरं विद्यात् सर्वस्य हृदये स्थितम् ।
सर्वव्यापिनमोङ्कारं मत्वा धीरो न शोचति ॥ ६ ॥ ५ ॥

अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमः शिवः ।
ओङ्कारो विदितो येन स मुनिर्नेतरो जनः
स मुनिर्नेतरो जन इति ॥ ७ ॥ ६ ॥

इति चतुर्थ खण्डः
इति श्रीमाण्डूकोपनिषत् समाप्ता

—०—

ॐ ॥ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितँय्यदायुः ॥

स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

—०—

(भा.) 'चतूरूपस्यास्य विष्णोर्नाम प्रणव इत्यपि ।
'जाग्रदादिप्रणयनात् स एव ब्रह्म बृंहणात् ॥

'ओमित्याक्रियमाणत्वादोङ्कारः स प्रकीर्तितः ।
'आदिमत्त्वादयो ह्यर्था ओमित्यस्य श्रुतौ श्रुताः ॥

'अपूर्वः कारणाभावान्नाशाभावादनन्तकः ।
'पराधीनस्थित्यभावादनन्तर उदाहृतः ।
'सर्वगत्वादबाह्यश्च तं ज्ञात्वा विप्रमुच्यते' इति च ॥

'परत्वमपरत्वं च विष्णोरेकस्य वै यदा ।
'श्रूयते नतु सामर्थ्यभेदस्तत्र कथञ्चन ।
'अवतारस्य पूर्वत्वात् पौर्वापर्यमुदाहृतम्' इति ब्रह्मतर्के ॥

पूर्वावतारे पश्चिमावतारेऽपि पूर्ण्ण एवेति प्रणवो ह्यपरं ब्रह्मेत्यदेरर्त्थः ॥
॥ ※ ॥

**(टी.)** **'चतूरूपस्य–'** इत्यादिवाक्यैः **'ओङ्कारं पादशो विद्यात्–'** इत्यादि-[1]श्लोकाभिप्रायमाह। ओङ्काराख्यं विष्णुमकारादिभिर्नादान्तैः मात्राख्यैः पादैः चतुष्पादं सन्तं **पादशः** प्रथमतो **ज्ञात्वा** पुनः समग्रमपि जानीयात्। ततः परं किमपि नान्यत् प्रचिन्तयेत्। स हि **जाग्रदादिचतुरवस्थाप्रणयनात्** प्रणव-नामकः प्रोक्तः। **अस्य** विष्णोः। **अपूर्वः अनन्तरः अबाह्य** इति बहुव्रीहिः। **तस्मात् परः प्रणवश्च नास्ति**[2]। **'प्रणवो ह्यपरं ब्रह्म'** इत्यत्र परमपरं चेति विशेषणात् सामर्थ्यभेदमनयोराशङ्क्य परिहरति– **'परत्वमपरत्वं च–'** इत्यादि ब्रह्मतर्कवचनेन। तत्र युक्तिं व्युत्पादयति– **पूर्वेति**। पूर्वोत्तरावतारयोः प्रत्येक-मपि [3]ब्रह्मत्वेन विशेषणात् स्वातन्त्र्यादिगुणपरिपूर्ण एव भगवानिति श्रुत्यु-दितार्थः ॥ २–४ ॥

चराचरस्य[4] **सर्वस्य प्रणवो हि** सृष्टिस्थित्यादिकृत् ॥ ५ ॥

---

१. 'ओङ्कारं पादश इत्यादिश्लोका–' ख. 'ओङ्कारं पादशो विद्यादिति श्लोका–' इति च।

२. अत्र ख.पाठे किञ्चिदनन्वितमिव वाक्यम्– 'तस्मात् परं प्रणवादपरं अव्ययश्च नास्ति' इति। अयं सम्भावितः पाठः– 'तस्मात् परः प्रणवतः परः अव्ययश्च नास्ति' इति।

३. 'ब्रह्मत्वविशेषणात् स्वातन्त्र्यादिपरिपूर्णः' क.

४. 'परावरस्य' क.

[३]योऽयं प्रणवः स किं शब्दब्रह्मेत्याशङ्क्याऽह– **प्रणवं हीति** ॥ ६ ॥

ईश्वरश्चेत् किं देहादिमानाहोस्विन्नेति वाच्यम्। आद्ये विनाशी स्यात्। अन्त्ये सृष्ट्यादावक्षम इत्यत आह– **अमात्र** इति । **अमात्रः** प्राकृतदेहादिरहितः । तथाऽपि ज्ञानानन्दाद्यनन्तदेहादिमान् । नच देहदेहिनोर्देहादीनां च भेदः । विशेषमात्रेण सुघटत्वात्। अतः सर्वदोषरहितः शुद्ध[४] एवायमोङ्कारो नारायणः । यः शाखायामादित आरभ्योदितः सोऽयं भगवान् सम्यग् **विदितो येन स** कृतकृत्यत्वान्मुक्तो भवतीति सर्वं रमणीयम् ॥ ७ ॥

**(भा.चं.)** यस्मात् पूर्वोऽन्यो न विद्यते सोऽपूर्वः । स्वयमनादिः सर्वस्य चादिरिति। तदेतदाह– अपूर्वः **कारणाभावात्**। **'अनन्तरः'** इति द्वेधा व्याख्यातं भाष्ये– न विद्यतेऽन्योऽन्तःप्रेरकः यस्य सो**ऽनन्तरः** । अन्तं नाशं रातीत्यन्तरोऽन्तकः। स न विद्यतेऽस्येत्य**नन्तरः**। न विद्यतेऽन्योऽन्तरोऽन्तर्यामी यस्य सोऽप्य**नन्तरः**। अथच अनन्तं रं रमणमस्येति **'अनन्तरः'**। एतदप्याह– **अनन्तक** इति । अनन्तं कं सुखमस्येति । **न परः प्रणवः** इति त्रीणि पदानि। विष्णोः परोऽन्यः न प्रणवपदगदितः, नाप्यव्यय इति। 'अनपरः' इति प्रतृण्णं च, तदनुगुणः **'पराधीनस्थित्यभावादनपरः'** इति ब्रह्मतर्कपाठश्च पाश्चात्यः। **'अनपरः'** इति प्रतृण्णमिच्छन्तोऽपि ग्राह्या एव । तथा हि श्रूयते– 'तदेतद् ब्रह्मापूर्वमनपरमनन्तमबाह्यम्' [बृ.उ.४.५.१९] इति मधुब्राह्मणे। 'नैवास्मात् पूर्वकं किञ्चिन्नैवास्मादपरं तथा । सर्वस्माद् बाह्यतश्चासौ सर्वस्मादन्तरस्तथा' इति च बृहद्भाष्ये हयग्रीवसंहितावचनम् । **अवतारस्य पूर्वत्वात्** अपरत्वाच्च **पौर्वापर्यं** वेदेषूक्तम् ॥ २–४ ॥

**प्रणवः सर्वस्य आदिः** स्रष्टा। **मध्यं** पाता। **अन्तः** संहर्ता। यथेदानीं **तथैव** पूर्वकल्पेषु। **तथैव च** उत्तरकल्पेषु। **व्यश्नुते** प्राप्नोति **तत्** प्रणवशब्दवाच्यं **अनन्तरं** ब्रह्म ॥ ५ ॥

---

३. 'कोऽयं प्रणवशब्दार्थ इत्या–' क.

४. '–राहित्याच्छुद्ध–' क.

**सर्वस्य हृदये स्थितं** अणोरणीयांसम्, **सर्वव्यापिनं** महतोमहीयांसं च सर्व-समर्थं **प्रणवं** परं ब्रह्म **विद्यात्** ॥ ६ ॥

**अमात्र** इत्यादि मन्त्रार्थं तत्वप्रदीपेऽपि व्याख्यातम्, 'अपि चैवमेके' [ब्र.सू.३.२.१३] इति सूत्रव्याख्याने–'अमात्र इति परिमाणरहितः। अनन्त-मात्रोऽनन्तरूपः। द्वैतस्योपशमो भेदरहितः' इति। **मुनिः** भगवन्मननेन लब्ध-भगवद्दर्शनः। अत एव कृतकृत्यः। 'एतद् बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत' [भ.गी.१५.२०] इति स्मरणात् ॥ ७ ॥

**(भा.)** एकोऽपि निर्विशेषोऽपि चतुर्द्धा व्यवहारभाक् ।
यस्तं वन्दे सदानन्दं विष्णुं विश्वादिरूपिणम् ॥ * ॥

**इति श्रीमदानन्दतीर्थभगवत्पादविरचितं**
**श्रीमाण्डूकोपनिषद्भाष्यं समाप्तम्**

—०—

**(टी.)** अथेदानीं ग्रन्थावसानेऽपीष्टदेवतां भगवत्तमं महाविष्णुमभिवन्दते भगवान् भाष्यकारभट्टारकः– एकोऽपीति ॥

सर्वप्रधानो निर्भेदोऽप्यनन्तव्यवहारभाक् ।
यस्तं विष्णुं सदानन्दं वन्दे विश्वादिरूपिणम् ॥ * ॥

यस्य त्रिरूपाण्युदितानि वायोर्वेदे बलज्ञानवतो बळादौ ।
दशप्रमत्याख्यतृतीयरूपी माण्डूकभाष्यं कृतवान् मुकुन्दे ॥ * ॥

मण्डूकरूपवरुणोपनिषत्सुभाष्य-
टीकामिमां गुरुनियोगत एव शक्त्या ।
कृत्वा समार्पयदनन्तगुणे रमेशे
त्रैविक्रमार्यकविवर्यवरस्य[1] शिष्यः ॥ * ॥

१. '–वर्यजनस्य' ख.

नमोनमस्ते सर्वेश विष्णवे चतुरात्मने ।
नमोनमस्ते प्राणेश गुरवो वो [1]नमोनमः ॥ ✻ ॥

**इति श्रीमदानन्दतीर्थभगवत्पादविरचितश्रीमाण्डूकोपनिषद्भाष्यटीका त्रैविक्रमार्यदासकृता समाप्ता**

—०—

**(भा.चं.)** 'एकोऽपी'ति व्याख्यातम्– **सर्वप्रधानोऽपीति** । स त्वेक एवेति स्वतः सिद्धम् । नहि द्वौ सर्वप्रधानौ सम्भवतः । **'निर्विशेषोऽपी'**त्यत्र विशेष इति भेद उच्यते, न भेदप्रतिनिधिरित्याह– **निर्भेदोऽपि** । न केवलं **'चतुर्धा'** । किन्तु? अनन्तजीवेषु चतुर्धा **अनन्तव्यवहारभाक्** ॥ ✻ ॥ त्रैविक्रमार्यः कविवर्येष्वपि वरो नारायणपण्डितः ॥ ✻ ॥ गुरव इति त्रिविक्रमपण्डिता नारायणपण्डिताश्च । गौरवाद् बहुवचनम् ॥ ✻ ॥

भेकाः क्वचन न काका नाऽकाशं पूरयन्ति किमु रावैः ।
दूरे किल सहकारे कोकिल रे गाय नायकीभूय ॥ ✻ ॥

निरणेनिक्तां यं गुरुकरुणाभस्त्रासरस्वतीमूषे ।
पटुरचनं तद्वचनं जिह्वादाहाय दुर्जनो लेढि ॥ ✻ ॥

इमामाचार्यगोविन्दः प्रमृष्टां शब्दतोऽर्थतः ।
वितेने विमलां टीकां विनेयजनवाञ्छया ॥ ✻ ॥

**इत्याचार्यगोविन्दस्य कृतिषु श्रीमाण्डूकोपनिषद्भाष्यटीकापञ्चिका उपनिषद्भावचन्द्रिका सम्पूर्णा**

—०—

१. 'गुरवे ते नमोनमः' ख.



ओमित्येतदक्षरमिदं सर्वम् ।

# परिशिष्टानि

१. वैदिकच्छन्दोमीमांसा

२. तारतम्यमीमांसा

३. उपनिषन्मन्त्राणां पादानुक्रमणी

४. निगदानुक्रमणी

५. भाष्योदाहृतप्रमाणानामनुक्रमणी



# वैदिकच्छन्दोमीमांसा १

स्वच्छं स्वच्छन्दं स्वच्छन्दोभिरभिष्टुतं परानन्दम् ।
प्रणिपत्य वैदिकानां मीमांसा छन्दसां क्रियते ॥ * ॥

अथातो वैदिकच्छन्दसां मीमांसा ।

प्रायो वैदिकच्छन्दस्सु केवलमक्षरगणनैव । न विशिष्य गणगणना । क्वचिद् गणगणनाऽपि भवति । तद् यथा–

न साम्परायः प्रतिभाति बालं
प्रमाद्यन्तं वित्तमोहेन मूढम् ।

अत्र प्रथमपादे उपेन्द्रवज्रा गणबद्धा । न द्वितीयपादे । यथा वा–

तमेवैकं जानथ आत्मानमन्या
वाचो मुञ्चथामृतस्यैष सेतुः ।

अत्र प्रथमपादे उपेन्द्रवज्रेव । द्वितीय इन्द्रवज्रेव । नोभयत्रापि गणबद्धता ।

अशब्दमस्पर्शमरूपमव्ययं
तथाऽरसं नित्यमगन्धवच्च यत् ।
अनाद्यनन्तं महतः परं ध्रुवं
निचाय्य तं मृत्युमुखात् प्रमुच्यते ॥

अत्र समग्रं वंशस्थं गणबद्धम् ।

अत आदौ गणाननुक्रमिष्यामः । लौकिकानि च वैदिकानि च च्छन्दांसि जिज्ञासवः सुकरं जानीयुरिति । मास्म तेषामध्ययनं पापपङ्किलं भवदिति ।

द्विविधमक्षरं भवति– गुरु लघु चेति। त्रिभिरक्षैरैरष्टौ गणा भवन्ति। तथाहि–

त्रिगुरुर्मगणः – **होतारम्। अग्ने यम्। राजन्तम्।**

आदिलघुर्यगणः – **भरन्तः। इमं मे। अवस्युः।**

मध्यलघू रगणः – **ऋत्विजम्। आ चके। अङ्गिरः।**

अन्तगुरुः सगणः – **ऋपिभिः। व्यतृणत्। यशसम्।**

अन्तलघुस्तगणः – **यज्ञस्य। विश्वन्ति। देवेपु।**

आद्यन्तलघुर्जगणः – **ऋतस्य। पितेव। यदङ्ग।**

आदिगुरुर्भगणः – **दर्शत। वक्षति। सानवि।**

त्रिलघुर्नगणः – **वरुण। मृळय। कृणुहि।**

ह्रस्वं लघु– नु। दीर्घं गुरु– सा। संयोगपरं गुरु– 'अग्रिम्' इत्यत्र अकारः। एजन्तं गुरु– हे। वै। हो। कौ। विसर्गान्तं गुरु– सः। व्यञ्जनान्तं गुरु– इत्। सानुस्वारं च गुरु– हम्। पादान्त्यं लघु च प्रायो गुरु भवति–

**सूक्ष्माच्च तत् सूक्ष्मतरं विभाति।**

इन्द्रवज्रा किलेयम्। ततजाश्च गौ चेन्द्रवज्रा। ततश्चास्या अन्तगुरुत्वात् पादान्त्यमक्षरं 'ति' इत्येतत् 'ती' इतीवोच्चार्यते। गुरुत्वेन च परिगण्यते।

यथा वा भगवत्पादकृतायां श्रीस्तुतौ–

**नागारिरुग्रबलपौरुष आप विष्णु-**
**वाहत्वमुत्तमजवो यदपाङ्गलेशम्।**

अत्र प्रथमपादान्ते 'ष्णु' इत्येतत् लघ्वपि गुरुत्वेन गण्यते। क्वचिन्न भवति च। यथा–

**करुणापूर्ण वरप्रद**
**चरितं ज्ञापय मे ते।**

अत्र प्रथमपादान्तगो 'द' कारो लघुरेव। अन्यथा मात्राभङ्गात्। चतुर्मात्रागणबद्धं हि स्तोत्रमिदम्।

यथा वा–

**अयमेव गोविषयतोऽपि**
**सदसि जनतार्थितो जवात्।** [म.वि.१०.५३]

उद्गता किलेयम्। तस्याः प्रथमे पादे सजसलानाचक्षते। तेन पादान्तगतं 'पि' इत्यक्षरं लघ्वेव, न गुरु भवति।

क्वचिच्छन्दःसौहित्याय च गुर्वक्षरं लघुतामापद्यते। लघु च गुरुताम्। यथा ऋग्वेदे–

**इन्द्रावरुण नू नु वाम्** [ऋ.सं.१.१७.८]

अत्र 'इन्द्रावरुणा। नु। नु। वाम्' इति प्रतृण्णम्। णाकारः संहितायां लघूभवन् णकारतामाप। 'नु' इत्येतद् गुरुतामाप्य 'नू' इति बभूव।

यथा वा– 'सगिरिवरधरातळवह' इति वक्तव्ये '**सगिरिवरधरतळवह**' इत्याचार्यप्रयोगः। अत्रापि 'धरातळवह' इत्येव पदपाठः। संहितायां तु दीर्घाक्षरत्वे मात्रा कुप्यतीति तत्र रेफस्य ह्रस्वता। एवं ह्रस्वदीर्घव्यत्ययेनार्थविशेषलाभश्च वैदिकसम्प्रदायसिद्धः।

एवं ह्रस्वस्थाने दैर्घ्यं यथाऽऽचार्यप्रयोग एव– '**इन्दिवरोदरदळनयना मन्दरधारा**' इति। 'इन्दिवरोदरदळनयन। मन्दरधार' इति हि ह्रस्वान्तं प्रतृण्णं भवति।

यथा वा– 'पालय कमलालय' इति वक्तव्ये '**पालया कमलालया**' इति प्रयुञ्जते। लोके मात्राछन्दस्स्वेव गानोल्लासायेदृशा व्यत्यया भवन्ति।



तत्र चतुर्विंशत्यक्षरां गायत्रीमारभ्य चतुरूर्ध्वानि सप्त प्रधानानि च्छन्दांसि– गायत्री, उष्णिक्, अनुष्टुप्, बृहती, पङ्क्तिः, त्रिष्टुप्, जगती चेति।

चतुर्विंशत्यक्षरा प्रचुरा गायत्री। अथाप्येकाक्षरा दैवी गायत्री भवति। एकाक्षरादारभ्य षट्त्रिंशदक्षरपर्यन्ता गायत्रीप्रभेदा अष्टधा भवन्ति। एवमुष्णिगादिप्रभेदा अपि। तथाहि–

चतुर्धा छन्दांसि परिमिमते– मात्रामितानि, गणमितानि, अक्षरमितानि, पादमितानि च। मात्रामितानि लौकिककाव्येष्वेव दृश्यन्ते। अथापि मात्रासमा वृत्तिर्दृश्यते व्यूहेषु। यथा– वरेण्यम्, वरेणियम्। गणमितानि बहळं लोकेषु; विरळं वेदेषु च। अक्षरमितानि पादमितानि च प्रायो वैदिकानि च्छन्दांसि भवन्ति। पादाश्च वेदेष्वनियता अपि भवन्ति। लोके पुनस्त्रैविध्यमेव दृश्यते– प्रायश्चतुश्चरणानि छन्दांसि, क्वचिदर्थानुगण्याय शास्त्रेष्वेव द्विचरणानि षट्चरणानि वा विरळतयेति। तद्यथा चतुश्चरणाः पशवो भवन्ति। क्वचिद् विरळतया षट्पदा अपि भवन्ति। द्विपदा अपि। अथ च न मात्राभिर्न गणैर्नापि पादैरेव च्छन्दो भवति; केवलमक्षरमितान्यपि च्छन्दांसि भवन्तीत्यपर आचक्षते। तद् यथा–

| छन्दः | गायत्री | उष्णिक् | अनुष्टुप् | बृहती | पङ्क्तिः | त्रिष्टुप् | जगती |
|---|---|---|---|---|---|---|---|
| आर्षी | २४ | २८ | ३२ | ३६ | ४० | ४४ | ४८ |
| दैवी | १ | २ | ३ | ४ | ५ | ६ | ७ |
| आसुरी | १५ | १४ | १३ | १२ | ११ | १० | ९ |
| प्राजापत्या | ८ | १२ | १६ | २० | २४ | २८ | ३२ |
| याजुषी | ६ | ७ | ८ | ९ | १० | ११ | १२ |
| साम्नी | १२ | १४ | १६ | १८ | २० | २२ | २४ |
| आर्ची | १८ | २१ | २४ | २७ | ३० | ३३ | ३६ |
| ब्राह्मी | ३६ | ४२ | ४८ | ५४ | ६० | ६६ | ७२ |

अपरे त्वतिच्छन्दस्स्वप्येतान् प्रभेदाननुवर्तयन्ति। नातीवोपयुक्तमेतत्। नातिप्रतनं च। तथाहि ताण्ड्यब्राह्मणम्–

**'एकाक्षरं वै देवानामवमं छन्द आसीत् सप्ताक्षरं परम्।**
**'नवाक्षरमसुराणामवमं छन्द आसीत् पञ्चदशाक्षरं परम्'**

[१२.१३.२७] इति।

एकाक्षरा दैवी गायत्री। वैष्णवी गायत्रीत्यर्थः। तथाहि तन्त्रसारसङ्ग्रहे– **'छन्दो मदीया गायत्री'** इति। अथापि अष्टाक्षरपर्यन्ता अपि दैव्यो गायत्र्यो भवन्ति। प्रत्यक्षरं देवतारूपभेदेन पृथङ्मन्त्रत्वविवक्षणात्।

| | | |
|---|---|---|
| एकाक्षरा दैवी गायत्री– | | **ओम्। भूः। क्लीम्।** |
| द्व्यक्षरा | – | **हंसः। सोहम्। स्वाहा।** |
| त्र्यक्षरा | – | **ओं तत् सत्।** |
| चतुरक्षरा | – | **भूर्भुवः स्वः।** |
| पञ्चाक्षरा | – | **भूर्भुवः सुवः।** |
| षडक्षरा | – | **विष्णवे नमः।** [षणयोर्विश्लेषेण] |
| सप्ताक्षरा | – | **भूर्भुवः सुवर्महः।** |
| अष्टाक्षरा | – | **ओं नमो नारायणाय।** |
| दैवी उष्णिग् यथा | – | **भुवः। स्वस्ति।** |
| दैवी अनुष्टुब् | – | **हरिः ओम्। स आ॒त्मा।** [तै.उ.१.१०]<br>**स एकः।** [तै.उ.२.१७] |

अन्यान्यपि कानिचन दैवानि च्छन्दांसि शाखान्तरेषु दृश्यन्ते। यथा–

| | | |
|---|---|---|
| दैवी बृहती | – | सत्यं॒ वद। धर्मं॒ चर। [तै.उ.१.१८] |
| यथा वा | – | दि॒वे स्वाहा॑। [अथ.५.९.१] |

दैवी पङ्क्तिः – नमो॒ ब्रह्म॑णे । नम॑स्ते वायो । [तै.उ.१.११]

यथा वा – ब्र॒ह्मणे॒ स्वाहा॑ । [अथ.सं.१९.२३.२९]

यथा वा – तदेतत् सत्यम् । [आथ.१.२.१]

दैवी त्रिष्टुप् – वि॒पा॒स॒ह्यै स्वाहा॑ । [अथ.सं.१९.२३.२७]

यथा वा – सर्वं ह्येतद् ब्रह्म । अयमात्मा ब्रह्म । [मां.उ.१.२]

दैवी जगती – अ॒न्तरि॑क्षाय स्वाहा॑ । [अथ.सं.५.९.३]

यथा वा – ओमित्येतदक्षरम् । [मां.उ.१.२]

यथा वा – सोऽयमात्मा चतुष्पात् । [१.३]

एवमेकैकेनाक्षरेण वर्धमाना दैवी भवति । ह्रसमाना पुनरासुरी । असुराणां निरासायाऽसुरं छन्द उपयुज्यते । न बाह्वृचे दृश्यते । न लक्षितं च ऋग्वेदानुक्रमण्याम् । आथर्वणे बहुलमुपलभ्यते ।

त्रिपदा गायत्री पादशोऽष्टाक्षरेति प्रजापतीनां प्रिया गायत्री अष्टाक्षरा भवति । उष्णिगादिषु क्रमेण चतुरूर्ध्वा ।

चतुष्पदा गायत्री पादशः षडक्षरेति यजुषां गायत्री षडक्षरा भवति । पादसंहितां हि याजुषा मन्यन्ते । उष्णिगादिषु क्रमेणैकाधिका ।

ततो द्विगुणानि साम्नां छन्दांसि । ऋचां त्रिगुणानि । षड्गुणानि ब्रह्मण इति ।

सर्वर्षिसम्प्रदायागताऽऽर्षी तु सर्वत्र प्रचुरा । त्रिगुणा प्राजापत्यायाः । चतुर्गुणा याजुष्याः । द्विगुणा साम्न्याः । सेयं त्रिपदा चतुर्विंशत्यक्षरा गायत्री भवति । उत्तरोत्तरं चतुरूर्ध्वा ।

अथ च दैवानि आसुराणि प्राजापत्यानि च च्छन्दांसि मिलितानि आर्षाणि भवन्ति [१+१५+८=२४; २+१४+१२=२८] इत्यादि । एवं याजुषाणि, सामनानि आर्षाणि च मिलितानि ब्राह्मानि भवन्ति [६+१२+१८=३६; ७+१४+२१+=४२] इत्यादि ।

तदुक्तमृक्प्रातिशाख्ये–

**'अक्षराणि तु षट्त्रिंशत् गायत्री ब्रह्मणो मिता।**

**यजुषां षळृचां त्रिःषट् साम्नां द्वादश सम्पदि'** [१६.१२-१३] इति।

तथाचाऽर्षी गायत्री प्राजापत्या पङ्क्तिरपि भवति। साम्नी जगत्यपि। आर्ची अनुष्टुबपि।

प्राजापत्या गायत्री याजुषी अनुष्टुबपि भवति।

याजुषी गायत्री दैवी त्रिष्टुबपि भवति।

साम्नी गायत्री प्राजापत्या उष्णिगपि भवति। [आसुरी बृहत्यपि भवति।] याजुषी जगत्यपि।

आर्ची गायत्री साम्नी बृहत्यपि भवति।

ब्राह्मी गायत्री आर्षी बृहत्यपि भवति। आर्ची जगत्यपि।

आर्षी उष्णिक् प्राजापत्या त्रिष्टुबपि भवति।

[साम्नी उष्णिक् आसुरी उष्णिगपि भवति।]

याजुषी उष्णिक् दैवी जगत्यपि भवति।

आर्षी अनुष्टुप् प्राजापत्या जगत्यपि भवति।

प्राजापत्या अनुष्टुप् साम्नी अनुष्टुबपि भवति।

आर्षी बृहती आर्ची जगत्यपि भवति। ब्राह्मी गायत्र्यपि।

प्राजापत्या बृहती साम्नी पङ्क्तिरपि भवति।

[याजुषी बृहती आसुरी जगत्यपि भवति।]

[आसुरी पङ्क्तिर्याजुषी त्रिष्टुबपि भवति।]

[याजुषी पङ्क्तिरासुरी त्रिष्टुबपि भवति।]

आर्षी जगती ब्राह्मी अनुष्टुबपि भवति।

क्वचित् पादभेदेन व्यवस्थाप्येत। अथापि न सर्वत्र। उपासनाभेदः फलभेदश्चेति वास्तवम्। विवक्षाभेदेन हि च्छन्दांसि भवन्ति।

* * *

महामन्त्रेषु दैवानि च्छन्दांसि भवन्ति। तत्रापि केवलं दैवी गायत्री प्रचलिता वर्तते।

आर्षाणि च्छन्दांस्येव वेदेषु बहुलमुपयुज्यन्ते। छन्दोविचितिरपि स्फुटमार्षच्छन्दोमूला। ऋग्वेदे प्रचुरमार्षाणि भवन्ति। आर्चीनि विरळतया। सामवेदेऽपि सम्प्रत्यार्षाण्येव च्छन्दांसि व्यवहारे दृश्यन्ते। यजुर्वेदे निगदप्राये याजुषाणि च्छन्दांसि भवन्ति। प्राजापत्यादीन्यन्यानि न बहुलमुपलभ्यन्ते। तत्रतत्र विरळतया पठ्यन्ते।

केचित्तु यजुषां निगदात्मकत्वान्न तत्र छन्दश्चिन्तेति निगदन्ति। तथाह्याह सायणः– 'यजुर्मन्त्राणां त्वपरिमिताक्षरोपेतत्वाच्छन्दोविभागो नास्ति' इति। नैतदादरणीयम्, यद् ब्राह्मणमेव स्वयं समुद्घोषयति–'नाच्छन्दसि वागुच्चरति' इति। युक्तमाह भरतः–'छन्दोहीनो न शब्दोऽस्ति न च्छन्दः शब्दवर्जितम्' [१४. ४५] इति। अक्षरमात्रगणनयाऽऽसुरादिच्छन्दःप्रभेदमभ्युपगच्छतां यजुषि किं छिन्नम्। विवक्षातश्छन्दांसि भवन्तीति चोक्तम्।

तत्र याजुषाणां छन्दसामुदाहरणानि तैत्तिरीय एव कानिचिद् दर्शयिष्यामः।

याजुषी गायत्री– ऋतं वंदिष्यामि। सत्यं वंदिष्यामि [तै.उ.१.१]। सह नाववतु। सह नौ भुनक्तु [२.१]।

उष्णिक्– तद् वक्तारमवतु [१.१]। इत्युक्तः शीक्षाध्यायः [१.२]। येऽन्नं ब्रह्मोपासते [२.३]। विज्ञानं देवाः सर्वे [२.८]।

अनुष्टुप्– शं नो मित्रः शं वरुणः [१.१]। प्राणो हि भूतानामायुः [२.५]। यतो वाचो निवर्तन्ते [२.७]। ब्रह्म ज्येष्ठमुपासते [२.८]।

बृहती– त्वमेव प्रत्यक्षं ब्रह्मासि [१.१]। सह वीर्यं करवावहै [२.१]। अन्नाद् वै प्रजाः प्रजायन्ते [२.३]। प्राणं देवा अनुप्राणन्ति [२.५]।

पङ्क्तिः– छन्दोभ्योऽध्यमृतात् सम्बभूव [१.७]। चतस्रश्चतस्रो व्याहृतयः [१.१२]। तदात्मानं स्वयमकुरुत [२.१२]। श्रोत्रियस्य चाकामहतस्य [२.१४]।

त्रिष्टुप्– त्वामेव प्रत्यक्षं ब्रह्मावादिषम् [१.२३]। विज्ञानं प्रयन्त्यभिसंविशन्ति [३.५]। ते ये शतं प्रजापतेरानन्दाः [२.१६]। ऋतं च स्वाध्यायप्रवचने च [१.१७]।

जगती– त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि [१.१]। अहमन्नमहमन्नमहमन्नम् [३.१५]। अशब्दमस्पर्शमरूपमव्ययम्। [का.उ.१.३.१५]
सुब्रह्मण्योऽ३ सुब्रह्मण्योऽ३ सुब्रह्मण्योम्। [तै.आ.१.१२.३]

वस्तुतस्तु आर्षाणां छन्दसामेकैकः पादो याजुषं समग्रं छन्दः॥ ॥ * ॥

दृष्टानि दैवानि च्छन्दांसि याजुषाणि च। आर्षाणि प्राय ऋग्वेदे पठितानि। तान्युपरिष्टाद् विवृतानि। अन्यानि चापूर्वाणि च्छन्दांसि बहुलमथर्ववेदे पठ्यन्ते। यथा–

आसुरी गायत्री [१५अक्षराणि]–

अग्ने वैश्वानर विश्वैर्मा देवैः पाहि स्वाहा॥ [अथ.सं.२.१६.४]

आसुरी उष्णिक् [१४]–

द्यावापृथिवी उपश्रुत्या मा पातं स्वाहा॥ [२.१६.२]

आसुरी अनुष्टुप् [१३]–

सर्वेभ्योऽङ्गिरोभ्यो विदगणेभ्यः स्वाहा॥ [१९.२२.१८]

आसुरी बृहती [१२]–

यज्जाग्रत् यत् सुप्तो यद् दिवा यन्नक्तम्॥ [१६.७.१०]

आसुरी पङ्क्तिः [११]–

प्राणापानौ मृत्योर्मा पातं स्वाहा ॥ [२.१६.१]

आसुरी त्रिष्टुप् [१०]–

सूर्य चक्षुषा मा पाहि स्वाहा ॥ [२.१६.३]

आसुरी जगती [९]–

सहोऽसि सहो मे दाः स्वाहा ॥ [२.१७.२] ॥ ✻ ॥

अथ प्राजापत्यानि च्छन्दांसि यथा–

प्राजापत्या गायत्री [८]–

सप्तमाष्टमाभ्यां स्वाहा ॥ [१९.२२.३]

प्राजापत्या उष्णिक् [१२]–

सघांघते गोमीद्या गोगतीरिति ॥ [२०.१२९.१३]

प्राजापत्या अनुष्टुप् [१६]–

देवाः पितरः पितरो देवाः । यो अस्मि सो अस्मि ॥ [६.१२३.३]

प्राजापत्या बृहती [२०]–

स वा अन्तरिक्षादजायत तस्मादन्तरिक्षमजायत ॥ [१३.४.३१]

प्राजापत्या पङ्क्तिः [२४]–

सोदक्रामत् सा पितॄनगच्छत् तां पितरोऽघ्नत सा मासि समभवत् ॥
[८.१०(३)३]

प्राजापत्या त्रिष्टुप् [२८]–

तस्माद् देवेभ्योऽर्धमासे वषट् कुर्वन्ति प्र देवयानं पन्थां जानाति य एवं वेद ॥ [८.१०(३).६]

प्राजापत्या जगती [३२]–

तस्माद् वनस्पतीनां संवत्सरे वृक्णमपि रोहति वृश्चतेऽस्याप्रियो भ्रातृव्यो य एवं वेद ॥ [८.१०(३)२] ॥ ✻ ॥

अथ सामनानि च्छन्दांसि यथा–

साम्नी गायत्री [१२]–

वेदं आस्तरणं ब्रह्मोपबर्हणम् ॥ [१५.१(३).७]

साम्नी उष्णिक् [१४]–

ज्योतिष्मतो लोकाञ्जयति य एवं वेद ॥ [९.६(६)१४]

साम्नी अनुष्टुप् [१६]–

स प्रजाभ्यो वि पश्यति यच्च प्राणति यच्च न ॥ [१३.४.११]

साम्नी बृहती [१८]–

दिवे चक्षुषे नक्षत्रेभ्यः सूर्यायाधिपतये स्वाहा ॥ [६.१०.३]

साम्नी पङ्क्तिः [२०]–

तद् यस्यैवं विद्वान् व्रात्य एकां रात्रिमतिथिर्गृहे वसति ॥ [१५.१(१३).१]

साम्नी त्रिष्टुप् [२२]–

अग्ने यत् ते तपस्तेन तं प्रति तप योऽ३स्मान् द्वेष्टि यं वयं द्विष्मः ॥ [२.१९.१]

साम्नी जगती [२४]–

वायो यत् ते तेजस्तेन तमतेजसं कृणु योऽ३स्मान् द्वेष्टि यं वयं द्विष्मः ॥ [२.२०.५]

वस्तुतस्तु सर्वाण्यार्षाणि द्वैपदानि सामनानि समग्रच्छन्दांसि ॥ ॥ * ॥

अथाऽर्चानि च्छन्दांसि यथा–

आर्ची गायत्री [१८]–

भूतं च भव्यं च श्रद्धा च रुचिश्च स्वर्गश्च स्वधा च ॥ [१३.६.२३]

आर्ची उष्णिक् [२१]–

सोमो राजाधिपा मृडिता च भूतस्य नः पतयो मृडयन्तु ॥ [१०.१.२२]

आर्ची अनुष्टुप् [२४]–

सर्वे अस्मिन् देवा एकवृतो भवन्ति। य एतं देवमेकवृतं वेद ॥ [१३.५.२१]

आर्ची बृहती [२७]–

स सर्वस्मै वि पश्यति यच्च प्राणति यच्च न। य एतं देवमेकवृतं वेद ॥ [१३.५.१९]

आर्ची पङ्क्तिः [३०]–

सो अग्निः स उ सूर्यः स उ एव महायमः। रश्मिभिर्नभ आभृतं महेन्द्र एत्यावृतः ॥ [१३.४.५]

आर्ची त्रिष्टुप् [३३]–

भव एनमिष्वासः प्राच्या दिशो अन्तर्देशादनुष्ठातानु तिष्ठति नैनं शर्वो न भवो नेशानः ॥ [१५.१(५)२]

आर्ची जगती [३६]–

शं नो वातो वातु शं नस्तपतु सूर्यः। अहानि शं भवन्तु नः शं रात्री प्रति धीयतां शमुषा नो व्युच्छतु ॥ [७.६९.१]

वस्तुतस्त्वार्षाण्येव त्रैपदानि च्छन्दांसि समग्राण्यार्चानि भवन्ति ॥ * ॥

अथ ब्राह्माणि च्छन्दांसि यथा–

ब्राह्मी गायत्री [३६]–

शरदे त्वा हेमन्ताय वसन्ताय ग्रीष्माय परि दद्मसि।
वर्षाणि तुभ्यं स्योनानि येषु वर्धन्त ओषधीः ॥ [८.२.२२]

ब्राह्मी उष्णिक् [४२]–

ये३स्यां स्थ प्राच्यां दिशि हेतयो नाम देवास्तेषां वो अग्निरिषवः।
ते नो मृडत ते नोऽधि ब्रूत तेभ्यो वो नमस्तेभ्यो वः स्वाहा ॥ [३.२६.१]

ब्राह्मी अनुष्टुप् [४८]–

यथा सूर्यो अतिभाति यथास्मिन् तेज आहितम् ।
एवा मे वरणो मणिः कीर्तिं भूतिं नि यच्छतु तेजसा मा समुक्षतु यशसा समनक्तु मा ॥ [१०.३.१७]

ब्राह्मी बृहती [५४]–

विष्णोः क्रमोऽसि सपत्नहा पृथिवीसंशितोऽग्नितेजाः ।
पृथिवीमनु वि क्रमेऽहं पृथिव्यास्तं निर्भजामो योऽ३स्मान् द्वेष्टि यं वयं द्विष्मः ।
स मा जीवीत् तं प्राणो जहातु ॥ [१०.५.२५]

ब्राह्मी पङ्क्तिः [६०]–

प्राची दिगग्निरधिपतिरसितो रक्षितादित्या इषवः ।
तेभ्यो नमोऽधिपतिभ्यो नमो रक्षितृभ्यो नम इषुभ्यो नम एभ्यो अस्तु ।
योऽ३स्मान् द्वेष्टि यं वयं द्विष्मस्तं वो जम्भे दध्मः ॥ [३.२७.१]

ब्राह्मी त्रिष्टुप् [६६]–

अहोरात्रैर्विमितं त्रिंशदङ्गं त्रयोदशं मासं यो निर्मिमीते ।
तस्य देवस्य क्रुद्धस्यैतदागो य एवं विद्वांसं ब्राह्मणं जिनाति ।
उद्वेपय रोहित प्र क्षिणीहि ब्रह्मज्यस्य प्रति मुञ्च पाशान् ॥ [१३.३.८]

ब्राह्मी जगती [७२]–

यमबध्नाद् बृहस्पतिर्मणिं फालं घृतश्चुतमुग्रं खदिरमोजसे ।
तं बिभ्रच्चन्द्रमा मणिमसुराणां पुरोऽजयद् दानवानां हिरण्ययीः ।
सो अस्मै श्रियमिद् दुहे भूयोभूयः श्वःश्वस्तेन त्वं द्विषतो जहि ॥
[१०.६.१०]

वस्तुतस्तु सार्धमार्षं छन्दः पूर्णमेकं ब्राह्मं भवति । ननु तर्हि किमिति छन्दोऽन्तरपरिगणनम्? उपासनार्थमिति गृहाण । एवं छन्दोऽन्तरत्वसम्पादनेन मन्त्राणां पठनं च वैदिकसम्प्रदायसिद्धम् । तद्यथा बृहतीसम्पादनमनुष्टुप्-सम्पादनमित्यलं विस्तरेण ॥ * ॥

***

यत्राक्षरन्यूनता तत्र पुनरियादिना छन्दः पूरणीयं भवति। कोऽयमियादिः? क्षैप्र-संयोगानां विश्लेषणम्। इकः स्थानेष्वादिष्टा यणः क्षैप्राः। यरलवा इत्येतत्। क्षिप्रोक्तानामक्षराणामक्षिप्रतया व्याहरणमित्येतत्। तानेतान् क्षैप्रान् क्षैप्यानप्याचक्षते। यतः परस्परं क्षिप्यन्ते यथायोगं सङ्क्षिप्यन्ते विक्षिप्यन्ते च।

यकारव्यूहेन यथा– **त्र्यम्बकं यजामहे** [त्रियम्बकं यजामहे]। यथा वा– **तत् सवितुर्वरेण्यम्** [तत् सवितुर्वरेणियम्]। अत्र यकारस्य 'इय'भावः। '**वरेण्यमित्येवोच्चारणम्, न वरेणियमिति**' इति विद्वान् युधिष्ठिरो मीमांसकः। यत्र जपादिष्वक्षरसङ्ख्या नियता तत्रोच्चारणीयमेवेत्याचार्यगोविन्दः। अन्यथा त्रियम्बकमित्यादिः प्रामाणिकः प्रयोगोऽपि न स्यात्। महतां प्रयोगाच्चैतदवसीयते।

यथा वा– **अग्ने चिकिद्ध्य१स्य नः** [ऋ.सं.५.२२.४]। अत्र 'चिकिद्धि+अस्य' इति अक्षरव्यूहेनाक्षरसम्पत्तिः।

वकारव्यूहेन यथा– **संचस्वा नः स्वस्तये** [१.१.९] [सचस्वा नः सु+अस्तये]। यथा वा– **त्वां वर्धन्तु नो गिरः**[तुवां वर्धन्तु नो गिरः]। अयं वकारस्य 'उव' भावः। यथा वा– **मक्ष्वि१त्था धिया नरा** [१.२.६]।अत्र 'मक्षु+इत्था' इति व्यूहेन।

रेफव्यूहेन यथा– **सहस्रशीर्षं देवम्** [सहस्रशीर्षं देवम्]। आचार्यपादस्य प्रयोगोऽपि– **सिन्धुः शिरस्यर्हणं परिगृह्य रूपी** [म.ता.नि.८.१०]। [सिन्धुः शिरस्यरहणं परिगृह्य रूपी]।

क्वचित् एकाक्षरीभावव्यूहेन। यथा वा– '**स नः पितेव सूनवेऽग्ने सूपायनो भव**'[१.११.९] [स नः पितेव सूनवे+अग्ने सूपायनो भव]। तथाहि कात्यायनः– '**पादपूरणार्थं तु क्षैप्रसंयोगैकाक्षरीभावान् व्यूहेत**' इति। '**इयादिपूरणः**' इति च पिङ्गलनागः।

तत्रेमौ च प्राचां श्लोकौ–

'चत्वारि सन्धिजातानि यैश्छन्दो ह्रसते नच ।
'प्रश्लिष्टमभिनिहितं क्षिप्रसन्धिरभिद्रुतम् ॥

'एतानि सन्धिजातानि मिमानश्छन्दसोऽक्षरैः ।
'द्वैधं कुर्यादसम्पूर्णे न पूर्णे किञ्चनेङ्गयेत्' इति ।

कः प्रश्लिष्टः सन्धिः? गुणसन्धिर्वृद्धिसन्धिर्दीर्घसन्धिश्च प्रश्लिष्टसन्धिरित्युच्यते । कोऽभिनिहितः सन्धिः? **'एङः पदान्तादति'** [अष्टा.सू.६.१.१०९] इति विहितः पूर्वरूपसन्धिर्वैदिकानामभिनिहितसन्धिः । **'इको यणचि'** [अष्टा. सू.६.१.७७] इति सूत्रितो यण्सन्धिरेव क्षिप्रसन्धिरित्युक्तम् । अथ कोऽभिद्रुतसन्धिः? क्षैप्रा यत्र न विकृष्यन्ते, किन्तु द्रुतमेवोच्चार्यन्ते सोऽभिद्रुतसन्धिरित्याचक्षते । अभिध्रुवसन्धिरित्येके । यथा– **'आ सूर्यँ रोहयो दि॒वि'** [८.८९.७] अत्र स्वरसत एवाक्षरसम्पत्तेर्न 'सूरियम्' इति विकृष्यत इति ।

***

अथ चैकेनाक्षरेण न्यूनेनाधिकेन वा न च्छन्दो भज्यते । नापि द्वाभ्यां न्यूनाभ्यामधिकाभ्यां वा । आह ह्यैतरेयी श्रुतिः– **न वा एकेनाक्षरेण च्छन्दांसि वियन्ति न द्वाभ्याम्** [ऐ.ब्रा.१.६;२.३७] इति । शतपथब्राह्मणेऽपि– **नाक्षराच्छन्दो व्येत्यकस्मान्न द्वाभ्याम्** [१३.२.३.३] इति । कौषीतकिब्राह्मणे च– **नह्येकाक्षरेणान्यच्छन्दो भवति न द्वाभ्याम्** [२७.१] इति ।

एकाक्षरन्यूना निचृद् भवति । द्वाभ्यां न्यूना विराट् । एकेनाधिका भुरिक् । द्वाभ्यां स्वराट् ।

एकाक्षरन्यूनतया नीचैश्चृत्यत इति निचृत् । चृती हिंसाग्रन्थनयोः । निवृदित्येके । नीचैर्वर्तत इति निवृत् । विहीनाऽपि द्वाभ्यामक्षराभ्यां राजत इति विराट् ।

एकेनाक्षरेण भूयस्यपि तस्मिन्नेव च्छन्दसि रिजते स्थानमर्जत इति भुरिक्। 'रिज स्थानार्जने, उद्रेके वा'। भरणाद् भुरिगित्येके। अधिकाऽपि द्वाभ्यामक्षराभ्यां स्वतो राजत इति स्वराट्।

तद्यथा– त्रयोविंशत्यक्षरा निचृद् गायत्री। सप्तविंशत्यक्षरा निचृदुष्णिक्। एकत्रिंशदक्षरा निचृदनुष्टुप्। एवं पञ्चविंशत्यक्षरा भुरिग्गायत्री। एकोनत्रिंशदक्षरा भुरिगुष्णिक्। त्रयस्त्रिंशदक्षरा भुरिगनुष्टुप्– इत्यादि।

तथा द्वाविंशत्यक्षरा विराड्गायत्री। षड्विंशत्यक्षरा विराडुष्णिक्। त्रिंशदक्षरा विराडनुष्टुप्। एवं षड्विंशत्यक्षरा स्वराड्गायत्री। त्रिंशदक्षरा स्वराडुष्णिक्। चतुस्त्रिंशदक्षरा स्वराडनुष्टुप्– इत्यादि। समानमुत्तरत्रापि।

तत्र निचृद् गायत्री यथा [८+७+८=२३]–

**अग्निः पूर्वेभिर्ऋषिभिः + ईड्यो नूतनैरुत।**
**स देवाँ एह वक्षति॥** [१.१.२]

कात्यायनस्तु 'ईडियः' इति विश्लेषेणास्याः केवलगायत्रीत्वं मन्यते।

यथा वा [७+८+८=२३]–

**जघने चोदं एषां + वि सक्थानि नरो यमुः।**
**पुत्रकृथे न जनयः॥** [५.६१.३] ॥ ✻ ॥

भुरिग् गायत्री यथा [८+१०+७=२५]–

**विद्वांसाविद् दुरः पृच्छेत् + अविद्वानित्थापरो अचेताः।**
**नू चिन्नु मर्ते अक्रौ॥** [१.१२०.२]

इमां ककुदमाह कात्यायनः। विवक्षाभेदेन ककुदपि भवति गायत्र्यपि भवति। इयमक्षरसङ्ख्ययोष्णिगित्यन्ये मन्यन्ते। तथाहि षड्गुरुशिष्यः– **'अथवा 'विद्वांसाविद् दुरः' इत्येषोष्णिक्। ननु च चतुर्विंशतिर्गायत्री, अष्टाविंशतिरुष्णिगिति लक्षणमुक्तम्। तत् किं 'विद्वांसाविद् दुरः' इत्यस्या गायत्रीत्वमुष्णिक्त्वं वोच्यते? इयं हि पञ्चविंशत्यक्षरा। किञ्च 'ऊनाधिकेन' इति सूत्रे भुरिग्गायत्र्युदाहरणं**

**चैषेत्युक्तम् । उच्यते । ब्राह्मणद्वयदर्शनादेवमुक्तम् । व्यूहेन चाक्षरसम्पत्तिः । सर्वश्रुतिदर्शी ह्ययमाचार्यः'** इति ॥

विराड् गायत्री यथा [७+८+७=२२]–

> **राजंन्तमध्वराणां + गोपामृतस्य दीदिंविम् ।**
> **वर्धमानं स्वे दमें ॥** [१.१.८]

अत्रापि 'अध्वराण + आम्', इति ['अधुवराणाम्' इति वा ], 'सुवे दमे' इति च विश्लेषेणेयमपि केवला भवति गायत्रीति कात्यायनः ॥ ॥ ❋ ॥

स्वराड् गायत्री यथा [८+९+९=२६]–

> **जोषां सवितर्यस्यं ते+हरंः शतं सवाँ अर्हति ।**
> **पाहि नों दिद्युतः पतंन्त्याः ॥** [१०.१५८.२] ॥ ❋ ॥

ननु सङ्कीर्णमेतत्– षड्विंशत्यक्षरा स्वराड्गायत्र्यपि भवति; विराडुष्णिगपि। त्रिंशदक्षरा स्वराडुष्णिगपि; विराडनुष्टुबपि। चतुस्त्रिंशदक्षरा विराड् बृहत्यपि; स्वराडनुष्टुबपि। स्यान्नाम। किं ते च्छिन्नम्? ननु निर्णयश्छिन्नः। असङ्कीर्णाय निर्णयाय किल लक्षणानि कथ्यन्ते। अत्र त्वनिर्णय एव शरणम्। न भोः। बहुलं पादेषु यच्छन्दा मन्त्रो भवति तदेव तन्मन्त्रच्छन्दो भवति । क्वचिदृषिसम्प्रदायाच्च च्छन्दांसि निर्णीयन्ते। क्वचित् सूक्तच्छन्दसा। यदि गायत्रं सूक्तम्, तन्मध्यपतितः षड्विंशदक्षरो मन्त्रोऽपि स्वराड्गायत्रीबद्धो भवति। यद्यौष्णिहम्, तदा वैराज औष्णिह इति न काऽपि क्षतिः। उदाहरणानि च कानिचनोपरिष्टात् प्रदर्श्यन्ते।

पिङ्गलनागस्त्वाह– **'आदितः सन्दिग्धे । देवतादितश्च'**[३.६१.२] इति । यत्राक्षरगणनयाऽपि इदमदो वेति सन्दिग्धे, आदितस्तत्सूक्तं यच्छन्दो भवति, स च मन्त्र आद्यचरणे यच्छन्दा भवति, तच्छन्दा एव मन्त्र इति निर्णीयेत। अपि च यद्दैवतो मन्त्रस्तच्छन्दाः स भवति । यथा त्रैष्टुभो जागतो वेति

सन्दिग्धो मन्त्रो यदि सूर्यदैवतस्तर्हि जागत इति निश्चीयते। सौरी हि जगती। यदीन्द्रदैवत्यस्तर्हि त्रैष्टुभ इति। ऐन्द्री हि त्रिष्टुप्।

एवं क्वचिदेकद्वाभ्यामक्षराभ्यां न्यूनाधिकाभ्यां भगवदुपासनाभेदोऽप्यवगम्यते। तद्यथा चतुर्विंशत्यक्षरो गायत्रीमन्त्रस्त्रयोविंशत्यक्षरः पठ्यते। अत्रेदमुपासनारहस्यम्– मन्त्रवर्णैः प्रतिपाद्याः केशवाद्याश्चतुर्विंशतिमूर्तयः। तत्र सप्तमो वर्णः क्षैप्रयंयोगात्मा पठ्यते 'ण्यम्' इति। तस्य पुनर्व्यूहेन 'णियम्' इति पाठे, तौ वर्णौ भगवतो द्वे मूर्ती, त्रिविक्रमं वामनं च, वर्णयतः। तदेवं रूपद्वयानुसन्धानार्थं व्यूह्योच्चारणम्। अथापि नेमौ रामकृष्णाविव द्वाववतारौ, किन्तु वामन एव त्रिविक्रम आसीदिति सूचयितुं मन्त्रे समूह्य पठनम्। दिङ्मात्रमिदमदर्शि। अन्यत्राप्येवमूहः करणीयः। महान्तः सन्तः पुनरेवं मन्त्रवर्णेषु प्रतिवर्णं भगवद्रूपाणि गुणबृंहितानि लोकहितायानुसन्दधति।

महतामाचार्याणां कृतिष्वपीदृशाः प्रयोगा भवन्ति। तथाह्येकविंशत्यक्षरा किल स्रग्धरा। तेन विंशत्यक्षरा निचृत्स्रग्धरा भवति। यथा महाभारततात्पर्यनिर्णये भगवत्पादप्रयोगः–

**'सेत्युक्ता मन्थराऽऽसीत् तदनु कृतवत्येव चैतत् कुकर्म'** [५.२] इति।

अत्र चतुर्थस्य नगणस्य स्थाने एकमक्षरं विलोप्य 'नु कृ' इति द्वे एवाक्षरे पठिते। ये पुनश्छन्दःपूरणाय 'तदनु च कृतवत्येव' इति पठन्ति ते वैदिकसम्प्रदायानभिज्ञाः महतां प्रयोगेषु प्रक्षेपेण कृतमहापराधा इत्युपेक्ष्याः। यथा वा तत्रैव–

**'प्रोत्थां गङ्गां स्वपादाद्धर इव गुहेनार्चितः सोऽथ तीर्त्वा'** [५.४] इति।

**'शैलेशं चित्रकूटं कतिपयदिनान्यत्र मोदन्नुवास'** [५.४ ] इति च।

भुरिगनुष्टुब् यथाऽनुव्याख्याने–

**'अनवस्थितिस्तथा च स्यात्'** [१.१.३२]

सप्तदशाक्षरा स्वराण्मालिनी यथा महाभारततात्पर्यनिर्णय एव–

'शुभमरतकवर्णो रक्तपादाब्जनेत्रा-
'धरकरनखरसनाग्रश्चक्रशङ्खाब्जरेखः'[१०.५३] इति ।

अत्र द्वितीयपादे नगणद्वयानन्तरं लघुद्वयमधिकम् । तदिदं सर्वं शोभां पुष्णाति-तरां वैदिकमूर्धन्यस्याऽचार्यस्य वचनानाम् ॥

***

प्रातःसवनदेवता वसवः । अष्टौ च ते– द्रोणः, प्राणः, ध्रुवः, अर्कः, अग्निः, दोषः, वस्तुः, विभावसुरिति । प्रतिपादमष्टाक्षरा च त्रिपदा गायत्री । तेन वसूनामियं प्रिया भवति प्रातःसवनसङ्गता । विशेषतश्च वसुप्रधानस्याग्नेः ।

माध्यन्दिनसवनदेवता रुद्राः । ते चैकादश– रैवतः, ओजः, भवः, भीमः, वामदेवः, उग्रः, वृषाकपिः, अजैकपात्, अहिर्बुध्निः, विरूपाक्षः, महादेव इति । प्रतिपादमेकादशाक्षरा त्रिष्टुप् । तेन रुद्राणामियं प्रिया भवति माध्यन्दिनसवन-सङ्गता । विशेषतः प्रधानरुद्रस्य महादेवस्य ।

सायंसवनदेवता आदित्याः । ते च द्वादश– विवस्वान्, अर्यमा, पूषा, त्वष्टा, सविता, भगः, धाता, विधाता, वरुणः, मित्रः, शक्रः, वामनश्चेति । प्रतिपादं द्वादशाक्षरा च जगती । तत इयमादित्यानां प्रिया भवति सायंसवनसङ्गता । विशेषतश्च प्रधानादित्यस्योरुक्रमस्योपेन्द्रस्य केशवादिरूपैर्द्वादशात्मनः ॥

***

अथ गायत्र्यादीनि सप्त च्छन्दांस्येव सप्ताश्वा भूत्वा सूर्यनारायणस्य रथं वहन्तीति सम्प्रदायज्ञाः । तथा ह्युक्तमस्यवामीये–

सप्त युंञ्जन्ति रथमेकंचक्रमेको अश्वो वहति सप्तनांमा[ऋ.सं.१.१६४.२] इति।

सप्तच्छन्दसां देवताश्चोक्ता ऋग्वेदे–

अग्नेर्गायत्र्यभवत् सयुग्वोष्णिहया सविता सं बभूव ।
अनुष्टुभा सोम उक्थैर्महस्वान् बृहस्पतेर्बृहती वाचमावत् ॥
विराण्मित्रावरुणयोरभिश्रीरिन्द्रस्य त्रिष्टुबिह भागो अह्नः ।
विश्वान् देवान् जगत्या विवेश तेन चाक्लृप्र ऋषयो मनुष्याः ॥
[१०.१३०.४–५] इति ।

ऐतरेयब्राह्मणे च–

**अग्निष्वा गायत्र्या सयुक् छन्दसा, सवितोष्णिहा, सोमोऽनुष्टुभा, बृहस्पतिर्बृहत्या, मित्रावरुणौ पङ्क्त्या, इन्द्रस्त्रिष्टुभा, विश्वे देवा जगत्या [३७–२] इति ।**

तथाचायं मन्त्रार्थः– 'यद् देवा देवमयजन्त' इति पूर्वमन्त्रपठितमत्राप्यनुवर्तते । आदौ विश्वसृष्ट्यर्थं यद् देवा देवं नारायणमयजन्त तस्मिन् यज्ञे अग्नेः सयुग्वा सहयोगिनी गायत्रीमानिनी स्वाहा अभवत् । एवमुष्णिग्देवतया सञ्ज्ञया भार्यया सह सविता सम्बभूव । तथा उक्थैः अनुष्टम्मयैः शस्त्रमन्त्रैः सहितया अनुष्टुब्देवतया रोहिण्या जायया सह महस्वान् तेजस्वी सोमः सम्बभूव । बृहतामपि देवानां पतेर्वायोः सहयोगिनी बृहतीमानिनी भारती वेदमानिन्यपि सती वेदवाचमावत् । विराडपराभिधायाः पङ्क्तेर्मानिन्यौ मित्रावरुणयोर्भार्ये रेवतीचर्षण्यौ भर्तारावभिश्रिते स्वभर्तृभ्यां सह सम्बभूवतुः । अह्नः यज्ञस्य मध्यन्दिनशस्त्रभागभूता त्रिष्टुब्देवता शची इन्द्रस्याभिश्रीर्भवन्ती तेन सह सम्बभूव । पूर्वोक्ताः स्वाहाद्याः शच्यन्ताः सर्वा देव्यः जगतीमानिन्यः सत्योऽग्न्यादीन् स्वपतिभूतान् आविविशुराश्रित्य तस्थुरिति ।
तथाच च्छन्दोदेवताः–

| | | |
|---|---|---|
| गायत्र्याः | – | अग्निभार्या स्वाहा । |
| उष्णिहः | – | सूर्यभार्या सञ्ज्ञा । |
| अनुष्टुभः | – | चन्द्रभार्या रोहिणी । |
| बृहत्याः | – | बृहस्पतिभार्या तारा । |

पङ्क्तेः – मित्रावरुणयोर्भार्ये रेवती चर्षणी च।

त्रिष्टुभः – इन्द्रभार्या शची।

जगत्याः – एताः सर्वा देव्यः। [स्वाहा, सञ्ज्ञा, रोहिणी, तारा, रेवती, चर्षणी,शची च]।

पिङ्गलनागस्त्वाह– **'अग्निः सविता सोमो बृहस्पतिर्मित्रावरुणाविन्द्रो विश्वे देवा देवताः'** इति।

मन्त्राक्षरार्थानवगममूलमेतत्। गायत्र्यादीनामग्न्यादिसहयोग एवोच्यते मन्त्रे। नाग्न्यादिदेवताकत्वम्। सहयोगश्च छन्दोदेवतानां पत्नीत्वेनैव स्वरसम्। तत् तन्नाऽदृत्यम्।

अपिच त्रिधा पदेषु लिङ्गानि भवन्ति। शब्दस्वाभाव्यादर्थस्वाभाव्याद् विशेष्यनिघ्नतया चेति। शब्दस्वाभाव्याद् यथा–'अपत्यम्,कळत्रम्, दाराः'। अर्थस्वाभाव्याद् यथा– 'पुत्रः, पत्नी, अयम्, इयम्'। विशेष्यनिघ्नतया यथा– 'रमणीयो बालः, रमणीया युवतिः'।

अत्र पुनर्गायत्री च्छन्द इत्यादि व्यवह्रियते। न तावच्छब्दस्वाभाव्यात्। गायत्र्यादिपदानां नामधेयत्वेऽपि गुणवाचितया नियतलिङ्गत्वासम्भवात्। गायन्तं त्रायत इति गायत्रोऽपि स्यात्, गायत्री च स्यात्, गायत्रं वा स्यात्। अत एव न विशेष्यनिघ्नतया। छन्दो हि विशेष्यम्। तेन गायत्रं छन्द इत्याद्येव साधु स्यात्।

ततश्चार्थस्वाभाव्यादेव लिङ्गव्यवस्था करणीया। ननु च्छन्दो हि पदार्थः। तेन पुनर्नपुंसकत्वमेवाऽपतितम्। न भोः। ननु भगवती भ्रान्तिर्निरन्तरं बाधते भवन्तम्। न च्छन्दांसि पदार्थः। किन्तु च्छन्दोमानिन्यो देव्यः स्वाहा-सञ्ज्ञाद्याः। तथा च गायत्रीत्यग्निजाया स्वाहोच्यते। उष्णिगिति सूर्यभार्या सञ्ज्ञोच्यते। एवमुत्तरत्रापि। तेन युक्तं गायत्रीप्रभृतीनां पदानामर्थस्वा-भाव्यात् स्त्रीलिङ्गत्वम्।

ये पुनरग्न्यादीन् छन्दोमानिनो वदन्ति तेषां पक्षे किमिति च्छन्दोनामानि नियत्या स्त्रीलिङ्गानीत्यस्य कारणं निरूपणीयं भवति । न किमपि युक्तं कारणमुत्पश्यामः । अतोऽनुत्तरमेव शरणं तेषामित्युपेक्ष्यः पिङ्गलनागादीनां पक्षः । पतिभिः सहयोगेन पत्नीनां देवतात्वमिति पक्षे न नो विरोधः ॥

**वसूनां गायत्री, रुद्राणां त्रिष्टुप्, आदित्यानां जगती, विष्णोरनुष्टुप्, वरुणस्य विराट्, यज्ञस्य पङ्क्तिः** [३.८.१] इत्यादि च तैत्तिरीयारण्यके ।

विष्णोरनुष्टुप् । अत एव षोळशिनामके यज्ञे विष्णोर्विशेषानुग्रहाय शस्त्रमन्त्राणामनुष्टुप्करणम् । चतुष्पदा गायत्र्येव हि सा याजुषी । वरुणस्य शतानन्दत्वाज्जीवेषु वरानन्दस्य वायोः प्रिया विराट् । सप्तच्छन्दस्सु मध्ये विराजत इति विराड् बृहती । छन्दसां बृहतीकरणं महाव्रतस्य शस्त्रे । यज्ञस्य इन्द्रस्य पङ्क्तिः प्रिया । शची च हि पङ्क्तिदेवतेत्युपरिष्टात् स्फुटम् ॥



सप्ताश्वभूताः सप्त च्छन्दोमानिन्य एव श्रुतिषूक्ताः । अथान्या अपि देवता भवन्ति । ताश्चोक्ता ऋग्भाष्ये भगवत्पादेन–

**'गायत्री बृहती चैव ताः सर्वा गरुडस्तथा ।**
**'ब्रह्माण्यनुष्टुबिन्द्राणी त्रिष्टुप् स्वाहेति चोच्यते ॥**

**'गायत्री जगती चैव वारुणी रोहिणी तथा ।**
**'अनुष्टुब् वृहती चैव तारा पङ्क्तिः शची तथा ॥**

**'उष्णिक् सौरी जगत्यश्च सर्वदेवस्त्रियो मताः ।**
**'विराण्मित्रावरुणयोर्भार्ये इति च कीर्तिते'** इति ॥

अयमर्थः– ताः सर्वा इति पूर्वप्रस्तुताः श्रीर्ब्रह्माणी च भारती । तास्तिस्रः गायत्र्या बृहत्याश्च मानिन्यः । गरुडश्च तथा गायत्रीबृहत्योरभिमानी । स्वाहा च गायत्रीमानिनीति श्रुतिषूच्यते । तारा च बृहतीमानिनीति च । अनुष्टुभः

ब्रह्माणी सरस्वती देवता । रोहिण्यपि अनुष्टुब्देवता । इन्द्रपत्नी शची त्रिष्टुब्देवता। शेषभार्या वारुणी च जगतीदेवता। यथा त्रिष्टुब्देवता शची तथा पङ्क्तिदेवताऽपि । उष्णिग्देवता सूर्यभार्या सञ्ज्ञा । सर्वच्छन्दोमानिन्यः देवस्त्रिय एव जगत्या देवताः । विना श्रियं ब्रह्माणं भारतीं गरुडं च । विराडपरनामधेयायाः पङ्क्तेर्मित्रावरुणयोर्भार्ये देवते । रेवती मित्रभार्या, गङ्गा चर्षणी वा वरुणभार्या । तथाहि भागवते–

**'रेवत्यां मित्र उत्सर्गमरिष्टं पिप्पलं व्यधात्'** [६.८.६] इति,

**चर्षणी वरुणस्याऽसीत् यस्यां जातो भृगुः पुनः'**[६.८.४] इति च ।

तथाचायं देवताक्रमः–

| | | |
|---|---|---|
| १. गायत्री | – | श्रीः, सरस्वती, भारती, गरुडः, स्वाहा च । |
| २. उष्णिक् | – | सञ्ज्ञा । |
| ३. अनुष्टुप् | – | सरस्वती, रोहिणी च । |
| ४. बृहती | – | श्रीः, सरस्वती, भारती, गरुडः, तारा च । |
| ५. पङ्क्तिः | – | शची, रेवती, चर्षणी च । |
| ६. त्रिष्टुप् | – | शची । |
| ७. जगती | – | वारुणी,सर्वदेवस्त्रियश्च [स्वाहा, सञ्ज्ञा,रोहिणी, तारा, रेवती, चर्षणी, शची च] । |



सप्तानामेषां छन्दसां षड्जादयः सप्त स्वरा भवन्ति यथासङ्ख्यम् । कोऽर्थः? नह्येकेनैव स्वरेण कोऽपि मन्त्रः शक्यं शंसितुम् । न भोः । अविदित्वा प्राचामाशयमाक्षिपसि । प्रत्येकं छन्दसामेकैकं स्थायिनं स्वरं किल तेऽभिप्रेयुः । तद् यथा षड्जस्थायिश्रुतौ गायत्री गातव्येत्यादि । आ षड्जादा निषादमारोह इत्यन्ये ।

भगवतो ब्रह्मणश्च त्वगादिष्वेताः सप्त च्छन्दोमानिन्यः संश्रिता इति चैतरेय्यामुपनिषदि–

**तस्योष्णिग् लोमानि, त्वग् गायत्री, त्रिष्टुम्मांसम्, अनुष्टुप् स्नावानि, अस्थि जगती, पङ्क्तिर्मज्जा, प्राणो वृहती । स च्छन्दोभिश्छन्नः । यच्छन्दोभिश्छन्नस्तस्माच्छन्दांसीत्याचक्षते । छादयन्ति ह वा एनं छन्दांसि पापात् कर्मणो यस्याङ्कस्याश्चिद् दिशि कामयते य एवमेतच्छन्दसां छन्दस्त्वं वेद** [१.६.४.१६] इति ।

भगवतो मुक्तब्रह्मणश्च चिन्मयान्येव त्वगादीनि मन्तव्यानि । लोमानीति लोमाधारं चर्म च । चर्मण आन्तरो भागस्त्वक् । स्नावानि स्नायवः । प्राण इति मध्यदेहः । एवं त्वगादिष्वाश्रिताश्छन्दोमानिन्यः स्वाहाद्या देवता इति ।

अत एव च्छन्दांसि । छादयन्ति भगवदङ्गानि कञ्चुकमिव देहभागमिति । छन्दोविज्ञानिनं छादयति पापात् कर्मणः, यथा पापं कर्म ज्ञानिनमाक्रम्य न पराजयेतेति ।

तथा मन्त्रेषु निगूढं भगवत्तत्वमन्तरेव पिधाय च्छादयन्ति, न प्रकटमाविष्कुर्वन्ति, सम्पुट इव साळग्रामसमुदायमिति च तानि च्छन्दांस्युच्यन्ते । उक्तं हि–

**उ॒त त्व॒ः पश्य॒न्न द॑दर्श॒ वाच॑मु॒त त्व॑ः शृ॒ण्वन्न शृ॑णोत्येनाम् ।**
**उ॒तो त्व॑स्मै त॒न्व॑१॒ वि स॑स्रे जा॒येव॒ पत्य॑ उश॒ती सु॒वासा॑ः ॥**

[ऋ.सं.१०.७१.४] इति ।

छन्दयन्तीति छन्दांसीत्यपरे । समानोऽर्थः । 'छदि संवरणे' इति हि धातुपारायणिकाः । **'छन्दतीति च्छन्दः'** इति क्षीरस्वामी । छन्दतिरयमर्चनकर्मा निघण्टौ पठ्यते । स एव च निर्वचनान्तरमप्याह– **'छन्दयति आह्लादयत इति च्छन्दः'** इति । एवं स्वरसनिर्वचने स्थितेऽपि केचिदन्यथा निर्वदन्ति । तथाहि जयदेवकृतच्छन्दःसूत्रविवृतौ हर्षटः–**'चन्दति ह्लादं करोति दीप्यते वेति च्छन्दः'** इति । वैयाकरणा अप्येनमाशीर्वदन्ति–**'चन्देरादेश्च च्छः'**[९.७८] इति दशपादिका । अथाप्येतन्न वेदसम्प्रदायविदां चेतश्चमत्करोति ।

तथाचायमनुसन्धानक्रमः–

| छन्दः | स्वरः | भगवदङ्गम् |
|---|---|---|
| गायत्री | स [षड्जः] | त्वक् |
| उष्णिक् | रि [ऋषभः] | लोमानि |
| अनुष्टुप् | ग [गान्धारः] | स्नावानि |
| बृहती | म [मध्यमः] | प्राणः |
| पङ्क्तिः | प [पञ्चमः] | मज्जा |
| त्रिष्टुप् | ध [धैवतः] | मांसम् |
| जगती | नि [निषादः] | अस्थि |

गायत्र्याद्यभिमानिन्य एव षड्जादिमानिन्योऽपि । अस्मच्छरीरे लोमादिमानिन्योऽपि ।

एतेन रोगाणां स्वरचिकित्साऽपि भगवत्या श्रुत्या कृपया सूचिता । त्वगादिषु यत्र रोगमूलं दृश्यते तत्सम्बद्धेन च्छन्दसा, तत्सम्बद्धेन च स्थायिस्वरेण मन्त्राणां शंसने तत्तद्रोगशान्तिर्भवतीति । देवतासाम्यात् । यथा हृदयरोगोपशमाय मध्यमस्वरे स्थायिनि बृहतीमन्त्रान् शंसेत् । सङ्गीतादिष्वप्ययमेव न्यायः ।

एतेन च्छन्दश्चिन्तामेतां पुनः काकदन्तपरीक्षासदृक्षां प्रवदन्तो निरस्ताः । सप्तस्वरनियतिरोगनिदानादीनां बहूनां फलानामुक्तत्वात् । अपि च च्छन्द इति न वर्णवृन्दमात्रम् । छन्दोमानिन्यश्छन्दांस्युच्यन्ते । यच्छन्दो यदभिमानिकं तां देवतां स्मृत्वा तच्छन्दः पठनीयम् । मम वाग्दोषेण मा नाम सूक्तमिदं दुरुक्तं भूदिति । मा नाम स्वरवर्णादिकमपष्ठु पाठीति । छन्दोमानिन्यो देव्यो मम वाचि निषक्ताः शुद्धामृचं वाचयन्त्विति । छन्दःस्मरणे मुखं हि स्पर्शस्थानम् । तथाह्यृषय आमनन्ति– **यो हवा अविदितार्षच्छन्दोदैवतब्राह्मणेन मन्त्रेण यजति**

याजयति वाऽध्यापयति वा स्थाणुं वर्च्छति, गर्ते वा पद्यते, प्र वा मीयते, पापीयान् भवति, यातयामान्यस्य च्छन्दांसि भवन्ति– इति ।

***

सामान्यतश्चतुष्पदा ऋचः । गायत्री त्रिपदा । चतुष्पदामपि पठन्ति । सम्प्रति तु वेदेषु नोपलभ्यते । उष्णिक् च प्रायस्त्रिपदा । क्वचिदेकपदानि द्विपदानि त्रिपदानि पञ्चपदानि षळादिपदानि च च्छन्दांसि भवन्ति ।

तत्र चतस्र एकपदा गायत्र्य आश्वलायनेन शाखान्तरात् सङ्गृह्य पठिताः । यथा–

१. इन्द्रो॒ विश्व॑स्य॒ गोप॑तिः ।

२. इन्द्रो॒ विश्व॑स्य॒ भूप॑तिः ।

३. इन्द्रो॒ विश्व॑स्य चेतति ।

४. इन्द्रो॒ विश्व॑स्य राजति । [आश्व.श्रौ.सू.८.२.२१] ॥*॥

पञ्च पुनरेकपदा विराजो भवन्ति । वस्तुतस्तु चतस्र एव विराजः । एका पुनर्द्विः पठितेति पञ्च–

१. असि॑क्न्यां॒ यज॑मानो॒ न होता॑ । [४.१७.१५]

२. सिष॑क्तु न ऊर्ज॒व्य॑स्य पु॒ष्टेः । [५.४१.२०]

३. उ॒रौ दे॑वा अनिबा॒धे स्या॑म । [५.४२.१७]

४. उ॒रौ दे॑वा अनिबा॒धे स्या॑म । [५.४३.१६]

५. भ॒द्रं नो॒ अपि॑ वातय॒ मनः॑ । [१०.२०.१]

पञ्चापि दशिनो विराजः । एकादशिन इत्यन्ये । तदा 'असिक्नियाम्' इति, 'ऊर्जवियस्य' इति, 'सियाम' इति, 'भदूरम्' इति च व्यूहेनाक्षरपूर्तिः । व्यूहे त्वियमेकपदा त्रिष्टुबपि स्यात् । अतो दशाक्षरत्वमेव वरमिति भाति ॥*॥

आ वां सु॒म्ने वरि॑मन् त्सू॒रिभिः॑ ष्याम् । [६.६३.११]

इयमेकपदा त्रिष्टुबेका ॥ ॥*॥

द्विपदा गायत्र्यस्तिस्रः पठिताः । यथा–

१. पवस्व सोम मन्दयन् + इन्द्राय मधुमत्तमः ।

२. असृग्रन् देववीतये + वाजयन्तो रथा इव ।

३. ते सुतासो मदिन्तमाः + शुक्रा वायुमसृक्षत । [९.६७.१६–१८]

इमास्तिस्रः पावमान्य ऋचो गायत्रीगणमध्यपठिता इति द्विपदा गायत्रीरामनन्ति । अनुष्टुब्गणमध्ये यद्यभविष्यन् द्विपदा अनुष्टुभोऽपठिष्यन्त । इमां 'नित्यद्विपदां' गायत्रीमाह कात्यायनः ॥ ॥ ❊ ॥

विविधा भवन्ति द्विपदा विराजः । कानिचन विप्रतिपन्नान्युदाहरणस्थानानि विमृशामः ।

पश्वा न तायुं गुहा चतन्तम् + नमो युजानं नमो वहन्तम् ॥ [१.६५.१]

इत्याद्यं दशर्चं सूक्तं द्वैपदमिति कात्यायनः । **'विंशतिका द्विपदा विराजः'** इति तेनैव व्याख्यानाद् द्विपदा विराज इत्यायातम् । एवमुत्तराणि च पञ्च सूक्तानि । चत्वारि दशर्चानि । अन्त्यमेकादशर्चम् ।

पिङ्गलनागस्तु सूक्तान्येतानि द्वैपदानि न मन्यते । ता एताश्चतुष्पदा अक्षरपङ्क्तीर्मन्यते । **'अक्षरपङ्क्तिः पञ्चकाश्चत्वारः'** इति हि तद्वचनम् । तथाचैवं पदविभागः–

पश्वा न तायुं + गुहा चतन्तम् + नमो युजानं + नमो वहन्तम् ॥ ❊ ॥

अन्यत्रापि दृश्यते–

अग्ने त्वं नो अन्तम उत + त्राता शिवो भवा वरूथ्यः ॥ [५.२४.१]

अत्रापि चतुर्मन्त्रे सूक्ते द्वैपदं छन्द इत्याह कात्यायनः । द्विपदा विराळिति सम्प्रदायज्ञाः । पक्षान्तरे त्वियं द्विपदाऽनुष्टुप् । तथाहि पिङ्गलनागः–**'तृतीयं द्विपाज्जागतगायत्राभ्याम्'** [१२+८] इति । तृतीयं छन्दः, अनुष्टुबित्यर्थः । तथाहि तत्पक्षे समग्रे सूक्ते पादविभागः–

अग्ने त्वं नो अन्तम उत त्राता + शिवो भवा वरूथ्यः ॥
वसुरग्निर्वसुश्रवा अच्छा नक्षि + द्युमत्तमं रयिं दाः ॥
स नो बोधि श्रुधी हवम् + उरुष्या णो अघायतः समस्मात् ॥
तं त्वा शोचिष्ठ दीदिवः + सुम्नाय नूनमीमहे सखिभ्यः ॥ [५.२४.१–४]

अयमत्र विशेषः । आद्ययोर्मन्त्रयोः पूर्वः पादो जागतः, द्वितीयो गायत्रः । अन्त्ययोर्द्वयोः पूर्वो गायत्रो द्वितीयो जागत इति ।

अथाऽद्ययोरपि व्यत्ययेन स्यात्–

अग्ने त्वं नो अन्तमः + उत त्राता शिवो भवा वरूथ्यः ॥
वसुरग्निर्वसुश्रवाः + अच्छा नक्षि द्युमत्तमं रयिं दाः ॥

असङ्कीर्णाया द्विपदाया विराजस्तूदाहरणान्तरं देयम् । यथा–

वि द्वेषांसीनुहि वर्धयेळाम् + मदेम शतहिमाः सुवीराः ॥
[६.१०.७] ॥ * ॥

सम्प्रति परःशतं द्विपदा विराजः पठन्ति वैदिकाः [१३९] । वस्तुतस्तु नैताः सर्वा विराजः । तासु काश्चनाक्षरपङ्क्तयः । काश्चन द्विपदा अनुष्टुभः । तथा चेयं समग्रा व्यवस्था–

१. अक्षरपङ्क्तिः [५+५+५+५=२०] ८२ऋचः । [१.६५.१–१०; ६६.१–१०; ६७.१–१०; ६८.१–१०; ६९.१–१०; ७०.१–११; ९.१०९.१–२१]

२. द्विपदाऽनुष्टुप् [१२+८; अथवा ८+१२=२०]२४ऋचः । [५.२४.१–४; ७.३२.३; ८.१९.२७; २९.१–१०; ४६.३०; ९.१०७.३, १६; १०९.२२; १०. १७२.१–४]

३. द्विपदा विराट् [१०+१०=२०] ३३ ऋचः ।[६.१०.७; ७.३४.१–२१; ५६.१–११]

त्रीणि सङ्गत्य [८२+२४+३३=] १३९ ऋचो भवन्ति ॥ ॥ * ॥

सप्तममण्डल एकं सूक्तम् [१७], दशममण्डले चैकम् [१५७] इति समग्रं सूक्तद्वयं द्वैपदं त्रैष्टुभम्। आहत्य द्वादश ऋचः [७+५]। अन्ये च द्वे द्वे ऋचौ द्विपदायां त्रिष्टुभि पठ्येते। तत्रैका–

**अया वाजं देवहितं सनेम + मदेम शतहिमाः सुवीराः ॥ [६.१७.१५]**

यद्यप्यत्र द्वितीयश्चरणो दशाक्षर इति इयमेकाक्षराधिका द्विपदा विराडपि स्यात्। अथापि समस्तस्य सूक्तस्य त्रैष्टुभत्वादियमेकाक्षरन्यूना द्विपदा त्रिष्टुबेवेति निर्णयः ॥ ॥ * ॥

अन्या त्वसन्दिग्धा द्विपदा त्रिष्टुबेव। यथा [११+११]–

**महि राधो विश्वजन्यं दधानान् + भरद्वाजान् त्सार्ञ्जयो अभ्ययष्ट ॥**
[६.४७.२५]।

एवमाहत्य चतुर्दश द्विपदास्त्रिष्टुभः ॥ ॥ * ॥

द्विपदायां जगत्यामेकैव ऋक् पठ्यते। यथा [१२+१२]–

**स नो वाजेष्ववितो पुरूवसुः + पुरःस्थाता मघवा वृत्रहा भुवत् ॥**
[८.४६.१३]

अत्र 'वाजेषु+अविता' इत्यक्षरपूर्तिः ॥ ॥ * ॥

पदपङ्क्तिः पञ्चपदा भवति। महापदपङ्क्तिः षट्पदा। सप्ताष्टपदान्यपि च्छन्दासि भवन्ति। तच्च तत्तत्प्रकरणे वक्ष्यामः।

***

गायत्र्यादीनि जगत्यन्तानि सप्त प्रधानानि छन्दांसीत्युक्तम्। ततः पूर्वतनानि पञ्च, पाश्चात्त्यानि चतुर्दशेति, आ चतुरक्षरात् आ चतुरुत्तरशताक्षरं षड्विंशतिश्च्छन्दांसि छान्दसाः परिगणयन्ति। तथाहि–

**प्रथमपञ्चकम् [अवाक्छन्दांसि]**

| | अक्षराणि | छन्दोनाम | नामान्तरम् |
|---|---|---|---|
| १. | ४ | मा | कृतिः, उक्ता |
| २. | ८ | प्रमा | प्रकृतिः, अत्युक्ता |
| ३. | १२ | प्रतिमा | सङ्कृतिः, मध्या |
| ४. | १६ | उपमा | अभिकृतिः, प्रतिष्ठा |
| ५. | २० | समा [सम्मा] | आकृतिः [उत्कृतिः], सुप्रतिष्ठा |

**प्रथमसप्तकम् [प्रधानच्छन्दांसि]**

| | | | |
|---|---|---|---|
| ६. | २४ | गायत्री | |
| ७. | २८ | उष्णिक् | |
| ८. | ३२ | अनुष्टुप् | |
| ९. | ३६ | बृहती | |
| १०. | ४० | पङ्क्तिः | विराट् |
| ११. | ४४ | त्रिष्टुप् | |
| १२. | ४८ | जगती | |

**द्वितीयसप्तकम् [अतिच्छन्दांसिः१]**

| | | | |
|---|---|---|---|
| १३. | ५२ | अतिजगती | विधृतिः |
| १४. | ५६ | शक्वरी | |
| १५. | ६० | अतिशक्वरी | अष्टिः |
| १६. | ६४ | अष्टिः | अत्यष्टिः |
| १७. | ६८ | अत्यष्टिः | संहता [मंहना] |

| | अक्षराणि | छन्दोनाम | नामान्तरम् |
|---|---|---|---|
| १८. | ७२ | धृतिः | सरित् |
| १९. | ७६ | अतिधृतिः | सम्पा |

**चरमसप्तकम् [अतिच्छन्दांसिः२]**

| | | | |
|---|---|---|---|
| २०. | ८० | कृतिः | सिन्धुः |
| २१. | ८४ | प्रकृतिः | सलिलम् |
| २२. | ८८ | आकृतिः | अम्भः |
| २३. | ९२ | विकृतिः | गगनम् |
| २४. | ९६ | सङ्कृतिः | अर्णवः |
| २५. | १०० | अभिकृतिः | आपः |
| २६. | १०४ | उत्कृतिः | समुद्रः |

तत्र प्रथमपञ्चकस्य लक्षणमेव केवलं पठन्ति । नोदाहरणमुपलभ्यते । केचिद् शाखान्तरेषु निदर्शनमन्वेषयन्ति ।

तथाहि तत्रैकाक्षरा चतुष्पदा दुर्लभनिदर्शना । केचित्तु पादभेदमविवक्षित्वा चतुरक्षरं मन्त्रमेव चतुरक्षराया माया उदाहरणं मन्यन्ते ।

तद् यथा– पृदाकवः ॥ [अथ.२०.१२९.९]

द्व्यक्षरा प्रमा यथा– हुतꣳ हविः । मधुं हविः ॥ [तै.आ.४.१०.५]

यथा वा द्विपदा– परिं त्रयः ॥ [अथ.सं.२०.१२९.८] ।

यथा वा– सत्यꣳ रुग्मः ॥ [तै.आ.१.२६.१]

त्र्यक्षरा प्रतिमा यथा–धाता चार्यमा चं । अꣳशश्च भगश्च ॥ [तै.आ.१.१४.३]

यथा वा द्विपदा– सुयांमंश्चाक्षुष ॥ [अथ.सं.१६.(७)७]

यथा वा– अमृतं पुरुषः॥ [तै.आ.१.२५.१]

चतुरक्षरा उपमा यथा– आप्लवस्व प्रप्लवस्व । आण्डी भंव ज मा मुहुः ॥ [तै.आ.१.२७.१]

यथा वा द्विपदा– तासामेका हरिक्निका ॥ [अथ.सं.२०.१२९.३]

यथा वा– लोकं पृंण च्छिद्रं पृंण ॥ [तै.आ.१.२५.२] ।

त्रिपदा यथा– असावेहि । असावेहि । असावेहि ॥[तै.आ.४.८.१]

पञ्चाक्षरा समा यथा–

गर्भो देवानांम् । पिता मंतीनाम् । पतिः प्रजानांम् । मतिः कवीनाम् ॥ [तै.आ.४.७.४]

यथा वा द्विपदा– ओदन एवौदनं प्राशीत् ॥ [अथ.सं.११.३.३१]



अथ च्छन्दसां प्रधानसप्तकं यथायथं परीक्षामहे।

## गायत्री

अथातो गायत्रीं व्याख्यास्यामः। सा च त्रिपदा प्रायेण पठ्यते। कस्माद् गायत्री? यस्माद् गायन्तं त्रायते। स्वयं भगवद्गुणान् गायति, गायन्तं त्रायते चेति वा। अथ बहुधा गायत्रीभेदा भवन्ति। विशिष्य च चतुर्दशधा–

**१. केवला गायत्री**

आद्याऽर्षी गायत्री। अष्टाक्षरैस्त्रिभिः पादैश्चतुर्विंशत्यक्षरा(८+८+८=२४)।

यथा– **अग्निमीळे पुरोहितम् + यज्ञस्य देवमृत्विजम्।**
**होतारं रत्नधातमम्॥** [ऋ.१.१.१.]

यथा वा– **तत् सवितुर्वरेण्यम् + भर्गो देवस्य धीमहि।**
**धियो यो नः प्रचोदयात्॥** [३.६२.१०]

अत्र 'वरेणियम्' इति क्षैप्रव्यूहेनाक्षरपूर्तिः॥ ॥ * ॥

**२. पदपङ्क्तिः**

१. पञ्चाक्षराश्चत्वारः पादाः, षळक्षरश्चैक इति षड्विंशत्यक्षरा पञ्चपदा, अत एव पदपङ्क्तिर्नाम गायत्री [५+५+५+५+६=२६]। यथा–

**आभिष्टे अद्य + गीर्भिर्गृणन्तः + अग्ने दाशेम।**
**प्र ते दिवो न + स्तनयन्ति शुष्माः॥** [४.१०.४]

इयं पदपङ्क्तिर्द्व्यक्षराधिकेति स्वराड् गायत्री, द्व्यक्षरोना उष्णिग् वेति पक्षान्तरम्।

यद्यपीदमुदाहरणमयुक्तमिव भाति । पञ्चमचरणे पादादेर्निघातस्वरस्य स्वरसतोऽसम्भवात् । तेन कुप्यति स्वरः । अथाप्यनियताः स्वरा भवन्ति । तद्यथा–'ऋतेनं मित्रावरुणावृतावृधावृतस्पृशा' [ऋ.सं.१.२.८] इति । अत्र हि न्यहन्यत द्वितीयचरणः । तद्वदत्रापि स्यादिति समाधेयम् । यथा वा–

अधा ह्यंग्ने + क्रतोर्भद्रस्यं + दक्षंस्य साधोः ।
रथीर्ऋतस्य + बृहतो बभूथं ॥ [४.१०.२]

अत्र प्रथमचरणे 'हि+अग्ने' इति व्यूहेन पञ्चाक्षरता ।

२. अथ तत्रैकः पादश्चतुरक्षर इत्यपरा पञ्चविंशत्यक्षरा पदपङ्क्तिः । (५+५+५+४+६=२५) । यथा–

अग्ने तमद्य + अश्वं न स्तोमैः + क्रतुं न भद्रम् + हृदिस्पृशंम् ।
ऋध्यामा त ओहैः ॥ [४.१०.१]

इयमेकाक्षराधिकेति भुरिग् गायत्री । अक्षराणां न्यूनाधिकभावेऽपि गायत्री-भेदत्वात् स्वाहैव देवता । एवमुत्तरत्रापि ।

३. अथ पञ्चभिरपि पञ्चाक्षरैरपरां पदपङ्क्तिं पिङ्गलनागो मन्यते [५+५+५+५+५=२५] । तस्या इदमुदाहरणमाहुः प्राञ्चः–

घृतं न पूतम् + तनूररेपाः + शुचि हिरण्यंम् ।
तत् ते रुग्मो न + रोचत स्वधावः ॥ [४.१०.६]

चिन्त्यमेतत् । कथञ्चित् स्वरविरोधपरिहारेऽपि पञ्चमचरणस्य षळक्षरता कथमपोद्यते? एहि मन्ये, अक्षरमुख, एकमक्षरं भक्षयसि! अतो मृग्यमुदाहरणान्तरं भवति ॥ ॥ * ॥

### ३. उष्णिग्गर्भा

षट्-सप्तैकादशाक्षरा उष्णिग्गर्भा गायत्री [६+७+११=२४] । यथा–

ता मे अश्व्यानाम् + हरीणां नितोशना ।
उतो नु कृत्व्यानां नृवाहसा ॥ [८.२५.२३]

अत्र 'अशिवयानाम्' इति व्यूहेन प्रथमचरणे षळक्षरता । 'कृत्वियानाम्' इति तृतीयपाद एकादशाक्षरता ॥ ॥ * ॥

## ४. पादनिचृत्

त्रयः सप्ताक्षराः पादनिचृत् [७+७+७=२१] । यथा–

युवाकु हि शचीनाम् + युवाकु सुमतीनाम् ।
भूयाम वाजदाव्नाम् ॥ [१.१७.४]

विराड्गायत्रीमेतां केचिदाक्षते ॥ ॥ * ॥

## ५. अतिनिचृत्

मध्यमः षळक्षरश्चेदतिनिचृद् गायत्री [७+६+७=२०] । यथा–

पुरूतमं पुरूणाम् + स्तोतॄणां विवाचि ।
वाजेभिर्वाजयताम् ॥ [६.४५.२९] ॥ * ॥

## ६. वर्धमाना

षट्-सप्ताष्टाक्षरैः पादैर्वर्धमाना गायत्री [६+७+८=२१] यथा–

त्वमग्ने यज्ञानाम् + होता विश्वेषां हितः ।
देवेभिर्मानुषे जने ॥ [६.१६.१] ॥ * ॥

अन्ये सङ्ख्यावन्तः पुनरर्थानुगुण्येनान्यथा पादविभागं मन्यन्ते–

त्वमग्ने यज्ञानां होता + विश्वेषां हितः ।

तदा आद्यन्तावष्टाक्षरौ, षळक्षरः पञ्चाक्षरो वा मध्यमः पाद इति पिपीलिकामध्येयं गायत्री ॥ ॥ * ॥

## ७. प्रतिष्ठा

वर्धमानैव विपरीता चेत् प्रतिष्ठा गायत्री [८+७+६=२१] । यथा–

आर्पः पृणीत भेषजम् + वरूथं तन्वेऽ मम ।
ज्योक् च सूर्यं दृशे ॥ [१.२३.२१] ॥ ❋ ॥

## ८. ह्रसीयसी

१. द्वाभ्यां षळक्षराभ्यामेकेन च सप्ताक्षरेण पादेन ह्रसीयसी गायत्री [६+६+७=१९] । यथा–

प्रेष्ठमु प्रियाणाम् + स्तुह्यासावातिथिम् ।
अग्निं रथानां यमम् ॥ [८.१०३.१०]

इमामप्यतिनिचृतं केचिदाक्षते ॥ ॥ ❋ ॥

२. ह्रसीयस्याः पादानां विपर्ययेण चापरो ह्रसीयसीप्रभेदः कात्यायनसम्मतः [७+६+६=१९] । तथाहि तद्वचनम्– 'इन्द्रो ह्रसीयसी वा' इति । यथा–

इन्द्रः सहस्रदाव्नाम् + वरुणः शंस्यानाम् ।
क्रतुर्भवत्युक्थ्यः ॥ [१.१७.५]

अत्र 'शंसियानाम्' इति, 'भवति +उक्थियः' इति च क्षैप्रसंयोगव्यूहे विवक्षा-भेदेन पादनिचृद् वा, केवला वा गायत्र्येवेयम् । समूहे तु ह्रसीयसी । अत एव 'ह्रसीयसी वा' इत्याह कात्यायनः ॥ ॥ ❋ ॥

## ९. यवमध्या

१. आद्यन्तयोः सप्ताक्षरा, मध्ये दशाक्षरा यवमध्या गायत्री [७+१०+७=२४] यवस्येव मध्यमस्याः श्वयदिति । यथा–

स सुन्वे यो वसूनाम् + यो रायामानेता य इळानाम् ।
सोमो यः सुक्षितीनाम् ॥ [९.१०८.१३]

२. अपरे यवमध्यायाः प्रभेदान्तरमप्याहुः– आद्यन्तयोः सप्ताक्षरा मध्येऽष्टाक्षरा च यवमध्येति(७+८+७=२२) । यथा–

गन्तारा हि स्थोऽवसे + हवं विप्रस्य मावतः ।
धर्तारा चर्षणीनाम् ॥ [१.१७.२]

इयं यवमध्या विराड् गायत्री । 'स्थो+अवसे' इत्येकाक्षरीभावव्यूहेन, 'चक्र-षणीनाम्' इति क्षैप्रसंयोगव्यूहेन च चतुर्विंशत्यक्षरा शुद्धा गायत्र्येवेयमित्यभिप्रयन् कात्यायनो नास्या यवमध्यात्वमनुमन्यते ॥ ॥ * ॥

**१०. पिपीलिकामध्या**

यवमध्यामिव पिपीलिकामध्यामप्यन्ये मन्यन्ते – आद्यन्तावष्टाक्षरौ मध्यमश्चेत् सप्ताक्षरः सा पिपीलिकामध्या गायत्री, पिपीलिकेव मध्यतः कृशेतीति [८+७+८=२३] । यथा–

**वार्य उक्थेभिर्जरन्ते + त्वामच्छा जरितारः ।**
**सुतसोमा अहर्विदः ॥** [१.२.२.]

इयं पिपीलिकामध्या निचृद् गायत्री । 'तुवामच्छा' इति व्यूहेन केवला गायत्र्येवेयमिति कात्यायनः ।

यथा वा–

**इदं विष्णुर्वि चक्रमे + त्रेधा नि दधे पदम् ।**
**समूळ्हमस्य पांसुरे ॥** [१.२२.१७]

अस्या अपि यथाकथाच केवलगायत्रीत्वमेव मन्यन्ते पूर्वे कात्यायनादयः । चतुर्विंशत्यक्षरत्वमनपहायैव गायत्र्या यवमध्यात्वं पिपीलिकामध्यात्वं वा वक्तव्यमिति मन्यमाना बहवश्छन्दोविदो नैतान् प्रभेदाननुमन्यन्ते । वस्तुतस्तु त्रिषु पादेषु यत्राऽद्यन्तयोरधिकाक्षरत्वं मध्यस्य चाल्पाक्षरत्वं तत् पिपीलिका-मध्यं छन्दो भवति । यत्र मध्यस्याधिकाक्षरत्वमाद्यन्तयोरल्पाक्षरत्वं तद्यवमध्यं छन्द इति सार्वत्रिकोऽयं नियमस्त्रिपदासु ॥ ॥ * ॥

पिङ्गलनागस्तु अतिपादनिचृत्, नागी, वाराही चेति त्रीनन्यान् गायत्रीप्रभेदानाह– **'षट्कसप्तकयोर्मध्येऽष्टावतिपादनिचृत्** (६+८+७=२१) । **द्वौ नवकौ षट्कश्च नागी** (९+९+६=२४)। **विपरीता वाराही'** (६+९+९=२४) इति । षळक्षरैश्चतुश्चरणां चापरां गायत्रीमाह (६+६+६+६=२४) ।

### ११. अतिपादनिचृत्

तत्रातिपादनिचृद् गायत्री [६+८+७=२१]यथा–

तं मर्ता अमर्त्यं + घृतेनाग्निं सपर्यत ।
अदाभ्यं गृहपतिम् ॥ [१०.११८.६]

कात्यायनस्तु तामेतां केवलां गायत्रीं मन्यते, 'मऋता' इति, 'अमर्तियम्' इति, 'अदाभियम्' इति च व्यूहेन ॥ ॥ * ॥

### १२. नागी

नागी गायत्री [९+९+६=२४] यथा–

अग्ने तमद्याश्वं न स्तोमैः + क्रतुं न भद्रं हृदिस्पृशम् ।
ऋध्यमा त ओहैः ॥ [४.१०.१]

इयमेव विवक्षाभेदेन पदपङ्क्तिर्गायत्री च भवतीत्युक्तम् ॥ ॥ * ॥

### १३. वाराही

वारही गायत्री [६+९+९=२४] यथा–

एता देवसेनाः + सूर्यकेतवः सचेतसः ।
अमित्रान् नो जयन्तु स्वाहा ॥ [अथ.सं.५.२१.१२] ॥ * ॥

### १४. समपदा

चतुश्चरणाया गायत्र्याः प्रचलिते वैदिकवाङ्मये नोदाहरणमुपलभ्यते । अत एव कात्यायनादिभिः सा न लक्षिता । प्राचीनास्तु एकामीदृशीं गायत्रीमुद्धरन्ति । यथा–

इन्द्रः शचीपतिः + बलेन वीळितः ।
दुश्च्यवनो वृषा + समत्सु सासहिः ॥

क्वत्यमिदमित्यन्वेष्टव्यं भवति ।

अन्येऽपि बहवो गायत्रीप्रभेदा अथर्वादिषु पठ्यमानाः शक्यं निर्देष्टुम् । विस्तर-भयादेवोपरम्यते ॥ ॥ * ॥

***

# उष्णिक्

अथात उष्णिहं व्याख्यास्यामः। अन्ततः सप्ताक्षरा सञ्ज्ञादैवत्या; सप्ताश्वस्य सञ्ज्ञापतेर्विवस्वतः प्रिया चेयम्।

अथ कस्मादुष्णिक्? दोषजातमोषतीत्युष्णिक्। उष दाहे। उष्णं भानौ भातं भगवन्तं स्मरतीति वा। गायत्र्या उपरि चतुर्भिरक्षरैरुष्णीषवतीवेत्युष्णिगिति तु यास्कः।

अष्टावुष्णिहः प्रभेदानाह कात्यायनः। त्रिपदाः षट्। चतुष्पदे द्वे।

### १. उष्णिक् [परोष्णिक्]

अष्टाक्षराभ्यां द्वाभ्यां पादाभ्यामन्त्येन च द्वादशाक्षरेण त्रिपदोष्णिक् (८+८+१२=२८)। यथा–

> **अग्ने वाजस्य गोमतः + ईशानः सहसो यहो।**
> **अस्मे धेहि जातवेदो महि श्रवः॥ [१.७९.४]**

इमां परोष्णिहमाह पिङ्गलनागः– '**परः परोष्णिक्**' इति॥ ॥ * ॥

### २. पुरउष्णिक्

आद्यश्चेद् द्वादशाक्षरः पुरउष्णिक् [१२+८+८=२८]। यथा–

> **अप्स्वरन्तरमृतमप्सु भेषजम् + अपामुत प्रशस्तये।**
> **देवा भवत वाजिनः॥ [१.२३.१९]**

अत्र 'अप्सु+अन्तः' इति व्यूहेनाक्षरपूर्तिः॥ ॥ * ॥

### ३. ककुप्

मध्यमश्चेत् ककुबुष्णिक्, आद्यन्तयोरष्टाक्षराणि, अष्टौ ककुभ इवाऽवृणत इति [८+१२+८=२८]। यथा–

> **युष्माकं स्मा रथाँ अनु + मुदे दधे मरुतो जीरदानवः।**
> **वृष्टी द्यावो यतीरिव॥ [५.५३.५]** ॥ * ॥

### ४. ककुम्न्यङ्कुशिराः

आद्य एकादशाक्षरः। द्वितीयो द्वादशाक्षरः। चतुरक्षरस्तृतीयः। सेयं ककुम्न्यङ्कुशिरा नामोष्णिक् [११+१२+४=२७]। निचृदुष्णिक् चेयम्। कस्मात् ककुम्न्यङ्कुशिराः? अन्ते चतस्रः ककुभ इव चतुरक्षरा। न्यङ्कुरिति मृगविशेषः। न्यङ्कुरिव मुखे क्षीणा [एकादशाक्षरा], पश्चार्धे विपुला [द्वादशाक्षरा] चेति। यथा–

दुदी रेक्णंस्तन्वे॑ ददिर्वसुं + दुदिर्वाजेषु पुरुहूत वाजिनंम्।
नूनमर्थ॥ [८.४६.१५]

अत्र 'तनुवे' इति व्यूहेनाक्षरपूर्तिः॥ ॥ ✻ ॥

### ५. तनुशिराः

द्वावेकादशाक्षरौ, अन्त्यः षळक्षरश्चेत् तनुशिरा नामोष्णिक् [११+११+६=२८] उपरि शिरसि तन्वीति। यथा–

प्र या घोषे भृगंवाणे न शोभे॑ + यया॑ वाचा यजंति पज्रियो वांम्।
प्रैषयुर्न विद्वान्॥ [१.१२०.५] ॥ ✻ ॥

### ६. पिपीलिकामध्या

मध्यश्चेत् षळक्षरः पिपीलिकामध्योष्णिक् [११+६+११=२८]। यथा–

हरी यस्यं सुयुजा विव्रंता वेः + अर्वन्तानु शेपा॑।
उभा रजी न केशिना पतिर्दन्॥ [१०.१०५.२]

इति विवृता षड्विधा त्रिपदोष्णिक्॥ ॥ ✻ ॥

### ७. अनुष्टुब्गर्भा

अथ चतुष्पदोष्णिक्। आद्यः पञ्चाक्षरः पादः, त्रयोऽष्टाक्षराश्चेत् अनुष्टुब्गर्भा नामोष्णिक् [५+८+८+८=२९]। भुरिगुष्णिगियम्। यथा–

पितुं नु स्तोषम् + महो धर्माणं तविषीम्।
यस्यं त्रितो व्योजंसा+वृत्रं विपर्वमर्दयंत्॥ [१.१८७.१]

अत्र 'वियोजसा' इति व्यूहेन तृतीयचरणेऽप्यष्टाक्षरता । इयं गायत्रीगर्भोष्णि-गित्यप्याख्यायेत ॥ ॥ * ॥

**८. समपदा उष्णिक्**

सप्तभिरक्षरैश्चतुष्पदाऽपरा [७+७+७+७=२८] । यथा–

> **नदं व ओदतीनाम् + नदं योयुवतीनाम् ।**
> **पतिं वो अघ्न्यानाम् + धेनूनामिषुध्यसि ॥** [८.६९.२]

अत्र 'अघ्नियानाम्' इति व्यूहेनाक्षरपूर्तिः । इमामक्षरैरुष्णिहमाहुः प्राञ्चः । पादैरनुष्टुभम् । अत इयमनुष्टुबुष्णिगित्यप्याख्यायेत । यत इयं पादनिचृदनुष्टुबपि स्यात् । तथाहि ऋक्प्रातिशाख्यम्–

> **'सप्ताक्षरैश्चतुर्भिर्द्वे नदं मंसीमहीति च ।**
> **पादैरनुष्टुभौ विद्यादक्षरैरुष्णिहाविमे'**[१६.३२] इति ।

व्याचख्यौ चोवटः– **'सप्ताक्षरैश्चतुर्भिः पादैर्द्वे ऋचावुष्णिहौ भवतः । पादैरनुष्टुभौ जानीयात् । अक्षरैः कृत्वोष्णिहौ भवतः । 'नदं व ओदतीनाम्'** [८.६९.२], **'मंसीमहि त्वा वयम्'** [१०.२६.४] इत्येते' इति ॥ ॥ * ॥

***

# अनुष्टुप्

अथातोऽनुष्टुभं व्याख्यास्यामः । कस्मादनुष्टुप्? अनुगुणं स्तौति स्तोभते वा । ष्टुभ स्थैर्ये । अनुष्टुभोऽप्यष्टौ प्रभेदानाचष्टे कात्यायनः ।

**१. समपदाऽनुष्टुप्**

अष्टभिरक्षरैश्चतुष्पात् प्रचुराऽनुष्टुप् [८+८+८+८=३२] । यथा–

> **गायन्ति त्वा गायत्रिणः + अर्चन्त्यर्कमर्किणः ।**
> **ब्रह्माणस्त्वा शतक्रतो + उद् वंशमिव येमिरे ॥**[१.१०.१]

अत्र 'अर्चन्ति+अर्कमर्किणः' इति व्यूहेनाक्षरपूर्तिः ।

यथा वा–

उद् वयं तमसस्परि + ज्योतिष्पश्यन्त उत्तरम् ।
देवं देवत्रा सूर्यम् + अगन्म ज्योतिरुत्तमम् ॥ [१.५०.१०]

अत्र 'सूरियम्' इत्यक्षरपूर्तिः ॥ ॥ * ॥

**२. महापदपङ्क्तिः**

अथ षट्पदाऽनुष्टुप्, महापदपङ्क्तिर्नाम, पञ्चाक्षरैः पञ्चभिश्चरणैः, षष्ठेन च षळक्षरेण [५+५+५+५+५+६=३१] । निचृदनुष्टुबियम् । यथा–

**तव स्वादिष्ठा + अग्ने सन्दृष्टिः + इदा चिदह्नः + इदा चिदक्तोः ।**
**श्रिये रुक्मो न + रोचत उपाके ॥** [४.१०.५]

चरमचरणे स्वरप्रक्रियाविरोधस्तु पूर्ववत् समाधेयः । अन्ततोऽर्थमूलत्वात् स्वराणाम् ॥ ॥ * ॥

**३. कृतिः [उपरिष्टाज्ज्योतिः]**

अथ त्रिपदाऽनुष्टुप् । द्वौ द्वादशाक्षरावन्त्योऽष्टाक्षरश्चेत् कृतिर्नामानुष्टुप् [१२+१२+८=३२] । यथा–

**मा कस्मै धातमभ्यमित्रिणे नः + माऽकुत्रा नो गृहेभ्यो धेनवो गुः ।**
**स्तनाभुजो अशिश्वीः ॥** [१.१२०.८]

'अभियमित्रिणे' इति, 'गृहेभियो' इति, 'अशिशुवीः' इति च व्यूहेन प्रतिपादमक्षरपूर्तिः । ननु कृतिच्छन्दसि सम्प्रत्ययमेक एव मन्त्रो वेदेषूपलभ्यते । तत् कुतोऽयमक्षरव्यूहप्रयासः । मन्त्रानुगुण्याय लक्षणमेव व्यत्यस्यताम्– एकादशाक्षरौ द्वौ पादवन्त्यः सप्ताक्षर इति । न भोः । अनवगतशास्त्रसम्प्रदायो भवान् किमिति मध्ये नासां निक्षिपति? अनुष्टुप् किलेयम् । तेन संहत्य द्वात्रिंशदक्षरतैव युक्ता । एतदनुकारि चोत्तरमनुष्टुप्छन्दः । तत्र च स्फुटा द्वादशाक्षरतेति सर्वं रमणीयम् । इयमेव 'उपरिष्टाज्ज्योतिः' इत्यप्युच्यते ॥ ॥ * ॥

**४. पिपीलिकामध्याऽनुष्टुप् [मध्येज्योतिः]**

मध्यमश्चेदष्टाक्षरः पिपीलिकामध्याऽनुष्टुप् [१२+८+१२=३२]। यथा–

**पर्यू॒ षु प्र ध॑न्व॒ वाज॑सातये + परि॑ वृ॒त्राणि॑ स॒क्षणि॑ः।**
**द्वि॒षस्त॒रध्या॑ ऋण॒या न॑ ईयसे ॥** [९.११०.१]

‘परि+ऊ’ इति व्यूहेन प्रथमचरणेऽक्षरपूर्तिः। इयमेव मध्येज्योतिरनुष्टुबिति च निर्दिश्यते॥

प्रथमश्चेदष्टाक्षरः साऽप्यपरा त्रिपदाऽनुष्टुप् [८+१२+१२=३२] इति पिङ्गलनागः। पुरस्ताज्ज्योतिरित्यपरे। भवति तु च्छन्दोन्तरम्। उदाहरणं तु मृग्यम्॥ ॥ ॥

**५. काविराडनुष्टुप्**

आद्यन्तौ नवाक्षरौ, मध्यमो द्वादशाक्षरश्चेत् सा काविराडाख्या अनुष्टुप् [९+१२+९=३०]। इयं द्व्यक्षरोनत्वात् स्वत एव विराडनुष्टुप् सती पुनरक्षर-विन्यासविशेषेण कुत्सितेति काविराळिति कथ्यते छन्दोभिज्ञैरिति। यथा–

**ता वि॒द्वांसा॑ हवामहे वां + ता नो॑ वि॒द्वांसा॒ मन्म॑ वोचेतम॒द्य।**
**प्रार्च॒द् दय॑मानो युवाकु॑ः॥** [१.१२०.३] ॥ ॥

**६. नष्टरूपाऽनुष्टुप्**

नव-दश-त्रयोदशाक्षरैर्नष्टरूपा नामानुष्टुप्। नष्टरूपी वा [९+१०+१३=३२)। कस्मान्नष्टरूपा? प्रथमचरणे नष्टमेकमक्षरं तृतीयचरणे पुनर-धिकाक्षरक्षेपेण रूपयति पूरयतीति वा। यथा–

**वि पृ॑च्छामि पा॒क्या॒३॑ न दे॒वान् + वष॑ट्कृतस्याद्भु॒तस्य॑ दस्रा।**
**पा॒तं च॒ सह्य॑सो युवं च॒ रभ्य॑सो नः॥** [१.१२०.४] ॥ ॥

**७. विराळनुष्टुप् [१]**

दशभिस्त्रिभिर्विराट्[१०+१०+१०=३०]। यद्यपि द्व्यक्षरोना विराळिति न पृथक् वक्तव्यम्। अथापीयं विशिष्य विराळाख्याऽनुष्टुब् भवति। प्रतिपादं दशाक्षरत्वात्। यथा–

प्रेद्धो अग्ने दीदिहि पुरो नः + अजस्रया सूर्म्या यविष्ठ।
त्वां शश्वन्त उप यन्ति वाजाः ॥ [७.१.३]

अत्र 'सूर्मिया' इति व्यूहेनाक्षरपूर्तिः ॥ ॥ * ॥

**८. विराळनुष्टुप्** [२]

एकादशभिर्वा, एकाक्षराधिका भुरिग्विराट् [११+११+११=३३]। यथा–

उप यमेति युवतिः सुदक्षम् + दोषा वस्तोर्हविष्मती घृताची।
उप स्वैनमरमतिर्वसूयुः ॥ [७.१.६] ॥ * ॥

***

## बृहती

अथातो बृहतीं व्याख्यास्यामः।

कस्माद् बृहती? बृंहति बृंहयति चेति। अस्याः श्रीर्ब्रह्माणी भारती च देवता इति गायत्रीवेयमपि विशिष्य विष्णोर्ब्रह्मवाय्वोश्च प्रिया भवति। विष्णुवाहो गरुडश्च देवतेत्येते बार्हता मन्त्रा विशेषतो विष्णुं वहन्ति। अस्याः पुनः स्वाह्वातः स्वरूपतोऽधिका तारा च देवतेति गायत्रीतः किञ्चिदिवाधिकेयं छन्दसां राज्ञी। तदुक्तमैतरेय्यामुपनिषदि– **तद् यथाऽयमात्मा सर्वतः शरीरैः परिवृत एवमेव बृहती सर्वतश्छन्दोभिः परिवृता। मध्यं ह्येषामङ्गानामात्मा, मध्यं छन्दसां बृहती** [२.२.५] इति। **बृहतीमभिसम्पादयदेष वै कृत्स्न आत्मा यद् बृहती** [२.२.४] इति च।

अत एव च्छन्दसां बृहतीकरणं महाफलदं गदन्ति। सम्पादयन्ति च बृहतीसहस्रं नानाच्छन्दसां योगेन। उक्तं च सर्वमेतदैतरेयसंहितायाम्–

'अभिमानी बृहत्यास्तु वायुरेव यतः प्रभुः।
'तस्मादेषा छन्दसां हि वरिष्ठा बृहती स्मृता॥

'पूर्णो हि वायुर्देवानां तस्माद् ब्रह्मेति चोच्यते।
'माहात्म्याधिक्यतश्चैव बृहतीत्येव नाम तत्॥

'अङ्गेभ्य एव सम्भूतान्यन्यच्छन्दांसि चाब्जजात् ।
'मध्यात्तु बृहती जाता तस्मात् सा मध्यमुच्यते ॥

'पठ्यते तेन मध्ये सा छन्दसां प्रवरा सती ।
'छन्दांस्यन्यान्यङ्गवत् स्युर्मध्यवत् बृहती परा ।
'सप्तच्छन्दांसि चैवं हि प्रतिमा वैष्णवी मता ॥

'गायत्रीदेवतात्वं तु लक्ष्म्या यत्राभिधीयते ।
'बृहतीदेवता तत्र भगवान् पुरुषोत्तमः ॥

'आधिक्यं छन्दसां यत्र गायत्र्यास्तु विवक्षितम् ।
'तत्र तत्पुत्रको वायुर्बृहतीदेवता मता' इत्यादि ॥

तामेतां बृहतीं दशविधामभिदधति छन्दोभिज्ञाः । अथ तत्प्रभेदान् यथाक्रममनुक्रमिष्यामः ।

## १. केवला बृहती [पथ्या बृहती, सिद्धा, स्कन्धोग्रीवी]

प्रथम-द्वितीय-तुरीया अष्टाक्षराः, तृतीयो द्वादशाक्षरश्चेदियं प्रचुरा बृहती [८+८+१२+८=३६] । इमां पथ्यां बृहतीमाह पिङ्गलनागः । सिद्धा बृहतीति च केचित् । स्कन्धोग्रीवीत्यपरे । यथा–

शचींभिर्न शचीवसू + दिवा नक्तं दशस्यतम् ।
मां वां रातिरुपं दसत् कदां चन + अस्मद् रातिः कदां चन ॥
[१.१३९.५] ॥ ✻ ॥

## २. पुरस्ताद् बृहती

प्रथमश्चेद् द्वादशाक्षरः पुरस्ताद् बृहती [१२+८+८+८=३६] । यथा–

महो यस्पतिः शर्वसो असाम्या + महो नृम्णस्यं तूतुजिः ।
भर्ता वज्रस्य धृष्णोः + पिता पुत्रमिंव प्रियम् ॥ [१०.२२.३]

अत्र 'असामि+आ'इति, 'धृष्णोः' इति चाक्षरपूर्तिः ॥ ॥ ✻ ॥

**३. न्यङ्कुसारिणी [उरोबृहती, स्कन्धोग्रीवी]**

द्वितीयश्चेन्न्यङ्कुसारिणी [८+१२+८+८=३६]। उरोबृहतीति यास्कः। स्कन्धोग्रीवीति क्रौष्टुकिः।

कस्मान्न्यङ्कुसारिणी? न्यङ्कुरिव क्वचित् पादं प्रसार्य, क्वचिदाकुञ्च्य सरतीति। कस्मादुरोबृहती? यथा पुरो विपुलाक्षरा पुरस्तात् बृहती, तथोयमुरसि मध्ये विपुलाक्षरेति। कस्मात् स्कन्धोग्रीवी? स्कन्धादुपरि विपुलग्रीवा धावति मृगी। तद्वदियमपि स्कन्धस्थानीयात् प्रथमचरणाद् विपुलाक्षरा ग्रीवास्थानीये द्वितीयचरण इति। तामेतां स्कन्धोच्चग्रीवां सतीं स्कन्धोग्रीवीमाचक्षते परोक्षप्रिया मुनयः। यथा–

**मत्स्यपायि ते महः + पात्रस्येव हरिवो मत्सरो मदः।**
**वृषा ते वृष्ण इन्दुः + वाजी सहस्रसातमः॥ [१.१७५.१]**

'मत्सि+अपायि' इति, 'वृष्+ण'इति व्यूहेनाक्षरपूर्तिः॥ ॥ ❋ ॥

**४. उपरिष्टाद् बृहती**

चतुर्थश्चेदुपरिष्टाद् बृहती [८+८+८+१२=३६]। यथा–

**ऊर्ध्व ऊ षु णः ऊतये + तिष्ठा देवो न सविता।**
**ऊर्ध्वो वाजस्य सनिता + यदञ्जिभिर्वाघद्भिर्विह्वयामहे॥**

[१.३६.१३] ॥ ❋ ॥

**५. [प्रस्तार]बृहती**

अद्यौ दशाक्षरौ, अन्त्यौ चेदष्टाक्षरौ साऽपि केवला भवति बृहतीति [१०+१०+८+८=३६] पुरातनाः। प्रस्तारबृहतीत्याचार्यगोविन्दः। यथा श्रीसूक्ते–

**कांस्योस्मितां हिरण्यप्राकाराम् + आर्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम्।**
**पद्मे स्थितां पद्मवर्णाम् + तामिहोप ह्वये श्रियम्॥**

अत्र द्वितीयचरणे एकादशाक्षराणीति भुरिगियं बृहती॥ ॥ ❋ ॥

### ६. विष्टारबृहती

आद्यन्तावष्टाक्षरौ मध्यौ दशाक्षरौ चेद् विष्टारबृहती [८+१०+१०+८=३६]। यथा–

> युवं ह्यास्तं महो रन् + युवं वा यन्निरततंसतम्।
> ता नो वसू सुगोपा स्यातम् + पातं नो वृकादघायोः॥ [१.१२०.७]

'हि+आस्तम्' इति, 'सियातम्' इति च व्यूहेनाक्षरपूर्तिः॥ ॥ ❊ ॥

### ७. ऊर्ध्वबृहती [महाबृहती, सतोबृहती, विराडूर्ध्वबृहती, त्रिपदा बृहती]

द्वादशाक्षरैस्त्रिभिः पादैरूर्ध्वबृहती [१२+१२+१२=३६]। इमां महाबृहतीमाह पिङ्गलनागः। सतोबृहतीमन्ये। ऊर्ध्वबृहतीमन्ये। विराडूर्ध्वबृहतीमेके। त्रिपदां बृहतीमपरे। यथा–

> अध यदिमे पवमान रोदसी + इमा च विश्वा भुवनाऽभि मज्मना।
> यूथे न निःष्ठा वृषभो वि तिष्ठसे॥ [९.११०.९] ॥ ❊ ॥

### ८. पिपीलिकामध्या बृहती

आद्यन्तौ त्रयोदशाक्षरौ मध्यश्चेदष्टाक्षरः सा पिपीलिकामध्या [१३+८+१३=३४]। यथा–

> अभि वो वीरमन्धसो मदेषु गाय + गिरा महा विचेतसम्।
> इन्द्रं नाम श्रुत्यं शाकिनं वचो यथा॥ [८.४६.१४]

मन्त्रमिमं चतुश्चरणतया केचित् पठन्ति [११+१०+६+७=३४]। आर्षसम्प्रदायविप्रतीपमेतत्। इयं द्व्यक्षरोनेति विराड्बृहती। यद्यपि षट्त्रिंशदक्षराऽपि पिपीलिकामध्या शक्यं लक्षयितुम् [१३+१०+१३=३६]। एवं बहवोऽन्येऽपि भवेयुः प्रभेदाः। लक्ष्यभूतानां मन्त्राणामदर्शनान्न ते लक्षिताः। ये मन्त्राः पठ्यन्ते तेषामेव हि च्छन्दांसि समीक्ष्यन्ते। न ह्यपठितानां लक्षणपठनेन किमपि प्रयोजनम्। नहि स्वर्गकामो लक्षणशास्त्रं पठति॥ ॥ ❊ ॥

### ९. विषमपदा बृहती

आद्यो नवाक्षरः, तृतीय एकादशाक्षरः, द्वितीयतुरीयावष्टाक्षरौ चेद् विषमपदा बृहती, विषमयोः पादयोर्विषमाक्षरेति [९+८+११+८=३६]। यथा–

**सनितः सुसंनितरुग्र + चित्र चेतिष्ठ सूनृत।**
**प्रासहा सम्राट् सहुरिं सहन्तम् + भुज्युं वाजेषु पूर्व्यम्॥ [८.४६.२०]**

अत्र 'पूर्वियम्' इति व्यूहेनाक्षरपूर्तिः॥ ॥ * ॥

### १०. समपदा बृहती

नवाक्षरैश्चतुर्भिः पादैः समपदा बृहती [९+९+९+९=३६]। यथा–

**तं त्वा वयं पितो वचोभिः + गावो न हव्या सुषूदिम।**
**देवेभ्यस्त्वा सधमादम् + अस्मभ्यं त्वा सधमादम्॥ [१.१८७.११]**

तृतीयचरणे चतुर्थचरणे च 'तुवा' इति व्यूहेनाक्षरपूर्तिः॥ ॥ * ॥

***

## पङ्क्तिः

अथातः पङ्क्तिं व्याख्यास्यामः।

पञ्चतिः पङ्क्तिर्भवति। तामष्टविधामाचष्टे कात्यायनः। अपरां च नवमीमुल्लिखति विना लक्षणेन।

### १. पञ्चपदा पङ्क्तिः[पथ्या]

अष्टाक्षरैः पादैः पञ्चपदा पङ्क्तिः [८+८+८+८+८=४०]। यथा–

**इत्था हि सोम इन्मदे + ब्रह्मा चकार वर्द्धनम्।**
**शविष्ठ वज्रिन्नोजसा + पृथिव्या निः शशा अहिम् + अर्चन्ननु स्वराज्यम्॥**
**[१.८०.१]**

अत्र 'स्वराजियम्' इति व्यूहेनाक्षरपूर्तिः। इयं पथ्या पङ्क्तिरिति पिङ्गल-नागादयः॥ ॥ * ॥

**२. विराट् पङ्क्तिः**

दशभिरक्षरैश्चतुष्पाद् विराट् पङ्क्तिः [१०+१०+१०+१०=४०]। यथा–

> त्वमग्ने वरुणो जायसे यत् + त्वं मित्रो भवसि यत् समिद्धः।
> त्वे विश्वे सहसस्पुत्र देवाः + त्वमिन्द्रो दाशुषे मर्त्याय ॥ [५.३.१]

अत्र 'मर्तियाय' इति व्यूहेनाक्षरपूर्तिः ॥ * ॥

**३. सतोबृहती पङ्क्तिः [सतःपङ्क्तिः, सिद्धा पङ्क्तिः, विष्टारपङ्क्तिः]**

अयुजौ द्वादशाक्षरौ, युजावष्टाक्षरौ चेत् सतोबृहती पङ्क्तिः [१२+८+१२+८=४०], त्रिषु पादेषु बृहतीसाम्ये सत्यपि, अनुष्टुप्साम्ये वा, एकस्मिन् पादे पुनरियं ततोऽपि बृहतीति। तामेतां सतःपङ्क्तिमाह पिङ्गलनागः। यथा–

> मा ते राधांसि मा त ऊतयो वसो + अस्मान् कदा चना दभन्।
> विश्वा च न उपमिमीहि मानुष + वसूनि चर्षणिभ्य आ ॥ [१.८४.२०]

इयं सिद्धा पङ्क्तिरित्येके। विष्टारपङ्क्तिरित्यन्ये ॥ ॥ * ॥

**४. विपरीता पङ्क्तिः [सतःपङ्क्तिः]**

विपरीता चेद् विपरीता पङ्क्तिः [८+१२+८+१२=४०]। यथा–

> य ऋष्वः श्रावयत्सखा + विश्वेत् स वेद जनिमा पुरुष्टुतः।
> तं विश्वे मानुषा युगा + इन्द्रं हवन्ते तविषं यतस्रुचः ॥ [८.४६.१२]

पिङ्गलनागमतेनायमपि सतःपङ्क्तिप्रभेदः ॥ ॥ * ॥

**५. प्रस्तारपङ्क्तिः**

आद्यौ द्वादशाक्षरावन्त्यावष्टाक्षरौ चेत् प्रस्तारपङ्क्तिः [१२+१२+८+८=४०]। यथा–

> तस्याः समुद्रा अधि वि क्षरन्ति + तेन जीवन्ति प्रदिशश्चतस्रः।
> ततः क्षरत्यक्षरम् + तद् विश्वमुप जीवति ॥ [१.१६४.४२]

अत्र 'तसियाः' इति, 'चतसृरः' इति जागतपादयोरक्षरपूर्तिः । 'क्षरति+ अक्षरम्' इत्यानुष्टुभे । अथवा जागतयोरेकाक्षरोना पूर्वार्धे त्रैष्टुभा वा विराट् पङ्क्तिरियम् । स्फुटं जागतपादा प्रस्तारपङ्क्तिर्यथा–

**उच्छ्वञ्चस्व पृथिवि मा नि बाधथाः + सूपायनाऽस्मै भव सूपवञ्चना ।**
**माता पुत्रं यथा सिचा + अभ्येनं भूम ऊर्णुहि ॥ [१०.१८.११] ॥ * ॥**

### ६. आस्तारपङ्क्तिः

प्रस्तारपङ्क्तिरेव विपरीता चेदास्तारपङ्क्तिः [८+८+१२+१२=४०] । यथा–

**यमग्ने मन्यसे रयिम् + सहसावन्नमर्त्य ।**
**तमा नो वाजसातये वि वो मदे + यज्ञेषु चित्रमा भरा विवक्षसे ॥**

[१०.२१.४]

अत्र 'अमर्तिय' इति व्यूहेनाक्षरपूर्तिः ॥ ॥ * ॥

### ७. संस्तारपङ्क्तिः

आद्यान्त्यौ द्वादशाक्षरौ, मध्यौ चेदष्टाक्षरौ सा संस्तारपङ्क्तिः [१२+८+ ८+१२=४०] । यथा–

**षष्टिं सहस्राऽश्व्यस्यायुताऽसनम् + उष्ट्रानां विंशतिं शता ।**
**दश श्यावीनां शता दश + त्र्यरुषीणां दश गवां सहस्रा ॥ [८.४६.२२]**

अत्र 'अशिवयस्य' इति पूर्वार्धे, 'त्रियरुषीणाम्' इति चोत्तरार्धे व्यूहेनाक्षर-पूरणम् । यद्यपि तृतीयचरणे एकमक्षरमधिकम् । अथापि भुरिगियं संस्तार-पङ्क्तिर्भवति । अथवा 'त्र्यरुषीणाम्' इत्यत्र न व्यूहनम् । तेन समूह्य विंशति-रक्षराणीति कथञ्चिच्छन्दःपूरणम् । यतोऽयमेक एव मन्त्रः संस्तारेण पाङ्क्तः । न हि संस्तारपङ्क्तिनिबद्धाऽन्या काचिदृग् दाशतय्यां पठ्यते ॥

यद्वा द्वयोर्द्विपदयोः समूहेन पाङ्क्तत्वं सम्पाद्योदाहरणीयम् । यथा–

**पितुभृतो न तन्तुमित् सुदानवः + प्रति दध्मो यजामसि ।**
**उषा अप स्वसुस्तमः + सं वर्तयति वर्तनिं सुजातता ॥**

[१०.१७२.३–४] ॥ * ॥

**८. विष्टारपङ्क्तिः**

आद्यान्त्यावष्टाक्षरौ, मध्यौ चेद् द्वादशाक्षरौ, सा विष्टारपङ्क्तिः [८+१२+१२+८=४०]। यथा–

अग्ने तव श्रवो वयः + महि भ्राजन्ते अर्चयो विभावसो।
बृहद्भानो शवसा वाजमुक्थ्य१म् + दधासि दाशुषे कवे ॥[१०.१४०.१]

अत्र 'उक्थियम्' इति व्यूहेनाक्षरपूर्तिः ॥ ॥ ✻ ॥

**९. अक्षरैः पङ्क्तिः**

या केवलं चत्वारिंशद्भिरक्षरैरेव पङ्क्तिरिति निश्चीयेत, न पादनियत्या, सा अक्षरैः पङ्क्तिः। एकस्तावत् तादृशो मन्त्र उपलभ्यत ऋग्वेदे। यथा–

कृधी नो अह्रयो देव सवितः + स च स्तुषे मघोनाम्।
सहो न इन्द्रो वह्निभिर्न्येषाम् + चर्षणीनां चक्रं रश्मिं न योयुवे॥
[१०.९३.९]

अयं साम्प्रदायिकः पादविभागः–११+७+१०+१२=४०। अथ चेयमुत्तरार्द्धे द्वाभ्यामष्टाक्षरैरेकेन षट्केन च त्रिपादपि स्यात्। यथा–

सहो न इन्द्रो वह्निभिः + न्येषां चर्षणीनाम् चक्रं + रश्मिं न योयुवे॥
[१.४.१]

तथा चेयं पञ्चपदा पङ्क्तिरपि स्यात् [११+७+८+६+८=४०]। बहव ऋषय एकं मन्त्रं पश्यन्ति। नियतानुपूर्वीकाण्यक्षराणि पश्यन्ति। अथापि पादमन्यादृशं पश्यन्ति। प्रतृण्णमप्यन्यादृशम्। कचिदर्थमप्यन्यादृशम्। नहि सर्वेषामेकरूपमेव दर्शनं भवति। यादृशी द्रष्टरि योग्यता तादृशं दर्शनम्॥

अत एव पादनियतिमनुल्लिख्य 'अक्षरैः पङ्क्तिः' इत्याह कात्यायनः। नामैव लक्षणगर्भमिति न पृथग् लक्षणं चाऽह॥ ✻ ॥

✻✻✻

# त्रिष्टुप्

अथातस्त्रिष्टुभं व्याख्यास्यामः ।

कस्मात् त्रिष्टुप्? त्रिभिर्वेदैः, कायवाङ्मनोभिर्वा स्तौति स्तोभते वा ।

## १. समपदा त्रिष्टुप्

एकादशाक्षरैश्चतुर्भिः पादैः समपदा त्रिष्टुप् [११+११+११+११=४४]। यथा–

**नमो॑ म॒हद्भ्यो॒ नमो॑ अर्भ॒केभ्यः॑ + नमो॒ युव॑भ्यो नम॑ आशि॒नेभ्यः॑ ।**
**यजा॑म दे॒वान् यदि॑ श॒क्नवा॑म + मा ज्याय॑सः॒ शंस॒मा वृ॑क्षि देवाः ॥**

[१.२७.१३]

यथा वा–

**द्वा सु॑प॒र्णा स॒युजा॒ सखा॑या + समा॒नं वृ॒क्षं परि॑ षस्वजाते ।**
**तयो॑र॒न्यः पिप्प॑लं स्वा॒द्वत्त्य॑ + अन॑श्नन्न॒न्यो अ॒भि चा॑कशीति ॥**

[१.१६४.२०]

अत्र 'दुवा' इति, 'स्वादु+अत्ति' इति चाक्षरपूर्तिः ॥ ॥ * ॥

अथात्र विशय्यते– यत्रैकादशाक्षरौ द्वौ, द्वादशाक्षरौ च द्वौ पादौ स्यातां तत् किं छन्दः स्यात्? किं द्व्यक्षराधिका त्रिष्टुप्? आहो द्व्यक्षरोना जगती? कः पक्षपातः? स्यात् त्रिष्टुप् । स्यादपि जगती । ननु स्याद्वादशरणा न किमप्यवधारयितुमीशते । शृणु तर्हि व्यवस्थाम्– समुदायस्य यत्त्वं तस्यापि तत्त्वमिति । यदि जागते सूक्ते पठितम्, तदा जगती । यदा त्रैष्टुभे तदा त्रिष्टुबित्युत्सर्गः ।

तद् यथा जागते जगती [११+११+१२+१२]–

**आपो॒ भूयि॑ष्ठा॒ इत्येको॑ अब्रवीत् + अ॒ग्निर्भूयि॑ष्ठ॒ इत्य॒न्यो अ॑ब्रवीत् ।**
**व॒र्ध॒यन्ती॑ ब॒हुभ्य॒ः प्रैको॑ अब्रवीत् + ऋ॒ता वद॑न्तश्चम॒साँ अ॑पिंशत ॥**

[१.१६१.९]

त्रैष्टुभे त्रिष्टुब् यथा– [११+११+१२+१२]–

**ये वाजिनं परिपश्यन्ति पक्वं + य ईमाहुः सुरभिर्निर्हरेति ।**
**ये चार्वतो मांसभिक्षामुपासते + उतो तेषामभिगूर्तिर्न इन्वतु ॥**
[१.१६२.१२]

केचिदेवमाचक्षते– द्वौ द्वादशाक्षरौ द्वौ चेकादशाक्षरौ यत्र स मन्त्रो यदि त्रैष्टुभे सूक्ते पठ्यते तदा सा 'जगती त्रिष्टुप्' इत्युच्यते । यदि जागते सूक्ते, तदा जगतीभेद एवेति । अनुक्रमण्या अक्षरार्थापरिज्ञानमूलमिदमिति भाति ।

ननु अस्मिन्नेव त्रैष्टुभे सूक्ते षष्ठीमृचं [११+१२+११+१२] जागतीं पठति कात्यायनः । तथाहि मन्त्रः–

**यूपव्रस्का उत ये यूपवाहाः + चषालं ये अश्वयूपाय तक्षति ।**
**ये चार्वते पचनं सम्भरन्ति + उतो तेषामभिगूर्तिर्न इन्वतु ॥** [१.१६२.६]

कथमस्य जागतत्वमिति? निपुणमाक्षिपसि । त्रैष्टुभे त्रिष्टुबिति नियमानुसारेण त्रिष्टुबित्येव वक्तव्यम् । अथापि जगतीमाह कात्यायनः । कारणं मृग्यं भवति । युजोः पादयोर्जगतीति प्राधान्यविवक्षया वा स्यात् । त्रिष्टुबित्येव युक्तं वचः । 'आदितः सन्दिग्धे' इति पिङ्गलनागवचनं चात्र संवदते ॥

ननु तर्हि अनियतच्छन्दस्सु सूक्तेषु का गतिः? का गमनिका? स्याद्वाद एव शरणम्– त्रिष्टुब् वा स्याज्जगती वा स्यादिति । तद् यथा [११+११+१२+१२]–

**यो अग्नीषोमा हविषा सपर्यात् + देवद्रीचा मनसा यो घृतेन ।**
**तस्य व्रतं रक्षतं पातमंहसः + विशे जनाय महि शर्म यच्छतम् ॥** [१.९३.८]

आह हि कात्यायनः–'अष्टमी जगती वा' इति ।

एतादृशान् सप्त मन्त्रान् विकल्पच्छन्दसः सम्प्रति बह्वृचाः पठन्ति– १.९३.८; १४०.१०; ५.५१.११–१३; ७.१०४.७; १०.६३.१५ ।

वस्तुतस्त्वेतानि मिश्रच्छन्दांसि। इन्द्रवज्रावंशस्थयोरिव त्रिष्टुब्जगत्योः सङ्गत्या काचन वैदिकी पुनरुपजातिरपि स्यात्। जगतीष्टुबिति वा त्रिजगतीति वा नामधेयं चैषां स्यादित्याचार्यगोविन्दः॥ ॥ ※ ॥

## २. अभिसारिणी

दशाक्षरौ द्वौ, द्वौ च द्वादशाक्षरौ चेदभिसारिणी [१०+१०+१२+१२]। अर्धशः पङ्क्तिमभिसरति, अर्धशश्च जगतीमित्यन्वर्थेयमभिसारिणी। यथा–

**यो वाचा विवाचो मृध्रवाचः + पुरू सहस्राऽशिवा जघान।**
**तत्तदिदस्य पौंस्यं गृणीमसि + पितेव यस्तविषीं वावृधे शवः॥**

[१०.२३.५]

अत्र 'पौंसियम्' इत्यक्षरपूर्तिः। सम्प्रति बाह्वृच्ये तिस्र ईदृश्योऽभिसारिण्यो भवन्ति [१०.२३.५; ५०.३,४]॥ ॥ ※ ॥

## ३. विराट्स्थाना

१. नवाक्षरौ द्वौ पादौ, दशाक्षर एकः, एकादशाक्षरस्तुरीय इतीयमेका विराट्स्थाना त्रिष्टुप् [९+९+१०+११=३९], केवलमेकाक्षरन्यूना सती विराजः स्थानमाचिक्रमिषतीति। ननु तर्हीयं निचृत् पङ्क्तिरिति पङ्क्तिप्रभेद एव पठनीया, न त्रैष्टुभे प्रभेदे। सत्यं यदि सम्प्रति पठनीयं स्यात्, पाङ्क्त एव पठ्येत, न त्रैष्टुभे प्रभेदे। पठितं च पुरातनैस्त्रैष्टुभे गणे। न ते भवतो नियोगं पर्यनुयोगं वाऽर्हन्ति। पठितमृक्प्रातिशाख्ये। पठितं सर्वानुक्रमण्याम्। पठितं वेङ्कट-माधवेनापि। न तेन ते शक्यनिराकरणम्। कारणं तु मृग्यं भवति। तुरीय-चरणस्त्रैष्टुभ इति त्रिष्टुभा समारोपात् त्रिष्टुबिति प्राचामाचार्याणां मतमिति मन्यामहे। यथा–

**स्वस्ति न इन्द्रो वृद्धश्रवाः + स्वस्ति नः पूषा विश्ववेदाः।**
**स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः + स्वस्ति नो बृहस्पतिर्दधातु॥** [१.८९.६]

तुरीयचरणे 'सुवस्ति' इत्यक्षरपूर्तिः । पूर्वपादेष्वव्यूहे कारणाभावात् १०+ १०+११+११=४२ इत्येवाक्षरपरिगणना सध्रीचीना । अथ च तृतीय-चरणे 'तारुक्ष्यः' इति च विश्लेषे ४३ अक्षराणीत्येव सुवचम्। तदा चेयं निचृत् त्रिष्टुप्॥ ॥ ✻ ॥

२. दशाक्षरौ द्वौ, नवाक्षर एकः, एक एकादशाक्षरश्चेदियमपरा विराट्स्थाना त्रिष्टुप् [१०+१०+९+११=४०] । इयं पुनश्चत्वारिंशदक्षरतया विराजः स्थानमाचक्रामैवेति विराट्स्थाना । अथापि त्रिष्टुभा समारोपात् त्रिष्टुबिति प्रियत्रिष्टुभः । यथा–

**शुभ्रं नु ते शुष्मं वर्धयन्तः + शुभ्रं वज्रं बाह्वोर्दधानाः ।**
**शुभ्रस्त्वमिन्द्र वावृधानः + अस्मे दासीर्विशः सूर्येण सह्याः ॥**[२.११.४]

शक्यमत्र तृतीयचरणेऽपि दशाक्षरत्वम् 'तुवमिन्द्र' इति व्यूहेन । केचिदत्र तृतीयपादमेकादशाक्षरं पठन्ति– 'शुभ्रस्त्वमिन्द्र वावृधानो अस्मे' इति, तुरीयं च नवाक्षरम्। उदाहरणान्तरं च ते निदर्शयन्ति [१०+९+१०+११=४०]–

**श्रुधी हवमिन्द्र मा रिषण्यः + स्याम ते दावने वसूनाम् ।**
**इमा हि त्वामूर्जो वर्धयन्ति + वसूयवः सिन्धवो न क्षरन्तः ॥**

[२.११.१]

अत्रापि शक्यं द्वितीयचरणे दशाक्षरत्वं 'सियाम' इति व्यूहेन । 'त्वामूऋजः' इति तृतीयस्य च द्वादशाक्षरत्वम्। एवं पादक्रमव्यत्यासेन व्यूहेन च च्छन्दोभेदा बहवो भवेयुः ॥ ॥ ✻ ॥

## ४. विराड्रूपा

त्रिभिरेकादशाक्षरैः पादैरेकेन चाष्टाक्षरेण विराड्रूपा त्रिष्टुप् । त्रिभिरेकाद-शाक्षरैः, स्फुटमनुष्टुब्गणपठितां विराजमनुकरोतीति विराड्रूपा। सा पुनश्चतुर्भेद-भिन्ना भवति–

१. प्रथमपादेऽष्टाक्षरा [८+११+११+११]

२) द्वितीयपादेऽष्टाक्षरा [११+८+११+११]

३) तृतीयपादेऽष्टाक्षरा [११+११+८+११]

४) तुरीयपादेऽष्टाक्षरा [११+११+११+८] चेति।

१. तत्राऽऽद्या यथा [८+११+११+११=४१]–

**किं स्विदासीदधिष्ठानम् + आरम्भणं कतमत् स्वित् कथासीत्।**
**यतो भूमिं जनयन् विश्वकर्मा + वि द्यामौर्णोन्महिना विश्वचक्षाः॥**
[१०.८१.२]

२. द्वितीया यथा [११+८+११+११=४१]–

**स नो युवेन्द्रो जोहूत्रः सखा + शिवो नरामस्तु पाता।**
**यः शंसन्तं यः शशमानमूती + पचन्तं च स्तुवन्तं च प्रणेषत्॥** [२.२०.३]

अत्र प्रथमपादे 'युवा+इन्द्रः' इति व्यूहेनाक्षरपूर्तिः॥

३. तृतीया यथा–[११+११+८+११=४१]–

**आ वो रुवण्युमौशिजो हुवध्यै + घोषेव शंसमर्जुनस्य नंशे।**
**प्र वः पूष्णे दावन आँ + अच्छा वोचेय वसुतातिमग्नेः॥** [१.१२२.५]

४. चतुर्थी यथा [११+११+११+८=४१]–

**एतत् त्यन्न योजनमचेति + सस्वर्ह यन्मरुतो गोतमो वः।**
**पश्यन् हिरण्यचक्रानयोदंष्ट्रान् + विधावतो वराहून्॥** [१.८८.५]

अत्र 'तियन्न' इति क्षैप्रसंयोगव्यूहेन, 'वर+आहून्' इत्येकाक्षरीभावव्यूहेन चाक्षरपूर्तिः॥ ॥ * ॥

## ५. ज्योतिष्मती

त्रिभिः पादैर्द्वादशाक्षरैरेकेन चाष्टाक्षरेण ज्योतिष्मती त्रिष्टुप्। चतुश्चत्वारिंशदक्षरतया पूर्णं द्योतत इति ज्योतिष्मती।

सेयं त्रिधा पठ्यते– पुरस्ताज्ज्योतिर्मध्येज्योतिरपरिष्टाज्ज्योतिरिति ।

१. प्रथमपादेऽष्टाक्षरा पुरस्ताज्ज्योतिः [८+१२+१२+१२=४४] । कथं पुरस्ताज्ज्योतिः? अष्टौ वसवः । वसुषु मुख्यो ज्योतिर्देवताऽग्निः । तेनेयं सङ्ख्या ज्योतिः सङ्केतयति । तेन पुरस्तादष्टक्षारा पुरस्ताज्ज्योतिरुच्यते । यथा–

**आ सूर्यो यातु सप्ताश्वः + क्षेत्रं यदस्योर्विया दीर्घयाथे ।**

**रघुः श्येनः पतयदन्धो अच्छा + युवा कविर्दीदयद् गोषु गच्छन् ॥** [५.४५.९]

यद्यप्यक्षराणामविश्लेषेणेयमादावष्टाक्षरा ततस्त्रिषु चरणेषु एकादशाक्षरेति विराड्रूपैव । व्यूहेन लक्षणं समनुयन्ति– 'यदस्य+उर्विया' इति, 'शियेनः' इति च । अथापि तुरीयचरण एकाक्षरन्यूना भवति ॥

२) द्वितीयचरणेऽष्टाक्षरा मध्येज्योतिः [१२+८+१२+१२=४४] । यथा–

**यद् वां यज्ञं मनवे सम्मिमिक्षथुः + एवेत् काण्वस्य बोधतम् ।**

**बृहस्पतिं विश्वान् देवाँ अहं हुवे + इन्द्राविष्णू अश्विनावाशुहेषसा ॥**

[८.१०.२]॥ ❊ ॥

यद्यपि तृतीयचरणेऽष्टाक्षराऽपरा मध्येज्योतिरपि परिगणनीया । तथाऽपि बाह्वृच्ये तस्या अदर्शनात् न पृथक् कात्यायनादिभिः परिगणिता ।

अथाऽपि वैदिकच्छन्दस्सु साऽपि परिगणनीया । यजुर्वेदे प्रयोगदर्शनात् । तथाहि [१२+१२+८+१२=४४]–

**तदश्विना भिषजा रुद्रवर्तनी + सरस्वती वयति पेशो अन्तरम् ।**

**अस्थि मज्जानं मासरैः + कारोत्तरेण दधतो गवां त्वचि ॥**

[माध्यं.सं.१९.८२] ॥ ❊ ॥

३) चरमचरणेऽष्टाक्षरा उपरिष्टाज्ज्योतिः(१२+१२+१२+८=४४) । यथा–

**अग्निनेन्द्रेण वरुणेन विष्णुना + आदित्यै रुद्रैर्वसुभिः सचाभुवा ।**

**सजोषसा उषसा सूर्येण च + सोमं पिबतमश्विना ॥** [८.३५.१]

'सूरियेण' इत्यक्षरपूर्तिः । केचिद् द्वादशाक्षरस्थाने सर्वत्रैकादशाक्षरं पादमाहुः ॥ ❊ ॥

**५. महाबृहती [पञ्चपदा] त्रिष्टुप् ।**

चतुर्भिरष्टाक्षरैरेकेन च जागतेन पादेन महाबृहती नाम त्रिष्टुप् । साऽपि द्वेधा दृश्यते–

१) आदौ द्वादशाक्षरा [१२+८+८+८+८=४४]

२) अन्ते द्वादशाक्षरा [८+८+८+८+१२=४४] चेति ।

आद्या यथा–

**नमोवाके प्रस्थिते अध्वरे नरा + विवक्षणस्य पीतये ।**
**आ यातमश्विनाऽऽगतम् + अवस्युर्वामहं हुवे + धत्तं रत्नानि दाशुषे ॥**
[८.३५.२३]

एतां पुरस्ताज्ज्योतिर्जगतीमाह पिङ्गलनागः ।

द्वितीया यथा–

**नवानां नवतीनां + विषस्य रोपुषीणाम् ।**
**सर्वासामग्रभं नाम + आरे अस्य योजनं + हरिष्ठा मधु त्वा मधुला चकार ॥**
[१.१९१.१३]

अत्र 'नवति+इनां' इत्यादिव्यूहेन पूर्वार्द्धेऽक्षरपूर्तिः । 'असिय' इति तुरीये । द्व्यक्षरोना वा महाबृहती ॥ ॥ ❋ ॥

**६. यवमध्या महाबृहती**

मध्ये चेद् द्वादशाक्षरा यवमध्या [८+८+१२+८+८=४४] त्रिष्टुप् । यववन्मध्ये श्वयतीति । तामेतां मध्येज्योतिर्जगतीमाह पिङ्गलनागः । यथा–

**सं मा तपन्त्यभितः + सपत्नीरिव पर्शवः ।**
**मूषो न शिश्ना व्यदन्ति माध्यः + स्तोतारं ते शतक्रतो + वित्तं मे अस्य रोदसी ॥**
[१.१०५.८]

अत्र 'तपन्ति+अभितः' इति, 'वि+अदन्ति मा+आध्यः' इति च व्यूहेनाक्षरपूर्तिः ॥ ॥ ❋ ॥

**७. पङ्क्त्युत्तरा [विराट्पूर्वा]**

दशाक्षरौ द्वौ पादौ, ततोऽष्टाक्षरास्त्रयः पङ्क्त्युत्तरा त्रिष्टुप्; विराट्पूर्वा वा त्रिष्टुप् [१०+१०+८+८+८=४४]। यथा–

एवेन्द्राग्निभ्यामहाॅवि हव्यं + शूष्यं घृतं न पूतमद्रिंभिः ।
ता सूरिषु श्रवों बृहत् + रयिं गृणत्सुं दिधृतम् + इषं गृणत्सुं दिधृतम् ॥
[५.८६.६]

इति व्याख्यातस्त्रिष्टुब्गणः ॥ ॥ ❋ ॥

❋❋❋

## जगती

अथातो जगतीं व्याख्यास्यामः ।

कस्माज्जगती? जगद् गतमस्यामिति जगती । जगदिति देवताजगदुच्यते । सप्तानामपि च्छन्दसामभिमानिनीनां देवतानां वृन्दमित्येतत् । ताः सर्वा अपि देवस्त्रियः किल जगतीमानिन्यः ।

आदित्या द्वादश । ते च सायंसवनसम्बन्धिनः । तेन द्वादशाक्षरपादा जगती सायंसवनगा विशेषतश्चादित्यानां प्रिया भवति ।

अत्र कश्चन विशेषमाह पतञ्जलिर्निदानसूत्रे–'**यत्र ह्रस्वमक्षरमुपोत्तमं पादस्य भवति सा जागती वृत्तिः । यत्र दीर्घं सा त्रैष्टुभी । ह्रस्वाक्षरस्योपरिष्टाद् व्यञ्जनसन्निपातेऽपि गौरवम् । अष्टाक्षरद्वादशाक्षरौ लघुवृत्ती । दशाक्षरैकादशाक्षरौ गुरुवृत्ती**' इति । प्रायोवादोऽयम् ।

**१. समपदा जगती**

द्वादशाक्षरैश्चतुर्भिश्चरणैः समपदा जगती [१२+१२+१२+१२=४८]। यथा–

**त्वमंग्ने प्रथमो अङ्गिंरा ऋषिः + देवो देवानांमभवः शिवः सखां ।**
**तवं व्रते कवयों विद्मनापसः + अजायन्त मरुतो भ्राजंदृष्टयः ॥**
[१.३१.१]

अत्र 'तुवमग्ने' इत्यक्षरपूर्तिः ॥

यथा वा–

वळित्था तद् वपुषे धायि दर्शतम् + देवस्य भर्गः सहसो यतो जनि ।
यदीमुप ह्वरते साधते मतिः + ऋतस्य धेना अनयन्त सस्रुतः ॥
[१.१४१.१]॥ * ॥

## २. पञ्चपदा जगती [महासतोबृहती]

अथ पञ्चपदा जगती । यत्र त्रयोऽष्टाक्षराः पादाः द्वौ च द्वादशाक्षरौ सा पञ्चपदा जगती । यथा [१२+८+१२+८+८=४८]–

आ यः पप्रौ भानुना रोदसी उभे + धूमेन धावते दिवि ।
तिरस्तमो ददृश ऊर्म्यास्वा + श्यावास्वरुषो वृषा + श्यावा अरुषो वृषा ॥
[६.४८.६]

अत्र तृतीयचरणे 'ऊर्मियासु+आ' इति व्यूहेनाक्षरपूर्तिः । चतुर्थे 'शियावास्वरुषः' इति व्यूहेन । 'श्यावसु+अरुषः' इति वा । पञ्चमे च 'शियावाः' इति ॥

रीत्यन्तरेण यथा [१२+१२+८+८+८=४८]–

युवं ह्यप्रराजावसीदतम् + तिष्ठद्रथं न धूर्षदं वनर्षदम् ।
ता नः कणूकयन्तीः + नृमेधस्तत्रे अंहसः + सुमेधस्तत्रे अंहसः ॥
[१०.१३२.७] ।

अत्र प्रथमचरणे 'युवं हि+अप्रराजा+अवसीदतम्' इति द्वादशाक्षरता । अथ पुनस्तृतीयचरणे सप्ताक्षरेति निचृज्जगतीयम् । कात्यायनादय एतां 'महासतोबृहती'माहुः । द्वाभ्यां गायत्राभ्यां द्वाभ्यां च जागताभ्यां सतोबृहती हि सम्पद्यते । इयं ततोऽप्येकेन गायत्रेणाधिकेति महासतोबृहती ॥ ॥ * ॥

## ३. षट्पदा जगती [महापङ्क्तिः]

सा द्वेधा पठ्यते । अष्टाक्षरैः षट्चरणैः समाक्षरा षट्पदा । [८+८+८+८+८+८=४८] । अष्टाक्षराभ्यां द्वाभ्यां ततः सप्तषळक्षराभ्यां द्वाभ्यां ततो दशनवाक्षराभ्यां द्वाभ्यां पादाभ्यां विषमा षट्पदा । [८+८+७+६+

१०+९=४८]। इयं महापङ्क्तिर्नाम जगतीति कात्यायनादयः। पञ्चाष्टकाः किल पङ्क्तिर्भवति। इयं षळष्टकेति महापङ्क्तिमाहुः।

तत्राऽद्या समाक्षरा यथा [८+८+८+८+८=४८]–

**त्वं नो॑ अग्न आ॒युषु॑ + त्वं दे॒वेषु॑ पू॒र्व्य॑ + वस्व॒ एक॑ इरज्यसि।**
**त्वामापः॑ परि॒स्रुतः॑ + परि॑ यन्ति॒ स्वसे॑तवः + नभ॑न्तामन्य॒के स॑मे॥** [८.३९.१०]

अत्र 'तुवम्' इति प्रथमचरणे, 'तुवम्' इति, 'पूर्विय' इति च द्वितीयचरणे, 'तुवाम्' इति चतुर्थे च व्यूहेनाक्षरपूर्तिः।

तृतीयचतुर्थपादयोर्नवसप्ताक्षरतयाऽपि क्वचित् प्रयोगो दृश्यते। यथा [८+८+८+९+७+८=४८]–

**यो॒ग॒क्षे॒मं व॑ आ॒दाया॑ + अ॒हं भू॑यासमु॒त्तमः॑ + आ वो॑ मू॒र्धान॑मक्रमीम्।**
**अ॒ध॒स्प॒दान्म॒ उद्व॑दत + म॒ण्डूका॑ इवोद॒कात् + म॒ण्डूका॑ उद॒कादि॑व॥**
[१०.१६६.५]

इयमेका रीतिः। पूर्वार्द्धे द्वौ पादौ चत्वार उत्तरार्ध इत्यपरा रीतिः। यथा–

**अ॒ग्निस्त्रीणि॑ त्रि॒धातू॑नि॒ + आ क्षे॑ति वि॒दथा॑ क॒विः।**
**स त्रीँरे॑काद॒शाँ इ॒ह + यक्ष॑च्च पि॒प्रय॑च्च नः + विप्रो॑ दू॒तः परि॑ष्कृ॒तः +**
**नभ॑न्तामन्य॒के स॑मे॥** [८.३९.९] ॥✻॥

२. अथ द्वितीया विषमाक्षरा यथा [८+८+७+६+१०+९=४८]–

**इ॒य॒त्ति॒का श॑कुन्ति॒का + स॒का जं॑घास ते वि॒षम्।**
**सो चि॒न्नु न म॑राति॒ + नो व॒यं म॑राम + आ॒रे अ॑स्य॒ योज॑नं हरि॒ष्ठाः +**
**मधु॑ त्वा मधु॒ला च॑कार॥** [१.१९१.११]

षळक्षरैरष्टभिश्चरणैर्विष्टारपङ्क्तिर्नाम जगतीति केचिदभिप्रयन्ति। मृग्यमुदाहरणम्।

इति विवृतानि सप्त प्रधानानि च्छन्दांसि॥ ॥✻॥

—०—

## शङ्कुमती—ककुद्मती

पिङ्गलनागस्तु गायत्र्यादिषु चतुर्षु शङ्कुमतीं नाम छन्दःप्रभेदमाह; ककुद्मतीं च—
**'एकस्मिन् पञ्चके छन्दः शङ्कुमती। षट्के ककुद्मती'** इति। 'ककुम्मती' इत्याथर्वणाः। तदिदं किञ्चिद् विमृशामः—

त्रयोऽष्टकाः किल गायत्री [८+८+८]। तत्र यद्येकः पादः पञ्चाक्षरः सा शङ्कुमती गायत्री यथा (८+५+८=२१)—

**सुरथाँ आतिथिग्वे + स्वंभीशूँरार्क्षे।**
**आश्वमेधे सुपेशसः॥** [८.६८.१६]

अत्र प्रथमपादे 'आतिथिगुवे' इत्यक्षरपूर्तिः॥ ॥ ❊ ॥

एवमुष्णिहि यद्येकोऽष्टकः पञ्चाक्षरः प्रयुज्यते सा शङ्कुमती नामोष्णिक्। यथा [५+ ८+१२=२५]

**सुवीर्यं स्वश्व्यम् + सुगव्यमिन्द्र दद्धि नः।**
**होतेव पूर्वचित्तये प्राध्वरे॥** [८.१२.३३]

अत्र चरमचरणे 'प्र+अध्वरे' इत्यक्षरपूर्तिः॥ ॥ ❊ ॥

अनुष्टुभि यद्येकोऽष्टकः त्र्यक्षरोनो भवति सा शङ्कुमती अनुष्टुप्। यथा (८+८+८+५=२९)—

**त्या न्वं१श्विना हुवे + सुदंसंसा गृभे कृता।**
**ययोरस्ति प्र णः सख्यम् + देवेष्वध्याप्यम्॥** [८.१०.३]

अत्र प्रथमचरणे 'तिया नु+अश्विना' इत्यक्षरपूर्तिः॥ ॥ ❊ ॥

बृहत्यां यद्येकोऽष्टकः पादः पञ्चको भवति सा शङ्कुमती बृहती। यथा [५+८+१२+८]—

**अद्याद्या श्वःश्वः + इन्द्र त्रास्व परे च नः।**
**विश्वा च नो जरितॄन् त्सत्पते अहा + दिवा नक्तं च रक्षिषः॥**
[८.६१.१७] ॥ ❊ ॥

एवं पञ्चाक्षरस्य स्थाने षळक्षरश्चेत् पादः सा ककुम्मती । ककुम्मती गायत्री यथा (८+८+६=२२)–

निं येन॑ मुष्टिहत्यया + नि वृत्रा रुणधा॑महै ।
त्वेता॑सो न्य॑र्वता ॥ [१.८.२] ॥ ✻ ॥

ककुम्मती उष्णिग् यथा (६+८+१२=२६)–

त्वां यज्ञेष्वृत्विजं॑म् + अग्ने होता॑रमीळते ।
गोपा ऋतस्य॑ दीदिहि स्वे दमें ॥ [३.१०.२]

अत्र तुरीयचरणे 'सुवे' इत्यक्षरपूर्तिः ॥ ॥ ✻ ॥

ककुम्मती अनुष्टुब् यथा [८+६+८+८=३०]–

प्र वो॑ देवायाग्नये॑ + बर्हि॑ष्ठमर्चास्मै ।
गमं॑द् देवेभिरा स नं॑ः + यजिष्ठो बर्हिरा सं॑दत् ॥ [३.१३.१]

अत्र प्रथमचरणे 'देवाय+अग्नये' इत्यक्षरपूर्तिः ॥

यथा वाऽथर्ववेदे–

अन्तरि॑क्ष आसां स्थाम॑ + श्रान्तसदा॑मिव ।
आस्थान॑मस्य भूतस्य॑ + विदुष्टद् वेधसो नवा॑ ॥ [१.३२.२] ॥ ✻ ॥

ककुम्मती बृहती यथा [६+८+१२+८=३४]–

कें॑यथ केदं॑सि + पुरुत्रा चिद्धि ते मनं॑ः ।
अलं॑र्षि युध्म खजकृत् पुरन्दर + प्र गा॑यत्रा अ॑गासिषुः ॥ [८.१.७]

कात्यायनस्तु व्यूहेन छन्दःपूरणे सम्भवति न शङ्कुमत्या नापि ककुम्मत्या कृत्यमिति मत्या तत्याज ते। तथाहि गायत्र्यां पञ्चाक्षरपादस्य 'सु+अभीशून्+आऋक्षे' इति सप्ताक्षरत्वे निचृद् गायत्री । 'तु+ओतासो नि+अर्वता' इति च ककुम्मत्यामक्षरपूर्तिः। उष्णिहि 'सुवीरियं सु+अश्वियम्' इति, 'तुवां यज्ञेषु ऋत्विजम्' इति चाक्षरपूर्तिः । अनुष्टुभि 'देवेषु+अधि+आपियम्' इति,

'बऋहिष्ठमर्च+अस्मै' इति च। बृहत्याम्– 'अद्या+अद्या शुवः शुवः' इति, 'क्व+ईयथ क्व+इदसि' इति च व्यूहेनाक्षरपूर्तिरिति ॥

वस्तुतस्त्वेवमक्षरगणनया सूक्ष्माणां भेदानां परिगणने परःशतं छन्दांसि भवन्ति। तत्तु व्यर्थमिति वा दुःसाध्यमिति वा पुरातनैः परित्यक्तम् ॥ * ॥

***

## प्रगाथः

अथातः प्रगाथानां मीमांसा।

के प्रगाथाः? ये प्रगीताः। **'प्रगाथशब्दः क्रियानिमित्तकः क्वचिदेव मन्त्रविशेषे वर्तते। यत्र द्वे ऋचौ प्रग्रथनेन तिस्रः क्रियन्ते, स प्रग्रथनात् प्रकर्षगानाद् वा प्रगाथ इत्युच्यते'** इत्याह जयादित्यः, **'सोऽस्याऽदिरिति छन्दसः प्रगाथेषु'** [अष्टा. सू.४.२.५५] इति सूत्रं विवृण्वन्। ननु तर्हि प्रगाथ इति गानप्रभेदः। न च्छन्दःप्रभेदः। सत्यमाह भवान्। गानार्थं यद् विशिष्टं छन्दःसंयोजनं सोऽत्र प्रगाथ उच्यते। न प्रगाथ इति नूतनं किञ्चिच्छन्दः। किन्तु छन्दसोः संयोजन-विशेषः। स इदानीमिह निरूप्यते।

प्रगाथा बहुभिर्बहुधा न्यरूप्यन्त। तान् त्रयोविंशतिधा प्रबिभेद प्रातिशाख्ये शौनकः। तत्र मुख्याः पञ्चषाः प्रदर्श्यन्ते येषु विज्ञातेषु सर्वोऽपि प्रभेदः सुशको ज्ञातुम् ॥

### १. बार्हतः प्रगाथः

यत्र सह पठ्येते बृहती च सतोबृहती च स बार्हतः प्रगाथः। यन्मुखः प्रगाथः स तेन कथ्यते। अयं बृहतीमुख इति बार्हतः [बृहती=८+८+१२+८; सतो बृहती=१२+८+१२+८=३६+४०=७६]। यथा–

**नि त्वामग्ने मनुर्दधे + ज्योतिर्जनाय शश्वते।**
**दीदेथ कण्व ऋतजात उक्षितः + यं नमस्यन्ति कृष्टयः ॥** [१.३६.१९]

त्वेषासो अग्नेरमवन्तो अर्चयः + भीमासो न प्रतीतये ।
रक्षस्विनः सदमिद् यातुमावतः + विश्वं समत्रिणं दह ॥ [१.३६.२०]

छन्दोऽन्तरसम्पादनं च सहपाठप्रयोजनम् । इमे द्वे ऋचौ तिस्रस्कारं शंसेत् । तदा बृहती च ककुभौ च सम्पद्यन्ते [८+८+१२+८;८+१२+८; ८+१२+८=३६+२८+२८=९२] । यथा–

नि त्वामग्ने मनुर्दधे ज्योतिर्जनाय शश्वते ।
दीदेथ कण्व ऋतजात उक्षितो यं नमस्यन्ति कृष्टयः ॥ १ ॥

यं नमस्यन्ति कृष्टयस्त्वेषासो अग्नेरमवन्तो अर्चयः ।
भीमासो न प्रतीतये ॥ २ ॥

भीमासो न प्रतीतये रक्षस्विनः सदमिद् यातुमावतः ।
विश्वं समत्रिणं दह ॥ ३ ॥

ताः पुनर्यदि बृहतीकारं शिशंसिषेत्, एवं पठनीयम्–

नि त्वामग्ने मनुर्दधे ज्योतिर्जनाय शश्वते ।
दीदेथ कण्व ऋतजात उक्षितो यं नमस्यन्ति कृष्टयः ॥ १ ॥

यं नमस्यन्ति कृष्टयो यं नमस्यन्ति कृष्टयः ।
त्वेषासो अग्नेरमवन्तो अर्चयो भीमासो न प्रतीतये ॥ २ ॥

भीमासो न प्रतीतये भीमासो न प्रतीतये ।
रक्षस्विनः सदमिद् यातुमावतो विश्वं समत्रिणं दह ॥ ३ ॥ ॥ * ॥

## २. काकुभः प्रगाथः

ककुप्पूर्वः सतोबृहत्यन्तः काकुभः प्रगाथः । ककुबादित्वात् काकुभ इत्युक्तम् । आह च पाणिनिरपि– 'सोऽस्याऽदिरिति छन्दसः प्रगाथेषु' [अष्टा.सू.४.२.५५] इति । [८+१२+८; १२+८+१२+८=२८+४०=६८] । यथा–

तं गूर्धया स्वर्णरं + देवासो देवमरतिं दधन्विरे ।
देवत्रा हव्यमोहिरे ॥ [८.१९.१]

विभूंतरातिं विप्र चित्रशोंचिषम् + अग्निमीळिष्व यन्तुरंम् ।
अस्य मेधंस्य सोम्यस्यं सोभरे + प्रेमंध्वराय पूर्व्यंम् ॥ [८.१९.२]

तृतीयपञ्चमपादयोर्द्धिः शंसनेनेमे द्वे ऋचौ तिस्रः ककुभो भवन्ति। [८+१२+८; ८+१२+८; ८+१२+८=२८+२८+२८=८४] यथा–

तं गूंर्धया स्वंर्णरं देवासो देवमंरतिं दंधन्विरे ।
देवत्रा हव्यमोहिरे ॥ १ ॥

देवत्रा हव्यमोहिरे विभूंतरातिं विप्र चित्रशोंचिषम् ।
अग्निमीळिष्व यन्तुरंम् ॥ २ ॥

अग्निमीळिष्व यन्तुरंमस्य मेधंस्य सोम्यस्यं सोभरे ।
प्रेमंध्वराय पूर्व्यंम् ॥ ३ ॥

सर्वत्र प्रथमपादावृत्त्या तिस्रो बृहत्यः सम्पद्यन्ते [८+८+१२+८; ८+८+१२+८; ८+८+१२+८= ३६+३६+३६=१०८]। यथा–

तं गूंर्धया स्वंर्णरं तं गूंर्धया स्वंर्णरम् ।
देवासों देवमंरतिं दंधन्विरे देवत्रा हव्यमोहिरे ॥ १ ॥

देवत्रा हव्यमोहिरे देवत्रा हव्यमोहिरे ।
विभूंतरातिं विप्र चित्रशोंचिषमग्निमीळिष्व यन्तुरंम् ॥ २ ॥

अग्निमीळिष्व यन्तुरंमग्निमीळिष्व यन्तुरंम् ।
अस्य मेधंस्य सोम्यस्यं सोभरे प्रेमंध्वराय पूर्व्यंम् ॥ ३ ॥ ॥ * ॥

### ३. महाबार्हतः प्रगाथः

आद्या महाबृहती [८+८+१२+८+८], तथा द्वितीया महासतोबृहती [१२+८+१२+८+८] चेत् स महाबार्हतः प्रगाथः [४४+४८=९२] । यथा–

बृहद्भिंरग्ने अर्चिर्भिः + शुक्रेणं देव शोचिषां ।
भरद्वांजे समिधानो यंविष्ठ्य+
रेवन्नः शुक्र दीदिहि + द्युमत् पांवक दीदिहि ॥ [६.४८.७]

विश्वासां गृहपतिर्विशामसि + त्वमग्ने मानुषीणाम् ।
शतं पूर्भिर्यविष्ठ पाह्यंहसः+
समेद्धारं शतं हिमाः + स्तोतृभ्यो ये च ददति ॥ [६.४८.८]

इमे अपि चतुर्थसप्तमयोरभ्यासेन तिस्रो बृहत्यो भवन्ति [८+८+१२+८; ८+८+१२+८; ८+१२+८+८=३६+३६+३६=१०८]। यथा–

बृहद्भिरग्ने अर्चिभिः शुक्रेण देव शोचिषा ।
भरद्वाजे समिधानो यविष्ठ्य रेवन्नः शुक्र दीदिहि ॥ १ ॥

रेवन्नः शुक्र दीदिहि द्युमत् पावक दीदिहि ।
विश्वासां गृहपतिर्विशामसि त्वमग्ने मानुषीणाम् ॥ २ ॥

त्वमग्ने मानुषीणां शतं पूर्भिर्यविष्ठ पाह्यंहसः ।
समेद्धारं शतं हिमाः स्तोतृभ्यो ये च ददति ॥ ३ ॥

यद्यप्यत्र तृतीयमन्त्रे द्वितीयचरणे द्वादशाक्षरे न शुद्धा बृहती । किन्तु न्यङ्कुसारिणी। अथापि न दोषः। यथाकथाच षट्त्रिंशदक्षरसम्पादनमेव बृहतीकरणं नाम । न पादाक्षरनियतिः । एवमेव किल कुर्वन्ति बृहतीसहस्रसम्पादनमपि । अथापि केचिद्धठादेव पादान् विलुठ्य पठन्ति–

त्वमग्ने मानुषीणाम् + शतं पूर्भिर्यविष्ठ ।
पाह्यंहसः समेद्धारं शतं हिमाः + स्तोतृभ्यो ये च ददति ॥

एवं विभागेऽपि न पादेषु अक्षरपूर्तिः । सप्ताक्षरो द्वितीयः पादः । त्रयोदशाक्षरश्च तृतीयः। कथञ्चिद् व्यूह्य व्यत्ययेन समष्टिसङ्ख्यया वा बृहतीत्वं सम्पादनीयम्॥ ॥ * ॥

**४. यवमध्यान्तः प्रगाथः**

यत्र पूर्वा बृहती [८+८+१२+८], पश्चाद् यवमध्या त्रिष्टुप् [८+८+१२+८+८] स यवमध्यान्तः प्रगाथः [३६+४४=८०] । यद्यपि बार्हतप्रगाथ एवायम्। बृहत्यादित्वात्। अथापि विशेषविवक्षया पृथगुदलिख्यत । यथा–

वामी वामस्यं धूतयः + प्रणीतिरस्तु सूनृतां ।
देवस्यं वा मरुतो मर्त्यस्य वा + ईजानस्यं प्रयज्यवः ॥ [६.४८.२०]

सद्यश्चिद् यस्यं चर्कृतिः + परि द्यां देवो नैति सूर्यः ।
त्वेषं शवों दधिरे नामं यज्ञियम् + मरुतो वृत्रहं शवः + ज्येष्ठं वृत्रहं शवः ॥
[६.४८.२१]

अत्र द्वितीयमन्त्रे द्वितीयचरण एकाक्षराधिक इति भुरिक् त्रिष्टुप्। चरमचरणः सप्ताक्षर इति समीकरणं वा। अनयोर्बृहतीकारं शंसने स्वरसतः द्वे बृहत्यौ भवतः । एकश्च गायत्रपादोऽवविशष्यते 'ज्येष्ठं वृत्रहं शवः' इति ।

एवं वा षटत्रिंशदक्षरत्वं सम्पादनीयम् [८+८+१२+८; १२+८+८+८; ८+१२+८+८=१०८]–

वामी वामस्यं धूतयः प्रणीतिरस्तु सूनृतां ।
देवस्यं वा मरुतो मर्त्यस्य वेजानस्यं प्रयज्यवः ॥ १ ॥

देवस्यं वा मरुतो मर्त्यस्य वेजानस्यं प्रयज्यवः ।
सद्यश्चिद् यस्यं चर्कृतिः परि द्यां देवो नैति सूर्यः ॥ २ ॥

परि द्यां देवो नैति सूर्यस्त्वेषं शवो दधिरे नामं यज्ञियम् ।
मरुतों वृत्रहं शवो ज्येष्ठं वृत्रहं शवः ॥ ३ ॥ ॥ * ॥

## ५. विपरीतोत्तरः प्रगाथः

यत्राऽद्या बृहती [८+८+१२+८], उत्तरा तु विपरीता नाम पङ्क्तिः [८+१२+८+१२] सा विपरीतोत्तरः प्रगाथः । अयमपि बार्हतप्रभेद एव । यथा [३६+४०=७६]–

नहि तें शूर राधंसः + अन्तं विन्दामिं सत्रा ।
दशस्या नों मघवन्नू चिंदद्रिवः + धियो वाजेभिराविथ ॥ [८.४६.११]

य ऋष्वः श्रावयत्संखा + विश्वेत् स वेंद जनिमा पुरुष्टुतः ।
तं विश्वे मानुंषा युगा + इन्द्रं हवन्ते तविषं यतस्रुचः ॥ [८.४६.१२]

अत्रापि द्वौ बृहत्यौ सम्पाद्येयाताम् । यथा–

नहि ते शूर राधसोऽन्तं विन्दामि सत्रा ।
दशस्या नो मघवन्नू चिदद्रिवो धियो वाजेभिराविथ ॥ १ ॥

धियो वाजेभिराविथ य ऋष्वः श्रावयत्सखा ।
विश्वेत् स वेद जनिमा पुरुष्टुतस्तं विश्वे मानुषा युगा ॥ २ ॥

अन्ते चैको जागतः पादोऽवशिष्यते । तस्यापि त्रिःपाठे पुनरपि भवत्येका बृहतीति सर्वं चतुरस्रम् ॥ ॥ ❋ ॥

**६. आनुष्टुभः प्रगाथः**

एकाऽनुष्टुप् द्वे च गायत्र्यौ आनुष्टुभः प्रगाथः[३२+२४+२४=८०] । यथा–

आ त्वा रथं यथोतये + सुम्नाय वर्तयामसि ।
तुविकूर्मिमृतीषहम् + इन्द्र शविष्ठ सत्पते ॥ [८.६८.१]

तुविशुष्म तुविक्रतो + शचीवो विश्वया मते ।
आ पप्राथ महित्वना ॥ [८.६८.२]

यस्य ते महिना महः + परि ज्मायन्तमीयतुः ।
हस्ता वज्रं हिरण्ययम् ॥ [६.६८.३]

अत्राप्यक्षरगणनयाऽऽदौ द्वे बृहत्यौ भवतः । एकश्च गायत्रीपादोऽवशिष्यते । तस्य च नवधाऽऽवृत्तौ पुनर्द्वे बृहत्यौ भवतः । एवं सर्वत्राप्यनुसन्धेयमित्यलम् ॥ ॥ ❋ ॥



अथ च्छन्दोन्तरसम्पादनम् ।

यो यच्छन्दः सम्पिपादयिषति तस्य चतुर्थभागं सङ्ख्याय तावतीः ऋच आहरेत् । तद् यथा गायत्र्या उष्णिहं सम्पादयितुमिच्छन् उष्णिहश्चतुर्थं गणयेत् । अष्टाविंशत्यक्षरोष्णिक् । तेन चतुर्थभागगणने सप्त भवन्ति । ततः सप्त गायत्रीः शंसेत् । तदा कियत्य उष्णिह आसन्? तदर्थं गायत्र्याश्चतुर्थं

गणयेत् । चतुर्विंशत्यक्षरा गायत्री । तस्याश्चतुर्थो भागः षड् भवन्ति । तदिदं ते प्रश्नस्योत्तरम्– सप्तभिर्गायत्रीभिः शंसिताभिः षळुष्णिहो भवन्तीति ।

$\frac{२४x७}{२८} = ६$

एवमष्टौ गायत्र्यः षळनुष्टुभो भवन्ति । $\frac{२४x८}{३२} = ६$

नव ,, षड् बृहत्यो ,, $\frac{२४x९}{३६} = ६$

दश ,, षट् पङ्क्तयो ,, $\frac{२४x१०}{४०} = ६$

एकादश ,, षट् त्रिष्टुभो ,, $\frac{२४x११}{४४} = ६$

द्वादश ,, षड् जगत्यो ,, $\frac{२४x१२}{४८} = ६$

एवं सर्वत्रापि गणितक्रमः । यस्य च्छन्दसः यच्छन्दस्त्वं सम्पादनीयं ता ऋचः सम्पादकस्य चतुर्थेन गुणयित्वा सम्पाद्यस्य चतुर्थेन विभजेदिति ।

तथाहि १०८ जगतीभिः कति बृहत्यः सम्पद्यन्ते–

$\frac{१०८x१२}{९} = १४४$ बृहत्यः ।

१०८ बृहतीभिः कति जगत्यः–

$\frac{१०८x९}{१२} = ८१$जगत्यः ।

इत्यलं गणितकुतूहलेन ॥ ❋ ॥

तदिमानि सप्रभेदानि सप्त प्रधानानि च्छन्दांसि ।

अत्रापि त्रीणि चत्वारि वा प्रधानानीति मन्यन्ते ।

कानि त्रीणि? गायत्री त्रिष्टुब् जगतीति ।

कस्मात् त्रीणि प्रधानानि? त्रिषवणदेवताभिर्वसुरुद्रादित्यैः सङ्गतत्वादिति याज्ञिकाः। त्रिष्वेव च्छन्दस्सु अत्यधिकमृचो दाशतयीषु भवन्तीति प्राधान्यमिति साङ्ख्याः । तथाहि तेषु मन्त्रसङ्ख्या बाह्वृच्ये–

त्रिष्टुप्– ४२५८

गायत्री– २४५६

जगती– १३५३

८०६७

तुरीयस्थानेऽनुष्टुभामाधिक्यम्–

अनुष्टुप्– ८६०

अतश्चत्वारि प्रधानानीत्यन्ये मन्यन्ते ।

अथावशिष्टस्य छन्दस्त्रयस्यर्चां सङ्ख्या–

पङ्क्तिः– ४९९

बृहती– ४२७

उष्णिक्– ३९८

मन्त्राधिक्यमेव केवलं च्छन्दसां न प्राधान्यकारणं भवति । किन्त्वभिमानि-देवताप्राधान्याच्छन्दसां प्राधान्यम् । अतो बृहत्येव सप्तसु प्रधानं छन्द इति तात्त्विकाः । इतरेषामपि च्छन्दसां बृहतीकरणविधानाच्च ।

तथाहि–

| | | | |
|---|---|---|---|
| ३ गायत्र्यः | [७२ अक्षराणि] | = | २ बृहत्यौ । |
| ९ उष्णिहः | [२५२ ” ] | = | ७ बृहत्यः । |

| | | | |
|---|---|---|---|
| ९ अनुष्टुभः | [२८८ अक्षराणि] = | | ८ बृहत्यः । |
| ९ पङ्क्तयः | [३६० | ,, ] = | १० बृहत्यः । |
| ९ त्रिष्टुभः | [३९६ | ,, ] = | ११ बृहत्यः । |
| ३ जगत्यः | [१४४ | ,, ] = | ४ बृहत्यः । |

समग्रे चर्ग्वेदे–

४२५८ त्रिष्टुभः = ५२०४ बृहत्यः [अष्टौ चाक्षराणि] ।

२४५६ गायत्र्यः = १६३७ ,, [द्वादश चाक्षराणि] ।

१३५३ जगत्यः = १८०४ ,,

८६० अनुष्टुभः = ७६४ ,, [षोळश चाक्षराणि] ।

४९९ पङ्क्तयः = ५५४ ,, [षोळश चाक्षराणि] ।

३९८ उष्णिहः = ३०९ ,, [विंशतिश्चाक्षराणि] ।

संहत्य सप्तच्छन्दसां बृहतीकरणेन मन्त्रसङ्ख्या–

५२०४+१६३७+१८०४+७६४+५५४+४२७+३०९=१०६९९

अवशिष्टानि चाक्षराणि [८+१२+१६+१६+२०=]७२; तानि च द्वे बृहत्यौ भवत इत्याहत्य सप्तच्छन्दस्सु बृहतीकृता मन्त्राः १०७०१ भवन्तीत्यलं बृहत्या बृहतीचिन्तया ॥ * ॥

***

# अतिच्छन्दांसि

इत उत्तराणि अतिच्छन्दांसीत्युच्यन्ते । तानि चानुक्रमेण व्याख्यास्यामः ।

### १. अतिजगती

तत्र प्रथमाऽतिजगती। कस्मादतिजगती? अष्टचत्वारिंशदक्षरां जगतीमतिगता चतुर्भिरक्षैरैरिति । तत इयं द्विपञ्चाशदक्षरा पञ्चपादा त्रिभिर्द्वादशकैर्द्वाभ्यामष्टकाभ्यां च ।

१. यथा [१२+१२+१२+८+८=५२]–

प्र वो म॒हे म॒तयो॑ यन्तु॒ विष्ण॑वे + म॒रुत्व॑ते गिरि॒जा ए॑व॒याम॑रुत् ।
प्र शर्धा॑य॒ प्रय॑ज्यवे सुखा॒दये॑ + त॒वसे॑ म॒न्ददि॑ष्टये॒ + धुनि॑व्रताय॒ शव॑से ॥
[५.८७.१]॥ ❋ ॥

२. रीत्यन्तरेण यथा [१२+८+८+१२+१२=५२]–

प्रेदं ब्रह्म॑ वृत्र॒तूर्ये॑ष्वाविथ + प्र सु॑न्व॒तः श॑चीपते + इन्द्र॒ विश्वा॑भिरू॒तिभि॑ः ।
माध्यं॑न्दिनस्य॒ सव॑नस्य वृत्रहन् + अ॒ने॒द्य॒ पिबा॒ सोम॑स्य वज्रिवः ॥ [८.३७.१]

अत्र 'तूर्येषु+आविथ' इति, 'अनेदिय' इति च व्यूहेनाक्षरपूर्तिः ॥ ❋ ॥

३. एकस्मिन्नष्टके सप्ताक्षरा, द्वादशके च त्रयोदशाक्षरा यथा [१३+१२+७+१२+८=५२]–

स भ्रात॑रं॒ वरु॑णमग्न॒ आ व॑वृत्स्व +
दे॒वाँ अच्छा॑ सुम॒ती य॒ज्ञव॑नसम् + ज्येष्ठं॑ य॒ज्ञव॑नसम् ।
ऋ॒तावा॑नमादि॒त्यं च॑र्षणी॒धृत॑म् + राजा॑नं चर्षणी॒धृत॑म् ॥ [४.१.२] ॥ ❋ ॥

४. एकेन द्वादशकेन चतुर्भिर्दशकैर्यथा [१२+१०+१०+१०+१०=५२]–

क॒था दा॑शेम॒ नम॑सा सु॒दानू॑न् + ए॒व॒या म॒रुतो॒ अच्छो॑क्तौ+
प्रश्र॑वसो म॒रुतो॒ अच्छो॑क्तौ ।
मा नो॑ऽहिर्बु॒ध्न्यो॑ रि॒षे धा॑त् + अ॒स्माकं॑ भूदुपमाति॒वनि॑ः ॥ [५.४१.१६]

अत्र 'सुदानु+ऊन्' इति प्रथमचरणे, द्वितीयचरणे च 'अच्छ+उक्तौ' इति च व्यूहेनाक्षरपूर्तिः ॥ ॥ * ॥

५. एकादशकनवकाभ्यां दशकेन पुनरेकादशकाभ्यां च यथा [११+९+१०+११+११=५२]–

इर्तिं चि॒न्नु प्र॒जायै॑ प॒शुम॑त्यै + दे॒वा॑सो॒ वन॑ते मर्त्यो॑ वः +
आ दे॑वासो वन॒ते मर्त्यो॑ वः ।
अत्रा॑ शि॒वां त॒न्वो॑ धा॒सिम॒स्याः + ज॒रां चि॑न्मे॒ निर्ऋ॑तिर्जग्रसीत ॥

[५.४१.१७]

अत्र तुरीयचरणे 'तनुवः' इत्यक्षरपूर्तिः ॥ ॥ * ॥

६. द्वाभ्यां त्रयोदशकाभ्यां, दशकेनैकेन, द्वाभ्यां चाष्टकाभ्यां यथा [१३+१३+१०+८+८=५२]–

तमिन्द्रं॑ जोहवीमि म॒घवा॑नमु॒ग्रम् + स॒त्रा दधा॑न॒मप्र॑तिष्कुतं॒ शवां॑सि ।
मंहि॑ष्ठो गी॒र्भिरा च॑ य॒ज्ञियः॑ + व॒वर्तद् रा॒ये नो॒ विश्वा॑ +
सु॒पथा॑ कृणोतु व॒ज्री ॥ [८.९७.१३] ॥ * ॥

७. क्वचिच्चतुष्पदाऽप्यतिजगती भवति (१४+१२+१४+१२=५२)

यथा–

विश्वा॒ः पृत॑ना अभि॒भूत॑रं॒ नरं॑ स॒जूः + त॒त॒क्षुरिन्द्रं॑ जज॒नुश्च॑ रा॒जसे॑ ।
क्रत्वा॒ वरि॑ष्ठं॒ वर॑ आ॒मुरि॑मु॒त + उ॒ग्रमोजि॑ष्ठं त॒वसं॑ तर॒स्विन॑म् ॥

[८.९७.१०]

अत्र तृतीयचरणे 'क्रतुवा' इति व्यूहने त्रयोदशाक्षरतया स्यान्न्यूनाक्षरः पादः । अथवा चतुर्थचरणेऽपि 'तरसुविनम्' इति व्यूह्य पादद्वयस्यापि त्रयोदशाक्षरत्वं वक्तव्यमित्याद्यूह्यम् ॥ * ॥

***

## २. शक्करी

अथ शक्करी। अतिजगतीतोऽपि चतुरुत्तरा षट्पञ्चाशदक्षरा शक्करी। कथं शक्करी? शक्नोति यज्ञेषु वरीतुम्, भगवन्तं विवरीतुमिति वा। सप्तपादा चेयं प्रतिपादमष्टाक्षरा (८+८+८+८+८+८+८=५६) यथा–

प्रो ष्व॑स्मै पुरोर॒थम् + इन्द्रा॑य शू॒षमर्चत।
अ॒भीके॑ चिदु लोक॒कृत् + स॒ङ्गे स॒मत्सु॑ वृ॒त्र॒हा + अ॒स्माकं॑ बोधि चोदि॒ता +
नभ॑न्तामन्य॒केषां॑ + ज्या॒का अधि॒ धन्व॑सु॥ [१०.१३३.१]

'प्रो षु+अस्मै' इति, 'अन्यक+इषाम्' इति, 'जियाका' इति च व्यूहेनाक्षरपूरणम्॥ ॥ * ॥

इयं प्रथिता शक्करी। पञ्चपदा चान्या काचिदेकाक्षरोना पठ्यते [११+११+११+११+११=५५]। तद् यथा–

अधं॑ श्वे॒तं क॒लशं॒ गोभि॑र॒क्तम् + आ॒पि॒प्या॒नं म॒घवा॑ शु॒क्रमन्धः॑।
अ॒ध्व॒र्युभिः॒ प्रय॑तं॒ मध्वो॒ अग्र॑म् + इन्द्रो॒ मदा॑य प्रति॑ ध॒त् पिब॑ध्यै +
शूरो॒ मदा॑य प्रति॑ ध॒त् पिब॑ध्यै॥ [४.२७.५] ॥ * ॥

अन्या क्वचित् पञ्चपदा पठ्यते चतुर्भिर्द्वादशकैरन्त्येन चाष्टकेन (१२+१२+१२+१२+८=५६)। यथा–

स त्वं दक्ष॑स्यावृ॒को वृ॒धो भूः॑ + अ॒र्यः प॒रस्यान्त॑रस्य॒ तरु॑षः।
रा॒यः सू॑नो सहसो॒ मर्त्ये॒ष्वा + छ॒र्दिर्य॑च्छ वी॒तह॑व्याय स॒प्रथः॑ +
भ॒रद्वा॑जाय स॒प्रथः॑॥ [६.१५.३]

अत्र प्रथमचरणे 'तुवं दक्षस्य+अवृकः' इति, द्वितीयचरणे 'परस्य+अन्तरस्य' इति, तृतीयचरणे 'मर्तियेषु+आ' इति च व्यूहेनाक्षरपूर्तिः॥ ॥ * ॥

***

### ३. अतिशक्वरी

अथातिशक्वरी। शक्वरीमप्यतिगता षष्ट्याऽक्षरैरितीयमतिशक्वरी गदिता।

१. द्वादशाक्षरैः पञ्चभिः पादैस्तस्या भवत्येका विधा [१२+१२+१२+१२+१२=६०]। यथा–

> अ॒ग्निम॑ग्निं वः स॒मिधा॑ दुव॒स्यत + प्रि॒यम्प्रि॑यं वो॒ अति॑थिं गृणी॒षणि।
> उप॑ वो गी॒र्भिर॒मृतं॑ विवासत + दे॒वो दे॒वेषु॒ वन॑ते॒ हि वार्य॑म् +
> दे॒वो दे॒वेषु॒ वन॑ते॒ हि नो॒ दुवः॑॥ [६.१५.६]

अत्र पञ्चमचरणे 'वारियम्' इति व्यूहेनाक्षरपूर्तिः॥ ॥ * ॥

२. षड्भिरष्टकैरेकेन द्वादशकेन चापरा सप्तपदाऽतिशक्वरी [८+८+८+८+८+१२+८=६०]। यथा–

> सु॒षमा या॑तमद्रि॑भिः + गोश्री॑ता मत्स॒रा इ॒मे + सोमा॑सो मत्स॒रा इ॒मे।
> आ रा॑जाना दिविस्पृशा + अ॒स्म॒त्रा ग॑न्तमुप॑ नः।
> इ॒मे वां॑ मित्रावरुणा॒ गवा॑शिरः + सोमाः॑ शु॒क्रा गवा॑शिरः॥
> [१.१३७.१] ॥ * ॥

३. द्वाभ्यां षोडशकाभ्यां, एकेन द्वादशकेन, पुनर्द्वाभ्यामष्टकाभ्यां तृतीया पञ्चपदाऽतिशक्वरी [१६+१६+१२+८+८=६०]। यथा–

> सा॒कं जा॒तः क्रतु॑ना सा॒कमोज॑सा ववक्षिथ +
> सा॒कं वृ॒द्धो वी॒र्यैः॑ सास॒हिर्मृधो॒ विच॑र्षणिः।
> दाता॒ राधः॑ स्तुव॒ते काम्यं॒ वसु॑ + सैनं॑ सश्चद्दे॒वो देवम् +
> स॒त्यमिन्द्रं॑ स॒त्य इन्दुः॑॥ [२.२२.३]

अत्र 'वीरियैः' इति, 'कामियम्' इति च व्यूहेनाक्षरपूर्तिः॥

यथा वा–

> अध॒ त्विषी॑माँ अ॒भ्योज॑सा॒ क्रिविं॑ यु॒धाऽभ॑वत् +
> आ रोद॑सी अपृणदस्य म॒ज्मना॒ प्र वा॑वृधे।

**अधस्तान्यं जठरे प्रेमरिच्यत + सैनं सश्चद् देवो देवम् +**
**सत्यमिन्द्रं सत्य इन्दुः ॥ [२.२२.२]**

अत्र 'अभि+ओजसा' इति व्यूहेनाक्षरपूर्तिः ॥ ॥ * ॥

४. अथान्या द्वाभ्यामेकादशकाभ्याम्, अष्टकैस्त्रिभिः, द्वाभ्यां च सप्तकाभ्याम् [ ११+११+८+७+७+८+८=६०] । यथा–

**प्रप्रा वो अस्मे स्वयंशोभिरूती + परिवर्ग इन्द्रो दुर्मतीनाम् +**
**दरीमन् दुर्मतीनाम् ।**
**स्वयं सा रिषयध्यै + या न उपेषे अत्रैः ।**
**हतेमसन्न वक्षति + क्षिप्ता जूर्णिर्न वक्षति ॥ [१.१२९.८] ॥**

यथास्थिते इयं द्व्यक्षरोना अतिशक्वरी भवति । द्वितीयतृतीयचरणयोः 'दुरुमतीनाम्' इति व्यूहेनाक्षरपूर्तिः ॥ ॥ * ॥

५. इयमपरा विधा द्वाभ्यां दशकैकादशकाभ्याम्, चतुर्भिरष्टकैरेकेन सप्तकेन [१०+८+८+८+८+११+७=६०] । यथा–

**त्वं न इन्द्र राया परीणसा + याहि पथाँ अनेहसा + पुरो याह्यरक्षसा ।**
**सचस्व नः पराक आ + सचस्वास्तमीक आ ।**
**पाहि नो दूरादारादभिष्टिभिः + सदा पाह्यभिष्टिभिः ॥ [१.१२९.९]**

अत्र 'याहि +अरक्षसा' इति, 'सचस्व+अस्तमीके' इति, 'पाहि+अभिष्टिभिः' इति व्यूहेनैकषष्टिरक्षराणीतीयमेकाक्षराधिकाऽतिशक्वरी भवति । चरमपादे पुनरव्यूहेन वा षष्टिरक्षराणि सम्पादनीयानि ॥ * ॥

***

**४. अष्टिः**

अथाऽष्टिं व्याख्यास्यामः । कस्मादष्टिः? अष्टावष्टका अस्यां सन्तीत्यष्टिनी सतीयमष्टिरुच्यते ।

१. तस्या एका विधा द्व्यक्षराधिका स्वराळष्टिः प्रथममण्डले पठ्यते [१०+ ११+७+८+८+१२+१०=६६] । यथा–

पाहि नं इन्द्र सुष्टुत स्रिधः + अवयाता सदमिद् दुर्मतीनाम् +
देवः सन् दुर्मतीनाम् ।
हन्ता पापस्यं रक्षसः + त्राता विप्रस्य मावंतः ।
अधा हि त्वां जनिता जीजंनद् वसो + रक्षोहणं त्वा जीजंनद् वसो ॥
[१.१२९.११]

व्यूहं विनापीयं स्वराळष्टिः ॥ ॥ * ॥

२) अपरा विधा [१२+११+७+८+८+१०+८=६४] केवलाऽष्टिः । यथा–

वनोति हि सुन्वन् क्षयं परीणसः + सुन्वानो हि ष्मा यजत्यव द्विषः +
देवानामव द्विषः ।
सुन्वान इत् सिषासति + सहस्रा वाज्यवृतः ।
सुन्वानायेन्द्रो ददात्याभुवम् + रयिं ददात्याभुवम् ॥ [१.१३३.७]

अत्र पञ्चमपादे 'वाजी+अवृतः' इति, चरमपादे च 'ददाति+आभुवम्' इति व्यूहेनाक्षरपूर्तिः । अन्यथा द्व्यक्षरोना विराडष्टिः ॥ ॥ * ॥

३) अथ तृतीया विधा [११+११+८+७+७+१२+८=६४] । यथा–

त्वं नो वायवेषामपूर्व्यः + सोमानां प्रथमः पीतिमर्हसि +
सुतानां पीतिमर्हसि ।
उतो विहुत्मंतीनाम् + विशां ववर्जुषीणाम् ।
विश्वा इत् ते धेनवो दुह्र आशिरम् + घृतं दुहत आशिरम् ॥
[१.१३४.६]

अत्र पुनः प्रथमपादे 'तुवं' इति, 'अपूर्वियः' इति च व्यूहेनाक्षरपूर्तिः ॥ * ॥

इमास्तिस्रः सप्तपदा अष्टयः । अथ षट्पदाऽष्टिः ।

४) तत्रैका विधा [१२+१२+८=१२+१२+८=६४] । यथा–

अर्ति वायो ससतो याहि शश्वतः +
यत्र ग्रावा वदति तत्र गच्छतम् + गृहमिन्द्रश्च गच्छतम् ।
वि सूनृता ददृशे रीयते घृतम् +
आ पूर्णया नियुता याथो अध्वरम् + इन्द्रश्च याथो अध्वरम् ॥
[१.१३५.७] ॥ ✻ ॥

५) अथ पञ्चमी विधा पञ्चपदाऽष्टिः [१६+१६+१६+८+८=६४] । यथा–

त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्मः +
तृपत् सोममपिबद् विष्णुना सुतं यथाऽवशत् ।
स ईं ममाद महि कर्म कर्तवे महामुरुम् +
सैनं सश्चद् देवो देवम् + सत्यमिन्द्रं सत्य इन्दुः ॥ [२.२२.१]

अत्राष्टाक्षरयोरन्त्ययोश्चरणयोरेकीभावेनेयमेव चतुष्पदाऽष्टिरपि स्यात् [१६+१६+१६+१६=६४]॥ ॥ ✻ ॥

६. षष्ठी पुनः पञ्चपदाऽष्टिः [१३+९+८+२२+१२=६४] । यथा–

त्वां ह्यग्ने सदमित् समन्यवो देवासः +
देवमरतिं न्येरिरे + इति क्रत्वा न्येरिरे ।
अमर्त्यं यजत मर्त्येष्वा देवमादेवं जनत प्रचेतसम् +
विश्वमादेवं जनत प्रचेतसम् ॥ [४.१.१]

अत्र द्वितीयतृतीयचरणयोः 'नि+एरिरे' इति व्यूहेन, चतुर्थचरणे 'मर्त्येषु+आ' इति व्यूहेन चाक्षरपूर्तिः । केचिद् द्वितीयतृतीयचरणावेकीकृत्य चतुष्पदामेतां पठन्ति । इयमेव षट्पदाऽपि स्यात्, दशाक्षरश्चेत् चतुर्थः पादः, द्वादशाक्षरौ पञ्चमषष्ठाविति ॥ ✻ ॥

✻✻✻

## ५. अत्यष्टिः

ततोऽपि चतुरुत्तरा सप्तपदा भवत्यत्यष्टिः [१२+१२+८+८+८+१२+८ =६८] । यथा–

> अ॒ग्निं होता॑रं मन्ये॒ दास्व॑न्तम् + वसुं॑ सू॒नुं सह॑सो जा॒तवे॑दसम् +
> विप्रं॒ न जा॒तवे॑दसम् ।
> य ऊ॒र्ध्वया॑ स्वध्व॒रः + दे॒वो दे॒वाच्या॑ कृपा ।
> घृ॒तस्य॒ विभ्रा॑ष्टि॒मनु॑ वष्टि शो॒चिषा॑ + आ॒जुह्वा॑नस्य स॒र्पिषः॑ ॥
> [१.१२७.१]

अत्र प्रथमचरणे 'मनिये दासुवन्तम्' इति व्यूहेत । चतुर्थे 'सु+अध्वरः' इति । पञ्चमे 'देवाचिया' इति । षष्ठस्त्रयोदशाक्षर इत्येकाक्षराधिका भुरिगत्यष्टिरियम् । उत्तरपादादेराकारस्य 'शोचिषाऽऽजुह्वानस्य' इत्येकाक्षरीभावेन केवला वाऽत्यष्टिः ॥ ❋ ॥

यथा वा–

> पूर्वा॒मनु॑ प्र॒दिशं॑ याति॒ चेकि॑तत् + सं र॒श्मिभि॑र्यतते द॒र्शतो रथः॑ +
> दैव्यो॑ द॒र्शतो रथः॑ ।
> अग्म॑न्नु॒क्थानि॒ पौंस्या॑ + इन्द्रं॒ जैत्रा॑य ह॒र्षय॑न् ।
> वज्र॑श्च॒ यद् भव॑थो॒ अन॑पच्युता + स॒मत्स्वन॑पच्युता ॥ [९.१११.३]

अत्र तृतीयचरणे 'दैवियः' इति व्यूहेत । चतुर्थे 'पौंसिया' इति । चरमे 'समत्सु+अनपच्युता' इति । तेन केवलाऽत्यष्टिः ॥ ॥ ❋ ॥

## ६. धृतिः

ततोऽपि चतुरुत्तरा भवति सप्तपदा धृतिः [१२+१२+८+८+८+१६+८=७२] । यथा–

> अ॒व॒र्म॒ह इ॑न्द्र दादृहि श्रु॒धी नः॑ + शु॒शोच॒ हि द्यौः क्षा न भी॒षाँ अ॑द्रिवः +
> घृ॒णान्न भी॒षाँ अ॑द्रिवः ।

शुष्मिन्तमो हि शुष्मिभिः + वधैरुग्रेभिरीयसे ।
अपूरुषघ्नो अप्रतीत शूर सत्वभिः + त्रिसप्तैः शूर सत्वभिः ॥
[१.१३३.६]

अत्र षष्ठः पादश्चतुर्दशाक्षर इति द्व्यक्षरोना विराड्धृतिः । षष्ठे 'अप्रति+इत' इति, 'सतुवभिः' इति च व्यूहेन केवला वा ॥ ॥ * ॥

अथ काचिदन्या धृतिः पठ्यते [१२+१२+८+१२+८+१२+८=७२] । यथा–

सखे सखायमभ्या ववृत्स्व + आशुं न चक्रं रथ्येव रंह्या +
अस्मभ्यं दस्म रंह्या ।
अग्ने मृळीकं वरुणे सचा विदः + मरुत्सु विश्वभानुषु ।
तोकाय तुजे शुशुचान शं कृधि + अस्मभ्यं दस्म शं कृधि ॥ [४.१.३]

अत्र प्रथमचरणे 'सखायमभि+आ ववृत्सुव' इति व्यूहेन द्वादशाक्षराणि । द्वितीयचरणे 'आशुं न चक्रं रथियेव रंहिया' इति व्यूहेन । तृतीये च 'रंहिया' इति चाक्षरपूर्तिः ॥ ॥ * ॥

***

### ७. अतिधृतिः

ततोऽपि चतुरुत्तराऽष्टपदाऽतिधृतिः (१२+१२+८+८+८+१२+८+८= ७६) । यथा–

स हि शर्धो न मारुतं तुविष्वणिः+
अप्नस्वतीषूर्वरास्विष्टनिः + आर्तनास्विष्टनिः ।
आदद्धव्यान्याददिः + यज्ञस्य केतुरर्हणा ।
अध स्मास्य हर्षतो हृषीवतः +
विश्वे जुषन्त पन्थाम् + नरः शुभे न पन्थाम् ॥ [१.१२७.६]

अत्र द्वितीयचरणे 'अप्नस्वतीषु+उर्वरासु+इष्टनिः' इति व्यूहेन द्वादशाक्षरता। तृतीयचरणे 'आर्तनासु+इष्टनिः' इति व्यूहेनाष्टाक्षरता। 'हव्यानि+आददिः' इति चतुर्थे। षष्ठे 'हऋषतः' इति द्वादशाक्षरता। सप्तमाष्टमयोः 'पन्थ+आम्' इत्यष्टाक्षरता। अन्यथा द्व्यक्षरोनेयं विराळतिधृतिः ॥ * ॥

वेङ्कटमाधवस्तु छन्दोऽनुक्रमण्यामतिधृतेर्लक्षणान्तरमाह– **'सप्तैवातिधृतेः पादाः 'स हि शर्धो न मारुतम्' । द्वादशकषोडशकावष्टका जागतोऽष्टकः'** [१२+१६+८+८+८+१२+८=७२] इति। तदेतन्नाऽऽदृत्यम्, द्वाभ्यां कारणाभ्याम्; व्यभिचारितया लक्षणस्य, अयुक्ततया च पादविभागस्य।

अहो अतिधृतेर्लक्षणं विवक्षन् धृतिं लक्षयामास। अस्तु तर्हि धृतिरेवेति चेत् तर्हीयमतिधृतिरिति स्वव्याहारेणैव व्याहन्येत। ननु तर्हि चतुरक्षरन्यूनाऽतिधृतिः स्यात्। न स्यात्। यदि स्यात् धृतिश्छन्द एव न स्यात्। यतः सर्वाऽपि धृतिश्चुतरक्षरन्यूनाऽतिधृतिरेव स्यात्। छन्दसां चतुरुत्तरत्वनियमश्च भज्येत। अयुक्तश्च पदविभागः। तथाहि तत्पक्षेऽयं पदविभागः–

**स हि शर्धो न मारुतं तुविष्वणिः +**
**अप्नस्वतीषूर्वरास्विष्टनिरार्तनास्विष्टनिः ।**
**आदद्धव्यान्याददिः + यज्ञस्य केतुरर्हणा ।**
**अध स्मास्य हर्षतः + हृषीवतो विश्वे जुषन्त पन्थाम् +**
**नरः शुभे न पन्थाम् ॥**

अतिछन्दस्सु हि क्वचिदन्त्यप्रासः पादं प्रतृणत्ति। अन्यत्र स्याद्वा ऐच्छिकः पदविभागः। अन्त्यप्रासेषु तु नियतः। यथाऽत्रैव अन्त्योपान्त्यपादयोः– **'जुषन्त पन्थाम्'** इति, **'शुभे न पन्थाम्'** इति। एवं द्वितीयपादत्वेन तदभिमते पदपुञ्जे **'इष्टनिः'** इत्यस्य द्विः श्रवणमेव तस्य पादैक्यं वारयति। तेन **'अप्नस्वतीषूर्वरास्विष्टनिः'** इत्येकः पादः, **'आर्तनास्विष्टनिः'** इत्यपर इत्येव वैदिकः पन्थाः। अहो वेदव्याख्यातारो वैदिकच्छन्दस्स्वेव भ्रमन्ति, किम्वर्थे?

तस्मात् पादविधाने शौनकोक्तं लक्षणमेव साधु– '**अतिधृतौ द्वौ पादौ जागतौ, ततस्त्रयोऽष्टकाः, जागतश्च, तथाऽष्टाक्षरकावपि**' इति ॥ * ॥

तदियमनुक्रमेणातिच्छन्दसां बाह्वृच्ये पठितानां सङ्ख्या–

| | | |
|---|---|---|
| अत्यष्टिः | ८२ | [५५७६ अक्षराणि ] |
| शक्वरी | १९ | [१०६४ ,, ] |
| अतिजगती | १७ | [ ८८४ ,, ] |
| अतिशक्वरी | १० | [ ६०० ,, ] |
| अष्टिः | ७ | [ ४४८ ,, ] |
| धृतिः | २ | [ १४४ ,, ] |
| अतिधृतिः | १ | [ ७६ ,, ] |
| | | ८७९२ अक्षराणि |

अतिच्छन्दांस्याहत्य २४४ बृहत्यः, अष्टौ चाक्षराणि ॥ ॥ * ॥

अथैकपदादीनां मन्त्राणां सङ्ख्या–

| | | |
|---|---|---|
| एकपदा विराट् | ५ | [ ५० अक्षराणि] |
| एकपदा त्रिष्टुप् | १ | [ ११ ,, ] |
| द्विपदा गायत्री | ३ | [ ४८ ,, ] |
| अक्षरपङ्क्तिः | ८२ | [१६४० ,, ] |
| द्विपदाऽनुष्टुप् | २४ | [ ३८४ ,, ] |
| द्विपदा विराट् | ३३ | [ ६६० ,, ] |
| द्विपदा त्रिष्टुप् | १४ | [ ३०८ ,, ] |
| द्विपदा जगती | १ | [ २४ ,, ] |
| | | ३१२५ ,, |

एतानि च संहत्य ८६ बृहत्यः, २९ चाक्षराणि ॥ ॥ * ॥

ततश्च समग्रे बाह्वृच्ये बृहतीसङ्ख्या–

१०७०१
२४४+ ८अक्षराणि
८६+२९ ''
११०३२+०१ अक्षरम्।

अतः ऋग्वेदाक्षराणि ३,९७,१५३ इति स्थितम्। तानि तावन्ति हरिनामानि भवन्ति। शौनकस्तु ऋग्वेदे ४,३२,००० अक्षराणीत्याह– **'चत्वारि वाव शत-सहस्राणि, द्वात्रिंशच्चाक्षरसहस्राणि'** इति। तेन च द्वादशसहस्राणि बृहत्यो भवन्ति। प्रायः संयुक्ताक्षराणां विश्लेषेण तावदक्षरत्वं सम्पादनीयमिति भाति। तद् यथा– गकारनकारयोर्विश्लेषे 'अग्निः' इति त्रीण्यक्षराणि। अक्षरसङ्ख्याने च विप्रतिपद्यन्ते। कः साधीयान् पन्था इति पुनरपि विमृष्टव्यं भवति॥

***

अथ चरमाणामतिच्छन्दसामुदाहरणानि शाखान्तरेषु पठ्यन्ते। अत्र पादगणना स्याद् वा, मा वा भूत्। अक्षरगणनामात्रेणापि च्छन्दांसि भवन्ति। षड्गुरुशिष्यस्तु अतिजगत्यादिष्वपि न पादनियतिरित्याह– **'उत्तरसप्तवर्गेऽतिजगत्याद्यति-धृत्यन्तेऽक्षरसङ्ख्यैव, न पादविशेषात् सञ्ज्ञाविशेषाः। पादाश्चानुक्रमण्यन्तरसिद्धाः'** इति।

**१. कृतिः** [८० अक्षराणि] यथा–

**अदब्धो दिवि पृथिव्यामुतासि न त आपुर्महिमानमन्तरिक्षे।अदब्धेन ब्रह्मणा वावृधानः स त्वं न इन्द्र दिवि षञ्छर्म यच्छ तवेद् विष्णो बहुधा वीर्याणि।**
**त्वं नः पृणीहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्योमन्॥**

[अथ.सं.१७.१.१]

यथा वा दशभिरष्टाक्षरैः पादैः–

त्रिशुग् घर्मो विभातु मे। आकूत्या मनसा सह। विराजा ज्योतिषा सह। यज्ञेन पयसा सह। ब्रह्मणा तेजसा सह। क्षत्रेण यशसा सह। सत्येन तपसा सह। तस्य दोहमशीमहि। तस्य सुम्नमशीमहि। तस्य भक्षमशीमहि॥
[तै.आ.४.२१.१]॥ ✻॥

**२. प्रकृतिः** [८४] यथा–

या त इन्द्र तनूरप्सु या पृथिव्यां याऽन्तरग्नौ या त इन्द्र पवमाने स्वर्विदि। ययेन्द्र तन्वा३ऽन्तरिक्षं व्यापिथ तया न इन्द्र तन्वा३ शर्म यच्छ तवेद् विष्णो बहुधा वीर्याणि। त्वं नः पृणीहि पशुभिर्विश्वरूपैः सुधायां मां धेहि परमे व्योमन्॥ [अथ.सं.१७.१.१३] ॥ ✻॥

**३. आकृतिः** [८८] यथा एकादशाक्षरैरष्टभिः पादैः–

सप्त युञ्जन्ति रथमेकचक्रमेको अश्वो वहति सप्तनामा।
त्रिनाभि चक्रमजरमनर्वं यत्रेमा विश्वा भुवनाऽधि तस्थुः।
तस्य देवस्य क्रुद्धस्यैतदागो य एवं विद्वांसं ब्राह्मणं जिनाति।
उद्वेपय रोहित प्र क्षिणीहि ब्रह्मज्यस्य प्रति मुञ्च पाशान्॥
[अथ.सं.१३.३.१८]

यथा वा अष्टाक्षरैरेकादशभिः पादैः–

तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्। पश्येम शरदः शतं जीवेम शरदः शतं नन्दाम शरदः शतं मोदाम शरदः शतं भवाम शरदः शतꣳ शृणवाम शरदः शतं प्रब्रवाम शरदः शतमजीताः स्याम शरदः शतं ज्योक् च सूर्यं दृशे॥
[तै.आ.४.४२.५]॥ ✻॥

**४. विकृतिः** [९२] यथा–

स वरुणः सायमग्निर्भवति स मित्रो भवति प्रातरुद्यन्।
स सविता भूत्वाऽन्तरिक्षेण याति स इन्द्रो भूत्वा तपति मध्यतो दिवम्।

तस्यं देवस्यं क्रुद्धस्यैतदागो य एवं विद्वांसं ब्राह्मणं जिनार्ति ।
उद्वैपय रोहित प्र क्षिणीहि ब्रह्मज्यस्य प्रति मुञ्च पाशान् ।। [अथ.सं.१३.३.१४]

यथा वा–

इमे सोमाः सुरामाणश्छागैर्न मेषैर्ऋषभैः सुताः । शष्पैर्न तोक्मभिर्लाजै-
र्महस्वन्तो मदा मासरेण परिष्कृताः शुक्राः पयस्वन्तोऽमृताः प्रस्थिता
वो मधुश्च्युतस्तानश्विना सरस्वतीन्द्रः सुत्रामा वृत्रहा जुषन्ताᳬ सोम्यं
मधुं । पिबन्तु मदन्तु व्यन्तु होतर्यज ।। [वा.सं.२१.४२] ।। ✻ ।।

५. **सङ्कृतिः** [९६] यथा–

निम्रुचस्तिस्रो व्युषो ह तिस्रस्त्रीणि रजांसि दिवो अङ्ग तिस्रः ।
विद्मा ते अग्ने त्रेधा जनित्रं त्रेधा देवानां जनिमानि विद्म ।
तस्यं देवस्यं क्रुद्धस्यैतदागो य एवं विद्वांसं ब्राह्मणं जिनार्ति ।
उद्वैपय रोहित प्र क्षिणीहि ब्रह्मज्यस्य प्रति मुञ्च पाशान् ।।
[अथ.सं.१३.३.२२] ।। ✻ ।।

६. **अभिकृतिः** [१००] यथा–

देवो अग्निः स्विष्टकृद् देवान् यक्षद् यथायथᳬ होतारा इन्द्रमश्विना वाचा
वाचᳬ सरस्वतीमग्निᳬ सोमᳬ स्विष्टकृत् ।
स्विष्ट इन्द्रः सुत्रामा सविता वरुणो भिषगिष्टो देवो वनस्पतिः स्विष्टा देवा
आज्यपाः ।
स्विष्टो अग्निरग्निना होता होत्रे स्विष्टकृद् यशो न दधदिन्द्रियमूर्जमपचितिᳬ
स्वधां वसुवने वसुधेयस्य व्यन्तु यज ।। [वा.सं.२१.५८] ।। ✻ ।।

७. **उत्कृतिः** [१०४] यथा–

जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोऽस्माकं ब्रह्मास्माकं स्वरस्माकं
यज्ञो३ऽस्माकं पशवोऽस्माकं प्रजा अस्माकं वीरा अस्माकम् ।
तस्मादमुं निर्भजामोऽमुमामुष्यायणममुष्याः पुत्रमसौ यः ।

**सोऽभूत्याः पाशान्मा मोचि ।**

**तस्येदं वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥**

[अथ.सं. १६.१(८)३]

इतोऽधिकाक्षराण्यपि च्छन्दांस्याम्नायेष्वाम्नायन्ते । निगदत्वेनैव ते गृह्येरन्निति न प्रतनैः पर्यगण्यन्त । न न्यरूप्यन्त चास्माभिरित्यलम् ॥ ✻ ॥

✻✻✻

## पादमीमांसा

अथातः पादमीमांसा ।

अर्थानुरूपाणि ऋचामवसानानि भवन्तीति जैमिनिः– **'तेषामृग् यत्रार्थवशेन पादव्यवस्था'** [२.१.३५] इति ।

प्रायोवादोऽयम् । क्वचिदन्यथाऽपि भवति । तद् यथा–

**इमं मे वरुण श्रुधी + हवमद्या च मृळय ।** [१.२५.१९]

अत्र 'मे हवं श्रुधि' इति किलान्वयः । तद्यदि अर्थवशेन पादव्यवस्था तदा 'हवम्' इत्यत्र पादान्तः स्यात्–

**इमं मे वरुण श्रुधी हवम् + अद्या च मृळय**– इति ।

तेन ज्ञायते प्रायोवादोऽयमिति । अत एवोक्तमृक्प्रातिशाख्ये–**'अक्षराण्येव सर्वत्र निमित्तं बलवत्तमम्'** [१७.२१] इति । **'यदक्षरपरिमाणं तच्छन्दः'** इति चर्क्सर्वानुक्रमणी । **'छन्दोऽक्षरसङ्ख्याव्यवच्छेदकमुच्यते'** इति चाथर्वानुक्रमणी । अथापि बहुलमर्थमूलैव पादव्यवस्थेति विनेयजनबोधाय विबुधजनमोदाय च किञ्चिदिव तां पादव्यवस्थां दर्शयामः ।

यत्रैकस्मिन्नेव पादे विवक्षितार्थपूरणं सैकपदा ऋक् । यथा–

**भद्रं नो अपि वातय मनः ॥** [१०.२०.१] ॥ ✻ ॥

अर्धर्चे एव यत्र वाक्यार्थपर्यवसानम्, सा द्विपदा। यथा–

**पवस्व सोम मन्दयन् + इन्द्राय मधुमत्तमः ॥ [९.६७.१६] ॥ ❋ ॥**

त्रिपदासु गायत्र्यां पूर्वपादद्वयं पूर्वार्धम्। उत्तरः पाद उत्तरार्धम्। यथा–

**अग्निमीळे पुरोहितं + यज्ञस्य देवमृत्विजम्।**
**होतारं रत्नधातमम् ॥ [१.१.१] ॥ ❋ ॥**

परन्तु पुरउष्णिहि यथावाक्यार्थपर्यवसानं क्वचित् प्रथमपादः पूर्वार्धम्। उत्तरद्वयमुत्तरार्धम्। यथा [१+२=३]–

**तच्चक्षुर्देवहितं शुक्रमुच्चरत्।**
**पश्येम शरदः शतम्+जीवेम शरदः शतम् ॥ [७.६६.१६] ॥ ❋ ॥**

चतुष्पदास्वृक्षु त्रिधा पादविभागः परिदृश्यते। पूर्वौ द्वौ पूर्वार्धमुत्तरावुत्तरार्धमित्येका विधा। प्रथमः पादः पूर्वार्धमुत्तरास्त्रय उत्तरार्धमिति द्वितीया। पूर्वे त्रयः पूर्वार्धं तुरीय उत्तरार्धमिति तृतीया।

तत्र प्रथमा यथाऽनुष्टुभि [२+२=४]–

**गायन्ति त्वा गायत्रिणः + अर्चन्त्यर्कमर्किणः।**
**ब्रह्माणस्त्वा शतक्रतो + उद्वंशमिव येमिरे ॥ [१.१०.१] ॥ ❋ ॥**

द्वितीया यथा पुरस्ताद्बृहत्याम् [१+३=४]–

**अधीन्वत्र सप्ततिं च सप्त च।**
**सद्यो दिदिष्ट तान्वः + सद्यो दिदिष्ट पार्थ्यः + सद्यो दिदिष्ट मायवः ॥**
**[१०.९३.१५] ॥ ❋ ॥**

तृतीया यथा न्यङ्कुसारिण्यां बृहत्याम् [३+१=४]–

**एतं शंसमिन्द्रास्मयुष्ट्वम् + कूचित् सन्तं सहसावन्नभिष्टये + सदा पाह्यभिष्टये।**
**मेदतां वेदता वसो ॥ [१०.९३.११] ॥ ❋ ॥**

पञ्चपदासु द्वौ च त्रयश्च क्वचित्; त्रयश्च द्वौ च क्वचित् ।

आद्या यथा [२+३=५] पङ्क्तौ–

इन्द्रो मदाय वावृधे + शवसे वृत्रहा नृभिः ।
तमिन्महत्स्वाजिषु + उतेमर्भे हवामहे + स वाजेषु प्र नोऽरिषत् ॥
[१.८१.१]॥ * ॥

द्वितीया यथा [३+२=५] तस्यामेव–

नकिर्देवा मिनीमसि + नकिरा योपयामसि + मन्त्रश्रुत्यं चरामसि ।
पक्षेभिरपिकक्षेभिः + अत्राभि सं रभामहे ॥ [१०.१३४.७] ॥ * ॥

षट्पदासु त्रयस्त्रयो वा, द्वौ च चत्वारश्च वा ।

आद्या यथा [३+३=६] महापङ्क्तौ–

अस्मा ऊ षु प्रभूतये + वरुणाय मरुद्भ्यः + अर्चा विदुष्टरेभ्यः ।
यो धीता मानुषाणाम् + पश्वो गा इव रक्षति + नभन्तामन्यके समे ॥
[८.४१.१] ॥ * ॥

द्वितीया यथा [२+४=६] तस्यामेव–

तमू षु समना गिरा + पितॄणां च मन्मभिः ।
नाभाकस्य प्रशस्तिभिः + यः सिन्धूनामुपोदये + सप्तस्वसा स मध्यमः +
नभन्तामन्यके समे ॥ [८.४१.२] ॥ * ॥

सप्तपदासु त्रिधाऽवसानं दृश्यते । त्रयो द्वौ द्वौ चेति त्रिः पादावसानमेका विधा । त्रयश्चत्वार इत्यपरा । द्वौ पञ्चेत्यपरा ।

तत्राऽद्या [३+२+२=७] यथाऽतिशक्वर्याम्–

सुषुमा यातमद्रिभिः + गोश्रीता मत्सरा इमे + सोमासो मत्सरा इमे ।
आ राजाना दिविस्पृशा + अस्मत्रा गन्तमुप नः ।
इमे वां मित्रावरुणा गवाशिरः + सोमाः शुक्रा गवाशिरः ॥
[१.१३७.१] ॥ * ॥

द्वितीया यथा [३+४=७] शक्वर्याम्–

नहि वां वव्रयामहे + अथेन्द्रमिद् यजामहे + शविष्ठं नृणां नरम् ।
स नः कदा चिदर्वता + गमदा वाजसातये + गमदा मेधसातये +
नभन्तामन्यके समे ॥ [८.४०.२] ॥ ❊ ॥

तृतीया यथा [२+५=७] तस्यामेव–

प्रो ष्वस्मै पुरोरथम् + इन्द्राय शूषमर्चत ।
अभीके चिदु लोककृत् + सङ्गे समत्सु वृत्रहा + अस्माकं बोधि चोदिता +
नभन्तामन्यकेषां + ज्याका अधि धन्वसु ॥ [१०.१३३.१] ॥ ❊ ॥

अष्टपदासु त्रयो द्वौ च त्रयश्चेति पादावसानक्रमः (३+२+३=८) । यथाऽतिधृतौ–

स हि शर्धो न मारुतं तुविष्वणिः+अप्नस्वतीषूर्वरास्विष्टनिः + आर्तनास्विष्टनिः ।
आदद्धव्यान्याददिः + यज्ञस्य केतुरर्हणा ।
अध स्मास्य हर्षतो हृषीवतः + विश्वे जुषन्त पन्थाम् + नरः शुभे न पन्थाम् ॥
[१.१२७.६]॥ ❊ ॥

❊❊❊

क्वचिदिमां व्यवस्थां स्वरो निरुणद्धि । तद् यथा–

ऋतेन मित्रावरुणा-वृतावृधावृतस्पृशा ।
क्रतुं बृहन्तमाशाथे ॥ [१.२.८]

अत्र द्वितीयपादे वस्तुतः सम्बोधनस्याऽद्युदात्तत्वं विहितम् । तेन चैवं स्वरपाठः स्यात्–

ऋतेन मित्रावरुणावृतावृधावृतस्पृशा ।

नचैवं पठ्यते । तेन ज्ञापयति मन्त्रद्रष्टा न प्रथमपादेऽर्थपर्यवसानमिति । नार्थः पर्यवसितः । अथापि पादः पर्यवस्यते । तेनाक्षरगणनैवात्र पादविभागे

मानम्। द्वितीयपादेऽपि सम्बोधनस्य निघातत्वमर्थानुगुणतयैवेति चाङ्गी-कर्तव्यम्। यदाह वेङ्कटमाधवः–

'आमन्त्रिताद्युदात्तत्वमुच्चैरामन्त्रणे भवेत्।
'नीचैरामन्त्रणे कार्ये पदं सर्वं निहन्यते॥

'अर्थस्वभावाद् वाक्यस्य मध्यस्थं तन्निहन्यते।
'ऋतेन मित्रावरुणौ, कवी नो मित्रावरुणा' इति।

अथापि विवदमाना भवन्ति। पूर्वं वर्द्धमानाया गायत्र्या उदाहरणमुक्तम्–

त्वमंग्ने यज्ञानाम् + होता विश्वेषां हितः।
देवेभिर्मानुषे जने [६.१६.१] इति।

तदेच्छौनकाभिमतम्। यदाहर्क्प्रातिशाख्ये–

'उत्तरोत्तरिणः पादाः षट्सप्ताष्टाविति त्रयः।
'गायत्री वर्द्धमानैषा त्वमग्ने यज्ञानामिति' []१६.२४] इति।

तदेतदसहमानाः केचित् प्रत्यवतिष्ठन्ते– 'अर्थवशेन हि पादव्यवस्था भवति। 'त्वमग्ने यज्ञानाम्' इति षळक्षरः प्रथमः पाद इति पक्षेऽनन्वितः स्यात् पादः। 'यज्ञानां होता' इति किलान्वयः। तस्मादष्टाक्षर एव प्रथमः पादः। द्वितीयः पञ्चाक्षरः। तद् यथा– 'त्वमंग्ने यज्ञानां होतां + विश्वेषां हितः' इति' इति।

प्रथमपक्षे इयं वर्द्धमाना गायत्री। द्वितीयपक्षे चेयं शङ्कुमती गायत्री। आद्यपक्षे षडूर्मिगतः, सप्तधातुगतः, अष्टधा प्रकृतिगतश्च भगवांश्चिन्त्यते। द्वितीये त्वष्टधा जडप्रकृतिगतः, अष्टधैव प्रकृतिमानिषु गतः पञ्चात्मा भगवानिति। विवक्षा-भेदेनोभयमपि युक्तमेवेति सर्वं रमणीयम्॥ ✻ ॥

✻ ✻ ✻

छन्दसि निष्णातानामाश्वलायनशौनकपिङ्गलादीनाम्।
प्राचामर्वाचामपि पण्डितयुधिष्ठिरमीमांसकादीनाम् ॥ ✻ ॥

भणितीरालोड्य समं ततः समन्ततः सारमुद्धृत्य ।
क्षीरादिव नवनीतं नवनीतमुपायनं सुधियाम् ॥ * ॥

उत्सारय मत्सरमयि वत्स हृत्सरोजमुत्सुकं शमय ।
रमय स्वयमय शरणं चरणं नारायणस्य पवनस्य ॥ * ॥

कृतव्यासज्जनाः शास्त्रसिन्धौ विहितमज्जनाः ।
तुष्यन्तु सज्जना दूरादपसर्पन्तु दुर्जनाः ॥ * ॥

अपसर्पन्तु ये भूता वर्तमानाश्च ये भुवि ।
मत्सरग्रस्तधिषणा भविष्यन्ति च येऽद्भुताः ॥ * ॥

इमामाचार्यगोविन्दो विनेयजनवाञ्छया ।
वैदिकानां छन्दसां च मीमांसां दुष्करां व्यधात् ॥ * ॥

—०—

# तारतम्यमीमांसा २

विष्णोः सर्वोत्तमत्वं वायोश्च जीवोत्तमत्वं न सम्यगवगम्यते विना तारतम्यमीमांसाम्। विष्णुभक्तिश्च सर्वाधिका न देवतासु परिवारभूतासु तारतम्यपरिज्ञप्तिं विना शक्यमनुसन्धातुम्। तत इयं तारतम्यमीमांसा प्रस्तूयते–

१. परमपुरुषो नारायणः।

[मत्स्यकूर्मक्रोडसिंहवटुभार्गवराघवाः।
कृष्णबुद्धौ कल्किदत्तहयशीर्षैतरेयकाः॥

पाराशर्यश्च कपिलो वैकुण्ठो वृषभस्तथा।
यज्ञो धन्वन्तरिश्चैव स्त्रीरूपस्तापसो मनुः॥

नारायणो हरिः कृष्ण उपेन्द्राः सर्व एव च।
एवमाद्या हरेः साक्षात् प्रादुर्भावाः प्रकीर्तिताः॥]

२. परा प्रकृतिर्लक्ष्मीः।

[श्रीर्भूर्दुर्गाऽम्भ्रिणी ह्रीश्च महालक्ष्मीश्च दक्षिणा।
सीता जयन्ती सत्या च रुग्मिणीत्यादिभेदिता॥]

३. हिरण्यगर्भः, मुख्यप्राणश्च।

[प्राणः सूत्रं महान् ब्रह्मा चित्तं वायुर्बलं धृतिः।
स्थितिर्योगश्च वैराग्यं ज्ञानं प्रज्ञा स्मृतिः सुखम्॥

मेधा मुक्तिर्विष्णुभक्तिरादिगोपो महाप्रभुः।
ऋजुः सुमानो विज्ञाता महाध्याता महागुरुः॥

हनूमान् भीम आनन्द इत्यादिबहुरूपिणः ।
हिरण्यगर्भा येऽतीता ये भाव्या यश्च वर्तते ॥]

४. हिरण्यगर्भपत्नी सरस्वती, मुख्यप्राणपत्नी भारती च ।

[सरस्वती च गायत्री श्रद्धाऽऽद्या प्रीतिरेव च ।
सर्ववेदात्मिका बुद्धिरनुभूतिः सुखात्मिका ॥

गुरुभक्तिर्हरौ प्रीतिः सर्वमन्त्रात्मिका भुजिः ।
शिवकन्येन्द्रसेना च द्रौपदी काशिजा तथा ।
चन्द्रेत्यादिस्वरूपा यास्तेभ्यः शतगुणावराः ॥]

५. गरुडः, शेषः, रुद्रश्च [एकादशरुद्रेषु यः प्रधानः] ।

[शेषः सदाशिवश्चोर्ध्वस्तपोऽहङ्कार एव च ।
नरोऽवटो लक्ष्मणश्च रौहिणेयः शुकस्तथा ॥

सद्योजातो वामदेवश्चाघोरस्तत्पुमानपि ।
दुर्वासा द्रौणिरौर्वश्च जैगीषव्यादिरूपकः ॥]

६. विष्णोः कृष्णावतारे षण्महिष्यो नीला, भद्रा, मित्रविन्दा, काळिन्दी, लक्षणा, जाम्बवती च। [आसु जाम्बवती प्रधाना। लक्ष्म्या विशेषावेशदशायां शेषतुल्या ।]

७. गरुडपत्नी सुपर्णी, शेषपत्नी वारुणी, रुद्रपत्नी पार्वती च ।

८. पुरन्दरः, कामश्च ।

[वाली गाधिर्विकुक्षिश्च पार्थ इन्द्रः पुरन्दरः ।
सुदर्शनश्च भरतः प्रद्युम्नः स्कन्द एव च ।
सनत्कुमारः कामश्चेत्येक एव व्यवस्थितः ॥]

९. अहम्प्राणः [४९मरुत्सु प्रधानः]।

१०. पुरन्दरपत्नी शची, कामपत्नी रतिः, कामपुत्रोऽनिरुद्धः, बृहस्पतिः, स्वायम्भुवमनुः, दक्षप्रजापतिश्च ।

११. स्पर्शमानी प्रवहः [४९ मरुत्सु द्वितीयः]।

१२. चन्द्रः, सूर्यः, सूर्यपुत्रो यमः, स्वायम्भुवमनुपत्नी शतरूपा च ।

[द्वादशस्वादित्येषु सूर्यस्तृतीयः। प्रथमो विष्णुर्वामनोऽदित्यां जातः। इन्द्रानुजतया जात इति तमुपेन्द्रमाचक्षते। द्वितीयोऽष्टमकक्ष्यागतः पुरन्दराख्य इन्द्रोऽदित्यां पूर्वजातः ।]

१३. वरुणः [द्वादशस्वादित्येषु चतुर्थः]।

१४. नारदः ।

१५. अग्निः [अष्टवसुषु प्रधानः], वरुणपुत्रो भृगुमुनिः, दक्षप्रजापतिपत्नी स्वायम्भुवमनुपुत्री प्रसूतिश्च ।

१६. वैवस्वतमनुः, विश्वामित्रः, महर्षयः सप्त पूर्वे– मरीचिः, अत्रिः, अङ्गिराः, पुलस्त्यः, पुलहः, क्रतुः, वसिष्ठश्चेति ।

१७. मित्रः[द्वादशस्वादित्येषु पञ्चमः], निरृतिः, बृहस्पतिपत्नी तारा, प्रवहवायुपत्नी प्रावही च ।

१८. विघ्नाधिपतिर्गणपतिर्भूताकाशमानी, धनपतिः कुबेरः, वायुजो विष्वक्सेनः, सूर्यजावश्विनौ नासत्यदस्रौ च । प्रधानवसुमग्निमृते सप्तान्ये वसवः– द्रोणः, प्राणः, ध्रुवः, अर्कः, दोषः, वस्तुः, विभावसुश्चेति [विभावसुरेव द्युवसुरित्युच्यते । अथचैतेषां वसूनां नामान्तराणि पठ्यन्ते ग्रन्थान्तरेषु । तद् यथा– अग्निर्वह्निर्वैश्वानर इत्यादि।], उक्तान् पञ्च वक्ष्यमाणं चैकं विहाय षडादित्याः– अर्यमा, पूषा, त्वष्टा, सविता, भगः, धाता चेति [आदित्यानामपि बहुधा नामानि पठ्यन्तेऽन्यान्यग्रन्थेषु। बहुनामानो हि देवाः।] दश विश्वेदेवाः– क्रतुः,

दक्षः,सवः, सत्यः,कामः, कालः, धुरिः, लोचनः, पुरूरवः, आर्द्रवश्चेति। एकादशसु रुद्रेषु प्रधानं विहायान्ये दश– रैवतः, ओजः, भवः, भीमः, वामः, उग्रः, वृषाकपिः, अजैकपात्, अहिर्बुघ्निः, विरूपाक्षश्चेति [रुद्राणामपि नामान्तराण्यन्यत्र पठ्यन्ते]। एकोनपञ्चाशन्मरुत्सु अहम्प्राणं प्रवहं च विहायावशिष्टाः ४७ मरुतः– प्राणापानव्यानोदानसमानाः, नागकूर्मकृकळ-देवदत्तधनञ्जयाः, आवहोद्वहपरावहविवहसंवहाः, शम्भुः, शङ्कुः, कलः, श्वासः, अनलः, अनिलः प्रतिभः, कुमुदः, कान्तः, शुचिः, श्वेतः, अजितः, गुरुः, सञ्ज्ञः, प्रवर्तकः, कालः, दक्षः, सोम्यः, कपिः, जडः, मण्डूकः, सन्ततः, सिद्धः, रक्तः, कृष्णः, पिकः, शुकः, यतिः, भीमः, हनुः, पिङ्गः, कम्पनश्चेति। [मरुतां बहुविधानि नामानि पठ्यन्ते। नैकत्राप्येकरूपता। तत्रायमेकः प्रकारः प्रतनै-रुद्धृतः]। पितृपतिष्वेकः कव्यवाहनामाऽग्निः। [त्रिषु प्रधानपितृपतिषु द्वौ यमसोमौ द्वादशकक्ष्यायां गतौ]। ऋभवस्त्रयः– ऋभुः, विभ्वा, वाजश्चेति, द्यावापृथिवीमानिन्यौ च दैव्यौ। प्रधानवायुपुत्रो भूतवायुमानी मरीचिश्च[1]।

१९. प्रधानाग्निपुत्रो भूताग्निमानी पावकः। पादमानिनाविन्द्रपुत्रौ यज्ञनामा जयन्तः, शम्भुश्च। दैत्यगरुः शुक्रः। तत्सोदरश्च्यवनः। बृहस्पतिसोदर उचथ्यः। उक्तं सनत्कुमारं विहायान्ये त्रयो ब्रह्मणो मानसपुत्रा ऋषयः– सनकः, सनन्दनः, सनातनश्च। सप्त चान्य ऊर्ध्वरोतसः। एतान् दश, पूर्वो-क्तान् सनत्कुमारादींश्च दश विहायान्ये काश्यपाद्या अशीतिर्गृहस्था ऋषयः। भाविमन्वन्तराणामिन्द्राः सप्त– बलिः, अद्भुतः, शम्भुः, विधृतिः, ऋतधामा, दिवस्पतिः शुचिश्च। [अतीतेषु मन्वन्तरेणु प्रथमे स्वायम्भुवेऽन्तरे यज्ञनामा विष्णुरेवेन्द्रः। द्वितीये स्वारोचिषे रोचननामा वायुः। तृतीये चौत्तमे सत्य-

१. मरीचिं पूर्वे विद्वांस एकान्नविंशयां कक्ष्यायां पठन्ति। अयं भूतवायुमानीति गीतातात्पर्ये स्थितम्। आकाशमानी भूतवायुमानी च समानाविति चैतरेयभाष्यादवगम्यते। तेन मरीचेर्गणपतिसमकक्ष्यतया अष्टादश्यां कक्ष्यायामेव युक्तं पठनमिति भाति।

जिन्नामा यम इन्द्रः । चतुर्थे तापसे पञ्चमे च रैवते त्रिशिखविभुनामानौ नासत्यदस्रावश्विनाविन्द्रौ । षष्ठे चाक्षुषे मन्द्रद्रुम्नः, स एव च सप्तमे वैवस्वतेऽन्तरे पुरन्दरनामेन्द्रः । तमेतमष्टमकक्ष्यागतमिन्द्रमाचक्षते ।] त्रीनुक्तान् विहायावशिष्टा एकादश मनवः– स्वारोचिषः, उत्तमः, रैवतः, चाक्षुषः, सावर्णिः, दक्षसावर्णिः, ब्रह्मसावर्णिः, धर्मसावर्णिः, रुद्रसावर्णिः, देवसावर्णिः, इन्द्रसावर्णिश्चेति । [प्रथमः स्वायम्भुवो मनुर्दशमकक्ष्यायां गतः । चतुर्थस्तापसो मनुः स्वयं विष्णुरेव । सप्तमो वैवस्वतः षोडश्यां कक्ष्यायां गतः । अपरे त्वेकादशात्र ।] दशसु पितृपतिषु पूर्वोक्तान् यमसोमकव्यवाहान् विहायान्ये सप्त । अष्टौ विष्णोर्द्वारपालकाः– जयः, विजयः, चण्डः, प्रचण्डः, नन्दः, सुनन्दः, कुमुदः, कुमुदेक्षणश्चेति । अष्टौ प्रधानगन्धर्वाः । अष्टौ प्रधानाप्सरसः । विश्वकर्मा, चित्रगुप्तः, सूर्यसारथिररुणः, नन्दी, ऐरावतः, सुरभिः, कल्पवृक्षादिदेवताः, अहोरात्रदेवते, पूर्णिमामावास्यादेवते, अभिजिद्विषुवद्देवते, ओषधिवनस्पतिमानिनः, हविःकपालादिमानिनश्च । कर्मणा देवत्वं गताः शतं राजर्षयश्च– पृथुः, कार्तवीर्यः, शशबिन्दुः, प्रियव्रतः, उत्तानपादः, मान्धाता, गयः, ककुत्स्थः,नहुषः, अम्बरीषः, आर्षभो भरतः, दौःषन्तिर्भरतः, मरुत्तः, हरिश्चन्द्रः, प्रह्लादः, परीक्षिदाद्याश्च ।

२०. द्वादशादित्येषु चरमः पर्जन्यः, अनिरुद्धभार्या उषा विराडाख्या, चन्द्रभार्या रोहिणी, सूर्यभार्या सञ्ज्ञा, यमभार्या श्यामला, वरुणभार्या च गङ्गा ।

२१. केचनाप्रख्याता देवाः[१] ।

२२. अग्निभार्या वाङ्मानिनी स्वाहा ।

२३. जलमानी बुधः ।

२४. अश्विभार्या नाममानिनी उषाः ।

---

१. केचिन्नैतां कक्ष्यां पृथक् परिगणयन्ति ।

२५. कुजः[१] ।

२६. पृथिवीमानी शनिः ।

२७. वरुणपुत्रः कर्ममानी पुष्करः ।

२८. कृष्णपत्नीत्वेन जाता अग्निपुत्राः १६,१०० सङ्ख्याकाः ।

२९. अनाख्याता आजानजा देवाः । शतं गन्धर्वाः । शतमप्सरसः । [शतं कोटीनामृषयः सन्ति । तत्र पूर्वोक्तमृषीणां शतकं विहायावशिष्टाः] ९९,९९,९९,९०० ऋषयः ।

३०. पूर्वोक्तानां सप्तानां पितृपतीनां सन्ततिभूताश्चिरपितरः ।

३१. पूर्वोक्तं गन्धर्वाणामप्सरसां च शतमष्टोत्तरं विहायावशिष्टा गन्धर्वा अप्सरश्च ।

३२. मनुष्यगन्धर्वाः ।



एतेषु च विशिष्योपनिषदुक्ता नामादिमारुतान्ता यथा–

| | | | |
|---|---|---|---|
| १. नाममानिनी उषाः | [२४] | ९. अन्नमानी अनिरुद्धः | [१०] |
| २. वाङ्मानिनी स्वाहा | [२२] | १०. अम्मानी अहम्प्राणः | [९] |
| ३. मनोमानी पर्जन्यः | [२०] | ११. तेजोमानी पुरन्दरः | [८] |
| ४. सङ्कल्पमानी मित्रः | [१७] | १२. आकाशमानिनी उमा | [७] |
| ५. चित्तमानी अग्निः | [१५] | १३. स्थिरस्मृतिमानी शिवः | [५] |
| ६. ध्यानमानी वरुणः | [१३] | १४. आशामानिनी भारती | [४] |
| ७. विज्ञानमानी चन्द्रः | [१२] | १५. जीवमानी मुख्यप्राणः | [३] |
| ८. बलमानी प्रवहः | [११] | | |

१.अयमप्येकोनविंश्यां कक्ष्यायां पठनीय इत्येके ।

[बलमिति ज्ञानबलं देहबलं च। तदुभयमानी भूतवायुः। अन्नमिति ज्ञानरतिरूपं ज्ञानान्नं बाह्यमन्नं च। तदुभयमानी अनिरुद्धः। आप इति ज्ञानतृप्तिर्बाह्यजलं च। तदुभयमानी अहम्प्राणः। तेज इति मानसं प्रतिभानं बाह्यं च। तदुभयमानी पुरन्दरः। आकाश इति स्थिरा प्रतिभा भूताकाशश्च। तदुभयमानिन्युमा। ततः स्थिरस्मृतिमानी शिवः। तत आशाया अपरोक्षानन्दस्य मानिन्यौ सरस्वतीभारत्यौ। ततश्च जीवकलामानी मोक्षानन्दमानी च प्राणात्मा हिरण्यगर्भ इति।]

तथाहि श्रुतिः– **अथातः सम्भूतिः। परमाद् विद्या विद्यायाः प्राणः प्राणाच्छ्रद्धा श्रद्धायाः शिवः शिवाद् बुद्धिर्बुद्धेरिन्द्र इन्द्रात् तैजसप्राणस्तैजसप्राणादनिरुद्धोऽनिरुद्धात् स्पर्शवातः स्पर्शवातात् सोमः सोमाद् वरुणो वरुणादग्निरग्नेर्मित्रो मित्रात् पर्जन्यः पर्जन्यात् स्वाहा स्वाहाया उषा जायते-** इति।

**इमामाचार्यगोविन्दश्चक्रे चक्रायुधप्रियाम्।**
**तारतम्यस्य मीमांसां विनेयजनवाञ्छया॥**

—०—

# ३ मन्त्राणां पादानुक्रमणी

| | |
|---|---|
| ओतं मनः सह प्राणैश्च सर्वैः | आथर्व.२.२.६[२] |
| ओमित्येव ध्यायत | आथर्व.२.२.७[३] |

**औ**

| | |
|---|---|
| औद्दालकिरारुणिर्मत्प्र- | काठक.१.१.११[२] |

**क**

| | |
|---|---|
| क इत्था वेद यत्र सः | काठक.१.२.२५[४] |
| कथं तदुपलभ्यते | काठक.२.३.१२[४] |
| कथं नु तद् विजा- | काठक.२.२.१४[३] |
| कर्तारमीशं पुरुषम् | आथर्व.३.१.३[२] |
| कर्माणि विज्ञानमयश्च | आथर्व.३.२.७[३] |
| कला यस्मिन् प्रतिष्ठिताः | षट्प्र.६.६[२] |
| कल्पितो यदि केनचित् | माण्डूक.२.१०[२] |
| कविर्मनीषी परिभूः स्वयम्भूः | याज्ञीय.८[३] |
| कश्चिद् धीरः प्रत्यगा- | काठक.२.१.१[३] |
| कस्तं मदामदं देवम् | काठक.१.२.२१[३] |
| कामंकामं पुरुषो निर्म- | काठक.२.२.८[२] |
| कामभिर्जायते तत्रतत्र | आथर्व.३.२.२[२] |
| कामस्याऽऽप्तिं जगतः | काठक.१.२.११[१] |
| कामानां त्वा काम- | काठक.१.१.२४[४] |
| कामान् यः कामयते | आथर्व.३.२.२[१] |
| कामायान्नं भविष्यतीति | षट्प्र.२.१०[४] |
| कामा येऽस्य हृदि | काठक.२.३.१४[२] |
| कार्यकारणवद्धौ तौ | माण्डूक.२.३[१] |
| कालात् प्रसूतिं भूतानां | माण्डूक.१.१४[३] |
| काळी कराळी च मनो- | आथर्व.१.२.४[१] |
| किमत्र परिशिष्यते | काठक.२.१.३[४] |
| किमत्र परिशिष्यते | काठक.२.२.४[४] |
| किमु भाति न भाति | काठक.२.२.१४[४] |
| किꣳ स्विद् यमस्य कर्तव्यम् | काठक.१.१.५[३] |
| कुर्वन्नेवेह कर्माणि | याज्ञीय.२[१] |
| कृतात्मानो वीतरागाः | आथर्व.३.२.५[२] |
| केन प्राणः प्रथमः प्रैति युक्तः | तलव.१.१[२] |
| केनेषितं पतति प्रेषितं मनः | तलव.१.१[१] |
| केनेषितां वाचमिमां वदन्ति | तलव.१.१[३] |
| क्रतोरानन्त्यमभयस्य | काठक.१.२.११[२] |
| क्रियावन्तः श्रोत्रिया व्रह्म- | आथर्व.३.२.११[१] |
| क्रियासु वाह्यान्तरमध्यमासु | षट्प्र.५.७[३] |
| क्रीडार्थमिति चापरे | माण्डूक.१.१९[२] |

**ख**

| | |
|---|---|
| खं वायुर्ज्योतिरापः | आथर्व.२.१.३[३] |

**ग**

| | |
|---|---|
| गताः कला पञ्चदश प्रतिष्ठाः | आथर्व.३.२.७[१] |
| गर्भ इव सुभृतो गर्भि- | काठक.२.१.८[२] |
| गुहां प्रविश्य तिष्ठन्तम् | काठक.२.१.६[३] |
| गुहां प्रविश्य तिष्ठन्तीम् | काठक.२.१.७[३] |
| गुहां प्रविष्टौ परमे | काठक.१.३.१[२] |
| गुहाशयां निहिताः सप्त- | आथर्व.२.१.८[४] |
| गुहाहितं गह्वरेष्ठं पुरा- | काठक.१.२.१२[२] |
| गुह्यं व्रह्म सनातनम् | काठक.२.२.६[२] |
| गूढोत्मा न प्रकाशते | काठक.१.३.१२[२] |

**घ**

| | |
|---|---|
| घनप्रज्ञस्तथा प्राज्ञः | माण्डूक.१.७[३] |

**च**

| | |
|---|---|
| चरं नाम महत् पदम् | आथर्व.२.२.१[२] |
| चक्षुः श्रोत्रं क उ देवो युनक्ति | तलव.१.१[४] |
| चक्षुषश्चक्षुरतिमुच्य धीराः | तलव.१.२[३] |
| चेतोंऽशून् पुरुषः पृथक् | माण्डूक.१.१२[४] |
| चोभौ येनानुपश्यति | काठक.२.१.४[२] |

**छ**

| | |
|---|---|
| छायातपयोरिव | काठक.२.३.५[४] |
| छायातपौ व्रह्म विदो- | काठक.१.३.१[३] |
| छिद्यन्ते सर्वसंशयाः | आथर्व.२.२.१०[२] |

**ज**

| | |
|---|---|
| जङ्घन्यमानाः परियन्ति मूढा- | आथर्व.१.२.८[३] |
| जरामृत्युं ते पुनरेवापियन्ति | आथर्व.१.२.७[४] |
| जानाम्यहꣳ शेवधि- | काठक.१.२.१०[१] |

| | |
|---|---|
| त्रिनाचिकेतस्त्रिभिरेत्य | काठक.१.१.१७[१] |
| त्रिषु धामसु यत् तुल्यं | माण्डूक.३.८[१] |
| त्रिषु धामसु यद् भोज्यं | माण्डूक.१.११[१] |
| त्वं च मृत्यो यन्न सुज्ञेय- | काठक.१.१.२२[२] |
| त्वत्प्रसृष्टं माऽभि वदेत् | काठक.१.१.१०[३] |
| त्वमन्तरिक्षे चरसि | षट्प्र.२.९[३] |
| त्वमेव प्रतिजायसे | षट्प्र.२.७[२] |
| त्वादृङ् नो भूयान्नचि- | काठक.१.२.९[४] |
| त्वां ददृशिवान् मृत्यु- | काठक.१.१.११[४] |

## द

| | |
|---|---|
| दन्द्रम्यमाणाः परियन्ति | काठक.१.२.५[३] |
| दक्षिणाक्षिमुखे विश्वो | माण्डूक.१.८[१] |
| दिव आहुः परे अर्द्धे पुरीषिणम् | षट्प्र.१.११[२] |
| दिवेदिव ईड्यो जागृ- | काठक.२.१.८[३] |
| दिव्ये ब्रह्मपुरे ह्येषः | आथर्व.२.२.८[३] |
| दिव्यो ह्यमूर्तः पुरुषः | आथर्व.२.१.२[१] |
| दिशः श्रोत्रे वाग् विवृताश्च | आथर्व.२.१.४[२] |
| दुग्धदोहा निरिन्द्रियाः | काठक.१.१.३[२] |
| दुर्गं पथस्तत् कवयो | काठक.१.३.१४[४] |
| दुष्टाश्वा इव सारथेः | काठक.१.३.५[४] |
| दूरमेते विपरीते विषूची | काठक.१.२.४[१] |
| दूरात् सुदूरे तदिहान्तिके च | आथर्व.३.१.७[३] |
| दृश्यते त्वग्र्यया बुद्ध्या | काठक.१.३.१२[३] |
| दृष्ट्वा धृत्या धीरो नचि- | काठक.१.२.११[४] |
| देवस्तुर्यो विभुः स्मृतः | माण्डूक.२.२[४] |
| देवस्यैषः स्वभावोऽयम् | माण्डूक.१.१५[३] |
| देवानामसि वह्नितमः | षट्प्र.२.८[१] |
| देवाश्च सर्वे प्रतिदेवतासु | आथर्व.३.२.७[२] |
| देवैरत्रापि विचिकि- | काठक.१.१.२१[१] |
| देवैरत्रापि विचिकि- | काठक.१.१.२२[१] |
| द्वा सुपर्णा सयुजा सखाया | आथर्व.३.१.१[१] |
| द्वैतस्याग्रहणं तुल्यम् | माण्डूक.२.५[१] |
| द्वैतस्योपशमः शिवः | माण्डूक.४.७[२] |
| द्वौ तु तुर्ये न सिद्ध्यतः | माण्डूक.२.३[४] |

## ध

| | |
|---|---|
| धनुर्गृहीत्वौपनिषदम् | आथर्व.२.२.४[१] |
| धातुःप्रसादान्महिमा- | काठक.१.२.२०[४] |
| ध्रुवमध्रुवेष्विह न प्रा- | काठक.२.१.२[४] |

## न

| | |
|---|---|
| न कर्म लिप्यते नरे | याज्ञीय.२[४] |
| न किञ्चिदपि चिन्तयेत् | माण्डूक.४.२[४] |
| नच प्रमादात् तपसो- | आथर्व.३.२.४[२] |
| न चक्षुषा गृह्यते नापि वाचा | आथर्व.३.१.८[१] |
| न चक्षुषा पश्यति | काठक.२.३.९[२] |
| नचिकेतो मरणं माऽनु- | काठक.१.१.२५[६] |
| नचेदिहावेदीन्महती विनष्टिः | तलव.२.५[२] |
| न जायते म्रियते वा | काठक.१.२.१८[१] |
| न ततो विजुगुप्सते | काठक.२.१.५[४] |
| न ततो विजुगुप्सते | काठक.२.१.१२[४] |
| न तत्र चक्षुर्गच्छति | तलव.१.३[१] |
| न तत्र त्वं न जरया | काठक.१.१.१२[२] |
| न तत्र सूर्यो भाति | काठक.२.२.१५[१] |
| न तत्र सूर्यो भाति न | आथर्व.२.२.१२[१] |
| न त्वा कामा बहवोऽलो- | काठक.१.२.४[४] |
| न नरेणावरः प्रोक्तः | काठक.१.२.८[१] |
| न निद्रां नैव च स्वप्नम् | माण्डूक.२.६[३] |
| न परः प्रणवोऽव्ययः | माण्डूक.४.४[४] |
| न प्राणेन नापानेन | काठक.२.२.५[१] |
| न भयं विद्यते क्वचित् | माण्डूक.४.३[४] |
| नमस्तेऽस्तु ब्रह्मन् स्वस्ति | काठक.१.१.९[३] |
| न मेधया न बहुना | काठक.१.२.२३[२] |
| न मेधया न बहुना | आथर्व.३.२.३[२] |
| न लिप्यते चाक्षुषैर्बाह्य- | काठक.२.२.११[२] |
| न लिप्यते लोकदुःखेन | काठक.२.२.११[४] |
| न वाग् गच्छति नो मनः | तलव.१.३[२] |
| न वित्तेन तर्पणीयो- | काठक.१.१.२७[१] |
| न विद्म न विजानीमो | तलव.१.३[३] |

## प

### र



### ल



### व

वयमाद्यस्य दातारः षट्प्र.२.११[३]
वरं तवेहाद्य ददानि काठक.१.१.१६[२]
वरस्तु मे वरणीयः स काठक.१.१.२७[४]
वराणामेष वरस्तृतीयः काठक.१.१.२०[४]
वाचो मुञ्चथामृतस्यैष- आथर्व.२.२.६[४]
वाचो ह वाचं स उ प्राणस्य प्राणः तलव.१.२[२]
वायुः प्राणो हृदयं विश्वमस्य आथर्व.२.१.४[३]
वायुरनिलममृतम् याज्ञीय.१७[१]
विकल्पो विनिवर्तेत माण्डूक.२.१०[१]
विजानन् विद्वान् भवते नाति- आथर्व.३.१.४[२]
विज्ञातमविजानताम् तलव.२.३[४]
विज्ञानसारथिर्यस्तु काठक.१.३.९[१]
विज्ञानात्मा सह देवैश्च सर्वैः षट्प्र.४.११[१]
विज्ञायामृतमश्नुते षट्प्र.३.१२[४]
विद्धि त्वमेतं निहितं काठक.१.१.१४[४]
विद्ययाऽमृतमश्नुते याज्ञीय.११[४]
विद्यया विन्दतेऽमृतम् तलव.२.४[४]
विद्यां चाविद्यां च याज्ञीय.११[१]
विद्याभीप्सितं नचिकेत- काठक.१.२.४[३]
विद्यामेतां योगविधिं च काठक.२.३.१८[२]
विनाशेन मृत्युं तीर्त्वा याज्ञीय.१४[३]
विपर्यासे तयोः क्षीणे माण्डूक.२.७[३]
विभुत्वं चैव पञ्चधा षट्प्र.३.१२[२]
विभूतिं प्रसवं त्वन्ये माण्डूक.१.१३[१]
विमुक्तश्च विमुच्यते काठक.२.२.१[४]
विरजं ब्रह्म निष्कलम् आथर्व.२.२.११[२]
विवृतं सद्म नचिकेतसम् काठक.१.२.१३[४]
विशुद्धसत्त्वः कामयते यांश्च आथर्व.३.१.१०[२]
विश्वस्य कर्ता भुवनस्य आथर्व.१.१.१[२]
विश्वरूपं हरिणं जातवेदसं षट्प्र.१.८[१]
विश्वस्यात्वविवक्षायाम् माण्डूक.३.५[१]
विश्वानि देव वयुनानि विद्वान् याज्ञीय.१८[२]
विश्वे देवा उपासते काठक.२.२.३[४]
विश्वो हि स्थूलभुङ् नित्यम् माण्डूक.१.९[१]
विषयांस्तेषु गोचरान् काठक.१.३.४[२]
विष्वङ्ङन्या उत्क्रमणे काठक.२.३.१६[४]
वीतमन्युर्गौतमो माऽभि- काठक.१.१.१०[२]
वृणीष्व वित्तं चिरजी- काठक.१.१.२४[२]
वेदैतदुभयं यस्तु माण्डूक.१.११[३]
वैश्वानरः प्रविशति काठक.१.१.७[१]
व्यश्नुते तदनन्तरम् माण्डूक.४.५[४]
व्यापकोऽलिङ्ग एव च काठक.२.३.८[२]
व्यूह रश्मीन् समूह तेजो यत् ते याज्ञीय.१६[२]
व्योम्न्यात्मा प्रतिष्ठतः आथर्व.२.२.८[४]
व्रात्यस्त्वं प्राणैकऋषिः षट्प्र.२.११[१]

## श

शतं चैका च हृदयस्य काठक.२.३.१६[१]
शब्दान् स्पर्शांश्च काठक.२.१.३[२]
शयानो याति सर्वतः काठक.१.२.२१[२]
शरं ह्युपासानिशितम् आथर्व.२.२.४[२]
शरवत् तन्मयो भवेत् आथर्व.२.२.५[४]
शरीरं रथमेव च काठक.१.३.३[२]
शरीरत्वाय देहिनः काठक.२.२.७[२]
शरीरत्वाय कल्पते काठक.२.३.४[४]
शरीरस्थस्य देहिनः काठक.२.२.४[२]
शान्तसङ्कल्पः सुमना- काठक.१.१.१०[१]
शान्ता विद्वांसो भैक्षचर्यां आथर्व.१.२.११[२]
शिरोव्रतं विधिवद् यैस्तु आथर्व.३.२.११[४]
शिवां तां कुरु मोत्क्रमीः षट्प्र.२.१२[४]
शृण्वन्तोऽपि बहवो यम् काठक.१.२.७[२]
शोकातिगो मोदते काठक.१.१.१२[४]
शोकातिगो मोदते काठक.१.१.१८[४]
श्रद्धा सत्यं ब्रह्मचर्यं आथर्व.२.१.७[४]
श्रवणायापि बहुभिर्यो न काठक.१.२.७[१]
श्रावयेद् ब्रह्मसंसदि काठक.१.३.१७[२]
श्रीश्च प्रज्ञां च विधेहि न इति षट्प्र.२.१३[४]
श्रेयश्च प्रेयश्च मनुष्यमेत- काठक.१.२.२[१]
श्रेयो हि धीरोऽभि प्रेय- काठक.१.२.२[३]

—o—

# ४ निगदानुक्रमणी

**द**



**न**



**प**

—o—

# भाष्योदाहृतप्रमाणानां श्लोकार्द्धानुक्रमणी ५

[अत्रोदाहृतप्रमाणावचनानां पार्श्वे आकरग्रन्थनाम भवति । ततः अस्मिन् ग्रन्थे उद्धृतश्लोकस्य पुटसङ्ख्या, ततः पङ्क्तिसङ्ख्या च निर्दिष्टा । तद्यथा–

'अगम्यनामरूपत्वात् मुक्तिवि. ३७३.१' इति ।

मुक्तिविवेकाख्याद् ग्रन्थादुद्धृतम्– 'अगम्यनामरूपत्वात्–' इत्यादिकं पद्यं ग्रन्थेऽस्मिन् ३७३तमे पत्रे प्रथमपङ्क्तौ पठ्यत इत्यर्थः ।]

## आ

स्वयं तु सर्वानुगमात् ब्रह्माण्ड. २४ १२
स्वरूपैक्यं कुतस्तेषाम् महाव. ३६६ २
स्ववेदव्रतयुक्तस्य व्या.स्मृ. २९५ १
स्वाख्याच्छरीराज्जीवात्तु महाव. २२३ ३
स्वातन्त्र्येणैव भोक्तृत्वात् तत्वसा. ३४५ ७
स्वात्मन्यन्तर्ग्गमयति ब्रह्मत. ५२२ ७
स्वात्मानं च गुहासंस्थं महाव. १७८ ८
स्वाभाविकी ज्ञान- श्वेता.उ. ३३१ ५
स्वायम्भुवः स्वदौहित्रम् ब्रह्माण्ड. ७ १०

**ह**